प्रका.

## ॥ अथ प्रतिष्ठाप्रकाशप्रारंभः ॥

पंक्तिः
८
८
२
१०
२
३
२

पुस्तकमिलनेका ठिकाना.

हनुमानदास व्रजवल्लभ बुकसेलर.

ठी० चौक कानपूर.

हरिप्रसाद भगीरथजीका-

प्राचीनपुस्तकालय कालकादेवीरोड

मुंबई.

# अथ श्रीप्रतिष्ठाप्रकाशस्यानुक्रमणिका ।

( अयं एककुंडीपक्षे कुंडादि निर्माण प्रकारः )

नवग्रहपीठंविस्तारं २४ अंगुलं उच्चं १२

सप्तघृतधारा.

७

षोडशमातृका पीठं २४ अंगुलं विस्तारं उच्चं १२.

चतुरस्त्रकुंडं.

१

सर्वतो भद्रवेदी

आचार्यासनम्.

योगिनी क्षेत्रपाल पीठं हस्तमात्रं द्वादशांगुलोच्चं १२.

यजमानस्यासनम्.

वास्तुपीठं हस्तमात्रं द्वादशांगुलोच्चं १२

कर्मठगुरु पंडित चतुर्थीलाल माध्यंदिनीयकृतं निर्माणमिदम्.

पू.

( अयं पंचकुंडीपक्षे कुंडादिनिर्माणप्रकारः )

ग्रहपीठं.

आचार्यकुंडं

५

चतुरस्रं

ऋग्वेदिनां कुंडं.

१

मातृकापीठं.

अथर्ववेदिनां कुंडं.

४

उ.

सर्वतोभद्रमंडलं.

मध्यवेदी

यजुर्वेदिनां कुंडं.

अर्द्धचंद्राभकुंडं.

२

द.

योगिनी क्षेत्रपाल पीठं.

सामगानां कुंडं.

३

वर्तुलं

वास्तुपीठं चतुःषष्टि कोष्ठात्मकम्.

प.

अथ ४३ रेखात्मकं सर्वतोभद्रसहितं हरिहरात्मकं द्वादशलिंगतोभद्रमंडलं.



१८
अष्टादशरेखात्मकं चतुलिंगतोभद्रमंडलं.



अथाग्रे स्पष्ट लिखित मंडलानां कोष्ट-
कमध्ये पंचरंगानां पूरणार्थे बिंदुचिन्हा-
निसंति तेषां सूचना.

☐ एतादृशेषु श्वेत कोष्टकेषु श्वेतवर्ण श्वेत-
धान्यं वा पूरयेत्.

⊡ बिंद्वैक युक्तेषु कोष्टकेषु पीतवर्ण पीतधा-
न्यंवापूरयेत्.

(:) यत्र बिंदुद्वयं तत्र रक्त वर्ण रक्त धान्यंवा
पूरयेत्.

(∴) यत्रबिंदुत्रयं तत्कोष्टकेषु हरितवर्ण हरित
धान्यं वा पूरयेत्

■ कृष्णवर्णयुक्त कोष्टकेषु कृष्णवर्ण कृष्ण
धान्यं वा पूरयेत्.

## ॥ चतुःषष्टि कोष्टात्मकं सदैवं वास्तुमण्डलम् ॥

ई. पूर्वे अग्नि

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| शिखि ने.१ दितये ३२ | पर्जन्याय नमः | ॐ जयंताय | ॐ कुलिशा | ॐ सूर्याय | ॐ सत्याय | ॐ भृशाःयन. | आकाश ८ वायवे ९ |
| ॐ अदित ३१ ये | २ | नमः ३ | युधाय नमः ४ | नमः ५ | नमः ६ | मः ७ ॐ पूष्णे | नमः १० |
| ॐ सर्प्पा | यनमः ३० | अझो ३३ आपव त्सा ३४ | ॐ अर्य | म्णे ३५ | सावि ३६ त्रा. सवित्रे ३७ | ॐ वित नमः | थाय- ११ |
| ॐ सो | माय. २९ | ॐ पृ | ॐ ब्रह्म | णेनमः | ॐ विव | ॐ गृह | क्षताय. १२ |
| ॐ भल्ला | टाय. २८ | थ्वीधराय. ४४ | | ४५ | स्वते ३८ | ॐ यमा | यनमः १३ |
| ॐ मुख्या | यनमः २७ | रुद्राय ४३ ४२ राजय क्ष्मणे | ॐ मित्राय | नमः ४१ | ३९ विबुधाधि पतये ४० | ॐ गंध | र्वाय १४ |
| ॐ अह २६ | येनमः ॐ | ॐ अ | ॐ वरु | ॐ पुष्पदंता | ॐ सुग्रीवा | ॐ भृंय | गराजा नमः १५ |
| ॐ रोगाय २५ ॐ पापाय २४ | शेषायनमः २३ | सुरायनमः २२ | णायनमः २१ | यनमः २० | यनमः १९ | दौवारिकाय. १८ | मृगाय १६ पितृभ्यो १७ |

उ. (वाम) — द. (दक्षिण)

वा. प. नै.



वासिष्ठशात्त्यपाराशराः त्रिप्रवराः

## (एक हस्तादि मानविधायकं कुंडप्रदीपकोक्तं यंत्रम्.)

| हस्त | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|---|---|---|---|---|---|
| अङ्गुलानि | २४ | ३३ | ४१ | ४८ | ५३ | ५८ | ६३ | ६८ | ७२ | ७४ |
| यवाः | ० | ७ | ४ | ० | ५ | ६ | ० | ७ | ० | ७ |
| यूका | ० | ५ | ५ | ० | ३ | २॥ | ० | ० | ० | ३ |

## तथैव कुंडरत्नाकरोक्तं यंत्रम्.

| हस्त | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|---|---|---|---|---|---|
| अङ्गुलानि | २४ | ३४ | ४१ | ४८ | ५४ | ५९ | ६३ | ६८ | ७२ | ७५ |
| यवाः | ० | १ | ७ | ० | १ | ४ | १ | २ | ० | २ |
| यूका | ० | ७ | १ | ० | ३ | ५ | २ | ७ | ० | ७ |

॥ ॐ श्रीगणेशायनमः ॥ ॥ माध्यंदिनीयशाखायाः विज्ञप्तिः ॥ ॥ शाखावर्णनंमहीधरभाष्ये ॥ तत्रादौ ब्रह्मपरंपरयाप्राप्तंवेदं वेदव्यासोमंदमतीन्मनुष्यान्विचिंत्यतत्कृपया चतुर्धाकृत्यऋग्यजुःसामाथर्वाख्यांश्चतुरोवेदान् पैलवैशम्पायन जैमिनिसुमंतुभ्यः क्रमादुपदिदेश ॥ तेचस्वशिष्येभ्यः । एवंपरंपरया सहस्रशाखोवेदोजातः । तत्र व्यासशिष्यो वैशम्पायनोयाज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत् । तत्रदैवात्केनापिहेतुनाक्रुद्धोवैशम्पायनोयाज्ञवल्क्यं प्रत्युवाच " मदधीतंत्यजेति " सयोगसामर्थ्यान्मूर्तां विद्यांविधायोद्वमयामास वांतानियजूंषिगृह्णीतेतिगुरूक्ता अन्ये वैशम्पायन शिष्यास्तित्तिरयोभूत्वा यजूंष्यभक्षयन् तानि यजूंषि बुद्धिमालिन्यात्कृष्णानि जातानि ततोदुःखितो याज्ञवल्क्यः सूर्यमाराध्याऽन्यानिशुक्लानि यजूंषि प्राप्तवान् तानिच जाबाल गौधेयकाण्व माध्यंदिनादिभ्यः पंचदशशिष्येभ्यः पाठितवान् तत्रमध्यंदिनेन महर्षिणालब्धो यजुर्वेदशाखा विशेषो माध्यंदिनः यद्यपि याज्ञवल्क्येनबहुभ्यः शिष्येभ्य उपदिष्टस्तथापीश्वर कृपया मध्यंदिन संबंधितयालोके प्रख्यायतेतं माध्यंदिनंवेदंयेऽधीयंतेविंदंति वाशिष्यपरम्परयावर्त्तमानास्तेपि माध्यंदिनाउच्यंतेइति । वायुपुराणेऽपिशक्रसोमाग्निरुद्राश्वविश्वेदेवास्त्रिलोचनः विधाताशङ्कुपाणिश्च तथासप्तर्षयोऽमलाः १ मृकंडकपिलौ व्यासः याज्ञवल्क्यः पराशरः वाल्मीकि नारदोगस्त्य इत्येते वाजशाखिनः २ ग्रंथांतरे । कलौमाध्यंदिनीशाखा कलौदेवो महेश्वर इति । याज्ञवल्क्यस्य त्रेतायां वाजसनेयनाम्नाजनिर्बभूव तस्य याज्ञवल्क्यपुत्रस्य प्रवर्तकत्वात् साशाखा वाजसनेयी पठिता एवंच तच्छाखाध्येतारः माध्यंदिन वाजसनेयिनोजाताः । तच्छाखानुयायिना गौडवंशोद्भव पंडितेन द्वादश महानिबंध कर्तृणा शिवभक्तेनमया श्रीचतुर्थीलाल कर्मठेनाऽयंग्रंथः ( प्रतिष्ठाप्रकाशाख्यः ) प्रणीतः । अनेन शुक्लयाजुषः कर्मठाः सुप्रसन्नाभवंतुतराम् ॥ ॥ अत्रच मदनरत्नं· प्राचीनप्रतिष्ठापद्धतिः प्राचीनवास्तुप्रयोगः हेमाद्रिः महार्णव मत्स्यपुराणरूपनारायणीय पूर्तकमलाकर मठतत्वशारदातिलक प्रतिष्ठामयूखं शांतिसार कुंडार्चनविधिः हरिहर भाष्यंधर्मसिंधुः सुबोधिनीपद्धति इत्यादिनिबंधेभ्यः सारभूतानि वचांसिप्रगृह्यप्रयोगविधिना स्पष्टीकृतः । अत्रयत्किंचिद्दृष्टिदोषेणवालिपितः स्खलितंपदं दृश्यतेतद्विबुधैः क्षंतव्यम् ॥ ॥ इत्यलम् ॥ ॥

श्रीगणेशायनमः ॥ मातापितरौविश्वस्यभवानीशंकरौप्रभू ॥ वंदेऽहंसर्वदाभक्त्यानिजंतातंचमातरं ॥ १ ॥ नत्वामहेश्वरंसांबंदृष्ट्वाप्राचीनप
द्धतीः ॥ प्रतिष्ठाप्रकाशंग्रंथंकुर्वेशुक्लयजुर्विदां ॥ २ ॥ अथातःसंप्रवक्ष्यामिप्रासादानांविधिंशुभम् ॥ कृतेनयेनतेषांतुप्रतिष्ठासंप्रजायते ॥ ३ ॥
तत्रादौसर्वदेवप्रतिष्ठाकालउच्यते । मात्स्ये । चैत्रेवाफाल्गुनेवापिज्येष्ठेवामाधवेतथा ॥ माघेवासर्वदेवानांप्रतिष्ठाशुभदासिते ॥ ४ ॥ सौम्या
यनेशुभाप्रोक्तानिंदितादक्षिणायने ॥ रिक्तान्यतिथिषुस्यात्सावारेभौमान्यकेतथा ॥ ५ ॥ यातिथिर्यस्यदेवस्यतस्यांवातस्यकीर्तिता ॥ आषाढेद्वे
तथामूलमुत्तराद्वयमेवच ॥ ज्येष्ठाश्रवणरोहिण्यःपूर्वाभाद्रपदातथा ॥ ६ ॥ हस्ताश्विनीरेवतीचपुष्योमृगशिरस्तथा ॥ अनुराधातथास्वातीप्र
तिष्ठासुप्रशस्यते ॥ ७ ॥ चंद्रताराबलोपेतेपूर्वाह्णेशोभनेदिने ॥ शुभलग्नेशुभांशेचकर्तुर्नोनिधनोदये ॥ ८ ॥ अयनेविषुवेतद्वत्षडशीतिमुखेत
था ॥ सुराणांस्थापनंकार्यंविधिदृष्टेनकर्मणा ॥ ९ ॥ प्राजापत्येतुशयनंश्वेतेतूत्थापनंतथा ॥ मुहूर्तेस्थापनंकुर्यात्पुनर्ब्राह्मेविचक्षणः ॥१०॥ दिन
मध्यगतेसूर्येमुहूर्तेऽभिजिदष्टमे ॥ सर्वकामसमृद्धःस्यात्सर्वोपद्रववर्जितः ॥११॥ चरराशिंपरित्यज्यस्थिरराशिंप्रगृह्यच ॥ सुप्रशस्तेमुहूर्तेवैप्रति
ष्ठांकारयेद्बुधः ॥ १२ ॥ सिंहेसूर्यःशिवोद्वंद्वेलग्नेस्थाप्यःस्त्रियांहरिः ॥ कुंभेवेधश्चरेक्षुद्राह्यंगदेव्यःस्थिरेऽखिलाः ॥१३॥ ( अथदेवतांतरेणकाल
विशेषोरत्नावल्याम् ) ॥ माघफाल्गुनवैशाखज्येष्ठाषाढेषुपंचसु ॥१४॥ श्रावणेचनभस्येचलिंगस्थापनमुत्तमम् ॥ देव्यामाघेऽश्विनेमासेप्युत्त
मासर्वकामदा ॥ १५ ॥ नतिथिर्नचनक्षत्रंनोपवासोत्रकारणम् ॥ सर्वकालंप्रकर्तव्यंकृष्णपक्षेविशेषतः ॥ १६ ॥ रात्रिरूपायतोदेवीदिवारूपो
महेश्वरः ॥ अतःस्वकालपूजाभिःसिद्धिदापरमेश्वरी ॥ १७ ॥ माधवीयेमयूखेच ॥ मातृभैरववाराहनारसिंहत्रिविक्रमाः ॥ महिषासुरहंत्र्यश्च

स्थाप्यावैदक्षिणायने ॥ १८ ॥ गृहेस्वेयोविधिःप्रोक्तोविनिवेशप्रवेशयोः ॥ सएवविदुषाकार्य्योदेवतायतनेष्वपि ॥१९॥ नारदः । हंत्यर्थहीना कर्तारंमंत्रहीनातुऋत्विजम् ॥ स्त्रियंलक्षणहीनातुनप्रतिष्ठासमोरिपुः ॥ २० ॥ प्रतिष्ठापद्धतौउदगयनेमाघादिपंचमासेषुशुक्लपक्षे चतुर्थीषष्ठी नवमीचतुर्दशीवर्जितानासर्वासांवाकृष्णपक्षेदशम्यंतानांनिषिद्धतिथिवर्जितानामन्यतमस्यांतिथौनिषिद्धास्वपिस्वदैवत्यायाभौमवर्जितदिने । अश्विनीरोहिणीमृगशीरपुनर्वसुपुष्यउत्तरात्रयहस्तचित्रास्वातीअनुराधाज्येष्ठाश्रवणमूलधनिष्ठाशतभिषारेवतीएतेषुनक्षत्रेषुअन्येष्वपिस्वदैवत्ये षुउपदिष्टेष्वपि । प्रोक्तकालहोरायांभद्रावर्जितकरणेषुश्वेतमैत्रसावित्रवैराजरौहिणमाहेंद्रगांधर्वेष्वन्यतमस्मिन्मुहूर्तेगुणान्वितेस्थिरेलग्नेततो ऽन्यस्मिन्नपिस्थिरेंशेशुभनिमित्तान्वितकालदिनेयजमानस्यचंद्रसूर्यताराबलान्विते देवानांप्रतिष्ठांकुर्यात् ॥ इतिप्रतिष्ठाकालः ॥ ततोयजमानः सुमुहूर्तेप्रातःकृत्यंनिर्वृत्यशुद्धोभूत्वाआचार्यहस्तेपूजासंभारान्समर्प्यसुवासिनीभिःसौभाग्यवतीभिःस्त्रीभिः गीतवाद्यमंगलशब्दैःसहप्रासादाग्रे प्राच्यामुदीच्यांवाप्रतीच्यांनातिदूरेमंडपभूमिमागत्यपादप्रक्षालनंकृत्वाआसनोपर्युपविश्य आचमनंप्राणायामंचकृत्वाबद्धशिखःसपत्नीकोग णेशंध्यायन्प्राङ्मुखउदङ्मुखोवाउपविश्यदेशकालौसंकीर्त्य ममेहजन्मनिजन्मांतरेवाकृतसमस्तपापक्षयार्थं श्रीपरमेश्वरप्रीत्यर्थं अमुकदेवप्रासा दप्रतिष्ठायज्ञोपयोगीकरिष्यमाणमंडपादीनांनिर्विघ्नतासिद्धयेगणपतिपूजनमाचार्यादिवरणंचकरिष्ये ॥ इतिसंकल्प्य । ॐसुमुखश्चैकदंतश्च० इत्यादिस्मरणपूर्वकयथाविधिनागणपतिंसंपूज्यआचार्यवरणंकुर्यात् । तद्यथाआचार्यस्यपादप्रक्षालनंपादपूजनंचकृत्वाशिरसिकुंकुमादिनातिल कंचकृत्वाअक्षतपुष्पादिभिःसंपूज्य गुरवेनमइतिनत्वादेशकालौसंकीर्त्य । अमुकदेवताप्रासादप्रतिष्ठाप्रारंभनिमित्तंतदंगत्वेनमंडपंकर्तुं अमुक

गोत्रममुकप्रवरंअमुकवेदशाखाध्यायिनंअमुकशर्माणंब्राह्मणंआचार्यत्वेनत्वामहंवृणे । ॐवृतोस्मि इतिप्रतिवचनं । ॐव्रतेनंदीक्षामाप्नोतिदी
क्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ इत्याचार्यंवृत्वाहस्तेकंकणबंधनंकुर्यात् । ततआचार्यंपाद्यादिषोडशोपचारैः
संपूज्य । आचार्यत्वंयथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत ॥ १ ॥ इतिसंप्रार्थ्यतिष्ठेत् । ततआचार्यस्तत्रमंडपा
र्थंभूम्यावाहनंप्रतिष्ठापनंपूजनंशोधनंचकुर्यात् । अथभूम्यावाहनंभूमिंस्पृष्ट्वाआचार्यःपठेत् । ॐभूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्य
भुवनस्यधर्त्री ॥ पृथिवींयच्छपृथिवींदृꣳहपृथिवींमाहिꣳसीः ॥ १ ॥ ॐघृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा ॥ द्यावापृथि
वीव्वरुणस्यधर्म्मणाविष्कभितेऽअजरेभूरिरेतसा ॥ २ ॥ ॐमहीद्यौःपृथिवीचनऽइमंयज्ञंमिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ३ ॥ आग
च्छसर्वकल्याणिवसुधेलोकधारिणि ॥ उद्धृतासिवराहेणसशैलवनकानना ॥ ४ ॥ रत्नाकरेविष्णुनात्वंधृतावाराहरूपिणा ॥ आगच्छवरदे
धात्रियज्ञेऽस्मिन्शुभदायिनि ॥ ५ ॥ एतैर्मंत्रैर्भूम्यावाहनंकृत्वा । ॐमनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिमन्तंनोत्वरिष्टंयज्ञꣳसमिमंदधा
तु ॥ व्विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ ॥ इतिप्रतिष्ठाप्य । ॐभूमिर्भूमिमवागान्मातामातरमप्यगात् ॥ भूयामपुत्रैःपशुभिर्योनोद्वेष्टिस
नश्यतु ॥ १ ॥ इतिमंत्रेणभूमिंनत्वा ॥ ॐभूर्भुवःस्वःपृथिवीकूर्मानंतदेवताभ्योनमः ॥ इतिमंत्रेणषोडशोपचारैःसंपूज्य अंजलिंबध्वाप्रार्थयेत् ।
नंदेनंदयवासिष्ठेवसुभिःप्रजयासह ॥ जयभार्गवदायादेप्रजानांजयमावह ॥ १ ॥ पूर्णेगिरीशदायादेपूर्णकामंकुरुष्वमे ॥ भद्रेकाश्यपदायादेकु
रुभद्रांमतिंमम ॥ २ ॥ सर्वबीजसमायुक्तेसर्वरत्नौषधीवृते ॥ रुचिरेनंदनेनंदेवासिष्ठेरम्यतामिह ॥ ३ ॥ प्रजापतिसुतेदेवीचतुरस्रेमहीयसी ।

सुभगेसुव्रतेदेवीगृहेकाश्यपिरम्यताम् ॥ ४ ॥ ॐशेषमूर्ध्निस्थितांरम्यानानासुखप्रदायिनीं ॥ विश्वधात्रींमहाभागांविश्वस्यजननींपरां ॥ ५ ॥
यज्ञभागंप्रतीक्षस्वसुखार्थंप्रणमाम्यहं ॥ तवोपरिकरिष्यामिमंडपंसुमनोहरं ॥ ६ ॥ क्षंतव्यंचत्वयादेविसानुकूलामखेभव ॥ निर्विघ्नंममकर्मेदं
यथास्यात्त्वंतथाकुरु ॥ ७ ॥ इतिसंप्रार्थ्यस्वाभीष्टमानांभूमिंस्वीकृत्य ततःपंचगव्येनयथाविधिनाताम्रपात्रेकृत्वाप्रणवेनदशवारमनुमंत्र्यहरि
तैःकुशैःभूमिंप्रोक्षयेत् । तत्रमंत्राः । ॐइरावतीधेनुमतीहिभूतꣳसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीव्विष्णवेतेदाधर्त्थपृथिवीमभितो
मयूखैःस्वाहा ॥ १ ॥ ॐइदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरेस्वाहा ॥ २ ॥ ॐमानस्तोकेतनयेमानऽआयुषिमानोगोषु
मानोऽअश्वेषुरीरिषः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मंतः सदमित्वाहवामहे ॥ ३ ॥ ॐशन्नोमित्रः शंव्वरुणः शन्नोभवत्त्वर्य्यमा ॥
शन्नऽइंद्रोबृहस्पतिः शन्नोव्विष्णुरुरुक्रमः ॥ ४ ॥ ॐशन्नऽइन्द्राग्नीभवतामवोभिः शन्नऽइन्द्राव्वरुणारातहव्या ॥ शन्नऽइन्द्रापूषणाव्वाजसातौ
शमिन्द्रासोमासुवितायशंय्योः ॥ ५ ॥ एतान्मंत्रान्पठित्वा ॥ ॐजितंतेपुंडरीकाक्षनमस्तेविश्वभावन ॥ सुब्रह्मण्यनमस्तेस्तुमहापुरुषपूर्वज ॥
॥ १ ॥ ॐनृसिंहउग्ररूपज्वलज्वलप्रज्वलप्रज्वलस्वाहा । इतिपठित्वा । ॐदेवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्व
त्यैव्वाचोयन्तुर्य्यंत्रेणाग्नेः साम्म्राज्येनाभिषिञ्चामि ॥ १ ॥ एतैर्मंत्रैरिरावतीत्यारभ्याभिषिंचामीत्यंतैःपृथिवींप्रोक्ष्य । ततः । श्वेतसर्षपान्गृही
त्वाईशानाभिमुखोविकिरेत्सर्वतोमुखं । तत्रमंत्राः । ॐभूतानिराक्षसावापियत्रतिष्ठंतिकेचन ॥ तेसर्वेप्यपसर्पंतुविष्णुयागंकरोम्यहं ॥ १ ॥
भूतप्रेतपिशाचाद्याह्यपक्रामंतुराक्षसाः ॥ स्थानादस्माद्व्रजंत्वन्यत्स्वीकरोमिभुवंत्विमां ॥ २ ॥ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूता

विघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ॥ ३ ॥ इतिसर्वत्रविकीर्य । पंचगव्येनप्रोक्ष्य । ततस्ताम्रपात्रेगंधदूर्वाफलपुष्पयवयुतंजलंगृहीत्वाशुक्लद्विवासाः शुचिर्भूत्वाअर्घ्यहस्तः जानुभ्यामवनींगत्वाकृतांजलिपुटोभूम्यैअर्घ्यंदद्यात् । तत्रमंत्रः । मंडपंकारयाम्यद्यत्वदूर्ध्वेशुभलक्षणं ॥ गृहाणार्घ्यंमया दत्तंप्रसन्नासर्वदाभव ॥ १ ॥ एवमर्घ्यंदत्वा । ॐस्योनापृथिवीनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथांरितिमंत्रेणप्रार्थयेत् । एवंभूशुद्धिं भूतशुद्धिंचविधाय । तत्रभूमौनिर्विघ्नतार्थंप्रथमंभद्रपीठोपरिवास्तुंसंपूज्यमंडपार्थंप्रथमंप्राचीसाधनंकृत्वामृदाएवसमानरूपांभूमिंचकृत्वागणप तिंश्रीगुरुंचमानसोपचारैर्यजन् कुलदेवतांध्यात्वानमस्कृत्यप्रार्थयेत् । अहंमंडपादिकर्तुंउद्यतस्तस्यनिर्विघ्नमस्तुतथासिद्धिरस्तु इतिप्रार्थ्यतिष्ठेत् ( प्राचीसाधनप्रकारस्तुप्राचीनपद्धतौतत्रादौत्रयोदशाङ्गुलंकर्कटकंप्रसार्यभ्रामयेत् । तेनभ्रमणेनषट्विंशाङ्गुला २६ त्मकंमण्डलंप्राचीसाध नार्थमुत्पन्नं ॥ पुनस्तस्मिन्नेवमण्डलेनवाङ्गुलंकर्कटकंप्रसार्यभ्रामयेत् ॥ तेनअष्टा १८ दशाङ्गुलात्मकंमण्डलंजातं ॥ शंकुसमानकरणार्थमेवं मण्डलद्वयंसंपाद्यमण्डलमध्येद्वादशां १२ गुलंशंकुं ( मूलदेशेस्थूलःधृतःसन्यथानपतिततथास्थूलः सूक्ष्मोग्रेसूचीसदृशः एवंविधंशंकुं ) वृत्तमध्येसंस्थाप्यपश्चात् पंचदशा १५ ङ्गुलविस्तारंशंकुचतुष्टयं ४ गृहीत्वा अष्टादशाङ्गुलात्मकेमध्यवृत्ते तेषांशंकूनांमूलंनिधाय । अग्रंतेषांशं कोरग्रेनिधाय चतुर्दिक्षु एवंशंकुसमंकृत्वाशंकुचतुष्टयंत्याज्यं ॥ मध्यादष्टादशाङ्गुलवृत्तंमार्जनंकार्य्यम् ॥ पश्चात्तत्रस्थानेसावधानतयास्थित्वाप्रा तःकालेशंकोश्छायाषड्विंशाङ्गुलात्मकेमण्डलेयत्रविशतितत्रचिह्नंरेखयाकार्य्यम् ॥ तृतीयप्रहरात्किञ्चिदूर्ध्वंयदाशंकोरग्रछायारेखातोयत्रनिः सरतितत्रचिह्नंकार्य्यम् ॥ तयोश्चिह्नयोरुपरिसूत्रंदेयंप्राचीसिद्धाजाता ॥ ( अतःपरंदक्षिणोत्तरसाधनं ) षड्विंशाङ्गुलात्मके २६ मण्डलेवृत्तेयत्र

स्थानेकर्कटकंस्थापयित्वावृत्तार्थंभ्रामितंनभवति तस्मिंश्चिह्नेचतुरङ्गुलं ४ कर्कटकंप्रसार्य्यपूर्वसूत्रेचिह्नंकार्य्यम् ॥ तथैवपश्चिमतश्चतुरङ्गुलंत्य
क्त्वाचिह्नंकार्य्यम् उभयोरंतरमष्टाङ्गुलमितंजातं ॥ पुनरष्टाङ्गुलंकर्कटकंप्रसार्यपश्चिमचिह्नेकर्कटकंधृत्वापूर्वचिह्नाद्भ्रामयेत् ॥ यथातथाऽर्द्धचंद्रा
काराभवति ॥ उभयोर्वृत्तार्द्धयोगेनमत्स्ययुग्मंदक्षिणोत्तरंभवति ॥ इतिप्राचीसाधनप्रकारः । ( प्रतिदिनजंप्राचीसाधनंपूर्वोक्तमिदंत्रिंशत्घटी
३० मितदिनमानदिनेज्ञेयम् ) ॥ एवंभूम्यादिपूजनविधिंविधायब्राह्मणेभ्योदक्षिणांदत्वाशिल्पिवर्गंचतोषयित्वातत्रमंडपंकुर्यात् । तस्यपरिमाणं।
उत्तमोऽष्टादश १८ वाषोडश १६ हस्तात्मकः ॥ मध्यमश्चतुर्दश १४ द्वादश १२ हस्तात्मकः ॥ कनिष्ठोदश १० हस्तात्मकः । कनिष्ठात्क
निष्ठोअष्ट ८ हस्तात्मको यथावकाशंवामंडपंहस्तोच्चंद्वादशाङ्गुलोच्चंवा अथवोच्छ्रायरहितं भूमिसमं कुर्यात् ॥ तस्यमंडपस्य भागत्रयंकार्यं
मध्यभागेवेदींचतुर्हस्तां ४ चतुरस्रांनिजचतुर्थांशेनपंचमांशेनोच्चांवाविदध्यात् । एवंमध्यवेदिंकृत्वा तस्याःसमंद्वाविंशांगुलांतरेएकहस्तात्मक
चतुरस्रकुंडकरणार्थंभित्तिकरणंतदर्थंसूत्रंदेयं तस्यव्यवहारःपूर्वस्यांदिशिमध्यवेद्याद्द्वादशाङ्गुलं १२ प्राचीसूत्रंत्यक्त्वातत्रचिह्नंकार्य्यम ॥ तत्रैवम
ध्यचिह्नेकर्कटकंद्वादशाङ्गुलं १२ प्रसार्य्य प्राचीसूत्रेचिह्नंकार्य्यम ॥ एवंकृतेहस्तमात्रं सूत्रंजातं कुण्डार्थं पूर्वापरं ॥ अतःपरंदक्षिणोत्तरमुच्यते
यत्कुंडमध्यार्थंचिह्नंकृतंभवति । तस्माच्चिह्नादुपरिचतुरङ्गुलंत्यक्त्वाप्राचीसूत्रेकुंडमध्येचिह्नंकार्य्यम ॥ पूर्वंतथामध्यचिह्नात्पश्चिमेचतुरङ्गुलंत्य
क्त्वाचिह्नंकार्य्यम् ॥ प्राचीसूत्रेएव एवंकृतेउभयोर्वृत्तयोगेमत्स्ययुग्मंभवति । तयोरुपरिसूत्रंदेयं । इतिकृतेकुंडेदक्षिणोत्तरंसिद्धंजातं। पुनरपि
द्वादशाङ्गुलंकर्कटकंप्रसार्य्य कुंडमध्यचिह्नेधृत्वादक्षिणेचिह्नंकार्य्यम ॥ तथैवोत्तरेचिह्नंकार्य्यम । ततःपरंपूर्वचिह्नेद्वादशाङ्गुलंकर्कटकंस्थाप्य मध्य

चिह्नावधि अग्निकोणादारभ्य ईशकोणपर्य्यंतंभ्रामयेत् ॥ अर्द्धचंद्राकारोभवति । तथामुनाप्रकारेणदक्षिणचिह्नेस्थाप्य अग्निकोणान्नैर्ऋतप
र्य्यंतं तथाएवमेवपश्चिमचिह्नेकर्कटकंस्थाप्य नैर्ऋतकोणाद्वायुकोणपर्य्यंतंभ्रामयेत् ॥ ततःपरमुत्तरचिह्नेकर्कटकंस्थाप्यवायुकोणपर्य्यंतंभ्रामयेत् ॥
एवंचतुर्भिरर्द्धचंद्रैश्चतुर्दिक्षुविदिक्षुचचत्वारोमत्स्याभवंति । तेषुचतुर्षुमत्स्येषुचत्वारिसूत्राणिदेयानि सूत्रेषुदत्तेषुसत्सुचतुरस्रंकुंडंभवति । तेषुसू
त्रेष्विष्टिकाभिर्भित्तिर्विधेया हस्तमात्रासमानरूपाइतिपूर्वेचतुरस्रंकुंडंजातम् ॥ १ ॥ अथदक्षिणेअर्द्धचंद्राकृतिकुंडंभवति । तदुच्यते ॥ यद्दक्षि
णोत्तरंसूत्रंप्रवर्त्ततेतदुपरिमध्यवेदितएवविंशाङ्गुलं२० त्यक्त्वायत्पूर्वापरंतत्रप्रसारितंभवतितयोरुभयोर्योगेयत्रमत्स्योत्पत्तिर्जातातत्रमत्स्येचतुर्भि
र्यूकाभिरधिकं एकोनविंशाङ्गुलं १९ यूका ४ कर्कटकंप्रसार्य्योपरिसंस्थाप्य सूत्रावधिभ्रामयेत् ॥ शशिदलकुंडंभवति ॥ तस्माज्ज्यासूत्रंपूर्वापरेसूत्रे
पूर्वापरमेवतदेवजातं अंगुल ३८ यव १ एतावत्प्रमाणंज्यासूत्रं (पंचकुंडीनवकुंडीचतत्पूर्वापरंज्यासूत्रं एककुंडीचेद्दक्षिणोत्तरंज्यासूत्रं इतिविवेकः)
इतिदक्षिणे अर्द्धचंद्राकृतिकुंडम् ॥ २ ॥ अतःपरंपश्चिमेवृत्तकुण्डम् तत्प्रकारउच्यते । यत्रप्राचीसूत्रंपश्चिमेतस्योपरिमध्यवेदितोदक्षिणोत्तरं
सूत्रं प्रसारितंभवति तयोर्योगेमत्स्योत्पत्तिर्जातातत्रमत्स्येचतुर्यवा ४ धिकंत्रयोदशाङ्गुलं १३ यव ४ कर्कटकंप्रसार्य्यमध्येधृत्वा कुंडस्यमध्यार्थं
चिह्नंप्राचीसूत्रेविधेयं पश्चात्कुण्डमध्यचिह्नोपरितावन्मितंकर्कटकंधृत्वाभ्रामयेत् तेनभ्रमणेन वृत्तकुंडंभवति संपूर्णवृत्तविस्तार अङ्गुल २७
भवति ॥ इतिपश्चिमेवृत्तकुंडम् ॥ ३ ॥ ( अथउत्तरेपद्मकुंडम् तत्प्रकारउच्यते ) यद्दक्षिणोत्तरंसूत्रंप्रवर्त्ततेतदुपरिमध्यवेदितोद्वाविंशत्यङ्गुला
२२ त्परंयत्पूर्वापरायितंसूत्रंतस्ययोगेयोमत्स्यस्तस्मिन्मत्स्येकर्कटकं अङ्गुल १८ यव ६ यूका २ लिक्षा ३ बालाग्रं १ रथरेणु ४ त्रसरेणु ७

कर्कटकंप्रसार्य्य दक्षिणोत्तरसूत्रेमत्स्येधृत्वादक्षिणोत्तरसूत्रेकुंडमध्यार्थंचिह्नंकार्यम् पुनस्तत्रमध्यमचिह्नेकर्कटकंस्थापयित्वाभ्रामयेत् तेनभ्राम णेन संपूर्णवृत्तविस्तारांगुल २८ यव ५ यूका ४ लिक्षा ६ वालाग्रं ३ रथरेणु १ । त्रसरेणु ६ जातः । एतस्मिन्वृत्तेवृत्तचतुष्टयंविधेयं । तेषां प्रकारउच्यते ॥ कर्कटकमंगुलत्रयं ३ प्रसार्य्यकुंडमध्येचिह्नेसंस्थाप्यभ्रामयेत्तेनभ्रामणेनप्रथमंषडंगुलकर्णिकाख्यंवृत्तंजातं मध्येतदुपरिषडंगु लंकर्कटकंप्रसार्य्यमध्यचिह्नेधृत्वाभ्रामयेत् ॥ तद्वितीयंकेसराख्यंवृत्तंभवति तदुपरिनवाङ्गुलंकर्कटकंप्रसार्य्यमध्यचिह्नाद्भ्रामयेत् ॥ तेनतृतीयंवृत्तं दलमध्यभूसंज्ञितंजातं । ततोद्वादशागुलंकर्कटकंप्रसार्य्यमध्यचिह्नाद्भ्रामयेत् तेनचतुर्थंवृत्तंदलाग्रभूमिसंज्ञितंजातं । तदुपरिपंचमंपूर्वमेवकृतं भवतितस्यपंचमवृत्तस्यभूपरिमाणउच्यते । कियतीउर्वरीसातस्याः प्रमाणांगुलानि ३ यव ६ यूका ८ लिक्षा । वालाग्रं १ रथरेणु ४ त्रस रेणु ७ अथसर्वेषांपंचमंडलानांसंपूर्णताउच्यते । प्रथमवृत्तस्यषडंगुलोविस्तारः १ द्वितीयस्यद्वादशांगुलोविस्तारः २ एवंस्वकर्कटकात्मंड लानाद्विगुणतोविस्तारः । पंचममंडलस्यसंपूर्णविस्तारांगुल २९ यव ५ यूका ४ लिक्षा ६ वालाग्र ३ रथरेणु १ त्रसरेणु ६ एतत्पंचमंमं डलंदलाग्रविस्तारतुल्योच्चतांकर्णिकांकृत्वाकुंडमध्येस्थापयेत् ॥ इढतयानचलतियथा ॥ इदंकुंडं अष्टदलंवाचतुर्दलंभवति ॥ इतिपद्मकुंडम् ॥४॥ अतः परंपंचमंआचार्यकुंडंचतुरस्रंतत्प्राचीसूत्रादारभ्यईशकोणपर्यंतंसूत्रंप्रमाणीकृत्यतस्यसूत्रस्यअर्द्धभागंकृत्वातस्मिन्नर्द्धभागेप्रथमचतुरस्रकुंडरी त्यातेनसमानसूत्रेणचतुरस्रंकुंडंकार्यम् ॥ इतिपंचकुंडीकर्तव्यता ॥ इतिएकहस्तात्मकानिकुंडानि ॥ एकांगुलःकंठः । तंत्यक्त्वानंदां ९ गुलोच्चं ॥ ४ ॥ मेखलात्रितयं ३ तासांप्रमाणं । प्रथमंकुंडमुखेसानवांगुलोच्चा ९ चतुरंगुल ४ विस्तृता । ततोद्वितीयाषडंगुलो ६ चात्र्यंगुल ३ विस्तृता ।




वृत्तकुण्डम्




अर्धचन्द्र



चतुष्कोणास्रम्·

दंडं ३ नैर्ऋत्यांनीलायांखड्गम् ४ वारुण्यांश्वेतायापाशम् ५ वायव्यां धूम्रायामङ्कुशम् ६ साम्यायांश्वेतायांगदाम् ७ ऐशान्यांश्वेतायांत्रिशूलम् ८ लिखित्वाप्रांतेकिङ्किणीचामरादिभिर्भूषयेत् । नवमीचपताकापूर्वेशानयोर्मध्येआचार्यकुंडसमीपेश्वेतातथैवदेया ॥ ततोमण्डपस्येशानकोणेहस्तमात्रदीर्घायामा वितस्तिमात्रोच्चाव्यङ्गुलोच्चवप्रवतीग्रहवेदिः कार्य्या ॥ ततोनवकुण्डीपक्षे प्राच्यादिषुदिक्षुविदिक्षुचाष्टौ ऐशान्यामेकमाचार्य्यकुंडमिति ॥ नवकुंडानि कुर्यात् । ( तदशक्तौ ) पंचकुंडीपक्षेचतुर्दिक्षुचत्वारि ऐशान्यामेकमितिपंच ॥ ( तत्राप्यशक्तौ ) एककुण्डमात्रंकार्य्यम् । कुण्डनिर्म्माणस्यातीवदुष्करतयान्यूनाधिकताया दोषश्रवणाच्चकुंडस्थानेस्थंडिलान्येवाऽधुनाकुर्यात् ॥ इतिमण्डपादिकरणप्रकारः ॥ एवं तोरणपताकादिसहितंचतुरस्रंदृढंनिर्वातंमंडपंविधायतदुत्तरेचतुर्द्वारयुतंस्नपनमंडपंद्वितीयंचकृत्वातत्रवेदिकात्रयंकुर्यात् एतत्सर्वंमंडपादिअधिवासदिनात्प्राक्विधेयं । अलंविस्तरभयान्नलिख्यते ॥ इतिमंडपादिकरणं ॥ अथअधिवासनदिनपूर्वदिनेकृतहविष्यभोजनोऽधिवासदिनेप्रातरुत्थायतीर्थादौकातीयस्नानविधिनास्नात्वाप्रायश्चित्तमुक्तयेपापधेनुदानंकुर्यात् । तत्रप्रतिज्ञा । देशकालौसंकीर्त्यअमुकदेवप्रासादोत्सर्गार्हतासिद्धयेममसर्वपातकनिवृत्तयेपापधेनुसंज्ञकांगाममुकगोत्रायअमुकशर्मणेब्राह्मणायअहंदास्ये । इतिसंकल्प्यविधिवद्दत्त्वा पुनस्तीर्थादौस्नात्वापंचगव्यसर्वौषधिभिर्वारुणमंत्रैःस्नात्वा । तत्रवरुणमंत्राः ॥ ॐवरुणस्योत्तंभनमसिव्वरुणस्यस्कंभसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद ॥ १ ॥ ॐतत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ २ ॥ ॐत्वन्नोऽअग्नेव्वरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः ॥ यजिष्ठोव्वह्नितमःशोशुचा

यातृतीयाभूमिलग्नासात्र्यंगुलोच्चाद्यं २ गुलविस्तृता । एवंमेखलाविधेया । तासामुपरियोनिर्विधेयासादशाङ्गुलविस्तीर्णाअष्टाङ्गुलायता ८ अंगुलद्वयोच्चा २ तत्रविवेकः एकांगुलोच्चाएकाङ्गुलापरिधिः । एवंमिलित्वाद्व्यंगुलोच्चावृत्तद्वयवती २ मध्येविलवती । अग्रतोनिम्नापृष्ठतश्चो-न्नता । नालंतस्यांभूमिलग्नंविधेयमितियोनिस्वरूपं ॥ इति कुंडरचनाप्रकारः ॥ पंचकुंडीपक्षेचतुरस्रंपूर्वे अर्द्धचंद्राभंदक्षिणे वृत्तकुंडंपश्चिमे पद्माभंअष्टदलंवाउत्तरे इंद्रेशानयोर्मध्येचतुरस्रंहोमानुसारेणाऽऽचार्यकुंडंविधेयं । एककुंडीपक्षेतु चतुरस्रंवावृत्तकुंडंपश्चिमेवोत्तरेविधेयं । पूर्वे कुंडदक्षिणकुंडदक्षिणकुंडयोर्योनिःउत्तराग्रा पश्चिमोत्तरयोस्तुपूर्वाग्रा ॥ इतियोनिव्यवहारः । अथनाभिः । सर्वेषांकुंडानांमध्येनाभिः पद्मा-कारावाकुंडसदृशी हस्तमात्रकेकुंडेचतुरंगुलविस्तारा अंगुलद्वयोच्चाभवति ॥ इतिकुंडरचना ॥ ततःउत्तरवेद्याश्चतुःकोणेषु ईशानकोणेग्रह पीठंचतुस्त्रिंशा ३४ ङ्गुलविस्तारंषोडशांगुलोच्चं १६ अग्निकोणे मातृकापीठंहस्तमात्रंद्वादशाङ्गुलोच्चं । नैर्ऋतकोणेवास्तुपीठंहस्तमात्रंद्वादशा ङ्गुलोच्चं । वायुकोणेयोगिनीक्षेत्रपालपीठंहस्तमात्रद्वादशाङ्गुलोच्चंचविधेयं । मातृकापीठेघृतधारातदर्थंपूर्वभागेशिलारोपणंशिलाभावेइष्टि काभिर्भित्तिर्विधेया ।इतिवेदिप्रकारः॥अथमण्डपरचनाप्रकारः॥ तत्रसर्वेषुमंडपेषुप्रथमंप्राक्पश्चिमायतैर्दक्षिणोत्तरायतैश्चतुर्भिश्चतुर्भिः समान्त रालैः सूत्रैस्तुल्यदीर्घायामानवखंडाविधेयाः ॥ तेषांचमध्यमखंडेवेदिर्विधेया ॥ सर्वेष्वपिखण्डेषुसूत्रद्वयसंलग्नतावशेनचतुष्कोणमापन्नेषुषोड शसुस्थानेषुषोडशस्तंभास्तथानिवेश्याः । तथाच । वेदिकोणचतुष्टयेचत्वारः । बाह्यपंक्तिषुचकोणस्थानेषुद्वादशस्तंभाइत्येवंषोडशस्तंभनिवेश नम् ॥ वेदिकोणस्थस्तंभाश्चअष्टहस्तप्रमाणाः अष्टादशादिहस्तमंडपेतुमंडपार्द्धप्रमाणाःकार्याः । अन्येतुद्वादशस्तंभाः सर्वत्रपंचहस्तप्रमाणाः

षोडशानामपितेषास्वस्वपंचमांशेनभूम्यंतःप्रविष्टमूलतया निधानंशिरसिचूडाचकार्या ॥ तेषांचूडासुचउभयतएकैकरंध्रद्वयेनद्वयोर्द्वयोः स्तंभ
योरुपरिचूडायांसंयोजनंभवति । तथाग्रथ्नीयात् ॥ एवंचप्राच्यादिषुदिक्षुप्रत्येकंतिसृभिस्तिसृभिर्वलिकाभिः स्तंभचतुष्टयग्रंथनेनद्वादशसस्तंभे
षुद्वादशवलिकादेयाः । ततोवेदिकोणस्थस्तंभस्यप्रत्येकंतत्समसूत्रस्थबाह्यपंक्तिस्थस्तंभाभ्यांपूर्ववत् चूडयोर्योजनायद्वेद्वेवलिकेतथादेये ॥ यथा ॥
वेदिकोणस्थस्तंभस्य बाह्यवह्निकोणपश्चिमस्तंभेनचयोजनंभवति ॥ एवमन्येषामपिबोध्यम् ॥ ततोवेदिकोणस्थस्तंभैर्बाह्यकोणस्थस्तंभानांयो
जनार्थंकर्णाकाराश्चतस्रोवलिकास्तत्तच्चूडासुदेयाः ॥ ततोवेदिकोणस्थस्तंभानामुपरिशिखराकारतासंपादिकाश्चतस्रोवलिकादेयाः ॥ इत्येवंषो
डशवलिकाः यावत्प्रमाणेन उभयोर्योजनंशिखरताचभवेत् तावन्मिताःकार्य्याः । ततोमंडपस्यप्राच्यादिषुदिक्षुद्वयोर्द्वयोःस्तंभयोर्मध्ये बाह्यप
ङ्क्तिस्थमध्यमखण्डमध्यभागेषुचत्वारिद्वाराणिकार्य्याणि । तानिचाल्पेमण्डपेद्विहस्तविस्तृतानि ॥ मध्यमे चतुरङ्गुलाधिकद्विहस्तविस्तृतानि ॥
उत्तमे अष्टाङ्गुलाधिकद्विहस्तविस्तृतानि चतुर्हस्तदीर्घाभ्यांद्वाभ्यांस्तंभाभ्यामुपरिस्थयापूर्वोक्तविस्तारविशेषयुक्तया एकैकयावलिकयाप्रत्येकं
युक्तानिकार्य्याणि । स्तंभादिकंसर्वमेवसारदारुप्रभवंकार्य्यम् प्रतिद्वारंद्वौद्वौकलशौस्थापयेत् ॥ कोणेषुचैकैकमितिशेषः ॥ ततोनारिकेलदल
पल्लवकटवंशादिभिर्द्वारवर्जं सर्वत्रमण्डपमाच्छादयेत् । दर्पणचामरवस्त्रादिभिश्चषोडशस्तंभान्भूषयेत् । द्वारदेशेचकदलीस्तंभादिशोभांविद
ध्यात् ॥ ततोमंडपबाह्येद्वारसंमुखेहस्तान्तरितस्थाने तोरणाख्यानि बाह्यद्वाराणिकुर्यात् ॥ तानिचाल्पेमंडपेपंचकरोन्नतानि ॥ मध्यमे षट्
करोन्नतानि । ( उत्तमे ) सप्तकरोन्नतानिस्वस्वप्रमाणार्द्धविस्तृतानिकार्याणि ॥ सर्वाणिचतत्तत्प्रमाणयोः स्तंभयोरुपरिस्थयास्वस्वार्द्धप्रमाण

याएकैकयावलिकयायुक्तानिकार्य्याणि ॥ तत्रायंविशेषः । प्राच्यामश्वत्थजम् ॥ याम्यायामुदुम्बरजम् ॥ प्रतीच्याप्लक्षजम् । उदीच्यांन्यग्रोधजम् ॥ वलिकोपरिफलककाष्ठंदेयमितितोरणानिचतत्तत्काष्ठजातानि सारदारुभवानिवाइतिसांप्रदायः ( शैवयागेतु ) चतुर्षुफलकेषुशूलाकृतयः कीलादेयाः ( तेचाल्पे ) मंडपेनवाङ्गुलदीर्घा ( मध्यमे ) एकादशांगुलदीर्घाः ( उत्तमे ) त्रयोदशाङ्गुलदीर्घाः स्वस्वतुरीयांशविस्ताराः फलकजातीयकाष्ठविशेषजाः ( अल्पादिभेदेन ) द्वित्रिचतुरङ्गुलप्रमाणेन फलकमध्यभागनिविष्टमूलेनाधःस्थकीलकान्तरेणोपलक्षिताः कार्य्याः ॥ ( वैष्णवेमंडपे ) अल्पादिभेदेनदशद्वादशचतुर्दशाङ्गुलदीर्घाःस्वस्वतुरीयांशविस्तारानिवेशनार्थं यथाक्रममधोभागेद्वित्रिचतुरङ्गुलप्रमाणकीलकान्तरेणसहिताः प्राच्यादिषुप्रादक्षिण्येन शंखचक्रगदापद्माकृतयः कीलाःस्थाप्याः ॥ ततःपंचवर्णवितानविचित्रवस्त्रैः सफलकदलीस्तंभैःक्रमुकनारिकेलादिफलैर्विविधभोज्यैर्दर्पणचामरादिभिश्चमंडपंभूषयेत् ॥ ततोहिद्वस्तनिखातस्यदशहस्तमितवंशस्योपरिस्थितातान् पंचहस्तदीर्घान्द्विहस्तविस्तृतान्चतुष्कोणाकारान् गैरिकादिभिर्लिखितस्वस्वदिक्पालवाहानान् प्राच्यादिक्रमेणाष्टौ पीतादिवर्णान्पटनिर्म्मितध्वजान्दद्यात् । यथा प्राच्यांपीतवर्णेध्वजेस्वदिक्पतिवाहनमैरावतम् ॥ आग्नेय्यांरक्तवर्णेछागं । याम्यायांकृष्णवर्णेमहिषं । नैर्ऋत्यांनीलवर्णेसिंहं । वारुण्यांश्वेतवर्णेमत्स्यं । वायव्यां धूम्रवर्णेहरिणं । सौम्यायांश्वेतवर्णेअश्वम् । ऐशान्यांश्वेतवर्णेवृषभंक्रमात् लिखित्वादद्यात् ॥ ततःपूर्वोक्तदिक्पालध्वजवर्णानुरूपाअष्टौपताकादेयातश्चगैरिकादिभिर्लिखितवज्राद्यस्त्रयुक्ताः सप्तहस्तदीर्घाएकहस्तविस्तारास्त्रिकोणाकारावस्त्रनिर्मितािद्वहस्तनिखातस्यदशहस्तवंशस्योपरिधृताः कार्य्याः ( यथा ) प्राच्यांपीतायांवज्रं १ आग्नेय्यांरक्तायांशक्तिं २ याम्यायांकृष्णायां

दंडं ३ नैर्ऋत्यांनीलायांखड्गम् ४ वारुण्यांश्वेतायापाशम् ५ वायव्यां धूम्रायामङ्कुशम् ६ साम्यायांश्वेतायांगदाम् ७ ऐशान्यांश्वेतायांत्रिशू
लम् ८ लिखित्वाप्रांतेकिङ्किणीचामरादिभिर्भूषयेत् । नवमीचपताकापूर्वैशानयोर्मध्येआचार्यकुंडसमीपेश्वेतातथैवदेया ॥ ततोमण्डपस्येशा
नकोणेहस्तमात्रदीर्घायामा वितस्तिमात्रोच्चाव्यङ्गुलोच्चवप्रवतीग्रहवेदिः कार्य्या ॥ ततोनवकुण्डीपक्षे प्राच्यादिषुदिक्षुविदिक्षुचाष्टौ ऐशा
न्यामेकमाचार्य्यकुंडमिति ॥ नवकुंडानि कुर्यात् । ( तदशक्तौ ) पंचकुंडीपक्षेचतुर्दिक्षुचत्वारि ऐशान्यामेकमितिपंच ॥ ( तत्राप्यशक्तौ )
एककुण्डमात्रंकार्य्यम् । कुण्डनिर्म्माणस्यातीवदुष्करतयान्यूनाधिकतायां दोषश्रवणाच्चकुंडस्थानेस्थंडिलान्येवाऽधुनाकुर्यात् ॥ इतिमण्डपा
दिकरणप्रकारः ॥ एवं तोरणपताकादिसहितंचतुरस्रंदृढंनिर्वातंमंडपंविधायतदुत्तरेचतुर्द्वारयुतंस्नपनमंडपंद्वितीयंचकृत्वातत्रवेदिकात्रयंकुर्यात्
एतत्सर्वंमंडपादिअधिवासदिनात्प्राक्विधेयं । अलंविस्तरभयान्नलिख्यते ॥ इतिमंडपादिकरणं ॥ अथअधिवासनदिनपूर्वदिनेकृतहविष्यभो
जनोऽधिवासदिनेप्रातरुत्थायतीर्थादौकातीयस्नानविधिनास्नात्वाप्रायश्चित्तमुक्तयेपापधेनुदानंकुर्यात् । तत्रप्रतिज्ञा । देशकालौसंकीर्त्यअमुक
देवप्रासादोत्सर्गार्हतासिद्धयेममसर्वपातकनिवृत्तयेपापधेनुसंज्ञकांगामसुकगोत्रायअमुकशर्मणेब्राह्मणायअहंदास्ये । इतिसंकल्प्यविधिवद्दत्वा
पुनस्तीर्थादौस्नात्वापंचगव्यसर्वौषधिभिर्वारुणमंत्रैःस्नात्वा । तत्रवरुणमंत्राः ॥ ॐवरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्ज्जनीस्थोवरुणस्यऽऋ
तसदंन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ १ ॥ ॐतत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेड
मानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ २ ॥ ॐत्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचा

नोव्विश्वाद्वेषां॑ꣳसिप्रमुमुग्ध्यस्मत् ॥३॥ ॐसत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोव्वरुणꣳरराणोव्वीहिमृडीकꣳसुह
वोनएधि ॥ ४ ॥ ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्वमयाअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजं ॥ ५ ॥ ॐयेतेशतंवरुणंयेसहस्रं
यज्ञियाः पाशावितताम्हांतः ॥ तेभिन्नोअद्यसवितोतविष्णुर्विश्वेमुञ्चंतुमरुतः स्वर्काः ॥ ६ ॥ ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳ
श्रथाय ॥ अथाव्वयमादित्यव्रतेतवानागसोऽअदितयेस्याम ॥ ७ ॥ एतैर्मंत्रैःस्नात्वा । अहतेशुक्लवाससीद्वेपरिधायशुक्लगंधानुलेपनःशुक्लमा
ल्याबरधरःकृतनित्यक्रियःसपत्नीकोयजमानःएतान्संभारान्गृहीत्वाशिल्पिस्थानात्प्रादक्षिण्येनदेवंचानीयगीतवादित्रभेरीसुवासिनीमंगल
घोषशांतिपाठैर्युक्तःसन् मंडपसमीपमागत्यपश्चिमद्वारेणप्रविश्यतत्रदेवंआसनेनिधायदक्षिणद्वारसमीपेपश्चिमेभद्रपीठेप्रागग्रदर्भेषुयजमानःस
पत्नीकःप्राङ्मुखउदङ्मुखोवाउपविशेत् । अथसंभाराःतत्रादौग्रहहोमार्थंअर्कादिसमिधांप्रत्येकमष्टशतं लोकपालादियागायपलाशादिसमिधांप्र
त्यकमष्टशतं । संक्षेपपक्षेआज्यचर्वादि भद्रपीठत्रयं ३ पुष्पमालाः कुंकुमं चंदनं कर्पूरः कस्तूरी अगुरुः गुग्गुलः धूपं धूपपात्रं आरार्तिकं
घंटाः पादुका दर्पणं बलिसामग्री पायसभक्ष्यभोज्यनैवेद्यं ताबूलानि पूगीफलानि होमार्थमाज्यतिलयवाक्षतशर्कराफलादिकं प्रतिकुंडं
विष्टराश्चत्वारः प्रतिकुंडंस्रुक्स्रुवौ आसनानि कुंकुमरंजितत्रिसूत्री श्वेतोर्णासूत्रं सर्वतोभद्रादिरचनायश्वेतरक्तपीतनीलकृष्णवर्णकाः । स्नपन
कलशाः पल्लवाः कदलीस्तंभाः पताकादशसंख्याकाः ध्वजाश्चतेषांवेणुदंडाः एकोमध्यध्वजः एकःप्रासादार्थेध्वजः । वज्रमौक्तिकवैडूर्यशंख
स्फटिकपुष्परागेंद्रनीलमहानीला इतिरत्नाष्टकं । हरितालकमनःशिलाभ्रककृष्णांजनमाक्षिककासीसस्वर्णमाक्षिकगैरिका इतिधात्वष्टकं ।

तिलयवमुद्गगोधूमनीवारश्यामाकसर्षपव्रीहय इतिबीजाष्टकं । सुवर्णरजतताम्रलोहत्रपुसीसरंगरीत्याख्यधात्वष्टकं । मधुपर्कपात्रंसौवर्णंताम्रं वाअर्घपात्रंच शत्यैकद्वित्रिमाषसुवर्णशलाका । कनकं कुलिशं नीलं पद्मरागं मौक्तिकं । इतिस्थापनीयकलशरत्नानि ॥ अष्टौद्वारकलशाः ८ । दशलोकपालकलशाः १० वेदिकलशाश्चत्वारः ४ । वास्तुमंडलकलशः १ । कुंडकलशाः कुंडसंख्यया । निद्राकलशः १ । स्नपनकलशाः एकाशीति ८१ कलशसंख्ययाशरावाणि वेदिकोणेशृंगारकलशाः ४ उदकाहरणकुंभाः ॥ करकाश्च १० धारासहस्रान्वितौ कलशौ गजअश्वस्थवल्मीकनदीसंगमह्रदकूलद्वयवराहोत्खातगोष्ठाग्न्यागारचत्वरराजद्वारमृदः । सुरामांसीवचाकुष्टंशैलेयंहरिद्रादारुहरिद्रासुंठीचंपकमुस्ता इतिसर्वौषध्यः ॥ उदुंबरन्यग्रोधअश्वत्थजांबूआम्रत्वक्संभवकषायपंचकम् । पल्लवाश्च । शमीपलाशसारिवाहरिद्रासर्षपप्रियंगुकालांजनंपद्मकेशरं गोरोचननागकेशरसहदेवीसिंहीव्याघ्रीबलाशंखपुष्पीवचासुवर्चलाऋद्धिवृद्धिशतावरीसूर्यावर्ताअपराजिताविष्णुक्रांताइतिमहौषधिगणः ॥ पंचगव्यंपृथक्पृथक्पंचामृतं । व्रीहियवतिलगोधूमनीवारश्यामाकमुद्गा इतिसप्तधान्यानि ॥ शय्यासोपस्कराश्वेतछत्रं चामरद्वयं विचित्रवितानं त्रयोदुकूलपट्टाः ऋत्विक्वरणसामग्री उद्वर्तनद्रव्यं गोघृतं गोशृंगोदकं तीर्थोदकं शंखः शिल्पदेयानिवस्त्राणि सुगंधितैलं नेत्रांजनपात्रं सिंदूरं आम्रपत्रमाला सुवर्णरचिताविष्ण्वादिदेवप्रतिमानारिकेलफलानिऋतुफलानि यज्ञोपवीतानि गोधूमयवमसूरचूर्णविरुक्षकरणार्थं । समुद्रोदकं । नारिकेलोदकं । नीराजनायपिष्टमयदीपाः । वर्तिकाः १०० आरार्तिकदीपार्थं । रक्तवस्त्रं । पीतवस्त्रं । कौशेयवस्त्रं । स्वर्णशकलानि । नवग्रहसमिधः अर्कः पलाशः खदिरः अपामार्गः पिप्पलः औदुंबरः शमी दूर्वादर्भाः । लोकपालयागार्थं

खदिरपलाशोदुंबरप्लक्षवटापामार्गअश्वत्थसमिधः देवालंकरणार्थंविचित्राणिवस्त्राभूषणमुक्तामालाप्रभृतीनि । भोजनपात्राणि । रक्तसूत्र पिंडं । मंडलार्थंश्वेतनीलरक्तपीतहरितकृष्णादिवर्णाः कदलीस्तंभाः अन्यान्यपिसंपादयेत् । इतिश्रीरत्नदुर्गाख्यनगरनिवासिनाश्रीकस्तूरी चंद्रात्मजेनगौडपण्डितश्रीचतुर्थीलालशर्मणाकृतेप्रतिष्ठाप्रकाशे प्रथमः परिच्छेदः ॥ १ ॥ अथ द्वितीयः परिच्छेदः । तत्रज्योतिःशास्त्रोक्त सुमुहूर्तदिनेयजमानोभार्ययासहयथाचारंसुगंधितैलाभ्यंजनपूर्वकमुष्णोदकेनमङ्गलस्नानंकृत्वाशुक्लधौतवस्त्रेपरिधाययथायोग्यालंकृतोधृतकुंकु मकेशरान्यतममङ्गलतिलकः करद्वयेपवित्रोपग्रहःस्वासनेप्राङ्मुखउपविश्यदक्षिणपार्श्वेसंभारान्स्थापयित्वा पत्न्यासमारब्धःस्मार्त्तविधिनाद्विरा चम्यप्राणानायम्यशांतिपाठंपठेत् ॥ अथशांतिपाठः ॥ ॐआनोभद्राऽक्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥ देवानोयथासद मिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिविदिवे ॥ १ ॥ देवानांभद्रासुमतिर्ऋजूयतांदेवानांꣳरातिरभिनोनिवर्तताम् ॥ देवानांꣳसख्यमुपसेदिमा वयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥२॥ तान्पूर्वयानिविदाहूमहेवयम्भगम्मित्रमदितिन्दक्षमस्त्रिधम् ॥ अर्यमणंवरुणꣳसोममश्विनासरस्वती नःसुभगामयस्करत् ॥ ३ ॥ तन्नोवातोमयोभुवातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतन्धि ष्ण्यायुवम् ॥ ४ ॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ५ ॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वामरुतःपृश्निमा तरःशुभंयावानोविदथेषुजग्मयः ॥ अग्निर्जिह्वामनवःसूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ ७ ॥ भद्रंकर्णेभिःशृणुयामदेवाभद्रम्पश्ये

माक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳯंसस्तनूभिर्व्यशेमहिदेवहितंय्यदायुः ॥ ८ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् ॥
पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपिता सपुत्रः ॥ विश्वेदेवाऽअदितिः प
ञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम् ॥ १० ॥ तम्पत्नीभिरनुगच्छेमदेवाः पुत्रैर्भ्रातृभिरुतवाहिरण्यैः ॥ नाकङ्गृभ्णानाः सुकृतस्यलोकेतृती
येपृष्ठेऽअधिरोचनेदिवः ॥ ११ ॥ आयुष्यंवर्च्चस्यᳮरायस्पोषमौद्भिदम् ॥ इदᳮहिरण्यंवर्च्चस्वज्जैत्रायाविशतादिमाम् ॥ १२ ॥ द्यौः शान्तिरन्त
रिक्षᳮशान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व्वᳮशान्तिः शान्तिरेवशान्तिः सामा
शान्तिरेधि ॥ १३ ॥ यतोयतः समीहसेततोनोऽअभयङ्कुरु ॥ शन्नः कुरुप्रजाभ्योभयन्नः पशुभ्यः ॥ १४ ॥ ॐशान्तिः शान्तिः सुशान्तिर्भव
तु ॥ सर्वारिष्टशान्तिर्भवतु ॥ ॥ प्रारंभेकर्मणिनिर्विघ्नतास्तु । ॐश्रीमन्महागणाधिपतयेनमः । ॐलक्ष्मीनारायणाभ्यांनमः ॥ ॐउमा
महेश्वराभ्यांनमः । ॐवाणीहिरण्यगर्भाभ्यांनमः । ॐशचीपुरन्दराभ्यांनमः । ॐमातृपितृचरणकमलेभ्योनमः । ॐइष्टदेवताभ्योनमः ।
ॐकुलदेवताभ्योनमः । ॐग्रामदेवताभ्योनमः । ॐस्थानदेवताभ्योनमः । ॐवास्तुदेवताभ्योनमः । ॐसूर्यादिग्रहेभ्योनमः । सर्वेभ्योदेवे
भ्योनमः ॥ सर्वेभ्योब्राह्मणेभ्योनमः । एतत्कर्मप्रधानदेवताभ्योनमः ॥ पुण्यंपुण्याहंदीर्घमायुरस्त्वितिभवन्तोब्रुवन्तु ( इतियजमानः ) पुण्यं
पुण्याहंदीर्घमायुरस्तु ( इतिद्विजाः ) सुमुखश्चैकदन्तश्चकपिलोगजकर्णकः ॥ लंबोदरश्चविकटोविघ्ननाशोगणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षोभा
लचन्द्रोगजाननः ॥ द्वादशैतानिनामानियःपठेच्छृणुयादपि ॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा । संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ॥

शुक्लाम्बरधरंदेवंशशिवर्णंचतुर्भुजम् । प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशान्तये ॥ अभीप्सितार्थसिद्ध्यर्थंपूजितोयः सुरासुरैः । सर्वविघ्नहरस्तस्मैगणा
धिपतयेनमः ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके । शरण्येत्र्यम्बकेगौरिनारायणिनमोऽस्तुते ॥ सर्वदासर्वकार्येषुनास्तितेषाममंगलम् । येषांहृ
दिस्थोभगवान्मंगलायतनंहरिः ॥ तदेवलग्नंसुदिनंतदेवताराबलंचन्द्रबलंतदेव । विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेंऽघ्रियुगंस्मरामि ॥ लाभस्तेषां
जयस्तेषांकुतस्तेषापराजयः । येषामिन्दीवरःश्यामोहृदयस्थोजनार्दनः ॥ यत्रयोगेश्वरःकृष्णोयत्रपार्थोधनुर्धरः । तत्रश्रीर्विजयोभूतिर्ध्रुवानीतिमति-
र्मम ॥ सर्वेष्वारंभकार्येषुत्रयस्त्रिभुवनेश्वराः । देवादिशन्तुनःसिद्धिंब्रह्मेशानजनार्दनाः ॥ विनायकंगुरुंभानुंब्रह्मविष्णुमहेश्वरान् । सरस्वतींप्रणम्या
दौसर्वकार्यार्थसिद्धये ॥ "संकल्पः" ॐविष्णुर्विष्णुर्विष्णुः । अद्यश्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञयाप्रवर्तमानस्य ब्रह्मणोद्वितीयेपरार्द्धेश्रीश्वेतवा
राहकल्पेवैवस्वतमन्वन्तरेअष्टाविंशतितमे कलियुगेकलिप्रथमचरणे जंबुद्वीपेभरतखंडेतत्रापिभारतेवर्षेअमुकदेशे श्रीगंगायमुनयोरमुकदि
ग्भागेनर्मदायाअमुकेतटेदेवब्राह्मणानांसन्निधौ श्रीमन्नृपविक्रमार्कसमयतोऽमुकसम्मितेगताब्दगणेशालिवाहनस्यभूपतेः अमुकसम्मितेग
ताब्दगणेश्रीविष्णोर्बौद्धावतारे अस्मिन् वर्तमाने अमुकनामसंवसरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुक
वासरे अमुकनक्षत्रेअमुकराशिस्थितेचन्द्रे अमुकराशिस्थितेश्रीसूर्ये अमुकराशिस्थितेदेवगुरौशेषेषुग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु
एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौअमुकगोत्रोऽमुकशर्माहं ममआत्मनःअशेषपापक्षयार्थंश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं अस्मा
कंसर्वेषांसकुटुंबानां क्षेमस्थैर्यायुरारोग्यैश्वर्यदीर्घायुर्विपुलधनधान्यस्थिरलक्ष्मीपुत्रपौत्राद्यभिवृद्धिपूर्वकंममइहजन्मनिजन्मांतरेवाकृतकायिकवा

चिकमानसिकसांसर्गिकसमस्तपापक्षयार्थं ब्राह्मणद्वाराश्रीपरमेश्वरप्रीत्यर्थंपितृतोमातृतश्चदशपूर्वान् दशापरान् पुरुषानात्मानंचोद्धर्तुंपर
त्रानंतकल्पविष्णुलोकवासोत्तरं विष्णुसायुज्यमुक्तिप्राप्तयेअस्यांमूर्तौ लिंगेवादेवकलासान्निध्यार्थंयथाविभवदेशकालाद्यनुसारतः अमुक
मूर्तौलिंगस्यवाप्रतिष्ठांकरिष्ये ॥ तदंगत्वेनगणपतिपूजनंस्वस्तिपुण्याहवाचनं मातृकापूजनंवसोर्द्धारानांदीश्राद्धमाचार्यादिवरणंदिग्रक्षणंपञ्च
गव्यकरणं भूमिपूजनंअग्निस्थापनंदेवतास्थापनादिकर्मचकरिष्ये इतिसंकल्प्य ॥ ततःस्ववामभागेकर्मार्थजलपूरितकलशार्चनम् ॥ ॐतत्वा
यामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ ॐ भूर्भुवःस्वःअपांपतयेवरुणा
यनमःआवाहयामि । ॐभूर्भुवःस्वःअपां०वरुणायनमःसर्वोपचारार्थेगंधाक्षतपुष्पाणिसमर्पयामि । इतिसंपूज्याभिमंत्रयेत् । ॐ कलशस्यमु
खेविष्णुःकण्ठेरुद्रःसमाश्रितः । मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः १ ॥ कुक्षौतुसागराःसर्वेसप्तद्वीपावसुन्धरा । ऋग्वेदोऽथयजुर्वेदः
सामवेदोह्यथर्वणः २ ॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः० १ ॥ इत्याद्यभिमंत्र्यगंगाद्यावाहनम् ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ।
नर्मदेसिन्धुकावेरिजलेऽस्मिन्सन्निधिंकुरु १ ॥ ततःकलशोदकेनसंभारान्स्वात्मानंचसंप्रोक्षयेत् । ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥
महेरणायचक्षसे ॥ १ योवः० २ ॥ तस्माअरं० ३ ॥ अथदीपपूजनम् । भोदीपत्वंब्रह्मरूपह्यंधकारनिवारक । इमांमयाकृतांपूजांगृह्णंस्तेजः
प्रवर्धय १ ॥ दीपायनमः गंधाक्षतपुष्पाणिस० ॥ अथगणपतिपूजनम् । तत्रादौध्यानम् । श्वेतांगंश्वेतवस्त्रंसितकुसुमगणैःपूजितंश्वेतगंधैः
क्षीराब्धौरत्नदीपैःसुरतरुविमलेरत्नसिंहासनस्थम् ॥ दोर्भिःपाशांकुशेष्टाभयधृतिविशदंचंद्रमौलिंत्रिनेत्रंध्यायेच्छान्त्यर्थमीशंगणपतिममलं

श्रीसमेतंप्रसन्नम् १ ॥ इतिध्यानं । हेहेरंबत्वमेह्येहिअंबिकात्र्यंबकात्मज । सिद्धिबुद्धिपतेत्र्यक्षलक्षलाभपितुःपितः ॥ १ ॥ नागास्यनागहा
रत्वंगणराजचतुर्भुज ॥ भूषितःस्वायुधैर्दिव्यैःपाशांकुशपरश्वधैः ॥ २ ॥ आवाहयामिपूजार्थंरक्षार्थंचममक्रतोः । इहागत्यगृहाणत्वंपूजांक्रतुंच
रक्षमे ॥ ३ ॥ ॐगणानांत्वागणपतिꣳहवामहेप्रियाणान्त्वाप्रियपतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳहवामहेव्वसोसम ॥ आहमजानि
गर्ब्भधमात्वमजासिगर्ब्भधम् १ ॥ ॐभूर्भुवःस्वःसिद्धिबुद्धिसहितमहागणपतयेनमःआवहयामि ( आसनम् ) । रम्यंसुशोभनंदिव्यंसर्व
सौख्यकरंशुभम् । आसनंचमयादत्तंगृहाणपरमेश्वर ॥ ॐपुरुषऽएवेदꣳसर्व्वंयद्भूतंयच्चभाव्यम् । उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥
ॐभूर्भुवःस्वःसिद्धिबुद्धिसहितमहागणपतयेनमः आसनं स० ॥ पाद्यम् । उष्णोदकंनिर्मलंचसर्वसौगन्ध्यसंयुतम् । पादप्रक्षालनार्थायदत्तं
तेप्रतिगृह्यताम् ॥ ॐएतावानस्यमहिमातोज्यायांश्चपूरुषः ॥ पादोस्यव्विश्वाभूतानित्रिपादस्यामृतंदिवि ॥ ३ ॥ ॐभूर्भुवःस्वः सि०म०ग०
पाद्यंस० ॥ अर्घ्यम् ॥ ताम्रपात्रेस्थितंतोयंगंधपुष्पफलान्वितम् । सहिरण्यंददाम्यर्घ्यंगृहाणगणनायक ॥ ॐत्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहा
भवत्पुनः ॥ ततोव्विष्वंव्व्यक्रामत्साशनानशनेअभि ॥ ४ ॥ ॐभू० सि०म०ग०अर्घ्यंस० ॥ आचमनम् ॥ सर्वतीर्थसमायुक्तंसुगन्धिनिर्मलं
जलम् । आचामार्थंमयादत्तंगृहाणपरमेश्वर । ॐततोव्विराडजायतव्विराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥
ॐ भू०सि०म०ग०आचमनंस० ॥ पञ्चामृतस्नानम् ॥ तत्रादौपयःस्नानम् ॥ ॐपयः पृथिव्यांपयओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्व
तीःप्रदिशःसन्तुमह्यम् । ॐभू०सि०म०ग० पयःस्नानंस० ॥१॥ (दधिस्नानम्) ॥ दधिक्राव्णोअकारिषञ्जिष्णोरश्वस्यव्वाजिनः ॥ सुरभिनोमु

खांकरत्प्रणआयूꣳषितारिषत् ॥ ॐभू०सि०म०ग० दधिस्नानंस० ॥ २ ॥ ( घृतस्नानम् ) ॐघृतंघृतपावानःपिबतव्वसांवसापावानःपिब तान्तरिक्षस्यहविरसिस्वाहा ॥ दिशः प्रदिशआदिशोव्विदिशउद्दिशोदिग्भ्यःस्वाहा ॥ ॐभू०सि०म०ग० घृतस्नानंस० ॥ ३ ॥ ( मधुस्नानम् ) ॥ ॐमधुव्वाताऋतायतेमधुक्षरन्तिसिन्धवः ॥ माध्वीर्न्नःसन्त्वोषधीः ॥ १ ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनःपिता ॥ २ ॥ मधुमान्नोव्वनस्पतिर्मधुमाँ २ अस्तुसूर्य्यः ॥ माध्वीर्गावोभवन्तुनः ॥ ३ ॥ ॐ भू० सि० म० ग० मधुस्नानं स० ॥ ४ ॥ ( शर्करा स्नानं ) ॥ ॐ अपाꣳरसमुद्वयसꣳसूर्य्येसंतꣳसमाहितम् ॥ अपाꣳरसस्ययोरसस्तम्वोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृण्हाम्ये षतेयोनिरिन्द्रायत्वाजुष्टतमम् । ॐभू० सि० म० ग० शर्करास्नानंस० ॥ ५ ॥ ( उद्वर्तनस्नानम् ) ॥ ॐ गन्धर्वस्त्वाविश्वावसुःपरिदधातुवि श्वस्यारिष्टचैयजमानस्यपरिधिरस्यग्निरिडईडितः ॥ ॐभू०सि०म०ग०उद्वर्तनस्नानंस० ॥ सर्वोपचारार्थेगंधाक्षतापुष्पाणिस० ( अभिषेकः ) ॐ आपोहि० । योवः० । तस्मा० । ॐ भू० सि० म० ग० अभिषेकं० ॥ शुद्धोदकस्नानम्स० ॥ ( वस्त्रम् ) सर्वभूषादिकेसौम्येलोकलज्जा निवारणे । मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् ॥ ॐ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयऽउन्न यन्तिस्वाध्योमनसादेवयन्तः ॥ ॐ भू० सि० म० ग०वस्त्रंस० आचमनं ॥ ॐ नवभिस्तंतुभिर्युक्तंत्रिगुणंदेवतामयम् । उपवीतंमयादत्तंगृहाण परमेश्वर ॥ ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोव्वेनऽआवः । सबुध्न्याऽउपमाऽअस्यव्विष्ठाःसतश्चयोनिमसतश्चव्विवः ॥ ॐ०भू० सि०म०ग०यज्ञो०आचमनं ॥ ( गन्धम् ) ॥ ॐ त्वांगन्धर्वाअखनंस्त्वामिन्द्रस्त्वांबृहस्पतिः ॥ त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत ।

ॐ भू॰सि॰म॰ग॰गन्धंस॰ ॥ अक्षताः ॥ ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्रतेहरी ॥
ॐ भू॰सि॰म॰ग॰अक्षतान्स॰ । दूर्वांकुराः ॥ ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ ॐ भू॰
सि॰म॰ग॰दूर्वाङ्कुरान्स॰ ॥ पुष्पम् । ॐयत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासीत्किंबाहूकिम्मूरूपादाउच्येते । ॐभू॰ सि॰
म॰ग॰पुष्पं स॰ ॥ परिमलसौभाग्यद्रव्यम् ॥ ॐ अहिरिवभोगैःपर्य्येतिबाहुञ्ज्यायाहेतिंपरिबाधमानः ॥ हस्ताघ्नोविश्वावयुनानिविद्वान्पुमान्
पुमांꣳसंपरिपातुविश्वतः ॥ ॐभू॰सि॰म॰ग॰ सौभाग्यद्रव्यं स॰ ॥ धूपम् । ॐ धूरसिधूर्वधूर्वन्तंधूर्वतंयोऽस्मान्धूर्वतितंधूर्वयंवयंधूर्वामः ॥
देवानामसिवह्नितमꣳसस्नितमंपप्रितमञ्जुष्टतमंदेवहूतमम ॥ ॐभू॰सि॰म॰ग॰धूपंआ॰ ॥ दीपम् । ॐ चन्द्रमामनसोजातश्चक्षोःसूर्य्योऽअ
जायत ॥ श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ ॐभू॰सि॰म॰ग॰दीपंद॰ । नैवेद्यम् ॥ ॐनाभ्याआसीदन्तरिक्षꣳशीर्ष्णोद्यौःसमवर्तत ॥
पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथालोकाँ २ अकल्पयन् ॥ ॐभू॰सि॰म॰ग॰नैवेद्यंस॰ । फलम् ॥ ॐयाःफलिनीर्याअफलाअपुष्पायाश्चपुष्पि
णीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥ ॐभू॰सि॰म॰ग॰फलंस॰ ॥ ताम्बूलम् ॥ पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतम् ॥ एलादि
चूर्णसंयुक्तंतांबूलंप्रतिगृह्यताम् ॥ ॐभू॰सि॰म॰ग॰तांबूलं स॰ ॥ दक्षिणा ॥ ॐ हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकऽआसीत् ॥ सदा
धारपृथिवीन्द्यामुतेमांकस्मैदेवायहविषाविधेम ॥ ॐभू॰सि॰ म॰ ग॰ दक्षिणांस॰ । आरार्तिकं ॥ ॐइदꣳहविःप्रजननम्मेअस्तुदशवीरꣳ
सर्वगणꣳस्वस्तये ॥ आत्मसनिप्रजासनिपशुसनिलोकसन्यभयसनि ॥ अग्निःप्रजांबहुलांमेकरोत्वन्नंपयोरेतोअस्मासुधत्त ॥ ॐभू॰ सि॰ म॰

ग० आरार्तिकंस० ॥ पुष्पाञ्जलिः ॥ ॐनमोगुणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोन
मोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमः ॥ ॐभू० सि० म० ग० मंत्रपुष्पाञ्जलिंस० ॥ विशेषार्घः ॥ रक्षरक्षगणाध्यक्षरक्षत्रैलोक्यरक्षक ।
भक्तानामभयंकर्तात्राताभवभवार्णवात् १ ॥ द्वैमातुरकृपासिन्धोषाण्मातुराग्रजप्रभो। वरदत्वंवरंदेहिवांछितंवांछितार्थद २ ॥ गृहाणार्घ्यमिदं
देवसर्वदेवनमस्कृत । अनेनसफलार्घ्येणफलदोऽस्तुसदामम ॥ ३ ॥ ॐ भू० सि० म० ग० विशेषार्घ्यंस० ॥ अथप्रार्थना ॥ विघ्नेश्वरायवर
दायसुरप्रियायलंबोदरायसकलायजगद्धिताय ॥ नागाननायश्रुतियज्ञविभूषितायगौरीसुतायगणनाथनमोनमस्ते ॥ १ ॥ भक्तार्तिनाशनपरा
यगणेश्वरायसर्वेश्वरायशुभदायसुरेश्वराय ॥ विद्याधरायविकटायचवामनायभक्तप्रसन्नवरदायनमोनमस्ते ॥ २ ॥ नमस्तेब्रह्मरूपायविष्णुरू
पायतेनमः । नमस्तेरुद्ररूपायकरिरूपायतेनमः ॥ ३ ॥ विश्वरूपस्वरूपायनमस्तेब्रह्मचारिणे । भक्तप्रियायदेवायनमस्तुभ्यंविनायक ॥ ४ ॥
लंबोदरनमस्तुभ्यंसततंमोदकप्रिय । निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा । ॐ भुर्भूवःस्वः सि० म० ग० प्रार्थनापूर्वकनमस्कारंस० ॥ अन
यापूजयाश्रीगणेशःसांगःसपरिवारःप्रीयतांनमम ॥ इतिगणपतिपूजनम् ॥ ॥ ॥ ॥ ॥

## ॥ अथपुण्याहवाचनप्रयोगः ॥

स्वपुरतःशुद्धायांभूमौपंचवर्णैस्तंडुलैर्वाष्टदलकरणं ॥ तत्रमहीद्यौरितिभूमिस्पर्शः ॥ ॐमहीद्यौःपृथिवीचनइमंयज्ञम्मिमिक्षताम् ॥ पिपृतान्नो
भरीमभिः ॥ १ ॥ तत्रौषधयःसमितियवप्रक्षेपः । ॐ ओषधयःसमवदन्तसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तꣳराजनपारयामसि ॥ २ ॥

आजिघ्रमितिकलशंस्थापयेत् ॥ ॐ आजिघ्रकलशंमह्यात्वाविशन्त्विन्दवः ॥ पुनरूर्ज्जानिवर्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ ३ ॥ वरुणस्योत्तंभनमितिकलशेजलंपूरयेत् ॥ ॐ व्वरुणस्योत्तम्भनमसिव्वरुणस्यस्कंभसर्ज्जनीस्थोव्वरुणस्यऽऋतसदन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद ॥ ४ ॥ त्वांगंधर्वेतिगंधप्रक्षेपः ॥ ॐत्वांगंधर्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत ॥ ५ ॥ याओषधीरितिसर्वौषधीः ॥ ॐयाओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणामहꣳशतंधामानिसप्तचं ॥ ६ ॥ कांडात्कांडादितिदूर्वाः ॥ ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ ७ ॥ अश्वत्थवेतिपञ्चपल्लवान् ॥ ॐअश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ ८ ॥ स्योनापृथिवीतिसप्तमृदः ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥ ९ ॥ याःफलिनीरितिफलं । ॐयाःफलिनीर्याऽअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥ १० ॥ परिवाजपतिरितिपञ्चरत्नानि ॥ ॐपरिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ११ ॥ हिरण्यगर्भेतिहिरण्यं ॥ ॐहिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ १२ ॥ युवासुवासाइतिरक्तसूत्रेणकलशंवेष्टयेत् ॥ ॐयुवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तन्धीरासःकवयउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥ १३ ॥ पूर्णादर्वीतिपूर्णपात्रमुपरिन्यसेत् ॥ ॐपूर्णादर्व्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइषमूर्ज्जꣳशतक्रतो ॥ १४ ॥ तत्वायामीतिवरुणमावाह्य ॥ ॐतत्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानो

वरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ १५ ॥ ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु ॥ विश्वेदेवास
इहमादयन्तामों३प्रतिष्ठ ॥ १६ ॥ ॐ वरुणायनमः सुप्रतिष्ठितोवरदोभव ॥ इतिप्रतिष्ठाप्य ॥ ततः ॐ वरुणायनमइत्यनेनमंत्रेणवरुणंगंधादिपञ्चो
पचारैरभ्यर्च्यकलशमभिमंत्रयेत् ॥ कलस्यमुखेविष्णुःकण्ठेरुद्रःसमाश्रितः । मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ १ ॥ कुक्षौतुसागराःसर्वे
सप्तद्वीपावसुन्धरा । ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः ॥२॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ॥ इत्यभिमंत्र्यतत्रतीर्थान्यावाहयेत् ॥ अत्र
गायत्रीसावित्रीशान्तिःपुष्टिकरीतथा ॥ आयान्तुममशान्त्यर्थंदुरितक्षयकारकाः ॥ १ ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयान्तुमम
शांत्यर्थंदुरितक्षयकारकाः ॥ २ ॥ इत्यावाह्य ॐ गायत्र्यादिभ्योनमइतिसंपूज्यप्रार्थयेत् ॥ देवदानवसंवादेमथ्यमानेमहोदधौ ॥ उत्पन्नोऽसितदा
कुंभविधृतोविष्णुनास्वयम् ॥ १ ॥ त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः । त्वयितिष्ठन्तिभूतानित्वयिप्राणाःप्रतिष्ठिताः ॥ २ ॥ शिवःस्वयंत्वमे
वासिविष्णुस्त्वंचप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ ३ ॥ त्वयितिष्ठन्तिसर्वेऽपियतःकामफलप्रदाः । त्वत्प्रसादादिदंकर्म
कर्तुमीहेजलोद्भव ॥ सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदा ॥ ४ ॥ इतिसंप्रार्थयेत् ततअवनिकृतजानुमंडलःकमलमुकुलसदृशमञ्जलिंशिरस्या
धायानन्तरंदक्षिणेनपाणिनास्वर्णपूर्णकलशंधारयित्वादीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिच । ॐ त्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदा
भ्यः ॥ अतोधर्माणिधारयन् ॥ १ ॥ तेनायुःप्रमाणेनपुण्यंपुण्याहंदीर्घमायुरस्त्वितिभवन्तोब्रुवन्तु । इतित्रिःयजमानोवदेत् । पुण्यंपुण्याहंदीर्घ
मायुरस्तु ( इतिद्विजाः ॥ ) ( एवंसर्वत्रयजमानवचनोत्तरंब्राह्मणाःप्रतिवचनंदद्युः ) ब्राह्मणानांहस्तेसुप्रोक्षितमस्तु । ॐ शिवाआपःसन्तु

सन्तुशिवाआपः ॥ ॐसौमनस्यमस्तु अस्तुसौमनस्यम् ॥ ॐअक्षतंचारिष्टंचास्तु अस्त्वक्षतमरिष्टंच ॥ ॐगंधाःपान्तुसौमंगल्यंचास्त्वितिभवन्तो ब्रुवन्तु गन्धाःपान्तुसौमंगल्यंचास्तु ॥ ॐअक्षताःपान्तुआयुष्यमस्त्वितिभवं० अक्षताःपान्तुआयुष्यमस्तु ॥ ॐपुष्पाणिपान्तुसौश्रियमस्त्विति भवं० पुष्पाणि०मस्तु ॥ ॐताम्बूलानिपान्तुऐश्वर्यमस्त्वितिभ०ताम्बूलानि०ऐश्वर्यमस्तु ॥ ॐदक्षिणाःपान्तुबहुधनमस्त्वितिभवन्तो०दक्षिणाःपा न्तुबहु०॥ततोयजमानआचार्यादीन्प्रणम्य। ॐश्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचायुष्यंचास्त्वितिभवन्तोब्रुवन्तुइतिवदेत् ॥ ततोद्विजाःश्रीर्यशो विद्याविनयोवित्तंवहुपुत्रंचायुष्यंचास्तुइतिवदेयुः ॥ अनन्तरंदीर्घमायुःशान्तिःपुष्टिस्तुष्टिश्चास्त्वितियजमानमूर्ध्न्यभिषिञ्चेयुः ॥ यंकृत्वासर्ववेदयज्ञ क्रियाकरणकर्मारंभाःशुभाःशोभनाःप्रवर्तन्ते ॥ तमहमोंकारमादिंकृत्वाऋग्यजुःसामाथर्वाशीर्वचनंबहुऋषिमतंस्थिरैः समनुज्ञातंभवद्भिरनु ज्ञातःपुण्यंपुण्याहंवाचयिष्ये। ॐवाच्यताम्। अथाशीर्वादः। ॐभद्रंकर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवाᳬसं स्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥१॥ देवानाम्भद्रासुमतिर्ऋजूयतान्देवानाᳬरातिरभिनोनिवर्तताम् ॥ देवानाᳬसख्यमुपसेदिमावयन्देवान ऽआयुःप्रतिरन्तुजीवसे ॥२॥ नतद्रक्षाᳬसिनपिशाचास्तरन्तिदेवानामोजःप्रथमजᳬह्येतत् ॥ योबिभर्तिदाक्षायणᳬहिरण्यᳬसदेवेषुकृणुतेदीर्घमा युःसमनुष्येषुकृणुतेदीर्घमायुः ॥ ३ ॥ दीर्घायुस्तऽओषधेखनितायस्मैचत्वाखनाम्यहम् ॥ अथोत्वंदीर्घायुर्भूत्वाशतवल्शाविरोहतात् ॥ द्रविणो दाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रियंसत् ॥ द्रविणोदावीरवतीविशन्नोद्रविणोदारासतेदीर्घमायुः ॥ ४ ॥ सवितापश्चात्तात्सवितापुरस्ता त्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ॥ ५ ॥ नवोनवोभवतिजायमानोऽन्हांकेतुरुषसामेत्य

ग्रं ॥ भुागंदेवेभ्योविदंधात्यायंप्रचंद्रमास्तिरतेदीर्घमायुं ॥ ६ ॥ उच्चादिविदक्षिणावन्तोऽअस्थुर्येअंश्वदाःसुहतेसूर्यैण ॥ हिरुण्युदाअंमृतत्त्वंभंजन्तेवा
सोदाःसोमप्रतिरन्तुआयुंः ॥ ७ ॥ (इत्याशीर्वादः) व्रतजपनियमतपःस्वाध्याक्रतुदयादमदानविशिष्टानांसर्वैषांब्राह्मणानांमनः समाधीयताम् ।
इतियजमानः । समाहितमनसःस्मःइतिद्विजाः ॥ प्रसीदन्तुभवन्तःइतियजमानोब्रूयात् । प्रसन्नाःस्मःइतिद्विजाब्रूयुः ॥ ततोयजमानोब्रूयात् ।
ॐममगृहेशान्तिरस्तु । अस्त्वितिद्विजाःप्रतिवचनंसर्वत्रदद्युः ॥ ॐपुष्टिरस्तु । ॐतुष्टिरस्तु । ॐवृद्धिरस्तु । ॐअविघ्नमस्तु । ॐआयुष्यमस्तु ।
ॐआरोग्यमस्तु । ॐशिवमस्तु । ॐशिवंकर्मास्तु । ॐकर्मसमृद्धिरस्तु । ॐवेदसमृद्धिरस्तु । ॐशास्त्रसमृद्धिरस्तु । ॐधनधान्यसमृद्धिरस्तु ।
ॐपुत्रपौत्रसमृद्धिरस्तु । ॐइष्टसंपदस्तु । ॐअरिष्टनिरसनमस्तु । ॐयत्पापंरोगंअशुभंअकल्याणंतद्दूरेप्रतिहतमस्तु ॥ ॐयच्छ्रेयस्तदस्तु ।
ॐउत्तरेकर्मणिनिर्विघ्नमस्तु । ॐउत्तरोत्तरमहरहरभिवृद्धिरस्तु । ॐउत्तरोत्तराःक्रियाःशुभाःशोभनाः संपद्यन्ताम् । ॐतिथिकरणमुहूर्तन
क्षत्रग्रहलग्नसंपदस्तु ॥ उदकसेकः ॥ ॐतिथिकरणमुहूर्तग्रहलग्नाधिदेवताःप्रीयन्ताम् । ॐतिथिकरणेसमुहूर्तेसनक्षत्रेसग्रहेसाधिदेवतेप्रीयेताम् ।
ॐदुर्गापाञ्चाल्यौप्रीयेताम् । ॐअग्निपुरोगाविश्वेदेवाःप्रीयन्ताम् । ॐइन्द्रपुरोगामरुद्गणाःप्रीयन्ताम् । ॐमाहेश्वरीपुरोगाउमामातरः प्रीय
न्ताम । ॐअरुन्धतीपुरोगाएकपत्न्यः प्रीयन्ताम् । ॐविष्णुपुरोगाःसर्वेदेवाःप्रीयन्ताम् । ॐब्रह्मपुरोगाःसर्वेवेदाःप्रीयन्ताम् । ब्रह्मचब्राह्मणाश्च
प्रीयन्ताम् । ॐश्रीसरस्वत्यौप्रीयेताम् । ॐश्रद्धामेधेप्रीयेताम् । ॐभगवतीकात्यायनीप्रीयताम् । ॐभगवतीमाहेश्वरीप्रीयताम् । ॐभगवतीऋ
द्धिकरीप्रीयताम् । ॐभगवतीसिद्धिकरीप्रीयताम् । ॐभगवतीपुष्टिकरीप्रीयताम् । ॐभगवतीतुष्टिकरीप्रीयताम् । ॐभगवन्तौविघ्नविनायकौप्री

येताम् । ॐसर्वाःकुलदेवताःप्रीयन्ताम् । ॐसर्वाग्रामदेवताःप्रीयन्ताम् । ॐहताश्चब्रह्मद्विषः । ॐहताश्चपरिपन्थिनः । ॐहताश्चविघ्नकर्तारः । ॐशत्रवः पराभवंयान्तु । ॐशाम्यन्तुघोराणि । ॐशाम्यन्तुपापानि । ॐशाम्यन्त्वीतयः । ॐशुभानिवर्द्धन्ताम् । ॐशिवाआपःसन्तु । ॐशिवाऋतवः सन्तु । ॐशिवाओषधयःसन्तु । ॐशिवानद्यःसन्तु । ॐशिवागिरयःसन्तु । ॐशिवाअतिथयःसन्तु । ॐशिवाअग्नयःसन्तु । ॐअहोरात्रेशिवेस्याताम् । ॐनिकामेनिकामेनःपर्ज्जन्योवर्षतुफलवत्योनऽओषधयःपच्यन्तांयोगक्षेमोनःकल्पताम् ॥ १ ॥ ॐशुक्राङ्गारक बुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाःसर्वेग्रहाःप्रीयन्ताम् । ॐभगवान्नारायणःप्रीयताम् । ॐभगवान्पर्जन्यःप्रीयताम् । ॐभगवान्स्वामीमहासेनःप्रीयताम् । ॐपुण्याहकालान्वाचयिष्ये । इतियजमानः । ॐवाच्यतामितिप्रतिवचनम् । ॐब्राह्म्यंपुण्यंमहद्य च्चसृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवंनित्यंतत्पुण्याहंब्रुवन्तुनः ॥ १ ॥ भोब्राह्मणाःमह्यंसकुटुंबिनेमहाजनान्नमस्कुर्वाणायआशीर्वचनमपे क्षमाणायमयाक्रियमाणस्यअमुकदेवप्रतिष्ठाख्यस्यकर्मणःपुण्याहंभवन्तोब्रुवन्तु । अस्तुपुण्याहमइतिद्विजाः । एवंत्रिःपठित्वा । ॐपुनन्तुमादेव जनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ १ ॥ पृथिव्यामुद्धृतायान्तुयत्कल्याणंपुराकृतम् । ऋषिभिःसिद्धगन्ध र्वैस्तत्कल्याणंब्रुवन्तुनः ॥ भोब्राह्मणा० मया० कर्मणः कल्याणंभवन्तोब्रवन्तु । अस्तुकल्याणमइतिद्वि० ॥ ॐयथेमांवाचंकल्याणीमावदा निजनेभ्यः ॥ ब्रह्मराजन्याभ्याᳬंशूद्रायचार्य्यायचस्वायचारणायच ॥ प्रियोदेवानांदक्षिणायैदातुरिहभूयासमयम्मेकामःसमृध्यतामुपमादोन मतु ॥ २ ॥ सागरस्ययथावृद्धिर्महालक्ष्म्यादिभिःकृता ॥ संपूर्णासुप्रभावाचतांचऋद्धिंब्रुवन्तुनः ॥ भोब्राह्मणा० मया०कर्मणःऋद्धिंभवन्तोब्रु

वन्तु । ॐऋध्यताम् ॥ ॐसत्रस्यऋद्धिरस्यगन्मज्योतिरमृताअभूम ॥ दिवंपृथिव्याअध्यारुहामाविदामदेवान्स्वर्ज्योतिः ॥ ३ ॥
स्वस्तिस्तुयाविनाशाख्यापुण्यकल्याणवृद्धिदा ॥ विनायकप्रियानित्यंतांचस्वस्तिंब्रुवन्तुनः ॥ भोब्राह्मणा० मया० कर्मणेस्वस्तिभवन्तोब्रुवन्तु ।
आयुष्मतेस्वस्ति ॥ ॐस्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्ताक्ष्योंऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ ४॥ समुद्रम
थनाज्जाताजगदानन्दकारिका ॥ हरिप्रियाचमांगल्यातांश्रियंचब्रुवन्तुनः ॥ भोब्राह्मणा० मया०कर्मणःश्रीरस्त्वितिभवन्तोब्रुवन्तु अस्तुश्रीः ॥
ॐश्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ ७ ॥ अस्मिन्पुण्याह
वाचनेन्यूनातिरिक्तोयोविधिःसउपविष्टब्राह्मणानांवचनात्श्रीमहागणपतिप्रसादाच्चसर्वःपरिपूर्णोऽस्तु ॐअस्तुपरिपूर्णः ॥ अथाभिषेकः ॥
एकस्मिन्पात्रेकलशोदकंगृहीत्वा चत्वारोब्राह्मणाअविधूरादूर्वाम्रपल्लवैर्यजमानमभिषिञ्चेयुः । तत्रमंत्राः । ॐपयः पृथिव्यांपयओषधीषुपयोदि
व्यन्तरिक्षेपयोधाः ॥ पयस्वतीःप्रदिशःसन्तुमह्यम् ॥ १ ॥ पंचनद्यःसरस्वतीमपियंतिसस्रोतसः । सरस्वतीतुपंचधाशोदेशेभवत्सरित् ॥ २ ॥
वरुणस्योत्तम्भनमसिवरुणस्यस्कंभसर्ज्जनीस्थोवरुणस्यऋतसदन्यसिवरुणस्यऋतसदनमसिवरुणस्यऋतसदनमासीद ॥ ३ ॥ पुनन्तुमादेवज
नाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ ४ ॥ ॐदेवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ सर
स्वत्यैवाचोयन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ ॥ ५ ॥ ॐदेवस्यत्वा० सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेःसाम्राज्येनाभिषि
ञ्चामि ॥ ६ ॥ देवस्यत्वा०हस्ताभ्याम् ॥ अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिञ्चामिसरस्वत्यैभैषज्येनवीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्ये

न्द्रियेणबलायश्रियैयशसेभिषिञ्चामि ॥ ७ ॥ विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्नआसुव ॥ ८ ॥ धामच्छदग्निरिन्द्रोब्रह्मादेवोबृ
हस्पतिः ॥ सचेतसोविश्वेदेवायज्ञंप्रावन्तुनःशुभे ॥ ९ ॥ त्वंयविष्टदाशुषोनॄंःपाहिशृणुधीगिरः ॥ रक्षातोकमुतत्मना ॥ १० ॥ अन्नपतेन्नस्य
नोधेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारन्तारिषऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे ॥ ११ ॥ द्यौःशान्तिरन्तरिक्षशान्तिःपृथिवीशान्तिरापःशान्ति
रोषधयःशान्तिः ॥ वनस्पतयःशांतिर्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिःसर्वशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि ॥ १२ ॥ यतोयतःसमी
हसेततोनोऽअभयंकुरु ॥ शन्नःकुरुप्रजाभ्योभयन्नःपशुभ्यः ॥ १३ ॥ ॐपालाशंभवतितेनब्राह्मणोभिषिञ्चतिब्रह्मवैपलाशोब्रह्मणैवैनमेतदभि
षिञ्चति ॥ अमृताभिषेकोऽस्तु ॥ ॐशान्तिःशान्तिःशान्तिःसुशान्तिर्भवतु । अनेनपुण्याहवाचनेनश्रीप्रजापतिःप्रीयताम् ॥ इतिपुण्याहवा० ॥
अथमातृकापूजनम् ॥ अग्निकोणेमातृकाःपीठोपरिअक्षतपुञ्जेषुपुगीफलेषुवानिवेश्याः ॥ तत्रायंक्रमः ॥ गौरीपद्माशचीमेधासावित्रीविज
याजया ॥ देवसेनास्वधास्वाहामातरोलोकमातरः ॥ धृतिःपुष्टिस्तथातुष्टिरात्मनःकुलदेवता ॥ गणेशेनाधिकाह्येतावृद्धौपूज्याश्चषोडश ॥ २ ॥
ॐगणेशायनमःगणेशंआवाहयामि ॥ १ ॥ ॐगौर्यैनमःगौरींआवाहयामि ॥ १ ॥ ॐपद्मायैनमःपद्मामावाहयामि ॥ २ ॥ ॐशच्यैनमः
शचीमावाहयामि ॥ ३ ॥ ॐमेधायैनमःमेधामावाहयामि ॥ ४ ॥ ॐसावित्र्यैनमःसावित्रीमावाहयामि ॥ ५ ॥ ॐविजयायैनमःविजया
मावाहयामि ॥ ६ ॥ ॐजयायैनमःजयामावाहयामि ॥ ७ ॥ ॐदेवसेनायैनमःदेवसेनामावाहयामि ॥ ८ ॥ ॐस्वधायैनमःस्वधामावाह
यामि ॥ ९ ॥ ॐस्वाहायैनमःस्वाहामावाहयामि ॥ १० ॥ ॐमातृभ्योनमःमातृरावाहयामि ॥ ११ ॥ ॐलोकमातृभ्योनमःलोकमातृरा

वाहयामि ॥ १२ ॥ ॐधृत्यैनमः धृतिमावाहयामि ॥ १३ ॥ ॐपुष्ट्यैनमः पुष्टिमावाहयामि ॥ १४ ॥ ॐतुष्ट्यैनमः तुष्टिमावाहयामि ॥ १५ ॥
ॐकुलदेवतायैनमः कुलदेवतामावाहयामि ॥ इत्यावाह्य । ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु ॥
विश्वेदेवासइहमादयन्तामों३प्रतिष्ठ ॥ इतिप्रतिष्ठाप्य ॐगौर्यादिषोडशमातृकाभ्योनमः इतिनाममंत्रेणषोडशोपचारैः संपूजयेत् । अनयापूजया
सविनायकगौर्याद्यावाहितमातरःप्रीयन्ताम् । इतिमातृकापूजनम् । ततःकुड्येआवाहितमातृणामुपरिघृतेनभित्तौधारांदद्यात् ॥ ॐवसोःप
वित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ इतिमंत्रेणपञ्चवासप्तसंख्या
काःधारादद्यात् ॥ ॥ अथघृतमातृकानामानि ॥ श्रीर्लक्ष्मीश्चधृतिर्मेधापुष्टिःश्रद्धासरस्वती । मांगल्येषुप्रपूज्यंतेसप्तैताघृतमातरः १ ॐश्रियै
नमः श्रियमावाहयामि ॥ १ ॥ ॐलक्ष्म्यैनमः लक्ष्मीं० ॥ २ ॥ ॐधृत्यैनमः धृतिं० ॥३॥ ॐमेधायैनमः मेधां० ॥४॥ ॐपुष्ट्यैनमः पुष्टिं० ॥५॥
ॐश्रद्धायैनमः श्रद्धां० ॥ ६ ॥ ॐसरस्वत्यैनमः सरस्वतीमावाहयामि ॥ ७ ॥ इत्यावाह्य ॐघृतमातृकाभ्योनमः ॥ इतिषोडशोपचारैः पूजयेत् ॥
अथायुष्यमंत्रजपः ॥ ॐआयुष्यंवर्चस्यꣳरायस्पोषमौद्भिदम् ॥ इदꣳहिरण्यम्वर्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥ ॐनतद्रक्षांꣳसिनपिशा
चास्तरन्तिदेवानामोजःप्रथमजꣳह्येतत् ॥ योबिभर्तिदाक्षायणꣳहिरण्यꣳसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥ २ ॥ ॐयदाबध्नं
दाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः ॥ तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥ ३ ॥ इतिमातृकापूजनविधानम् ॥
अथनांदीश्राद्धम् ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यपूर्वोच्चारित० अस्मिन्अमुकदेवप्रतिष्ठाख्येकर्मणिसांकल्पिकं नांदीश्राद्धंकरिष्ये

तिसंकल्प्य । सत्यवसुसंज्ञका:विश्वेदेवा:नांदीमुखा:भूर्भुव:स्व:इदंव:पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ गोत्रा:मातृपितामहीप्रपितामह्य:
नांदीमुख्य:भूर्भुव:स्व:इदंव:पाद्यंपादावनेजनंपादप्रक्षालनंवृद्धिः ॥ गोत्राः पितृपितामहप्रपितामहाः नांदीमुखाः भूर्भुवःस्वः इदंवः पाद्यं
पादावनेजनं पादप्रक्षालनंवृद्धिः ॥ द्वितीयगोत्रा:मातामहप्रमातामहवृद्धप्रमातामहा:सपत्नीका:नादीमुखा:भूर्भुव:स्व:इदंव: पाद्यंपादावने
जनंपादप्रक्षालनंवृद्धिः॥ ततआसनदानम् ॥ सत्यवसुसंज्ञकानांविश्वेषांदेवानांयुग्मरूपाणांनांदीमुखानांभूर्भुवः स्वः इदमासनंसुखासनंस्वाहासं
पद्यतामवृद्धिः ॥ नांदीश्राद्धेक्षणौक्रियेतांतथाप्राप्नुताम्भवन्तौप्राप्नुवाव ॥ गोत्राणांमातृपितामहीप्रपितामहीनांनांदीमुखीनांभूर्भुवःस्वःइद
मासनंसुखासनंस्वाहासंपद्यतामवृद्धि:नांदीश्राद्धेक्षणौक्रियेतांतथाप्राप्नुतांभवन्तौप्राप्नुवाव ॥ गोत्राणांपितृपितामहप्रपितामहानांनांदीमुखा
नांभूर्भुवःस्वःइदमासनंसुखासनंस्वाहासंपद्यतामवृद्धिः ॥ नांदीश्राद्धेक्षणौक्रियेतांतथाप्राप्नुतांभवंतौप्राप्नुवाव ॥ द्वितीयगोत्राणांमातामहप्र
मातामहवृद्धप्रमातामहानांसपत्नीकानांनांदीमुखानांभूर्भुवःस्वः इदमासनंसुखासनंस्वाहासंपद्यतामवृद्धि:नांदीश्राद्धेक्षणौक्रियेतां० ॥ ततो
गन्धादिदानम् ॥ सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनांदीमुखेभ्योयुग्मरूपेभ्यइदंगंधाद्यर्चनंस्वाहासंपद्यतामवृद्धिः ॥ गोत्राभ्य:मातृपिता
महीप्रपितामहीभ्योनादीमुखीभ्यः इदंगंधाद्यर्चनंस्वाहासंपद्यतामवृद्धिः ॥ गोत्रेभ्य:पितृपितामहप्रपितामहेभ्योनांदीमुखेभ्यः इदंगंधा०
वृद्धिः ॥ द्वितीयगोत्रेभ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्य:सपत्नीकेभ्योनांदीमुखेभ्य:इदंगंधाद्यर्चनंस्वाहा० वृद्धिः ॥ ततोभोजन
निष्क्रयद्रव्यदानं ॥ सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनांदीमुखेभ्य:युग्मब्राह्मणभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतंकिञ्चिद्धिरण्यंअमृतरूपेण

स्वाहासंपद्यन्तामवृद्धिः ॥ गोत्राभ्यः मातृपितामहीप्रपितामहीभ्योनांदीमुखीभ्यः युग्मब्राह्मणभोजनपर्याप्तमन्नंतन्निष्क्रयीभूतंकिञ्चिद्धिरण्यंअ
मृतरूपेणस्वाहासंपद्यतामवृद्धिः ॥ गोत्रेभ्यः पितृपितामहप्रपितामहेभ्योनांदीमुखेभ्योयुग्मब्राह्मणभोजनपर्याप्तमन्नंतन्निष्क्रयीभूतंकिञ्चिद्धिरण्यं
अमृतरूपेणस्वाहासंपद्यतामवृद्धिः ॥ द्वितीयगोत्रेभ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्योनांदीमुखेभ्योयुग्मब्राह्मणभो० ॥ स
क्षीरमुदकदानम् ॥ सत्यवसुसंज्ञकाः विश्वेदेवाः नांदीमुखाः प्रीयन्ताम् ॥ गोत्राः मातृपितामहीप्रपितामह्यः नादीमुख्यः प्रीयन्ताम् ॥ गोत्राः पितृपि
तामहप्रपितामहाः नांदीमुखाः प्रीयन्ताम् ॥ द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकानांदीमुखाः प्रीयन्ताम् ॥ (अथाशिषोग्र
हणम् ) गोत्रन्नोवर्धताम् इतियजमानोब्रूयात् ॥ अभिवर्धताम् वोगोत्रम् इतिद्विजाः ॥ दातारोनोऽभिवर्धन्ताम् अभिवर्धन्तामवोदातारः ॥
वेदफलंनोऽभिवर्धताम् अभिवर्धतामवोवेदफलम् ॥ सन्ततिर्नोऽभिवर्धताम् अभिवर्धतामवः सन्ततिः ॥ श्रद्धाचनोमाव्यगमत् माव्यगमत्वः
श्रद्धा ॥ बहुदेयंचनोऽस्तु अस्तुवोबहुदेयम् ॥ अन्नंचनोबहुभवेत् भवेदन्नंवोबहु ॥ अतिथींश्चलभेमहै लभंतांवोऽतिथयः ॥ याचितारोनः सन्तु
सन्तुवोयाचितारः ॥ एताआशिषः सन्तु ॥ सन्त्वेताआशिषः ॥ ततोदक्षिणासंकल्पः ॥ सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनांदीमुखेभ्यः कृतस्य
नांदीश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थंइमांद्राक्षामलकयवमूलनिष्क्रयणींदक्षिणांदातुमहमुत्सृजे ॥ ( यवमूलंआर्द्रकं ) गोत्राभ्योमातृपितामहीप्रपि
तामहीभ्योनांदीमुखीभ्यः कृतस्यनांदीश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थंइमांद्राक्षा० ॥ गोत्रेभ्यः पितृपितामहप्रपितामहेभ्योनांदीमुखेभ्यः कृतस्यनांदी ॥ १६ ॥
श्राद्धस्यफलप्रतिष्ठासि० द्राक्षा० दक्षिणां० ॥ द्वितीयगोत्रेभ्योमातामहप्रमातामहवृद्धप्रमातामहेभ्योनांदीमुखेभ्यः सपत्नीकेभ्यः कृतस्यनांदी

श्राद्धस्य० द्राक्षा० दक्षिणा०॥ ततोनांदीश्राद्धंसंपन्नंसुसंपन्नम् ॥ ॐवाजेवाजेतिविसृज्य॥ ॐवाजेवाजेवतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ॥
अस्यमध्वः पिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥ आमावाजस्येत्यनुव्रज्य ॥ ॐआमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥
आमागंतांपितरामातराचामासोमोऽअमृतत्वेनगम्यात् ॥ अस्मिन्नांदीश्राद्धेन्यूनातिरिक्तोयोविधिः सउपविष्टब्राह्मणानांवचनात्नांदीमुखप्र
सादात्सर्वःपरिपूर्णोऽस्तु अस्तुपरिपूर्णःइतिप्रतिवचनम् ॥ अनेनकृतनांदीश्राद्धेननांदीमुखाःपितरःप्रीयन्ताम् ॥ इतिनांदीश्राद्धम् ॥ ॥
अथाचार्यादिवरणप्रयोगः ॥ आचम्य । प्राणानायम्य । प्राङ्मुखउपविश्य । अद्येत्यादिदेशकालौसंकीर्त्य । अस्मिन्नमुकदेवप्रतिष्ठाकर्मणितत्त
त्कर्मकरणार्थमाचार्यादिब्राह्मणानांवरणं मधुपर्केणार्चनंचकरिष्ये ॥ इतिसंकल्प्य । जलादीन्भूमौक्षिपेत् ॥ ततआचार्यमुदङ्मुखमुपवेश्य ॥
स्वयंयजमानः प्राङ्मुखोभूत्वा ॥ आचार्यस्यपादौप्रक्षाल्य । गंधपुष्पाक्षतताम्बूलमुद्रिकाकमंडलुवासांस्यादाय । आचार्यस्यदक्षिणजानुमालभ्य ॥
देशकालौस्मृत्वा । अमुकगोत्रोऽमुकशर्माहं प्रारब्धाऽमुकदेवप्रतिष्ठायज्ञकर्मणि आचार्यकर्मकर्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिर्गंधाक्ष
तताम्बूलमुद्रिकासनकमंडलुवासोभिराचार्यत्वेनत्वामहंवृणे ॥ ॐवृतोस्मीतिप्रतिवचनम् ॥ ॐव्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षि
णाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ १ ॥ इतिमंत्रंपठेत् ॥ इतिवृत्वागंधादिभिःसंपूज्य । आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथा
त्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत ॥ १ ॥ ॐबृहस्पतेऽअतियदर्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणं
धेहिचित्रम् ॥ १ ॥ इतिप्रार्थयेत् ॥ ततोब्रह्मवरणम् ॥ तथैवदेशकालौसंकीर्त्य । अद्यप्रारब्धामुकदेवप्रतिष्ठायज्ञकर्मणिब्रह्मकर्मकर्तुममुकगो

त्रममुकशर्माणं ब्राह्मणमेभिर्गंधाक्षतताबूलमुद्रिकासनकमंडलुवासोभिर्ब्रह्मत्वेनत्वामहंवृणे ॥ ॐवृतोस्मीतिप्रतिवचनम् ॥ ॐव्रतेनंदीक्षामा
प्नोति० इतिपठेत् ॥ ततोगंधादिभिःसंपूज्य ॥ ॐयथाचतुर्मुखोब्रह्मासर्वलोकपितामहः ॥ तथात्वंममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम ॥ १ ॥
ॐब्रह्मयज्ञानम्प्रंथमम्पुरस्ताद्विसीमतः सुरुचोव्वेनऽआवः ॥ सुबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॥ १ ॥ इतिप्रार्थयेत् ॥
ततोऽष्टौचतुरोवाऋत्विजोवृणुयात् ॥ तद्यथा ॥ सर्वानृत्विजउदङ्मुखानुपवेश्य ॥ देशकालौस्मृत्वा । अद्यप्रारब्धाऽमुकदेवप्रतिष्ठायज्ञकर्मणि
तत्तत्कर्मकरणार्थममुकामुकगोत्रोत्पन्नानमुकवेदशाखाध्यायिनोऽमुकशर्मणोब्राह्मणान्एभिर्गंधाक्षततांबूलमुद्रिकासनकमंडलुवासोभिःऋत्वि
क्त्वेनयुष्मानहंवृणे ॥ ॐवृताःस्मइतितैरुक्ते । तान्गंधादिभिःसंपूज्य । ऋत्विजश्चयथापूर्वंशक्रादीनांमखेऽभवन् ॥ यूयंतथामेभवितुमृत्विजोर्ह
थसत्तमाः ॥ १ ॥ इतिप्रार्थयेत् ॥ (प्राक्कुंडेऋग्वेदिनौऋत्विजौ । याम्यकुंडेयजुर्वेदिनौ । प्रत्यक्कुंडेसामगौ उत्तरकुंडेअथर्वाणौ) ततः।एवमेव
अष्टौचतुरोवाद्वारपालान्वृणुयात् ॥ ततएकैकवेदिनौद्वौद्वौजापकौएकैकंवापूर्वादिदिशिवृणुयात् ॥ (पंचकुंडीपक्षेत्वष्टौहोतारः । अष्टौजापकाः ।
अष्टौद्वारपालाःगुरुश्चैवंपंचविंशतिऋत्विजोभवंति ॥ २५ ॥ अत्राशक्तौ । अष्टौहोतारश्चत्वारोजापकाश्चत्वारोद्वारपालागुरुश्चेतिसप्तदश ॥१७॥
अत्राप्यशक्तौचतुरोहोतॄन्चतुरोद्वारपालान्चतुरोजापकान्गुरुंचेतित्रयोदश ॥१३॥ अत्राप्यसामर्थ्येएकाग्निविधिनाकर्मकर्तुमाचार्यंब्रह्माणंचद्वौ
तदाशाखान्तरस्थमंत्रहोमोजापकद्वारपालकर्मनिवर्ततेकर्त्रभावात् ) ॥ एवमाचार्यादीन्वृत्वा ( तदीयपरंपरागतशाखीयगृह्योक्तविधिनावरण
क्रमेणमधुपर्केणार्चयेत् सचनानारूपत्वादत्रनलिख्यतेतच्चमत्कृतपद्धतिप्रकाशेद्रष्टव्यः ) ॥ अथयजुर्वेदिनामधुपर्कपूजाप्रयोगः ॥ सर्वानाचार्या

दीनेकतंत्रेणासनेषुप्राङ्मुखानुपवेश्य । स्वयंचउदङ्मुखउपविश्य । आचम्य । कृताञ्जलिपुटः । ॐसाधुभवान्आसतामर्चयिष्यामोभवंतंइति प्रत्येकंवदेत् । ॐअर्चयइतिप्रतिवचनानंतरं । तत्संख्ययाएवविष्टरान्गृहीत्वा । ॐविष्टरोविष्टरोविष्टरः । इत्याचार्येणोक्ते । ॐविष्टरःप्रति गृह्यतामितिप्रत्येकंदातावदेत् । ॐप्रतिगृह्णामिइतिविप्रो वदेत् । ततोयजमानहस्ताद्विष्टरंगृहीत्वा । ॐवर्ष्मोस्मिसमानानामुद्यतामिवसूर्यः इमंतमभितिष्ठामियोमाकश्चाभिदासतीतिमंत्रेणब्राह्मणाः प्रत्येकंविष्टरंउदगग्रंस्वासनतलेस्थापयेयुः ॥ ततःपाद्यपात्रमादाय । ॐपाद्यंपाद्यं पाद्यमित्याचार्येणोक्ते । ॐपाद्यंप्रतिगृह्यतामितिदातावदेत् । ॐपाद्यंप्रतिगृण्हामिइतिविप्रवचनानंतरं । ॐविराजोदोहोसिविराजोदोहमशी यमयिपाद्यायैविराजोदोहः ॥ १ ॥ इतिमंत्रेणप्रथमंदक्षिणचरणंततोवामचरणंचक्रमेणप्रक्षालयेत् ॥ ततःपूर्ववद्विष्टरान्गृहीत्वा । ॐविष्टरोवि ष्टरोविष्टरः । इत्याचार्येणोक्ते । ॐविष्टरःप्रतिगृह्यतामितिदातावदेत् । ॐप्रतिगृण्हामिइत्युक्त्वा । पूर्ववत् ॐवर्ष्मोस्मिसमानानामितिमं त्रेणस्वस्वचरणयोरधस्ताद्दद्युः ॥ तत ॐअर्घोऽर्घोऽर्घइत्यन्येनोक्ते । ॐअर्घःप्रतिगृह्यतामितिदातावदेत् । अर्घंप्रतिगृह्णामीत्यभिधाय । यजमा नहस्तात् । ॐआपस्थयुष्माभिःसर्वान्कामानवाप्नुयादितिमंत्रेणार्घपात्रंगृहीत्वा । शिरसाऽभिवंद्य । ॐसमुद्रंवःप्रहिणोमिस्वांयोनिमभि गच्छत अरिष्टास्माकंवीरामापरासेचिमत्पयः॥१॥इतिमंत्रंपठित्वातज्जलंभूमौक्षिपेत् ॥ ततआचमनीयपात्रमादाय ॐआचमनीयमाचमनीय माचमनीयमित्यन्येनोक्ते । ॐआचमनीयंप्रतिगृह्यतामितिदातावदेत् ॐआचमनीयंप्रतिगृण्हामीत्यभिधाय । यजमानहस्तादाचमनीयपात्रं गृहीत्वा । ॐआमागन्यशसासꣳसृजवर्चसातम्माकुरुप्रियम्प्रजानामधिपतिंपशूनामरिष्टिंतनूनाम् ॥ १ ॥ इतिमंत्रेणसकृदाचम्यस्मार्त्ताचमनं

कुर्यात् ॥ ततःकांस्यपात्रस्थंकांस्यपात्रान्तरेणापिहितंमधुपर्कमादाय । ॐमधुपर्कोमधुपर्कोमधुपर्कः । इत्यन्येनोक्ते ॐमधुपर्कःप्रतिगृह्यतामि
तिदातावदेत् । ॐमधुपर्कंप्रतिगृण्हामीत्यभिधाय । यजमानहस्तस्थमेवतत्पात्रमुद्घाट्य । ॐमित्रस्यत्वाचक्षुषाप्रतीक्षे ॥ १ ॥ इतिमंत्रेणवी
क्ष्य । ॐदेवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्यांप्रतिगृण्हामीत्यनेनप्रतिगृह्य सव्येपाणौनिधाय । दक्षिणानामिकया । ॐनमः
स्वावास्यायान्नशनेयत्तआविद्धंतत्तेनिष्कृन्तामि ॥१॥ इत्यनेनप्रादक्षिण्येनमधुपर्कंसकृदालोड्यकिंचिद्भूमौक्षिप्त्वापुनरेवंद्विवारमालोड्यभूमौनिः
क्षिपेत्॥तत ॐयन्मधुनोमधव्यंपरमᳪंरूपमन्नाद्यंतेनाहंमधुनोमधव्येनपरमेणरूपेणान्नाद्येनपरमोमधव्योन्नादोऽसानीत्यनेनानामिकांगुष्ठाभ्यां
प्राश्य । पुनरेवंवारद्वयंप्राश्यशेषभुग्भ्योदद्यात् ॥ ततःस्मार्तविधिना आचम्य इंद्रियाणिसंस्पृशेत् । तद्यथा ॥ ॐवाङ्मआस्येऽस्तु इतिकराग्रेणमु
खालंभनं । ॐनसोर्मेप्राणोऽस्त्वितिदक्षिणवामनासारंध्रद्वये । ॐअक्ष्णोर्मेचक्षुरस्त्वितिदक्षिणोत्तरचक्षुषी । ॐकर्णयोर्मेश्रोत्रमस्त्वितिकर्णयोः ।
ॐबाह्वोर्मेबलमस्त्वितिबाव्होः । ॐऊर्वोर्मेओजोस्त्वितियुगपदूरू ॥ ॐअरिष्टानिमेंगानितनूस्तन्वामेसहसंत्वितिशिरःप्रभृतीनि सर्वांगानि
उभाभ्यांहस्ताभ्यामालभ्याचामेत्॥तत ॐगौर्गौर्गौरित्यन्येनोक्तेयजमानेचप्रत्युक्ते । ब्राह्मणः ॐमातारुद्राणांदुहितावसूनाᳪंस्वसादित्यानाम
मृतस्यनाभिः॥ प्रनुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ठ । ममअमुष्ययजमानस्यपाप्माहतः ॐइत्युच्चार्य ॐउत्सृजततृणान्यत्तुइत्युच्चै
र्ब्रूयात् ॥ इतिमधुपर्कपूजांकृत्वाप्रार्थयेत् ॥ ॥ अथ प्रार्थना ॥ ब्राह्मणाःसन्तुमेशस्ताःपापात्पान्तुसमाहिताः॥ वेदानांचैवदातारस्त्रातारःसर्व
देहिनाम ॥ १ ॥ जपयज्ञैस्तथाहोमैर्दानैश्चविविधैःपुनः ॥ देवानांचपितॄणांचतृप्त्यर्थंयाजकाःस्मृताः ॥ २ ॥ येषांदेहेस्थितावेदाःपावयन्तिज

गत्रयम् ॥ रक्षन्तुसततंतेमाजपयज्ञेव्यवस्थिताः ॥३॥ ब्राह्मणाजंगमंतीर्थंत्रिषुलोकेषुविश्रुतम् ॥ तेषांवाक्योदयेनैवशुध्यन्तिमलिनोजनाः ॥४॥
पावनाःसर्ववर्णानांब्राह्मणाब्रह्मरूपिणः ॥ सर्वकर्मरतानित्यंवेदशास्त्रार्थकोविदाः ॥ ५ ॥ श्रोत्रियाःसत्यवाचश्चदेवध्यानरताःसदा ॥ यद्वा
क्यामृतसंसिक्ताऋद्धिंयान्तिनरद्रुमाः ॥ ६ ॥ अंगीकुर्वन्तुकर्मैतत्कल्पद्रुमसमाशिषः ॥ यथोक्तनियमैर्युक्तामंत्रार्थेस्थिरबुद्धयः ॥ ७ ॥ यत्कृ
पालोचनात्सर्वाऋद्धयोवृद्धिमाप्नुयुः ॥ अक्रोधनाःशौचपराःसततंब्रह्मचारिणः ॥ ८ ॥ देवध्यानरतानित्यंप्रसन्नमनसःसदा ॥ अदुष्टभाषणा
नित्यंमासन्तुपरनिंदकाः ॥ ९ ॥ ममापिनियमाह्येतेभवन्तुभवतामपि ॥ ( अथाचार्यप्रार्थनाविशेषः ) ॥ मंत्रमूर्तिभवन्नाथसंसारोच्छेदका
रक ॥ साङ्गंकर्मयथामेस्यात्तथाकुरुहिभूसुर ॥ १ ॥ संसारभयभीतेनअयंयज्ञःसुभक्तितः ॥ प्रारब्धस्त्वत्प्रसादेननिर्विघ्नंमेभवत्विति ॥ २ ॥
अस्ययागस्यनिष्पत्तौभवन्तोऽभ्यर्थितामया ॥ सुप्रसादेनकर्तव्यंशान्तिकंविधिपूर्वकम् ॥ ३ ॥ इत्याचार्यंप्रार्थयेत् तत्रआचार्योयजमानस्यहस्तेर
क्षाबंधनंशिरसिकुंकुमेनतिलकंचकृत्वादधिदूर्वामार्जनंतत्तन्मंत्रेणकुर्यात्इत्याचार्यादिवरणप्रयोगः ॥ ततउत्थायसंभारान्गृहीत्वासुवासिनीब्रा
ह्मणानग्रतःकृत्वासतूर्यघोषःसपरिकरःसपूर्णकुंभोयजमानः ॐभद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्त-
नूभिर्व्यशेमहिदेवहितंयदायुः इतिमंत्रेणमहामंडपंप्रदक्षिणीकृत्यमंडपस्यपश्चिमद्वारमागत्यपाणिभ्यांचार्घपात्रमादाय ॥ शांतिपाठः आशुःशि
शानः० ऋचंवाचं० स्वस्तिन इत्यादिकंपठेत् ॥ ततोद्वारदेशेसार्घः पृथ्वींचतुर्भुजांशुक्लांकूर्मपृष्ठोपरिस्थितां पद्मशंखचक्रशूलकरांविहसितांसुप्र
सन्नांगोरूपधरांसवत्सांवसुंधरांध्यात्वा ॐआगच्छ देवि कल्याणि वसुधे लोकधारिणि ॥ पृथ्वि त्वं ब्रह्मदत्तासि काश्यपेनाभिनंदिता ॥ इति

संप्रार्थ्य फलपुष्पाजलिंदत्वासंपूज्यपुनःप्रार्थयेत् ॥ उद्धृतासि वराहेण विष्णुना शतबाहुना ॥ दंष्ट्राग्रे लीलया देवि यज्ञार्थे त्वां वृणोम्यहं ॥१॥
ब्रह्मणा निर्मिते देवि विष्णुना शंकरेण च ॥ पार्वत्या चैव गायत्र्या स्कंदेन श्रवणेन च ॥ २ ॥ यमेन पूजिता देवि धर्मवृद्धिजिगीषया ॥
सौभाग्यं देहि पुत्रांश्च धनं रूपं च पूजिता ॥ ३ ॥ गृहाणार्घ्यं च मे देवि सौभाग्यं च प्रयच्छमे । इतिभूम्यैअष्टाङ्गार्घ्यंदत्वासाष्टांगंप्रणिपत्य
मंडपपश्चिमद्वारेणप्रविशेत् ॥ होमद्रव्यप्रवेशःपूर्वद्वारेण ॥ दानद्रव्यप्रवेशोदक्षिणद्वारेण ॥ दानार्थान् दक्षिणार्थान् प्रतिष्ठार्थान् संभारान्
उत्तरद्वारेणप्रवेशयेत् ॥ ततआचार्योंवामहस्तेगौरसर्षपान्लाजामिश्रितान्गृहीत्वा दिग्रक्षणंकुर्यात् ॥ तत्रमंत्राः ॥ ॐरक्षोहणंम्वलगहनंम्वै
ष्णवीमिदमुहन्तम्वंलुगमुत्किरामियम्मेंनिष्ट्योयममात्योंनिचुखानेदमहन्तम्वंलुगमुत्किरामियम्मैंसमानोयमसंमानोनिचुखानेदमुहन्तम्वंलुग
मुत्किरामियम्मेसबन्धुर्य्यमसंबन्धुर्निचखानेदमुहन्तम्वंलुगमुत्किरामियम्मेंसजातोयमसंजातोनिचुखानोत्कृत्याङ्किरामि ॥ १ ॥ रक्षोहणों
वोब्वलगुहनःप्रोक्षामिवैष्णवान्रक्षोहणोंवोब्वलगुहनोवंनयामिवैष्णवान्रक्षोहणोंवोब्वलगुहनोवंस्तृणामिवैष्णवान्रक्षोहणौवांब्वलगुहनाऽउपदधा
मिवैष्णवीरक्षोहणौवांब्वलगुहनौपर्य्यूहामिवैष्णवीवैष्णवमंसिवैष्णवास्त्थं ॥ २ ॥ रक्षसाम्भागोसिनिरस्तꣳरक्षंऽइदमहꣳरक्षोभितिष्ठामीदम्
हꣳरक्षोवंबाधऽइदमुहꣳरक्षोधमन्तमोंनयामि ॥ घृतेनंद्यावापृथिवीप्रोर्णुवाथांवायोवेस्तोकानांमग्निराज्यंस्यवेतुस्वाहास्वाहांकृतेऽऊर्ध्वनंभसंमा
रुतङ्गंच्छतम् ॥ ३ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोंहते ॥ द्रोणेसधस्त्थमासंदत् ॥ ४ ॥ अपसर्पंतुते भूता ये भूता भूमिसंस्थिताः ॥ ॥ १९ ॥
ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया ॥ १ ॥ अपक्रामंतु भूतानि पिशाचाः सर्वतोदिशं ॥ सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥ २ ॥

यदत्र संस्थितं भूतं स्थानमाश्रित्यसर्वतः ॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ ३ ॥ भूतप्रेतपिशाचाद्या अपक्रामंतु राक्षसाः ॥
स्थानादस्माद्व्रजंत्वन्यत्स्वीकरोमि भुवं त्विमां ॥४॥ भतानि राक्षसा वापि यत्र तिष्ठंति केचन ॥ ते सर्वेप्यपगच्छंतुशांतिकं तु करोम्यहं ॥५॥
एतैर्मंत्रैरीशानादिसर्वदिक्षुविकीर्य देवा आयांतु यातुधाना अपयांतु विष्णो देवयजनं रक्षस्वेति रक्षां कृत्वा पंचगव्येनकुशैर्मंडपभूमिंयज्ञसंभा
रांश्चप्रोक्षयेत् ( पंचगव्यकरणम् ) गायत्र्यागोमूत्रम् ॥ ॐभूर्भुवःस्वःतत्सवितु० ॥ १ ॥ गंधद्वारेतिगोमयम् ॥ ॐगंधद्वारांदुराधर्षांनित्यपु
ष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ २ ॥ आप्यायस्वेतिक्षीरं ॥ ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावा
जस्यसंगथे ॥ २ ॥ दधिक्राव्णेतिदधि । ॐदधिक्राव्णोऽअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयुꣳषितारिषत
॥ ४ ॥ तेजोसीत्याज्यं । ॐतेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ५ ॥ देवस्यत्वेतिकुशोदकं ।
ॐदेवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ ६ ॥ प्रणवेनालोड्य ॥ वारुणैर्मंत्रैः कर्मभूमिं प्रोक्षयेत् ॥ तत्रमंत्राः ।
ॐहिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोयास्विन्द्रः ॥ अग्निंयागर्भंदधिरेविरूपास्तानआपःशꣳस्योना भवंतु ॥ १ ॥ यासाꣳराजा
वरुणोयातिमध्येसत्यानृतेअवपश्यंजनानाम् ॥ मधुश्चुतःशुचयोयाःपावकास्तानआपःशꣳस्योनाभवंतु ॥ २ ॥ यासांदेवादिविकृण्वंति
भक्षंयाअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशꣳस्योनाभवंतु ॥ ३ ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवो
पस्पृशतत्वचंमे ॥ सर्वाꣳअग्निꣳरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ ४ ॥ ॥ ( अथपावमानसूक्तम् ) पवमानःसुवर्जनः पवित्रे

रिकायनमः दौवारिकंआवाहयामिस्वा० ॥ भोदौवारिकइहागच्छेहतिष्ठ ॥ १८ ॥ तदुत्तरपदद्वयेवामजंघायांसुग्रीवं । ॐनीलग्रीवाःशिति
कंठादिवꣳरुद्राऽउपश्रिताः ॥ तेषांꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ॐभूर्भुवःस्वःसुग्रीवायनमःसुग्रीवंआवाहयामिस्वा० ॥ भोसुग्रीवइ
हा० ॥ १९ ॥ तदुत्तरपदद्वयेवामजानुप्रदेशेपुष्पदंतं । ॐनमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्से
भ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवो नमः ॥ ॐभूर्भुवःस्वःपुष्पदंतायनमःपुष्पदंतंआवाहयामिस्वा० ॥ भोपुष्पदं
तइहागच्छइहतिष्ठ ॥ २० ॥ तदुत्तरपदद्वयेवामोरौवरुणं । ॐइमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ॐभूर्भुवःस्वःवरुणा
यनमःवरुणंआवाहयामिस्वा० ॥ भोवरुणइहागच्छइहतिष्ठ ॥ २१ ॥ तदुत्तरपदद्वयेवामपार्श्वेअसुरं । ॐयमश्विनानमुचेरासुरादधिसरस्वत्य
सुनोदिंद्रियाय ॥ इमन्तꣳशुक्रंमधुमंतमिंदुꣳसोमꣳराजानमिहभक्षयामि ॥ ॐभूर्भुवःस्वःअसुरायनमःअसुरंआवाहयामिस्वा० ॥ भोअसुर
इहा० ॥ २२ ॥ तदुत्तरसार्द्धपदेवामपार्श्वेशेषं । ॐयाऽइषवोयातुधानानांयेवावनस्पतींरनु ॥ येवावटेषुशेरतेतेभ्यःसर्प्पेभ्योनमः ॥ ॐभू
र्भुवःस्वःशेषायनमःशेषंआवाहयामिस्वा० ॥ भोशेषइहागच्छइहतिष्ठ ॥ २३ ॥ तदुत्तरवायव्येपदार्द्धेपापं । ॐएतत्तेरुद्रावसंतेनपरोमूजवतो
तीहि ॥ अवततधन्वापिनाकावसःकृत्तिवासाऽअहिंसन्नःशिवोतीहि ॥ ॐभूर्भुवःस्वःपापायनमःपापंपूजयामि ॥ पापइहागच्छइहतिष्ठ
॥ २४ ॥ तत्प्राक्पदार्द्धे वामबाहौ रोगं ॥ ॐद्रापेऽअंधसस्पतेदरिद्रनीललोहित ॥ आसाम्प्रजानामेषांपशूनाम्माभेर्म्मारोङ्मोचनःकिंच
नाममत ॥ ॐभूर्भुवःस्वःरोगायनमःरोगंपूजयामि ॥ २५ ॥ तत्प्राक्तार्द्धपदेवामबाहौ अहिर्बुध्न्यं ॥ ॐअहिरिवभोगैःपर्य्येतिबाहुंज्यायाहे

तिम्पंरिबाधमानः ॥ हुस्तुग्घ्नोव्विश्वांव्वुयुनानिव्विद्वान्पुमान्पुमांॐसंपरैपातुविश्वतः ॥ ॐभूर्भुवःस्वःअहिर्बुध्न्यायनमःअहिर्बुध्न्यंआवाहयामि 
स्था० ॥ भोअहिर्बुध्न्यइहाग० ॥ २६ ॥ तत्प्राक्पदद्वयेवामकूर्प्परेमुखं । ॐअवतत्यधनुष्ट्वꣳसहस्राक्षशतेषुधे ॥ निशीर्य्यैशल्यानांमुखांशिवो
नः सुमनांभव ॥ ॐभूर्भुवःस्वःमुख्यायनमःमुख्यंआवाहयामिस्था० ॥ भोमुख्यइहागच्छइहतिष्ठ ॥ २७ ॥ तत्प्राक्पदद्वये वामबाहौभल्लाटं ।
ॐइमारुद्रायंतवसेंकपर्दिनेंक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसंद्विपदेचतुष्पदेविश्वंपुष्टंग्रामेऽअस्मिन्ननातुरम् ॥ ॐभूर्भुवःस्वःभल्लाटाय
नमःभल्लाटंआवाहयामिस्था० ॥ भोभल्लाटइहागच्छेहतिष्ठ ॥ २८ । तत्प्राक्पदद्वयेवामबाहौसोमं । ॐसोमꣳराजानमवसेऽग्निमन्वारभाम
हे ॥ आदित्यान्विष्णुꣳसूर्य्यंब्रह्माणंचबृहस्पतिॐस्वाहा ॥ ॐभूर्भुवःस्वःसोमायनमःसोमंआवाहयामिस्था०॥भोसोमइहागच्छइहतिष्ठ ॥२९॥
तत्प्राक्पदद्वयेवामांसेसर्प्पं । ॐविष्णोर्नुकंवीर्य्याणिप्रवोचंयः पार्थिवानिविममेरजांॐसि ॥ योऽअस्कभायदुत्तरꣳसधस्थंविचक्रमाणस्त्रेधोरु
गायोविष्णंवेत्वा ॥ ॐभूर्भुवःस्वःसर्प्पायनमःसर्पंआवाहयामिस्था० । भोसर्पइहागच्छइहतिष्ठ ॥ ३० ॥ तत्प्राक्सार्द्धपदेवामश्रोत्रेअदितिं ।
ॐइडऽएह्यदितऽएहिकाम्याऽएत ॥ मयिवः कामधरणंभूयात् ॥ ॐभूर्भुवःस्वःअदितयेनमःअदितिंआवाहयामिस्था० ॥ भोअदितेइहाग
च्छइहतिष्ठ ॥ ३१ ॥ तत्प्राक्अर्द्धपदेवामनेत्रेदितिं । ॐअदितिर्द्यौरदितिरंतरिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिःपंचजना
ऽअदितिर्जातमदितिर्ज्जनित्वम् ॥ ॐभूर्भुवःस्वःदितयेनमःदितिंआवाहयामिस्था० ॥ भोदितेइहागच्छइहतिष्ठ ॥ ३२ ॥ मध्यपदेषुईशानप
दोत्तरार्द्धेअपः । ॐआपोहिष्ठामयोभुवस्तानऊर्दजेंधातन ॥ महेरणायचक्षसे ॥ ॐभूर्भुवःस्वःअद्भ्योनमःआ०स्था० ॥ भोआपइहागच्छतइ 

हंतिष्ठत ॥ ३३ ॥ ईशानपददक्षिणार्द्धेआपवत्सं । ॐआतेवत्सोमनोजमत्परमाच्चित्सधस्थात् ॥ अग्नेत्वाकामयागिरा ॥ ॐभूर्भुवःस्वःआप
वत्सायनमःआपवत्संआवाहयामिस्था० ॥ भोआपवत्सइहागच्छइहतिष्ठ ॥ ३४ ॥ तद्दक्षिणपदद्वयेअर्यमाणं ॐयद्द्यसूरऽउदितेनागामित्रो
ऽअर्य्यमा ॥ सुवातिसविताभर्गः ॥ ॐभूर्भुवःस्वःअर्यम्णेनमःअर्यमाणंआवाहयामिस्था० ॥ भोअर्यमन्निहागच्छेहतिष्ठ ॥ ३५ ॥ तद्दक्षिणे
आग्नेयपदार्द्धेसावित्रं । ॐहस्तऽआधायसविताबिभ्रदभ्रिꣳहिरण्ययीम् ॥ अग्नेर्ज्योतिर्निचाय्यपृथिव्याऽअद्ध्याभरदानुष्टुभेनच्छंदसाङ्गिरस्व
त् ॥ ॐभूर्भुवःस्वःसावित्रायनमःसावित्रंआ०स्था० ॥ भोसावित्रइहागच्छइहतिष्ठ ॥ ३६ ॥ आग्नेयपदपश्चिमार्द्धेसवितारं । ॐविश्वानिदेव
सवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्नऽआसुव ॥ ॐभूर्भुवःस्वःसवित्रेनमःसवितारंआवाहयामिस्था० ॥ भोसवितरिहागच्छइहतिष्ठ ॥ ३७ ॥
तत्पश्चिमपदद्वयेविवस्वंतं । ॐविवस्वन्नादित्यैषतेसोमपीथस्तस्मिन्मत्स्व ॥ श्रदस्मैनरोवचसेदधातनयदाशीर्दादंपतीवाममश्नुतः ॥ पुमान्पु
त्रोजायतेविंदतेवस्वधाविश्वाहारपएधतेगृहे ॥ ॐभूर्भुवःस्वःविवस्वतेनमःविवस्वंतंआवाहयामिस्था० ॥ भोविवस्वन्निहागच्छइहतिष्ठ ॥ ३८ ॥
तत्पश्चिमेनैर्ऋत्यपदार्द्धेविबुधाधिपं । ॐसबोधिसूरिर्म्मघवावसुपतेवसुदावन् ॥ युयोद्ध्यस्मद्द्वेषांꣳसिविश्वकर्मणेस्वाहा ॥ ॐभूर्भुवःस्वःविबु
धाधिपायनमःविबुधाधिपंआवाहयामिस्था० ॥ भोविबुधाधिपइहा० ॥ ३९ ॥ तदुत्तरार्द्धेजयंतं । ॐअषाढं युत्सुपृतनासुपप्रिꣳस्वर्षामप्सां
वृजनस्यगोपाम ॥ भरेषुजाꣳसुक्षितिꣳसुश्रवसंजयंतंत्वामनुमदेमसोम ॥ ॐभूर्भुवःस्वःजयंतायनमःजयंतंआवाहयामिस्था० ॥ भोजयंतइहा
गच्छइहतिष्ठ ॥ ४० ॥ तदुत्तरपदद्वयेजठरवामेमित्रं । ॐमित्रोनऽएहिसुमित्रधऽइंद्रस्योरुमाविशदक्षिणमुशन्नुशंतꣳस्योनःस्योनम ॥ स्वान्

भ्राजाघारेबंभारेहस्तसुहंस्तकृशानवेतेवं÷सोमक्रयणास्तान्नंक्षद्धम्मावोदभन् ॥ ॐभूर्भुवःस्वःमित्रायनमःमित्रंआवाहयामिस्था० ॥ भोमित्रइ
हागच्छइहतिष्ठ ॥ ४१ ॥ तदुत्तरेवायव्यपदार्द्धेवामहस्तेराजयक्ष्माणं । ॐनाशयित्रीबलासस्याशैसऽउपचितामसि ॥ अथोशतस्ययक्ष्मांणा
म्पाकारोरसिनाशनी ॥ ॐभूर्भुवःस्वःराजयक्ष्मणेनमःराजयक्ष्माणंआवाहयामिस्था० ॥ भोराजयक्ष्मन्निहागच्छइहतिष्ठ ॥ ४२ ॥ तत्पूर्वा
र्द्धेवामहस्तेरुद्रं । ॐअवरुद्रमदीमह्यवदेवंत्र्यम्बकम् ॥ यथानोवस्यसस्करद्यथानःश्रेयसस्करद्यथानोव्यवसाययात् ॥ ॐभूर्भुवःस्वःरुद्रायन
मःरुद्रंआवाहयामिस्था० ॥ भोरुद्रइहागच्छइहतिष्ठ ॥ ४३ ॥ तत्पूर्वपदद्वयेवामहस्ततलेपृथ्वीधरं ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेश
नी ॥ यच्छानःशर्म्मसप्रथाः ॥ ॐभूर्भुवःस्वःपृथ्वीधरायनमःपृथ्वीधरंआवाहयामिस्था० ॥ भोपृथ्वीधरइहागच्छइहतिष्ठ ॥ ४४ ॥ ततोम
ध्यपदचतुष्केहृदयेब्रह्माणं ॥ ॐब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाऽसतश्चयोनिमसतश्चवि
वः ॥ ॐभूर्भुवःस्वःब्रह्मणेनमःब्रह्माणंआवाहयामिस्था० ॥ भोब्रह्मन्निहागच्छइहतिष्ठ ॥ ४५ ॥ ततोमंडपाद्बहिः ईशानादिषुचरक्यादी
नावाहयेत् । ॐयन्तेदेवीनिर्ऋतिराबबंधपाशंग्रीवास्वविचृत्यम् ॥ तन्तेविष्याम्यायुषोनमध्यादथैतम्पितुमद्धिप्रसूतः ॥ नमोभूत्यैयेदंचकार ॥
ॐभूर्भुवःस्वःचरक्यैनमःचरकीमावाहयामिस्था० ॥ भोचरकिइहागच्छइहतिष्ठ ॥ १ ॥ अग्निकोणे ॥ ॐअक्षराजायकितवंकृतायादिनवद
र्शंत्रेतायैकल्पिनंद्वापरायाधिकल्पिनंमास्कंदायसभास्थाणुंमृत्यवेगोव्यच्छमंतकायगोघातंक्षुधेयोगांविकृतंतं भिक्षमाणऽउपतिष्ठतिदुष्कृतायच
रकाचार्यपाप्मनेशैलगम् ॥ ॐभूर्भुवःस्वःविदार्यैनमःविदारींआवाहयामिस्था० ॥ भोविदारिइहागच्छइहतिष्ठ ॥ २ ॥ नैर्ऋत्यकोणे ॥ ॥ २४ ॥

ॐइंद्रस्यक्रोडोदित्यैपाजस्यन्दिशांजत्रवोदित्यैभसज्जीमूतान्हृदयौपशेनान्तरिक्षम्पुरिततानभंऽउदर्येणचक्रवाकौमतंस्नाभ्यांदिवंवृकाभ्यांगिरीन्प्लाशिभिरुपलान्प्लीन्हावल्मीकान्क्लोमभिग्लौभिर्गुल्मान्हिराभिःस्त्रवंतीह्रदान्कुक्षिभ्यांसमुद्रमुदरेणवैश्वानरंभस्मना ॥ ॐभूर्भुवःस्वःपूतनायैनमःपूतनांआवाहयामिस्था० ॥ भोपूतनेइहागच्छइहतिष्ठ ॥ ३ ॥ वायव्यकोणे ॥ ॐयस्यास्तेघोरऽआसंजुहोम्म्येषाम्बंधानामवसर्जनाय ॥ यांत्वाजनोभूमिरितिप्रमंदतेनिर्ऋतिंत्वाहंपरिवेदविश्वतः ॥ ॐभूर्भुवःस्वःपापराक्षस्यैनमःपापराक्षसींआवाहयामिस्था० ॥ भोपापराक्षसिइहागच्छइहतिष्ठ ॥ ४ ॥ ततःपूर्वादिदिक्षुस्कंदादीन् । पूर्वस्यांस्कंदं ॥ ॐयत्रबाणाःसंपतंतिकुमाराविशिखाऽइव ॥ तन्नऽइन्द्रोबृहस्पतिरदितिःशर्म्मयच्छतुविश्वाहाशर्मयच्छतु ॥ ॐभूर्भुवःस्वःस्कंदायनमःस्कंदंआवाहयामिस्था० ॥ भोस्कंदइहागच्छइहतिष्ठ ॥ १ ॥ दक्षिणस्यांअर्यमाणं । ॐयद्द्यसूरऽउदितेनागामित्रोऽअर्यमा ॥ सुवातिसविताभगः ॥ ॐभूर्भुवःस्वःअर्यम्णेनमःअर्यमाणंआ० स्था० ॥ भोअर्यमन्निहागच्छइहतिष्ठ ॥२॥ पश्चिमायांजृंभकं । ॐहिंकारायस्वाहाहिंकृतायस्वाहाक्रंदतेस्वाहावक्रंदायस्वाहा प्रोथतेस्वाहा प्रप्रोथायस्वाहा गंधायस्वाहा घ्रातायस्वाहा निविष्टायस्वाहोपविष्टायस्वाहा संदितायस्वाहा वल्गतेस्वाहासीनायस्वाहा शयानायस्वाहा स्वपते स्वाहा जाग्रतेस्वाहा कूजतेस्वाहा प्रबुद्धायस्वाहा विजृम्भमाणायस्वाहा विचृतायस्वाहा संहानायस्वाहोपस्थितायस्वाहायनायस्वाहाप्रायणायस्वाहा ॥ ॐभूर्भुवः जृंभकायनमःजृंभकंआवाहयामिस्था० ॥ भोजृंभकइहागच्छइहतिष्ठ॥३॥ उत्तरस्यांपिलिपिच्छं । ॐकास्विदासीत्पूर्वचित्तिः किंस्विदासीद्बृहद्वयः ॥ कास्विदासीत्पिलिप्पिलाकास्विदासीत्पिशंगिला ॥ ॐभूर्भुवःस्वःपिलिपिच्छायनमःपिलिपिच्छंआवाहयामिस्था० ॥

भोपिलिपिच्छइहागच्छइहतिष्ठ ॥ ४ ॥ ततःप्रागादिदिक्षुइन्द्रादीन् । पूर्वे ॐत्रातारमिन्द्रमवितारमिन्द्र हवेहवेसुहव शूरमिन्द्रम ॥ ह्वयामि शक्रम्पुरुहूतमिन्द्रं स्वस्तिनोमघवाधात्विन्द्रः ॥ ॐभूर्भुवः स्वःइंद्रायनमः इंद्रंआवाहयामिस्था० ॥ भोइंद्रइहागच्छइहतिष्ठ ॥ १ ॥ आग्नेय्यां ॐत्वन्नोऽअग्नेवरुणस्यविद्वानदेवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवन्हितमःशोशुचानोविश्वाद्वेषा सिप्प्रमुमुग्ध्यस्मत् ॥ ॐभूर्भुवः स्वः अग्नयेनमः अग्निंआवाहयामिस्था० ॥ भोअग्नेइहागच्छइहतिष्ठ ॥ २ ॥ याम्ये ॐयमायत्वामखायत्वासूर्यस्यत्वातपसे ॥ देवस्त्वा सवितामध्वानक्तुपृथिव्याःसस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ॐभूर्भुवः स्वः यमायनमः यमंआवाहयामिस्था० ॥ भोयमइहागच्छइहतिष्ठ ॥ ३ ॥ नैर्ऋत्यां ॐअसुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ॐभूर्भुवः स्वः निर्ऋतयेनमः निर्ऋतिंआवाहयामिस्था० ॥ भोनिर्ऋतेइहागच्छइहतिष्ठ ॥ ४ ॥ पश्चिमे । ॐतत्वायामि०प्रमोषीः ॥ ॐभूर्भुवः स्वः वरुणायनमः वरुणंआवाहयामिस्था० ॥ भोवरुणइहागच्छइहतिष्ठ ॥ ५ ॥ वायव्ये । ॐआनोनियुद्भिःशतिनीभिरध्वर सहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ॥ ॐभूर्भुवः स्वः वायवेनमः वायुंआवाहयामिस्था० ॥ भोवायोइहागच्छइहतिष्ठ ॥ ६ ॥ उत्तरे । ॐवय सोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतःसचेमहि ॥ ॐभूर्भुवः स्वः कुबेरायनमः कुबेरं आवाहयामिस्था० ॥ भोकुबेरइहागच्छइहतिष्ठ ॥ ७ ॥ ईशान्यां । ॐतमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ॐभूर्भुवः स्वः ईशानायनमः ईशानंआवाहयामिस्था० ॥ भोईशानइहागच्छइहतिष्ठ ॥ ८ ॥

ईशानपूर्वयोर्मध्येब्रह्माणं । ॐअस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशᳪसंतेस्तुवतेधायिपज्रऽइंद्रज्येष्ठाऽअस्माँऽ२ऽअवंतु देवाः ॥ ॐभूर्भुवःस्वःब्रह्मणेनमःब्रह्माणंआवाहयामिस्था० ॥ भोब्रह्मन्निहागच्छइहतिष्ठ ॥ ९ ॥ निर्ऋतिवरुणयोर्मध्येऽनंतं । ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ ॐभूर्भुवःस्वःअनंतायनमःअनंतंआवाहयामिस्था० ॥ भोअनंतइहागच्छइहतिष्ठ ॥ १० ॥ इत्यावाह्य ॐवास्तुपीठदेवताभ्योनमइतिप्रणम्यप्रतिष्ठांकुर्यात् ॥ तत्रमंत्रः ॥ ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञᳪसमिमंदधातु ॥ विश्वेदेवासऽइहमादयंतामो३ प्रतिष्ठ ॥ इतिप्रतिष्ठांकृत्वा । तदुत्तरेताम्रकलशंस्थापयेत् । तत्रप्रयोगः ॥ महीद्यौरितिभूमिस्पर्शः ॥ तत्रौषधयःसमइतियवंप्रक्षेपः ॥ ॐआजिघ्रकलशंमह्यात्वाविशंत्विन्दवः ॥ पुनरूर्जानिवर्तस्वसानःसहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः ॥ आजिघ्रमितिकलशस्थापनं ॥ वरुणस्येति जलपूरणं ॥ ॐवरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऋतसदनमासीद ॥ ॐत्वांगंधर्वेतिगंधप्रक्षेपः ॥ ॐयाःफलिनीरितिफलं ॥ याःफलिनीर्याऽअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वᳪहसः ॥ पंचरत्नानि । ॐपरिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ॐहिरण्यगर्भःसमवर्त्तताग्रे भूतस्यजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ इतिहिरण्यप्रक्षेपणं ॥ याओषधीरितिसर्वौषधिप्रक्षेपणं । ॐस्योनापृथिवीतिसप्तमृदः ॥ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥ कांडात्कांडादितिदूर्वाः । ॐकांडात्कांडात्प्ररोहंतीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ अश्वत्थेवेतिपंचपल्लवान् ॥ ॐअश्वत्थेवोनिषदनंप

र्णेर्वोव्रसुतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवंथपूरुषम् ॥ युवासुवासाइतिरक्तसूत्रेणकलशंवेष्टयेत् पूर्णादर्वीतिपूर्णपात्रमुपरिन्यसेत् ॥
ॐपूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्ज्जꣳशतक्रतो ॥ ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टं
यज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयंतामो३ प्रतिष्ठ ॥ इतिकलशंप्रतिष्ठाप्यतत्र ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमा
नोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ ॐभूर्भुवःस्वःवरुणायनमःवरुणंआ० स्था० ॥ भोवरुणइहागच्छइहतिष्ठ ।
वरुणायनमइतिवरुणंतत्रकलशेषोडशोपचारैःपूजयेत् । ॐसर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयांतु यजमानस्य दुरितक्षयका
रकाः ॥ १ ॥ कलशस्यमुखेविष्णुः कंठेरुद्रःसमाश्रितः ॥ मूलेतस्यस्थितोब्रह्मामध्येमातृगणाः स्मृताः ॥२॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा
वसुंधरा ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदोप्यथर्वणः ॥ ३ ॥ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ इतितत्रतीर्थान्यावाह्य । ॐदे
वदानवसंवादेमथ्यमाने महोदधौ ॥ उत्पन्नोसि यदा कुंभ विधृतो विष्णुना स्वयं ॥ ४ ॥ त्वत्तः सर्वाणि तीर्थानि देवाः सर्वे त्वयि स्थिताः ॥
त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ ५ ॥ शिवः स्वयंत्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ आदित्यावसवोरुद्रा विश्वेदेवाः
सपैतृकाः ॥ ६ ॥ त्वयि तिष्ठंति सर्वेपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नोभव
सर्वदा ॥ ७ ॥ इतिकलशंसंप्रार्थ्य । तदुपरिसुवर्णमयींकृकलासरूपांवास्तुप्रतिमामभ्युत्तारणपूर्वकंसन्निधायपट्टवस्त्राद्यैराच्छाद्यततस्तंसकल
देवताधिष्ठितावयवमुत्तानमीशानकोणस्थितशिरसंनैर्ऋतकोणस्थितपादंचयथाकारंवास्तुपुरुषंध्यायेत् ॥ अथाभ्युत्तारणसूक्तं । देशकालौसं

कीर्त्य अस्यांमूर्त्तौअवघातादिदोषपरिहारार्थमभ्युत्तारणंदेवतासान्निध्यार्थंचप्राणप्रतिष्ठांकरिष्ये ॥ इतिसंकल्प्य । मूर्तिंपात्रेनिधायघृतेनाभ्य
ज्यतदुपरिदुग्धधाराजलधारांचपातयेत्सूक्तंवारद्वयंपठेत् ॐसमुद्रस्यत्वावकयाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यंᳬशिवोभव ॥ १ ॥ ॐहि
मस्यत्वाजरायुणाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यंᳬशिवोभव ॥ २ ॥ उपज्मन्० ॥ ३ ॥ अपामिदम्० ॥ ४ ॥ अग्नेपावक० ॥ ५ ॥
सनः ॥ ६ ॥ पावकया० ॥ ७ ॥ नमस्ते० ॥ ८ ॥ नृषदेवेट्० ॥ ९ ॥ येदेवा देवानाम्० ॥ १० ॥ येदेवादेवेषु० ॥ ११ ॥ प्राणदाऽअपा
नदाव्यानदावर्चोदावरिवोदाः ॥ अन्याँस्तेअस्मत्तपंतुहेतयःपावकोऽअस्मभ्यंᳬशिवोभव ॥ एवमभ्युत्तारणंकृत्वापंचामृतेनसंस्नाप्यकलशोप
रिस्थापयेत् । अथध्यानं ॥ आसीत्पूर्वं महादैत्योवास्तुर्यज्ञापकारकः ॥ स देवैर्बहुकालेन युद्धे हत्वा महीतले ॥ १ ॥ निपात्य बहुभिर्दे
वैर्निबद्धश्चतुरस्रकः ॥ ईशाने मस्तकोन्यस्तोनैर्ऋत्ये पादसंपुटं ॥ २ ॥ जानुनी कूर्परीकृत्य बाहुयुग्मं तथैव च ॥ वायव्याग्न्योस्ततोजानुं
हृदये चांजलिस्तथा ॥ ३ ॥ पदीकृत्य च तस्योर्ध्वं स्वयं मुक्ताः सुराः स्थिताः ॥ इतिध्यात्वा । ॐभूः वास्तुपुरुषमावाहयामि । ॐभुवः
वास्तुपुरुषमावाहयामि ॥ ॐस्वः वास्तुपुरुषमावाहयामि ॥ ॐभूर्भुवःस्वः वास्तुपुरुष महाबलपराक्रम सर्वदेवाश्रितशरीर ब्रह्मपुत्र सकलब्र
ह्मांडधारक भगवन्निहागच्छ ॐ आगच्छ भगवन् वास्तो सर्वदेवैरधिष्ठितः ॥ भगवन् कुरु कल्याणं यज्ञेऽस्मिन्सन्निधोभव ॥ १ ॥ ॐवा
स्तोष्पतेइतिमंत्रस्यवसिष्ठऋषिर्वास्तोष्पतिर्देवतात्रिष्टुप्छंदोवृषवास्तुप्रतिष्ठापनेविनियोगः ॥ ॐवास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोऽअन
मीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नो भवद्विपदेशंचतुष्पदे ॥ भोवास्तुपुरुषइहतिष्ठ इत्यावाह्य ॥ ॐवास्तोष्पतयेनमइतिपंचोपचा

रैःसंपूज्य ॥ ॐवास्तोष्पते संकटेभ्योमांरक्षरक्षस्वाहेतिसंप्रार्थ्य ॥ ततोंगदेवताःशिख्यादीन्प्रणवादिनमोंतैर्नाममंत्रैर्गंधादिभिर्मिलितोपचारै र्यथोक्तप्रकारेणप्रत्येकंवाएकत्रकाडानुसमयेनपदार्थानुसमयेनवापंचोपचारैःपूजयेत् ॥ तत्रक्रमः । ॐशिखिनेनमः ॥ १ ॥ इदंपाद्यं एषोर्घः इदमाचमनीयं । इदंताबूलं । एतांदक्षिणा ॥ १ ॥ एवंसर्वत्रज्ञेयं । ॐ पर्जन्यायनमः ॥ २ ॥ ॐजयंतायनमः ॥ ३ ॥ ॐकुलिशायुधाय इदमाचमनीयं । इदंस्नानं । इदंवस्त्रं । इदंगंधं । एतानक्षतान् । एतानिपुष्पाणि । एषधूपः । एषदीपः । एतानिनानाविधानिनैवेद्यानि । नमः ॥ ४ ॥ ॐसूर्यायनमः ॥ ५ ॥ ॐसत्यायनमः ॥ ६ ॥ ॐभृशायनमः ॥ ७ ॥ ॐआकाशायनमः ॥ ८ ॥ ॐवायवेनमः ॥ ९ ॥ ॐपूष्णेनमः ॥ १० ॥ ॐवितथायनमः ॥ ११ ॥ ॐगृहक्षतायनमः ॥ १२ ॥ ॐयमायनमः ॥ १३ ॥ ॐगंधर्वायनमः ॥ १४ ॥ भृंगराजायनमः ॥ १५ ॥ ॐमृगायनमः ॥ १६ ॥ ॐपितृभ्योनमः ॥ १७ ॥ ॐदौवारिकायनमः ॥ १८ ॥ ॐसुग्रीवायनमः ॥ १९ ॥ ॐपुष्पदंतायनमः ॥ २० ॥ ॐजलाधिपतयेनमः ॥ २१ ॥ ॐअसुरायनमः ॥ २२ ॥ ॐशेषायनमः ॥ २३ ॥ ॐपापायनमः ॥ २४ ॥ ॐरोगायनमः ॥ २५ ॥ ॐअहयेनमः ॥ २६ ॥ ॐमुख्यायनमः ॥ २७ ॥ ॐभल्लाटायनमः ॥ २८ ॥ ॐसोमायनमः ॥ २९ ॥ ॐनागायनमः ॥ ३० ॥ ॐअदितयेनमः ॥ ३१ ॥ ॐदितयेनमः ॥ ३२ ॥ ॐअद्भ्योनमः ॥ ३३ ॥ ॐआपवत्सायनमः ॥ ३४ ॥ ॐअर्यम्णेनमः ॥ ३५ ॥ ॐसावित्रायनमः ॥ ३६ ॥ ॐसवित्रेनमः ॥ ३७ ॥ ॐविवस्वतेनमः ॥ ३८ ॥ विबुधाधिपायनमः ॥ ३९ ॥ ॐजयंतायनमः ॥ ४० ॥ ॐमित्रायनमः ॥ ४१ ॥ ॐराजयक्ष्मणेनमः ॥ ४२ ॥ ॐरुद्रायनमः ॥ ४३ ॥ ॐपृथ्वीधरायनमः ॥४४॥ ॐब्रह्मणेनमः ॥४५॥

ततोमंडपाद्बहिः ईशानादिषु ॥ ॐचरक्यैनमः ॥ १ ॥ ॐविदार्यैनमः ॥ २ ॥ ॐपूतनायैनमः ॥ ३ ॥ ॐपापराक्षस्यैनमः॥ ४ ॥ पूर्वादिषु॥ ॐस्कंदायनमः ॥ १ ॥ ॐअर्यम्णेनमः ॥ २ ॥ ॐजृंभकायनमः ॥ ३ ॥ ॐपिलिपिच्छायनमः ॥ ४ ॥ पुनःपूर्वादिदिक्षु । ॐइंद्रायनमः ॥ १ ॥ ॐअग्नयेनमः ॥ २ ॥ ॐयमायनमः ॥ ३ ॥ ॐनिर्ऋतयेनमः ॥ ४ ॥ ॐवरुणायनमः ॥ ५ ॥ ॐवायवेनमः ॥ ६ ॥ ॐकुबेराय नमः ॥ ७ ॥ ॐईशानायनमः ॥ ८ ॥ ॐब्रह्मणेनमः ॥ ९ ॥ ॐअनंतायनमः ॥ १० ॥ इत्यावाहिताःअंगदेवताःसकलोपचारैःपूजयेत्तं त्रेणवा ॥ ॐइहस्थापितदेवताभ्योनमःइमानिगंधाक्षतपुष्पधूपदीपाच्छादनानिप्रत्येकंपात्रस्थितंनैवेद्यमेकत्रवानैवेद्योदकफलतांबूलदक्षिणादी निचसमर्पयामियथायथाविभागंपूजनंवोनमः । इत्यंगदेवताःसंपूज्यप्रधानवास्तुपुरुषंपूजयेत् । तत्रादौप्राणप्रतिष्ठांकुर्यात् । ॐआँह्रींक्रौंयँरँलँ वँशँषँसँहँक्षँहंसःसोहं अस्यदेवस्यप्राणाइहप्राणाः ॥ पुनः ॐआँह्रींक्रौंयँरँलँवँशँषँसँहँक्षँहंसःसोहं अस्यदेवस्यजीवइहस्थितः ॥ पुनः ॐआँह्रीं क्रौंयँरँलँवँशँषँसँहँक्षँहंसःसोहं अस्यदेवस्यवाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानिइहैवागत्यसुखंचिरंतिष्ठंतुस्वाहा । ॐमनो जूतिर्ज्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयंतामों ३ प्रतिष्ठ ॥ १ ॥ ॐएषवैप्रतिष्ठानाम यज्ञोयत्रैतेनयज्ञेनयजन्तेसर्वमेवप्रतिष्ठितंभवति ॥ २ ॥ इतिप्रतिष्ठाप्य । ॐभगवन् देवदेवेशब्रह्मादिदेवतात्मक ॥ तव पूजां करिष्यामि प्रसादं कुरु मे प्रभो । इत्युक्त्वा । ॐवास्तुपुरुषायनमः पाद्यंसमर्पयामि । एवंअर्घ्यं । आचमनं । पंचामृतस्नानं । शुद्धोदकं । यज्ञोपवीतं । वस्त्रं । गंधं । पुष्पधूपदीपनैवेद्यफलतांबूलदक्षिणादिसमर्प्यार्घ्यंदद्यात् । ॐ पूज्योसि त्रिषु लोकेषु यज्ञरक्षार्थहेतवे ॥ त्वद्विना च न सिद्ध्यंति यज्ञ

दानान्यनेकशः ॥ १ ॥ अयोने भगवन् भर्गललाटस्वेदसंभव ॥ गृहाणार्घ्यं मया दत्तं वास्तो स्वामिन्नमोस्तुते ॥ २ ॥ इत्यर्घ्यंदत्वापायस
बलिदानंकुर्यात् ॥ तद्यथा ॥ ॐशिखिनेनमःएषपायसबलिर्नमम ॥ १ ॥ ॐपर्जन्यायनमःएषपायसबलिर्नमम ॥ २ ॥ ॐजयंतायनमःएष
पायसबलिर्नमम ॥ ३ ॥ ॐकुलिशायुधायनमःएषपायसबलिर्नमम ॥ ४ ॥ ॐसूर्यायनमःएषपायसबलिर्नमम ॥ ५ ॥ इत्येवंप्रयोगेणसर्वे
भ्योबलीन्दद्यात् । ततश्चरक्यादिभ्योदिक्पालेभ्यश्चमाषभक्तबलीन्दद्यात् । सयथा । ॐचरक्यैनमः ॥ एषमाषभक्तबलिर्नमम ॥ १ ॥
इत्येवंक्रमेण ॥ ततःप्रधानवास्तुपुरुषायबलिंदद्यात् । तत्रमंत्रः । नानापक्वान्नसंयुक्तं नानागंधसमन्वितं ॥ बलिं गृहाणदेवेशवास्तुदोषप्र
णाशक ॥ ॐवास्तुपुरुषायएषबलिर्नमम ॥ १ ॥ ( यथोक्तसंभारैर्बलिदानकरणेप्रतिदैवंबलिद्रव्यभेदामंत्रभेदाश्चअत्रविस्तरभयान्नोक्ताः ) ॥
अथप्रार्थना । ॐमंत्रहीनं क्रियाहीनं भक्तिश्रद्धाविवर्जितं । यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ १ ॥ नमस्तेवास्तुदेवेशसर्वविघ्नहरो
भव ॥ शांतिं कुरु सुखं देहि सर्वान्कामान्प्रयच्छ मे ॥ २ ॥ इत्युक्त्वावास्तुपुरुषायनारिकेलंससुवर्णंसमर्प्यप्रणमेत् ॥ ततःपावमानेनराक्षो
घ्नेनचसूक्तेनत्रिसूत्र्यामंडपंवेष्टयेत् ॥ ॐपवमानःसुवर्जनःइत्यादिपावमानसूक्तं ॥ ॐरक्षोहणंम्वलगहनंमितिराक्षोघ्नसूक्तंचपूर्वोक्तम् । ॐकृ
णुष्वपाजःप्प्रसितिन्नपृथ्वींय्याहिराजेवामवाँ २ ऽइभेन ॥तृष्वीमनुप्रसितिन्द्रूणानोस्तासिविद्ध्यंरक्षसस्तपिष्ठैः ॥ १ ॥ तवभ्रमास आशुयापंत
न्त्यनुस्पृशधृषताशोशुचानः ॥ तपूंष्यग्नेजुह्वापतङ्गानसंन्दितोविसृंजविष्वंगुल्काः ॥ २ ॥ प्रतिस्पशोविसृंजतूर्णितमोभवापायुर्वि शोअस्या
अदब्धः ॥ योनोदूरेअघशंसोयोअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ ३ ॥ उदग्नेतिष्ठप्रत्या तंनुष्वन्युमित्राँओषतात्तिग्महेते ॥ योनोअरातिं

समिधानचक्रेनीचातंधक्ष्यतसंनशुष्कम ॥ ४ ॥ ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनांजामिमजां
म्मिप्रमृणीहि शत्रून ॥ ५ ॥ इतिरक्षोघ्नम ॥ अथपावमानंसूक्तम ॥ ॐपुनंतुमादेवजनाऽपुनन्तुमनंसाधियं: ॥ पुनन्तुविश्वाभूतानिजातवे-
दःपुनीहिमां ॥ ९ ॥ पुवित्रेणपुनीहिमाशुक्रेणदेवदीद्यत ॥ अग्नेक्रत्वाक्रतूरनु ॥ २ ॥ यत्तेपवित्रमर्चिष्यग्नेविततमंतरा ॥ ब्रह्मतेनपुनातुमा
॥ ३ ॥ पवमानःसोअद्यनः पवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ ४ ॥ उभाभ्यांन्देवसवितः पवित्रेणसवेनच । माम्पुनीहिवि-
श्वतः ॥ ५ ॥ वैश्वदेवीपुनतीदेव्या गाद्यस्यामिमाबह्वयस्तन्वोवीतपृष्ठाः ॥ तयामदन्तः सधमादेषुवयꣳस्यामपतयोरयीणाम ॥ ६ ॥
इतिपावमानसूक्तं ॥ इतिवास्तुपूजनप्रकारः ॥ ततोवायवीयपीठेयोगिनीक्षेत्रपालान्पूजयेत ॥ तत्रप्रयोगः । ॐगजाननायैनमः ॥ १ ॥
ॐसिंहमुख्यैनमः ॥ २ ॥ ॐगृध्रास्यायैनमः ॥ ३ ॥ ॐकाकतुंडायैनमः ॥ ४ ॥ ॐउष्ट्रग्रीवायैनमः ॥ ५ ॥ ॐहयग्रीवायैनमः ॥ ६ ॥
ॐवाराह्यैनमः ॥ ७ ॥ ॐशरभाननायैनमः ॥ ८ ॥ ॐउलूकिकायैनमः ॥ ९ ॥ ॐशिवारावायैनमः ॥ १० ॥ ॐमयूर्यैनमः ॥ ११ ॥
॥ ॐविकटाननायैनमः ॥ १२ ॥ ॐअष्टवक्त्रायैनमः ॥ १३ ॥ ॐकोटराक्ष्यैनमः ॥ १४ ॥ ॐकुब्जायैनमः ॥ १५ ॥ ॐविकटलो-
चनायैनमः ॥ १६ ॥ ॐशुष्कोदर्यैनमः ॥ १७ ॥ ॐललज्जिह्वायैनमः ॥ १८ ॥ ॐश्वदंष्ट्रायैनमः ॥ १९ ॥ ॐवानराननायैनमः ॥ २० ॥
ॐक्रूराक्ष्यैनमः ॥ २१ ॥ ॐकंकराक्ष्यैनमः ॥ २२ ॥ ॐबृहत्तुंडायैनमः ॥ २३ ॥ ॐसुराप्रियायैनमः ॥ २४ ॥ ॐ कपालहस्तायैनमः
॥ २५ ॥ ॐरक्ताक्ष्यैनमः ॥ २६ ॥ ॐशुष्कयैनमः ॥ २७ ॥ ॐश्येन्यैनमः ॥ २८ ॥ ॐकपोतिकायैनमः ॥ २९ ॥ ॐपाशहस्तायैनमः

॥ ३० ॥ ॐदंडहस्तायैनमः ॥ ३१ ॥ ॐप्रचंडायैनमः ॥ ३२ ॥ ॐचंडविक्रमायैनमः ॥ ३३ ॥ ॐशिशुघ्न्यैनमः ॥ ३४ ॥ ॐपाशहंत्र्यै-
नमः ॥ ३५ ॥ ॐकाल्यैनमः ॥ ३६ ॥ ॐरुधिरपायिन्यैनमः ॥ ३७ ॥ ॐवसाधयायैनमः ॥ ३८ ॥ ॐगर्भभक्षायैनमः ॥ ३९ ॥ ॐश-
वहस्तायैनमः ॥ ४० ॥ ॐआंत्रमालिन्यैनमः ॥ ४१ ॥ ॐस्थूलकेश्यैनमः ॥ ४२ ॥ ॐबृहत्कुक्ष्यैनमः ॥ ४३ ॥ ॐसर्पास्यायैनमः ॥
॥ ४४ ॥ ॐप्रेतवाहनायैनमः ॥ ४५ ॥ ॐदंदशूकरायैनमः ॥ ४६ ॥ ॐक्रौंचयैनमः ॥ ४७ ॥ ॐमृगशीर्षायैनः ॥ ४८ ॥ ॐवृषाननायै-
नमः ॥ ४९ ॥ ॐव्यात्तास्यायैनमः ॥ ५० ॥ ॐधूमनिश्वासायैनमः ॥ ५१ ॥ ॐव्योमैकचरणोर्ध्वदशायैनमः ॥ ५२ ॥ ॐतापन्यैनमः
॥ ५३ ॥ ॐशोषणीदृष्ट्यैनमः ॥ ५४ ॥ ॐकोटर्यैनमः ॥ ५५ ॥ ॐस्थूलनासिकायैनमः ॥ ५६ ॥ ॐविद्युत्प्रभायैनमः ॥ ५७ ॥ ॐबला-
काक्ष्यैनमः ॥ ५८ ॥ ॐमार्जारमुख्यैनमः ॥ ५९ ॥ ॐकठपूतनायैनमः ॥ ६० ॥ ॐअट्टाट्टहास्यैनमः ॥ ६१ ॥ ॐकामाक्ष्यैनमः ॥६२॥
ॐमृगाक्ष्यैनमः ॥ ६३ ॥ ॐमृगलोचनायैनमः ॥ ६४ ॥ एवमावाहनंस्थापनंचकृत्वाचतुर्थ्यंतेननाममंत्रेणप्रत्येकंपूजयेत् । अनयापूजयाग-
जाननादि० मृगलोचनांताः चतुःषष्टियोगिन्यःप्रीयंतामित्युत्सृज्यमंडलाग्रेपायसबलिंदद्यात् ॥ इतियोगिनीपूजा ॥ ततःक्षेत्रपालीयपी-
ठदेवताःपूजयेत् । ॐअजरायनमः अजरमावाहयामिस्थापयामि ॥ १ ॥ ॐइंद्रचोरायनमः ॐइंद्रचोरमावाहयामिस्थापयामि ॥ २ ॥
एवंआवाहनंद्वितीयोद्देशेनपूजनंचतुर्थ्यंतेनसर्वत्र । ॐव्यापकायनमः ॥ ३ ॥ ॐइंद्रमूर्तयेनमः ॥ ४ ॥ ॐउक्षणायनमः ॥ ५ ॥ ॐकूष्मांडा-
यनमः ॥ ६ ॥ ॐवरुणायनमः ॥ ७ ॥ ॐबटुकायनमः ॥ ८ ॥ ॐविमुक्तायनमः ॥ ९ ॥ ॐलिप्तकायनमः ॥ १० ॥ ॐलीलालोपायनमः

॥ ११ ॥ ॐएकदंष्ट्रायनमः ॥ १२ ॥ ॐऐरावतायनमः ॥ १३ ॥ ॐऔषधीघ्नायनमः ॥ १४ ॥ ॐबंधनायनमः ॥ १५ ॥ ॐआचिका-
यनमः ॥ १६ ॥ ॐकंबलायनमः ॥ १७ ॥ ॐभीषणायनमः ॥ १८ ॥ ॐगवयवायनमः ॥ १९ ॥ ॐघंटायनमः ॥ २० ॥ ॐव्यालाय-
नमः ॥ २१ ॥ ॐआशवेनमः ॥ २२ ॥ ॐचंद्रवारणायनमः ॥ २३ ॥ ॐफटाटोपायनमः ॥ २४ ॥ ॐजटिलायनमः ॥ २५ ॥ ॐक्रतवे-
नमः ॥ २६ ॥ ॐघंटेश्वरायनमः ॥ २७ ॥ ॐविकटायनमः ॥ २८ ॥ ॐमणिमतेनमः ॥ २९ ॥ ॐगुणबंधवेनमः ॥ ३० ॥ ॐमुंडा-
यनमः ॥ ३१ ॥ ॐबर्बुकरायनमः ॥ ३६ ॥ सुधापायनमः ॥ ३३ ॥ ॐदंतुरायनमः ॥ ३४ ॥ ॐधनदायनमः ॥ ३५ ॥ ॐनागकर्णा-
यनमः ॥ ३६ ॥ ॐफोत्कारायनमः ॥ ३७ ॥ ॐमहाबलायनमः ॥ ३८ ॥ ॐवीरकायनः ॥ ३९ ॥ ॐसिंहायनमः ॥ ४० ॥ ॐमृगाय
नमः ॥ ४१ ॥ ॐयक्षायनमः ॥ ४२ ॥ ॐमेघवाहनायनमः ॥ ४३ ॥ ॐतीक्ष्णोष्ठायनमः ॥ ४४ ॥ ॐअमलायनमः ॥ ४५ ॥ ॐशुक्राय-
नमः ॥ ४६ ॥ ॐयुधापायनमः ॥ ४७ ॥ ॐवक्रायनमः ॥ ४८ ॥ ॐवातायनमः ॥ ४९ ॥ ॐयापनायनमः ॥ ५० ॥ यापनइहागच्छइहतिष्ठ
एवंपंचाशत्क्षेत्रपालान्संस्थाप्य ततः ॐक्षेत्रपालेभ्योनमः इतिआसनाद्युपचारैःसंपूज्यॐ-ह्रां-ह्रीं-ह्रूंस्वाहा । इतिबटुकायप्रभूतबलिंदद्यात् ।
तत्रमंत्रः । ॐयोगिन्यः क्षेत्रपालाश्च सर्वे यत्र समागताः ॥ नगरे वाथ ग्रामे वा अटव्यां सरितस्तथा ॥ १ ॥ ते सर्वे चैव संतुष्टा बलिं
गृह्णंतु मे सदा ॥ शरणागतोस्म्यहं तेषां सर्वे ते मम सुप्रदाः ॥ २ ॥ बलिदानेन संतुष्टाः प्रयच्छंतु ममेप्सितं ॥ सर्वकार्याणि कुर्वंतु
दोषांश्च घ्नंतु मे सदा ॥ ३ ॥ इतिप्रभूतबलिंसमर्प्यप्रणमेत् ॥ इति प्रतिष्ठाप्रकाशेवास्तुपूजनकथनंनामद्वितीयःपरिच्छेदः समाप्तः ॥ २ ॥

अथमंडपपूजनंलिख्यते । तत्रादौगुर्वृत्विग्भिः सर्वौषधीयुतजलेनस्नापितः शुक्लमाल्यांबरधरःशुक्लगंधानुलेपनः सपत्नीकः पुत्रपौत्रयुतो
यजमानःसाचार्यः सऋत्विक्संपूर्णकलशहस्तोमंगलतूर्यनिस्वने जायमाने ॥ ॐभद्रंकर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरै
रङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ इत्यादिवेदघोषेणमंडपपूजनंकुर्यात् आचम्यप्राणानायम्य ॐअद्येत्यादिदेशकालौसंकी
र्त्यामुकदेवप्रतिष्ठायज्ञांगतयागणेशपूजापूर्वकमंडपदेवतास्थापनादिचकरिष्ये इतिसंकल्प्ययथाविधिगणेशंसंपूज्यस्तंभपूजनंकुर्यात् मध्यवेद्या
ईशानादितः प्राग्दक्षिणक्रमेण ईशान्यां । आवाहयामि देवेशं ब्रह्ममूर्तिं पितामहं ॥ पुस्तकं चाक्षसूत्रं च शूलहस्तं कमंडलुम् ॥ १ ॥
हंसपृष्ठसमारूढंदेवतागणसेवितं ॥ आगच्छ भगवन् ब्रह्मन् प्रथमस्तंभसंस्थितः ॥ २ ॥ ॐब्रह्मयज्ञानंप्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽ
आवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ॐभूर्भुवःस्वः ब्रह्मणेनमः ब्रह्माणं आवाहयामि ॥ भोब्रह्मन्निहा
गच्छइहतिष्ठेत्यावाह्य इतिगंधादिषोडशोपचारैःपूजयेत् ॥ १ ॥ ततआग्नेयस्तंभे । आवाहयामि देवेशं विष्णुं त्रैलोक्यपूजितं ॥ शंखचक्रग
दापद्मचतुर्बाहुं सुशोभनं ॥ १ ॥ गरुडं च समारूढं लक्ष्मीगणसमायुतं ॥ आगच्छ भगवन् विष्णो द्वितीयस्तंभसंस्थितः ॥ २ ॥ ॐइदं
विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरे ॥ ॐभूर्भुवःस्वः विष्णवेनमःविष्णुंआवाहयामि भोविष्णोइहागच्छइहतिष्ठ ॥ ॐविष्ण
वेनमइतिपूजयेत् ॥ २ ॥ ततोनैऋत्यस्तंभे । आवाहयामि देवेशं शिवं त्रैलोक्यधारिणं ॥ वृषभं च समारूढं चंद्रार्धकृतशेखरं ॥ १ ॥
त्रिशूलायुधसंयुक्तं मुंडमालाविभूषितं ॥ उमागणसमायुक्तं नागयज्ञोपवीतकम् ॥ आगच्छदेवदेवेश तृतीयस्तंभसंस्थितः ॥ २ ॥ ॐनमं

स्तेरुद्रमुन्यवंऽउतोतुऽइषवेनमः ॥ बाहुभ्यांमुततेनमः ॥ ॐभूर्भुवःस्वःशिवायनमः शिवंआवाहयामि ॥ भोशिवइहागच्छइहतिष्ठइत्यावाह्य ॐशिवायनमइतिपूजयेत् ॥ ३ ॥ वायुकोणेइंद्रं । आवाहयामि देवेशं सहस्राक्षं पुरंदरं ॥ ऐरावतगजारूढं वज्रायुधसमन्वितं ॥ १ ॥ शचीपतिं महाबाहुं नानाभरणभूषितं ॥ आगच्छ देवराजेंद्र चतुर्थस्तंभसंस्थितः ॥ २ ॥ ॐत्रातारमिन्द्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ ॐभूर्भुवःस्वःइंद्रायनमः इन्द्रंआवाहयामि ॥ भोइंद्रइहागच्छइहतिष्ठ इत्यावाह्य ॐइंद्रायनमइतिपूजयेत् ॥ ४ ॥ ततोबाह्यस्तंभेषु ईशानकोणादारभ्यद्वादशस्तंभपूजनं ईशानेसूर्यं ॥ आवाहयामिदेवेशं भास्करं तिग्मतेजसं ॥ सप्ताश्ववाहनारूढं रथे कांचननिर्मिते ॥ १ ॥ रक्तांगंपद्महस्तंचत्रैलोक्यतिमिरापहं ॥ सर्वदुःखहरंदेवंब्रह्मण्यमधिकप्रभं ॥२॥ आगच्छरक्षकत्वंचपंचमस्तंभसंस्थितः ॥ ॐआकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यंच्च । हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ॐभूर्भुवःस्वः सूर्यायनमः सूर्यंआवाहयामि ॥ भोसूर्यइहागच्छइहतिष्ठइत्यावाह्यॐसूर्यायनमःइतिपूजयेत् ॥ ५ ॥ ईशानपूर्वयोरंतरालस्तंभेगणेशं ॥ आवाहयामि देवेशं गणनाथं विनायकं ॥ लंबोदरं महाकायं गजवक्त्रं गणेश्वरं ॥ १ ॥ सिद्धिबुद्धिप्रदातारं सर्वविघ्नविनाशनं । सर्वेषामेव देवानां मुख्यं देवं महाबलं ॥ आगच्छगणनाथत्वंषष्ठस्तंभसमाश्रितः ॥ २ ॥ ॐगणानान्त्वागणपतिꣳहवामहे प्प्रियाणान्त्वाप्प्रियपतिꣳहवामहेनिधीनांत्वा निधिपतिꣳहवामहेव्वसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् ॥ ॐभूर्भुवःस्वःगणपतयेनमः गणपतिंआवाहयामि ॥ भो गणपते इहागच्छइहतिष्ठेत्यावाह्यपूजयेत् ॥ ६ ॥ ततःपूर्वाग्न्योरंतरालस्तंभेयमं ॥ आवाहयामि

देवेशं यमं जंतुभयंकरं ॥ रौद्रमूर्तिंविरूपाक्षं कृष्णांजनसमप्रभं ॥१॥ माहिषं रथमारूढं दंडायुधसमन्वितं ॥ कर्मणांसाक्षिणं देवं धर्मार्थ-
कामचिंतनं ॥ आगच्छ धर्मराजेंद्रसप्तमस्तंभसंस्थितः ॥ २ ॥ ॐयमायत्वामुखायत्वासूर्यस्यत्वातपसे ॥ देवस्त्वासवितामद्ध्वानक्तुपृथिव्याऽ
सुꣳस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ॐभूर्भुवःस्वः यमायनमः यमंआवाहयामि ॥ भो यमइहागच्छइहतिष्ठ ॐयमायनमः इति
पूजनं ॥ ७ ॥ ततोऽग्निकोणस्तंभेशेषं । आवाहयामि देवेशं पातालतलवासिनं ॥ सहस्रशिरसं देवं फणामणिविभूषितं ॥ आशीविषसमो
पेतं अष्टमस्तंभसंस्थितं॥१॥ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवि तेभ्यः सर्पेभ्योनमः॥ ॐभूर्भुवःस्वःशेषायनमः शेषंआवा-
हयामि ॥भो शेषइहागच्छइहतिष्ठ ॐशेषायनमः इति पूजयेत् ॥ ८ ॥ आग्नेयदक्षिणयोरंतरालस्तंभेस्कंदं। आवाहयामि देवेशं षण्मुखं कृत्तिका-
सुतं ॥ रुद्रवीर्यसमुद्भूतं देवं गणसमन्वितं ॥ १ ॥ सर्वशास्त्रपरिज्ञातं तत्त्वज्ञं ब्रह्मवादिनं ॥ मयूरासनमारूढं सौम्यमूर्तिं शुभाननं ॥
आगच्छ देवदेवेश नवमस्तंभसंस्थितः ॥ २ ॥ ॐयदक्रन्दःप्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउ
पस्तुत्यंमहिजातन्तेऽअर्वन् ॥ ॐभूर्भुवःस्वःस्कंदायनमः स्कंदंआवाहयामि ॥ भो स्कंदइहागच्छइहतिष्ठ इत्यावाह्य ॐस्कंदायनमः इति
पूजयेत् ॥ ९ ॥ दक्षिणनैर्ऋत्यांतरालस्तंभेवायुं ॥ आवाहयामि देवेशं भूतानां प्राणसंमितं ॥ सर्वाधारं महादीप्तिं बाह्याभ्यंतरसंस्थितं
॥ १ ॥ कृष्णमृगसमारूढं ध्वजायुधसमन्वितं ॥ आगच्छ भगवन् वायो स्तंभेस्मिन्सन्निधोभव ॥ २ ॥ व्वायोयेतेसहस्रिणोरथासस्तेभिरा ॥ ३१ ॥
गहि ॥ नियुत्वान्सोमपीतये ॥ ॐभूर्भुवःस्वः वायवेनमः वायुंआवाहयामि ॥ भो वायोइहागच्छइहतिष्ठ इत्यावाह्य ॐवायवेनमः इति

पूजेयत् ॥१०॥ ततोनिर्ऋतिस्तंभेसोमं । आवाहयामि देवेशं शशिनं रात्रिनायकं ॥ क्षीरोदधिसमुद्भूतं रुद्रशीर्षनिवासिनं॥१॥ शुद्ध स्फटिकसंकाशं
मुकुटोज्वलभूषितं ॥ आगच्छ सोमदेवेश स्तंभेस्मिन्सन्निधोभव ॥ २ ॥ ॐआप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥
ॐभूर्भुवःस्वः सोमायनमः सोमंआवाहयामि ॥ भो सोमइहागच्छइहतिष्ठ इत्यावाह्यसोमायनमः इतिपूजयेत् ॥११ ॥ ततोनिर्ऋतिपश्चिम-
योर्मध्यस्तंभेवरुणं । आवाहयामिदेवेशं वरुणं जलनायकं ॥ कुंभीरथसमारूढं श्वेताद्रिशिखरोपमं ॥१॥ पाशहस्तं महाबाहुं सर्वेषामभयप्रदं
॥ आगच्छवरुणेशानद्वादशस्तंभसंस्थितः ॥२॥ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ॐभूर्भुवःस्वःवरुणायनमःवरुणंआ
वाहयामि भो वरुणइहागच्छइहतिष्ठ इत्यावाह्य ॐवरुणायनमः॥ इतिपूजयेत् ॥१२॥ पश्चिमवायव्योर्मध्यस्तंभेअष्टवसून् । आवाहयामि देवेशान्
वसूनष्टौ महाबलान् ॥अश्ववाहनसंयुक्तान् पुष्पमालाविभूषितान् ।।वसवोष्टावगच्छंतु त्रयोदशसमाश्रिताः ॥१॥ ॐवसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ ॐभूर्भुवःस्वः वसुभ्योनमः वसूनआवा
हयामि ॥ भो वसवइहागच्छतइहतिष्ठत इत्यावाह्य ॐवसुभ्योनमः इतिपूजयेत् ॥ १३ ॥ ततो वायव्यस्तंभेधनदं । आवाहयामि देवेशं
धनदं यक्षपूजितं ॥ महाबलं दिव्यदेहं नरयानगतं विभुं ॥ १ ॥ दिव्यमालांबरधरं गदाहस्तमहाभुजं ॥ आगच्छ यक्षराजस्त्वं स्तंभेऽस्मि-
न्सन्निधोभव ॥ १ ॥ ॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ॐभूर्भुवःस्वःधनदायनमः धनदं आवाहयामि ॥
भो धनदइहागच्छइहतिष्ठ ॐधनदायनमः इतिपूजयेत् ॥ १४ ॥ ततोवायव्योत्तरयोरंतरालस्तंभे बृहस्पतिं । आवाहयामि देवेशं गुरुं

त्रैलोक्यपूजितं ॥ हेमरोचनवर्णाभं पीतस्कंधं महौजसं ॥ १ ॥ देवानां मंत्रिणं प्राज्ञं सर्वविद्याविशारदं ॥ आगच्छ देवदेवेश स्तंभेऽस्मिन्सन्निधोभव ॥ २ ॥ ॐबृहस्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्प्रजाततदस्मासुद्द्रविणंधेहिचित्रम् ॥ ॐभूर्भुवःस्वः बृहस्पतयेनमः बृहस्पतिंआवाहयामि ॥ भो बृहस्पते इहागच्छइहतिष्ठ इत्यावाह्य ॐबृहस्पतयेनमः इतिपूजयेत् ॥ १५ ॥ ततउत्तर ईशानयोर्मध्यस्तंभेविश्वकर्माणं । आवाहयामि देवेशं विश्वकर्माणमीश्वरं ॥ शुद्धस्फटिकसंकाशं सूर्यकोटिसमप्रभं ॥ १ ॥ देवर्षिपितृभूतानां गर्भितारं सनातनम् ॥ आगच्छ विश्वकर्मस्त्वं स्तंभेऽस्मिन्सन्निधोभव ॥ ॐविश्वकर्म्मन्हविषावर्धनेनत्रातारमिंद्रमकृणोरवद्ध्यम् ॥ तस्मैविशःसमनमन्तपूर्वीरयमुग्रोविहव्योयथासत् ॥ ॐभूर्भुवःस्वः विश्वकर्मणेनमः विश्वकर्माणंआवाहयामि ॥ भो विश्वकर्मन्निहागच्छइहतिष्ठॐविश्वकर्मणेनमःइतिपूजययेत् । इतिषोडशस्तंभपूजनम् ॥ ॐनागमात्रेनमइतिवलिकाष्ठानिपूजयेत् । ॐसर्वेभ्योनमइतिशाखोद्बंधनादिपूजनं ततः पश्चिमद्वारेणनिर्गत्यपूर्वादिद्वारतोरणपूजांकुर्यात् तत्रादौ पूर्वस्यांदिशिमंडपाद्बहिर्हस्तमात्रेअश्वत्थंवटतोरणंवासुदृढनामकं सिंदूरसदृशंमहेंद्रपर्वतयुतंशंखाङ्कितंतोरणंन्यस्यअश्वत्थतोरणैनंयज्ञंरक्षसर्वविघ्नान्निवारय ॥ ॐअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् ॥ होतारंरत्नधातमम् ॥ ॐऋग्वेदाधिष्ठितायसुदृढतोरणायनमःसुदृढतोरणमावाहयामि । ॐसुदृढतोरणायनमःगंधंसमर्पयामि । पुष्पंधूपंदीपंनैवेद्यंतांबूलंदक्षिणांचसमर्पयामि । इतिगंधादिनासंपूज्य ॐकृतयुगायनमःइतिकृतयुगंसंपूज्य । तत्रैव राहवेनमःराहुमावाहयामि । बृहस्पतयेनमः बृहस्पतिमावाहयामि इत्यावाह्य । ॐराहुबृहस्पतिभ्यांनमइतिगंधादिभिः पूजयेत् । तत्रैकःकलशःस्थाप्यः । तत्रप्रयोगः महीद्यौ

रितिभूमिंस्पृष्ट्वा । ॐमहीद्यौःपृथिवीचनऽइमंयज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ तत्रऔषधयइतियवान् ॐओषधयःसमवदंतसो
मेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तꣳराजन्पारयामसि ॥ २ ॥ आजिघ्रमितिकलशंनिधाय । ॐआजिघ्रकलशंमह्यात्वाविशन्त्विन्दवः ॥
पुनरूर्जानिवर्त्तस्वसानः सहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः ॥ ३ ॥ वरुणस्योत्तमितिजलेनापूर्य । ॐवरुणस्योत्तम्भनमसिवरुण
स्यस्कंभसर्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ४ ॥ गंधद्वारामितिगंधंक्षिपेत् । ॐगंध
द्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ ५ ॥ याऽओषधीरितिसर्वौषधीः । ॐयाऽओषधीःपूर्वाजातादेवे
भ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रुणामहꣳशतंधामानिसप्तच ॥ ६ ॥ काण्डात्काण्डादितिदूर्वा । ॐकाण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥
एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥७॥ अश्वत्थेवइतिपंचपल्लवान् । ॐअश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनव
थपूरुषम् ॥ ८ ॥ स्योनापृथिवीतिसप्तमृदः । ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ ९ ॥ याःफलिनीरिति
पूगीफलं । ॐयाःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचन्त्वꣳहसः ॥ १० ॥ परिवाजइतिपंचरत्नानि ।
ॐपरिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ११ ॥ हिरण्यगर्भेतिहिरण्यंक्षिपेत् । ॐहिरण्यगर्भःसमवर्त्तताग्रेभूतस्य
जातःपतिरेकऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ १२ ॥ युवासुवासाइतिवस्त्रंवेष्टयेत् । ॐयुवासुवासाःपरि
वीतऽआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयऽउन्नयंतिस्वाध्योमनसादेवयंतः ॥ १३ ॥ पूर्णादर्वीतिधान्यपूर्णपात्रंनिधाय ।

ॐपूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्ज्जंᳫशतक्रतो ॥ १४ ॥ ॐश्रीश्चतेइतिनारिकेलंसंस्थाप्य तस्मिन्कलशे ॐध्रु
वमावाहयामिइत्यावाह्य ॐध्रुवायनमइतिगंधाद्युपचारान्समर्पयेत् ॥ ततःआचम्यदक्षिणेगत्वाऔदुंबरंप्लाक्षंवाविकटनामकंचक्रांकितंविंध्य
नामगिरियुतंधूम्रवर्णाभंतोरणंन्यस्य । एह्येहिविकटतोरणएनंयज्ञंरक्षसर्वविघ्नान्निवारय । ॐइषेत्वोर्ज्जेत्वावायवस्थदेवोवः सवितापार्प्पयतु
श्रेष्ठतमायकर्म्मणऽआप्यायध्वमघ्न्याऽइंद्रायभागंप्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशᳫसो ध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजं
मानस्यपशून्पाहि ॥ ॐयजुर्वेदाधिष्ठितायविकटतोरणायनमःविकटतोरणमावाहयामि । ॐविकटतोरणायनमःत्रेतायुगायनमःइतिगंधाद्यु
पचारान्समर्पयेत् ॥ तत्र सूर्यायनमःसूर्यमावाहयामि । अंगारकायनमःअंगारकमावाहयामि । ॐसूर्यांगारकाभ्यांनमइतिगंधादीन्समर्प
येत् । तत्रैकःकलशःपूर्वोक्तविधिनासंस्थाप्यतस्मिन्कलशे धरायैनमःधरामावाहयामि । ॐधरायैनमइतिगंधाद्युपचारान्समर्पयेत् ॥ ततआ
चम्यपश्चिमेगत्वाप्लाक्षंऔदुंबरंवासुभीमाख्यंस्वर्णसदृशप्रभं गंधमादनपर्वतसहितं गदांकितंतोरणंन्यस्य ॥ एह्येहिसुभीमतोरणएनंयज्ञंरक्षस
र्वविघ्नान्निवारय । ॐअग्नआयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ १ ॥ सामवेदाधिष्ठितायसुभीमतोरणायनमःसुभीमतो
रणमावाहयामि ॐसुभीमतोरणायनमः द्वापरयुगायनमःइतिगंधादिभिःसंपूज्य । तत्र शुक्रायनमः शुक्रमावाहयामि । बुधायनमः बुधमा
वाहयामि ॐशुक्रबुधाभ्यांनम इतिगंधाद्यर्पणं । तत्रैकःकलशःस्थाप्यः । तस्मिन्कलशेवाक्पतिमावाह्यवाक्पतयेनमइतिपूजयेत् । तत आच
मनं उत्तरेगत्वा । आश्वत्थंवाटंवासुप्रभाख्यंशुद्धस्फटिकप्रभंहिमवत्पर्वतसहितंपद्मांकितंतोरणंन्यस्य एह्येहिसुप्रभतोरण एनंयज्ञंरक्ष सर्ववि

ह्यान्निवारय । ॐशन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंय्योरभिस्त्रवंतुनः ॥ अथर्ववेदाधिष्ठितायसुप्रभतोरणायनमः सुप्रभतोरणमावाह यामित्यावाह्य । ॐसुप्रभतोरणायनमः कलियुगायनमः इतिगंधादिनापूजयेत् । तत्र सोमायनमः सोममावाहयामि । केतवेनमः केतुमा वाहयामि । शनैश्चरायनमः शनैश्चरमावाहयामि । सोमकेतुशनैश्चरेभ्योनमइतिगंधादिनापूजयेत् । तत्रैकःपूर्ववत्कलशःस्थाप्यः । तस्मिन्क लशे विघ्नेशमावाहयामि ॐविघ्नेशायनमइतिगंधादिनापूजयेत् ॥ ततःपूर्वंगत्वा । पूर्ववत् मह्रीद्यौरित्यादिविधिनाप्रतिद्वारशाखं कलशद्वयं संस्थाप्यप्रतिकलशंमंत्रावृत्तिःअस्मिन्कलशद्वये ऐरावतदिग्गजमावाहयामि । ऐरावतदिग्गजायनम इतिगंधादिनापूजयेत् । कलशोपरिघृते नदीपोदेयः ॥ तत्रऋग्विधिनाऋत्विजौ । ऋग्वेदः पद्मपत्राक्षो गायत्रःसोमदैवतः ॥ अत्रिगोत्रस्तुविप्रेंद्र ऋत्विक् त्वं मे मखे भव ॥ इति प्रार्थ्य ॐअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् ॥ होतारंरत्नधातमम् । इतिमंत्रेणप्रत्येकंगंधादिनापूजयेत् । श्रीसूक्तंपावमानंचसोमसूक्तंसु मंगलं । पौरुषंरुद्रसूक्तंचवामदेव्यंतथैवच ॥ ९ ॥ श्रीसूक्तंहिरण्यवर्णामितिपंचदशर्चं ॥ ५ ॥ पावमानंस्वादिष्ठयामइत्यादि । सोमसूक्तंत्वंसो मप्रचिकितोइत्यादि । सुमंगलंकनिक्रददित्यादि । पौरुषंसहस्रशीर्षेत्यादि । रौद्रंइमारुद्रायतवसेइत्यादि । वामदेव्यंकयानश्चित्रेत्यादिऋग्वेदी यम् ॥ ६ ॥ ततः सहस्राक्षमैरावतसंस्थितंपीतकिरीटिनंकुंडलधरंदक्षिणवामकरस्थवज्रोत्पलमिंद्रंध्यात्वा । ॐएह्येहि सर्वामरसिद्धसाध्यैर भिष्टुतोवज्रधरोऽमरेशः ॥ संवीज्यमानोऽप्सरसांगणेन रक्षाध्वरंनोभगवन्नमस्ते ॥ ॐभूर्भुवःस्वःइंद्रइहागच्छइहतिष्ठ ॥ इतिसांगंसपरिवारं सायुधंसशक्तिकमिंद्रंद्वारकलशेआवाह्य ॐत्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳ शूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनो

मुघवांधात्विन्द्रं÷ ॥ इंद्रायनमइतिगंधादिभिःप्रपूज्य ॥ ॐआशुःशिशांनोवृषुभोनभीमोघनाघुनःक्षोभंणश्चर्षणीनाम ॥ सुङ्क्रन्दंनोनिमिषऽ
एकवीरःशुत्तꣳसेनांऽअजयत्साकमिन्द्रं÷ ॥ इतिमंत्रेणपीतौपताकाध्वजावुच्छ्रयेत ॥ ततोद्वारशाखयोःदक्षिणोत्तरयोः । धात्रेनमः । विधात्रे
नमः । ऊर्ध्वंद्वारश्रियैनमः । गणपतयेनमः ॥ तदुपरिवास्तुपुरुषायनमः ।अधोदेहल्यैनमः । वामदक्षिणस्तंभयोर्गणेशाय० । स्कंदायनमः।
कलशद्वयेगंगायैनमः । यमुनायैनमः । इंद्रायनमः । इतिसंपूज्य । इंद्रः सुरपतिः श्रेष्ठोवज्रहस्तोमहाबलः ॥ शतयज्ञाधिपोदेवस्तस्मै नित्यं
नमोनमः ॥ इतिनत्वा ततोमाषभक्तबलिंगृहीत्वा ॐइंद्रायसाङ्गायसपरिवारायसायुधायसशक्तिकाय एतंमाषभक्तबलिंसमर्पयामि । इतिब
लिंदत्वाचमेत । तत आग्नेय्यांगत्वा तत्र पूर्ववत्कलशंसंस्थाप्य तत्रपुंडरीकायनमः पुंडरीकमावाहयामि । अमृताय० अमृतमा० पुंडरीका
मृताभ्यांनम इतिगंधादिनासंपूज्यतत्रदीपोदेयः । ततः छागस्थंरक्तवर्णं दक्षिणवामकरद्वयधृतशक्तिकमंडलुंयज्ञोपवीतिनमग्निंध्यात्वा । ॐए
ह्येहिसर्वामरहव्यवाहमुनिप्रवर्यैरभितोभिजुष्टः ॥ तेजोवतालोकगणेनसार्द्धममाध्वरंपाहिकवेनमस्ते । ॐभूर्भुवःस्वःअग्नेइहागच्छइहतिष्ठ
इतिसांगंसपरिवारंसायुधंसशक्तिकंकलशेआवाह्य ॐत्वन्नोंऽअग्नेतवंदेवपायुभिर्म्मघोनोंरक्षतन्वश्चवंद्य ॥ त्रातातोकस्युतनंयेगवांमुस्यनिमेषꣳ
रक्षमाणुस्तवंव्रुते ॥ १ ॥ ॐअग्नयेनम इतिगंधादिनाप्रपूज्य । ॐअग्निंदूतंपुरोदंधेहव्युवाहमुपंब्रुवे ॥ देवाँ २ आसांदयादिह ॥ इतिमंत्रेण
रक्तौपताकाध्वजावुच्छ्रयेत ॥ अथप्रार्थना । आग्नेयः पुरुषोरक्तः सर्वदेवमयोऽव्ययः ॥ धूम्रकेतुरजोध्यक्षस्तस्मै नित्यं नमोनमः ॥ १ ॥
अग्नयेसांगायसपरिवारायसायुधायसशक्तिकाय एतंमाषभक्तबलिंसमर्पयामि इतिबलिंदत्वाचमेत ॥ २ ॥ ततोदक्षिणेगत्वा । प्रतिद्वारशाखं

कलशद्वयंसंस्थाप्य तत्रकलशद्वये । वामनाख्यदिग्गजमावाहयामि । ॐवामनाख्यदिग्गजायनम इतिसंपूज्यदीपंदद्यात् । तत्रयजुर्वेदिनौद्वार
पालौ । कातराक्षोयजुर्वेदस्त्रैष्टुभोविष्णुदैवतः ॥ काश्यपेयस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभव इतिप्रत्येकंवृत्वा । इषेत्वोर्जेत्वा० इतिमंत्रेणगंधादि
भिःप्रत्येकंसंपूज्य । आनोभद्रानुवाकश्चआशुःशिशानकस्तथा । यद्देवात्रीणिचपठेत्ततोष्टौचपुनन्तुमां ॥ २ ॥ आनोभद्रानुवाकः आनोभ
द्राःक्रतवोइत्यादिदशमंत्रात्मकः । आशुः शिशानकः आशुःशिशानोइत्यादिअष्टादशमंत्रात्मकः । यद्देवादेवहेडनमित्यादिमंत्रत्रयं । पुनं
तुमादेवजनाइत्याद्यष्टौमंत्राः ॥ ततोमहिषारूढंधृतदंडपाशदक्षिणवामकरं कृष्णांजननगोपमं अग्निसमलोचनंयमंध्यात्वा ॐएह्येहि वैवस्वत
धर्मराज सर्वामरैरर्चितधर्ममूर्ते ॥ शुभाशुभानंदशुचामधीशशिवायनः पाहिमखंनमस्ते ॥ ॐभूर्भुवःस्वःयमइहागच्छइहतिष्ठ इतियमंसांगं०
द्वारकलशेआवाह्य । ॐयमायत्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्मायस्वाहाघर्मःपित्रे ॥ ॐयमायनम इतिगंधादिनाप्रपूज्य ॐआयङ्गौऽ
पृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्चप्रयंत्स्वः ॥ इतिकृष्णांपताकाध्वजावुच्छ्रयेत् ॥ प्रार्थना । वैवस्वत महादेव नमस्तेधर्मसाक्षिक ।
शिवाज्ञापिहितोदेव दिशं रक्ष भवानिह ॥ १ ॥ ततोद्वारशाखयोः । बलायनमः । सबलायनमः । ऊर्ध्वं श्रियैनमः गणपतयेनमः । अधः
देहल्यैनमः वास्तुपुरुषायनमः । स्तंभयोः पुष्पदंतायनमः कपर्दिनेनमः । कलशद्वये गोदावर्यैनमः कृष्णायैनमः इतिसंपूज्य । ॐयमाय
सांगाय० एतंमाषभक्तबलिंसमर्पयामि इतिबलिंदत्वाचामेत् ॥ ततोनैर्ऋत्यांगत्वा । तत्रपूर्ववत्कलशंसंस्थाप्य तस्मिन्कुमुदमावाहयामि दुर्ज
यमावाहयामि कुमुददुर्जयाभ्यांनम इतिप्रपूज्यदीपोदेयः । तत्रनिर्ऋतिंनरारूढंमहाकायंखड्गहस्तंमहाबलंनीलंराक्षसवेष्टितं पीताभरणभूषितं

ध्यात्वा । एह्येहि रक्षोगणनायकस्त्वंविशालवेतालपिशाचसंघैः ॥ ममाध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वंभगवन्नमस्ते ॥ ॐभूर्भुवःस्वः
निर्ऋतेइहागच्छइहतिष्ठ इतिसांगंनिर्ऋतिंकुंभेआवाह्य । ॐअसुन्वंतमयंजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽ
इत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ॐनिर्ऋतये नम इतिसंपूज्यॐमोषूणइन्द्रात्रपृत्सुदेवैरस्तिहिष्मातेशुष्मिन्नवयाः ॥ महश्चिद्यस्यमीढुषोयव्या
हविष्मतोमरुतोवन्दतेगीः ॥ इतिनीलपताकाध्वजावुच्छ्रयेत् । राक्षसेभ्योहि रक्षार्थं भवानत्रप्रतिष्ठितः ॥ निर्विघ्नां यज्ञभूमिं त्वं कुरुष्व
शववाहन ॥ निर्ऋतयेसांगाय० एतंभाषभक्तबलिं० ॥ ततःपश्चिमेगत्वाकलशद्वयंप्रतिशाखंपूर्ववत्संस्थाप्य कलशद्वयेअंजनाख्यदिग्गजमावा
हयामिइत्यावाह्य गंधादिनाप्रपूज्य । तत्रसामवेदिनौद्वौद्वारपालौ । सामवेदस्तुपिंगाक्षोजागतःशक्रदैवतः ॥ भारद्वाजस्तुविप्रेंद्रऋत्विक्त्वं
मेमखेभव ॥ इतिवृत्वाॐअग्नआयाहिवीतयेगृणानोहव्यदातये । निहोतासत्सिबर्हिषि ॥ इतिमंत्रेणप्रत्येकंगंधादिनासंपूज्य वामदेव्यंबृह
त्सामज्येष्ठसामरथंतरं ॥ तथापुरुषसूक्तंचरुद्रसूक्तमतःपरं ॥ आज्यदोहादिसामानिपश्चिमेद्वारपालकौ ॥ १ ॥ वामदेव्यं कयानश्चित्रेत्यादि ।
बृहत्सामः त्वामिद्धिहवामहइत्यादि । ज्येष्ठसाम मूर्द्धानंदिवइत्यादि । रथंतरं अभित्वाशूरनोनुमइत्यादिकं । पुरुषसूक्तंसहस्रशीर्षाइत्या
दिकं । रुद्रसूक्तंआवोराजानमितिवर्गद्वयं । आज्यदोहादिदेवव्रतानीत्यादिकम् ॥ ततोमकरस्थंपाशहस्तंशुक्लवर्णकिरीटधारिणंवरुणंध्यात्वा
ॐएह्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरोभिः ॥ विद्याधरेंद्रामरगीयमान पाहि त्वमस्मान् भगवन्नमस्ते ॥ ॐभूर्भुवःस्वःवरुण
इहागच्छइहतिष्ठइतिसांगंवरुणंकलशयोरावाह्य ॐतत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरु

शन्नः समानऽआयुः प्रमोषीः ॥ ॐ वरुणायनमः इतिमंत्रेणगंधादिभिः संपूज्य ॥ ॐ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥
इतिमंत्रेणश्वेतौपताकाध्वजावुच्छ्रयेत् ॥ पाशहस्तात्मकोदेवोजलराश्यधिपोमहान् ॥ निम्नगामीतिविख्यातस्तस्मै वरुण ते नमः इतिनत्वा
द्वारशाखयोर्जयायनमः विजयायनमः । ऊर्ध्वं श्रियैनमः गणपतयेनमः । अधः देहल्यैनमः वास्तुपुरुषायनमः स्तंभयोः नंदिनेनमः चंद्रा
यनमः । कलशद्वये रेवायैनमः नर्मदायैनमः । इतिसंपूज्य वरुणायसांगाय० एतंमाषभक्तबलिं० । ततोवायव्यांगत्वा पूर्ववत्कलशंनिधाय
तत्रपुष्पदंतमावाहयामि ॐ पुष्पदंतायनमः । सिद्धार्थमावाहयामि ॐ सिद्धार्थायनमः । इतिगंधादिनासंपूज्यदीपोदेयः ततः मृगाधिरूढं
धूम्रवर्णं चित्रांबरधरंयुवानंवरंध्वजधरंदक्षिणवामहस्तद्वयंवायुंध्यात्वा ॥ ॐ एह्येहि यज्ञे मम रक्षणाय मृगादिरूढं सह सिद्धसंघैः ॥ प्राणा
धिपः कालकवे सहाय गृहाण पूजां भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः वायोइहागच्छइहतिष्ठइतिसांगंवायुंकलशेआवाह्य ॥ ॐ आनोनियुद्भिः
शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः ॥ ॐ वायवेनमः इतिसंपूज्य
ॐ वायोयेतेसहस्रिणोरथासस्तेभिरागहि ॥ नियुत्वान्सोमपीतये ॥ इतिधूम्रौपताकाध्वजावुच्छ्रयेत् । अनाकारोमहौजाश्चपश्चात् दृष्टिर्गति
र्दिवि ॥ तस्मै पूज्याय महते वायवेऽहं नमामि ते ॥ इतिनत्वा वायवेसांगाय० एतंमाषभक्तबलिं० ॥ तत उत्तरेगत्वा प्रतिद्वारशाखंकलश
द्वयंनिधाय तत्रकलशद्वयेसार्वभौमदिग्गजमावाहयामि । इत्यावाह्य ॐ सार्वभौमदिग्गजायनमः इतिसंपूज्यदीपंदद्यात् । तत्रअथर्ववेदिनौ
द्वारपालौ ॥ बृहन्नेत्रोथर्ववेदोह्यनुष्टुप्रुद्रदैवतः ॥ वैशंपायनविप्रेंद्र ऋत्विक् त्वं मे मखे भव ॥ इतिवृत्वा ॐ शन्नोदेवीरभिष्टयऽआपोभवंतु

पीतये ॥ शंय्योरभिस्रवंतुनः ॥ इतिमंत्रेणगंधादिनासंपूज्य अथर्वांगिरसंनीलरुद्रंचैवापराजिता ॥ देवीचमधुसूक्तंचरोधसंशांतिकाव्ययं ॥
अथर्वाणौद्वारपालौपठेतामुत्तराश्रितौ ॥ १ ॥ अथर्वणं छंदोगायद्ब्रहज्ञायइत्यादि । आंगिरसं० अंगिरसोजन्मनीत्यादि० । नीलरुद्रं०
यारुद्रपत्न्यावित्यादि । अपराजिता देवीपरिवर्त्मनीइत्यादि० मधुसूक्तंमधुवाताइत्यादि० । रोधसंअभयंद्यावापृथिवीइत्यादि० । शांतिका
ध्यायः शन्नइंद्राग्नीत्यादिकोद्वारपालजपः । ततोनरयुतविमानस्थंकुंडलहारकेयूररुचिरांबरगदाधरदक्षिणवामभुजद्वयंमुकुटिनंमहोदरंमहाका
यंहरितवर्णकुवेरंध्यात्वा । एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धं ॥ सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥
ॐभूर्भुवःस्वःसोमइहागच्छइहतिष्ठ इतिसांगंसोमंकलशयोरावाह्य । ॐ व्रुयꣳसोमव्रतेतवुमनंस्तनूषुविभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ॐसो
मायनमः इतिगंधादिनासंपूज्य ॥ ॐ आप्यायस्वुसमेतुतेविश्वतं÷ सोमुवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥ इतिश्वेतौपताकाध्वजौहरितौवाउ
च्छ्रयेत् । सर्वनक्षत्रमध्ये तु सोमोराजा प्रकीर्तितः ॥ तस्मै सोमाय देवाय नक्षत्रपतये नमः ॥ इति नत्वा उत्तरद्वारशाखयोः चंडायनमः
प्रचंडायनमः । ऊर्ध्वद्वारश्रियैनमः गणपतयेनमः । अधः देहल्यैनमः वास्तुपुरुषायनमः । स्तंभयोः महाकालायनमः भृंगिणेनमः । कल
शद्वये वारुण्यैनमः वेण्यैनमः इतिसंपूज्य । सोमायसांगायएतंमाषभक्तबलिं० ॥ ततईशान्यांगत्वातत्रपूर्ववत्कलशंनिधाय । तत्रसुप्रतीकाय
नमः मंगलायनमः इतिसंपूज्य दीपंदत्वा । ततःवृषारूढंदक्षिणवामहस्तयोर्वरत्रिशूलधरंत्रिनेत्रंशुक्लवर्णमीशानंध्यात्वा । ॐएह्येहि विश्वेश्वर ॥ ३६ ॥
विश्वनाथ कपालखट्वांगधरेण सार्द्धं ॥ लोकेश यज्ञेश्वर यज्ञसिद्धये गृहाण पूजां भगवन्नमस्ते ॐभूर्भुवःस्वः ईशानइहागच्छइहतिष्ठइतिसा

गमीशानमावाह्य । ॐतमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ॐईशानायनमः इतिगंधादिभिःपूजयेत् । सर्वाधिपोमहादेव ईशानः शुक्ल ईश्वरः ॥ शूलपाणिर्विरूपाक्षस्तस्मै नित्यं नमोनमः ॥ इतिनत्वा ॐतमीशानमितिपूर्वोक्तमंत्रेणश्वेतौपंचवर्णौपताकाध्वजावुच्छ्रयेत् । ततईशानायसांगाय० एतंमाषभक्तबलिंसमर्पयामि इतिबलिंदत्वाचमेत् ॥ ततईशानपूर्वयोर्मध्येऊर्ध्वसुद्दिश्य पूर्ववत्कलशंनिधाय तत्रब्रह्माणंपूजयेत् । अक्षसूत्रकुशमुष्टिधरं दक्षिणकरं स्रुवकमंडलुधरं वामकरं चतुर्मुखं श्मश्रुलं जटिलं लंबोदरं रक्तवर्णं ब्रह्माणं ध्यात्वा ॥ ॐएह्येहि सर्वाधिपते सुरेंद्र लोकेन सार्द्धं पितृदेवताभिः ॥ सर्वस्य धातास्यमितप्रभावोविशाध्वरन्नः सततं शिवाय ॥ ॐभूर्भुवःस्वःब्रह्मन्निहागच्छइहतिष्ठ इतिसांगंब्रह्माणमावाह्य ॥ ॐब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ इतिमंत्रेणगंधादिनाप्रपूज्य तेनैवमंत्रेणरक्तौपताकाध्वजौउच्छ्रयेत् । ॐपद्मयोनिश्चतुर्मूर्तिर्वेदावासःपितामहः ॥ यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मैनित्यंनमोनमः ॥ इतिनत्वासांगायब्रह्मणेएतंमाषभक्तबलिंसमर्पयामीतिबलिंदत्वाचमेत् ॥ ततः निर्ऋतिवरुणयोर्मध्येपूर्ववत्कलशंनिधाय तत्रअधः अनंतशयनासीनं फणासप्तकमंडितं ॥ पद्मशंखधरोर्ध्वाधोदक्षिणकरद्वयंनीलवर्णमनंतंध्यात्वा । ॐएह्येहि पातालधरामरेंद्र नागांगनाकिंनरगीयमान ॥ रक्षोरगेंद्रामरलोकसंघैरनंत रक्षाध्वरमस्मदीयं ॥ ॐभूर्भुवःस्वः अनंतइहागच्छइहतिष्ठइतिसांगंसपरिवारंसायुधंसशक्तिकमनंतमावाह्य ॥ ॐआयंगौःपृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरंचप्रयन्त्स्वः ॥ ॐअनंतायनमः इतिगंधादिभिःसंपूज्य योसावनंतरूपेणब्रह्माण्डंसचराचरं ॥ पुष्पवद्धारयेन्मूर्ध्नितस्मै

नित्यंनमोनमः ॥ इतिनत्वा ॐआयङ्गौरितिपूर्वमंत्रेणधूम्रौश्वेतौवापताकाध्वजावुच्छ्रयेत् । ततःसागायसपरिवारायसशक्तिकायसायुधायअ-
नंतायएतंमाषभक्तबलिंसमर्पयामि इतिबलिंदत्त्वाचमेत् ॥ ततोमंडपमध्येचामरकिंकिणीयुतःषोडशहस्तदंडोवाद्शहस्तदंडावलम्बितोदश-
सप्तपंचवाहस्तदीर्घस्त्रिहस्तविस्तारएकहस्तविस्तारोवापंचवर्णविचित्रोमहाध्वज ॐइंद्रस्यवृष्णोइत्युच्छ्रयेत् ॐइंद्रस्यवृष्णोवरुणस्यराज्ञआ-
दित्यानांमरुतांशर्द्धउग्रम ॥ महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥ १ ॥ तत्रब्रह्मयज्ञानमितिब्रह्माणंपूजयेत् ॥ ॐब्रह्मय-
ज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ २ ॥ ततोमंडपषोडशस्तंभेषुसर्वेभ्यो
देवेभ्योनमः ॥ वंशेषुकिन्नरेभ्योनमः । पृष्ठेपन्नगेभ्योनमः इतिपूजयेत् । ततःपूर्वस्यांदिशिमंडपाद्बहिःकिंचिद्भूमिमुपलिप्य तत्रोपविश्य ।
त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ॥ ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वंतु ते सदा ॥ देवदानवगंधर्वा यक्षराक्षसपन्नगाः । ऋष-
योमुनयोगावो देवमातर एव च ॥ सर्वे ममाध्वरे रक्षां प्रकुर्वंतु मुदान्विताः । ब्रह्मा विष्णुश्च रुद्रश्च क्षेत्रपालो गणैः सह । रक्षंतु मंडपं
सर्वे घ्नंतु रक्षांसि सर्वतः । त्रैलोक्यस्थानिस्थावराणिभूतान्यावाहयामि ॐत्रैलोक्यस्थस्थावरभूतेभ्योनमः । त्रैलोक्यस्थानिचराणिभूतान्या-
वाहयामि त्रैलोक्यस्थेभ्यश्चरेभ्योभूतेभ्योनमः । ॐब्रह्मणेनमः । विष्णवेनमः । देवेभ्योनमः । दानवेभ्योनम । गंधर्वेभ्योनमः । यक्षेभ्यो-
नमः । राक्षसेभ्योनमः । पन्नगेभ्योनमः । गोभ्योनमः । ऋषिभ्योनमः । मनुष्येभ्योनमः । देवमातृभ्योनमः । इत्यावाहनपाद्यादिभिः
प्रत्येकंसंपूज्य प्रत्येकंमाषभक्तबलीन्दद्यात् । ततोयजमानःसाचार्यर्त्विक्प्रक्षालितपाणिपादःआचान्तःप्राग्द्वारेणमंडपंप्रविशेत् । इतिश्री ॥ ३७ ॥
प्रतिष्ठाप्रकाशेमंडपपूजनंनामतृतीयःपरिच्छेदः ॥

ततोयजमानः साचार्यऋत्विक्प्रक्षालितपादपाणिराचांतः प्राग्द्वारेणमंडपंप्रविश्यदक्षिणद्वारसमीपेपश्चिमगतोदङ्मुखोपविश्य । भोगुर्वाद योयथाविहितंकर्मकुरुध्वमितिसविनयंप्रार्थयेत् यथायोग्यंकरवामइतिप्रतिवचनम् ॥ ततः पूर्वकुंडेऋग्वेदिनौहोतारौउपविशेतां । तत्रैको ब्रह्मासचपश्चिममुखः अपरोहोमकर्त्तासचोदङ्मुखः ॥ ततोदक्षिणकुंडेयजुर्वेदिनौ० तत्रब्रह्माउदङ्मुखः । होमकर्त्तापूर्वमुखः ॥ ततः पश्चि-मकुंडेसामवेदिनौ ॥ उत्तरकुंडे अथर्ववेदिनौ ॥ एवंतत्तत्कुंडसन्निधौचतत्तद्वेदविदौहोतृवत् द्वौद्वौजापकौउपविशेतां । ततआचार्य्य इंद्रेशा-नयोर्मध्येस्वकुंडेप्राङ्मुखउपविशेत् । तत्रब्रह्माउदङ्मुखः । ( ततोगुरुः स्वकुंडे आगत्यस्वगृह्योक्तविधिनाग्निंस्थापयेत् । तेपिचकुर्युः एवंक्रमः पंचकुंडीपक्षेज्ञेयः ॥ एककुंडीपक्षेतु आचार्यः प्राङ्मुखः । तत्रैकोब्रह्माउदङ्मुखः ) तत्रादौकुंडपूजा ॥ यजमानोग्न्यायतनाद्दक्षिणतउपविश्य आचार्यस्तुकुंडपश्चिमतउपविश्य आचम्यप्राणानायम्य । ॐअपसर्पंतुते भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया ॥ इतिसर्षपान्विकीर्यपंचगव्येनकुंडंप्रोक्ष्य । ॐगुरुभ्योनमः गणपतयेनम इतिनत्वाहस्तेगंधाक्षतपुष्पजलादीनिगृहीत्वा । अद्येत्यादिदेशकालौसंकीर्त्य० अमुकदेवप्रासादोत्सर्गकर्मणिअग्निप्रतिष्ठांकरिष्ये । तदंगतयासंमार्जनमेखलायोनिदेवतास्थापनं पूजनंचकरिष्ये इतिसंकल्प्याग्न्यायतनंसंमृज्य कुशोदकेनकुंडंप्रोक्ष्य अंजलौपुष्पाण्यादाय कुंडंस्पृष्ट्वावाहयेत् । ॐआवाहयामितत्कुंडं विश्वकर्मविनिर्मितं ॥ शरीरं यच्च ते दिव्यमग्न्यधिष्ठानमद्भुतं॥१॥इत्यावाह्यगंधादिभिः संपूज्यप्रार्थयेत्॥ ये च कुंडे स्थिता देवाः कुंडाङ्गे याश्चदेवताः॥ ऋद्धिं यच्छंतु ते सर्वे यज्ञसिद्धिं मुदान्विताः ॥१॥ हे कुंड तव निर्माणं रचितं विश्वकर्मणा॥ अस्माकं वाञ्छितां सिद्धिं यज्ञसिद्धिं ददातु भोः॥२॥इतिसंप्रार्थ्य

कुंडमध्येविश्वकर्माणंपूजयेत्। ॐविश्वकर्मन्निति भौवनऋषिस्त्रिष्टुप्छंदः विश्वकर्मादेवताविश्वकर्मपूजने विनियोगः । ॐविश्वकर्मन्हविषावर्द्धने
नत्रातारमिंद्रमकृणोरवद्ध्यम्॥ तस्मैविशः समनमंतपूर्व्वीरयमुग्रोविहव्योयथासत् ॥ उपयामगृहीतोसींद्रायत्वाविश्वकर्मणेएषतेयोनिरिंद्रायत्वा
विश्वकर्मणे ॥ ॐविश्वकर्मणेनमः ॥ इतिचंदनादिभिःसंपूज्य अज्ञानाज्ज्ञानतोवापिदोषाःस्युःखननोद्भवाः ॥ नाशयत्वंहितान्सर्वान् विश्वकर्म
न्नमोस्तुते ॥ इतिसंप्रार्थ्य उपरिगतमेखलायाश्वेतवर्णालंकृतायांविष्णुमावाहयेत्। ॐविष्णोयज्ञपते देव दुष्टदैत्यनिषूदन॥ विभोयज्ञस्यरक्षार्थं-
कुंडेसन्निहितोभव ॥ इत्यावाह्य । ॐइदम्विष्णुरितिमंत्रस्यमेधातिथिर्ऋषिः गायत्रीछंदःविष्णुर्देवताविष्णुपूजनेविनियोगः ॐइदम्विष्णु-
र्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांसुरेस्वाहा ॥ इतिमंत्रेणविष्णुंसंपूज्य । प्रथममेखलायैविष्णुदैवत्यै श्वेतवर्णालंकृतायैनम इतिमे-
खलांचपूजयेत् ॥ १ ॥ ततोमध्यमेखलायांरक्तवर्णालंकृतायांब्रह्माणं । ॐहंसपृष्ठसमारूढ देव देवगणावृत ॥ रक्षार्थं मम यज्ञस्य कुंडेस्मि-
न्सन्निधोभव ॥ इत्यावाह्य ॐब्रह्मयज्ञानमितिविवस्वानृषिस्त्रिष्टुप्छंदःब्रह्मादेवताब्रह्मपूजनेविनियोगः ॥ ॐब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसी-
मतऽसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ इतिमंत्रेण ब्रह्माणंसंपूज्य ॥ मध्यममेखलायैब्रह्मदैवत्यैरक्त-
वर्णालंकृतायैनम इतिमेखलांचपूजयेत् ॥ २ ॥ ततोऽधोमेखलायांकृष्णवर्णालंकृतायांरुद्रं० । ॐगंगाधर महादेव वृषारूढ महेश्वर ॥
आगच्छ भगवन् रुद्र कुंडेस्मिन्सन्निधोभव ॥ इत्यावाह्य ॐनमस्तेरुद्रमन्यवइतिपरमेष्ठीऋषिर्गायत्रीछंदः रुद्रोदेवतारुद्रपूजनेविनियोगः । ॥ ३८ ॥
ॐनमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः ॥ बाहुभ्यामुततेनमः ॥ इतिरुद्रंसंपूज्यतृतीयायैरुद्रदैवत्यै कृष्णवर्णालंकृतायैमेखलायैनमइतिमेख-

लांचपूजयेत् ॥ ३ ॥ अथयोनिपूजा ॥ जगदुत्पत्तिहेतुकायै मनोभवयुतायै योन्यै नमोनमः । ॐक्षत्रस्ययोनिरितिविवस्वानृषिः द्विपदागाय-
त्रीछंदः योनिर्देवतायोनिपूजनेविनियोगः ॥ ॐक्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसि ॥ मात्वाहिꣳसीन्मामाहिꣳसीः ॥ इतिगंधादिभिःसंपूज्य-
प्रार्थयेत् । सेवंते महतीं योनिं देवर्षिसिद्धमानवाः ॥ चतुरशीतिलक्षाणि पन्नगाद्याः सरीसृपाः ॥ १ ॥ पशवः पक्षिणः सर्वे संसरंति
यतो भुवि ॥ योनिरित्येव विख्यता जगदुत्पत्तिहेतुका ॥ २ ॥ मनोभवयुता देवी रतिसौख्यप्रदायिनी ॥ मोहयंती सुरान्सर्वान् जगद्धात्रि
नमोनमः ॥ ३ ॥ योने त्वं विश्वरूपासि प्रकृतिर्विश्वधारिणी ॥ कामस्था कामरूपा च विश्वयोन्यै नमोनमः ॥ ४ ॥ इति योनिपूजा ॥
ततःकंठपूजनं ॥ जीवनं सर्वजंतूनां स्वगादिस्थानमुत्तमं ॥ उत्तमांगस्य चाधारं कंठमावाहयाम्यहं ॥ इत्यावाह्य ॐनीलग्रीवा इतिपरमेष्ठी-
प्रजापतिर्ऋषिःअनुष्टुप्छंदःरुद्रोदेवताकंठपूजनेविनियोगः ॥ ॐनीलग्रीवाःशितिकंठादिवꣳरुद्राऽउपश्रिताः ॥ तेषांꣳसहस्रयोजनेवधन्वा-
नितन्मसि ॥ १ ॥ इतिमंत्रेणकंठंसंपूज्यप्रार्थयेत् । कंठ मंगलरूपेण सर्वकुंडे प्रतिष्ठितः ॥ परितोमेखलास्त्वत्तो रचिता विश्वकर्मणा । ततो-
नाभिपूजा । पद्माकाराथवा कुंडसदृशाकृतिबिभ्रती ॥ आधारः सर्वकुंडानां नाभिमावाहयाम्यहं ॥ इत्यावाह्य ॐनाभिर्मेतिप्रजापतिर्ऋषिः
महापंक्तिजगतीछंदःरुद्रोदेवतारुद्रपूजनेविनियोगः ॥ ॐनाभिर्मेचित्तंविज्ञानंपायुर्मेपचितिर्भसत्॥आनंदनंदावांडौमेभगः सौभाग्यंपसः ॥
जंघाभ्यांपद्भ्यांधर्मोस्मिविशिराजाप्रतिष्ठितः । इतिमंत्रेणसंपूज्य । नाभे त्वं कुंडमध्ये तु देवैः सह प्रतिष्ठिता ॥ अतस्त्वं पूजिता देवि शुभदा
ऋद्धिदा भव ॥ इतिनत्वाततःकुंडमध्येनैर्ऋतिकोणेवास्तुपुरुषंपूजयेत् । पुष्पाण्यादाय । आवाहयामि देवेशं पुरुषंच महाबलं । देवदेवं

गणाध्यक्षं पातालतलवासिनं ॥ इत्यावाह्य ॐवास्तोष्पतेतिप्रजापतिर्ऋषिस्त्रिष्टुप्छंदः वास्तुदेवताकुंडमध्येनैर्ऋतिकोणेवास्तुपूजनेविनियोगः ॥
ॐवास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोऽअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोऽभवद्विपदेशंचतुष्पदे ॥ वास्तुपुरुषायनम
इतिगंधादिभिःसंपूज्य ॐवास्तुपुरुषायइमंबलिंसमर्पयामि इतिबलिंदत्त्वाप्रार्थयेत् ॥ यस्य देहे स्थिता क्षोणी ब्रह्माण्डं विश्वमंडलं ॥ व्यापि-
नंभीमरूपंचसुरूपं विश्वरूपिणं ॥ १ ॥ पितामहसुतोमुख्य तुभ्यं वास्तुपतेनमः ॥ इतिसंप्रार्थ्य वक्ष्यमाणविधानेन अग्निंस्थापयेत् । अथाग्नि
स्थापनप्रकारः ॥ ततोयथापरिमितेतुषकेशशर्करादिरहितेकुंडेस्थंडिलेवाचतुरस्रांभूमिंकुशैःपरिसमुह्यतान्कुशानीशान्यांपरित्यज्य गोमयोद-
केनोपलिप्यस्फयेनस्रुवमूलेनवाप्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेणत्रिरुल्लिख्य उल्लेखनक्रमेणैवाऽनामिकांगुष्ठाभ्यांमृदमुद्धृत्यजलेनाभ्युक्ष्य ततः
कांस्यपात्रस्थंवह्निंद्वितीयकांस्यपात्रेणापिहितंकुंडाद्बहिराग्नेय्यांदिशिनिधाय ॐहुंफट्स्वाहाइतिक्रव्यादांशंनैर्ऋत्यांदिशिपरित्यज्यगायत्र्यासंपू-
ज्ययोनिमार्गेण ॥ ॐअग्निंदूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ २ ऽआसादयादिह ॥ इतिमंत्रेणकुंडेस्वाभिमुखंस्थापयेत् । तद्रक्षार्थंकिंचिन्नियुज्य
आनीताग्निपात्रयोर्जलादिप्रक्षेपणं ततःअग्नेर्ध्यानं । ॐचत्वारिशृंगात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य । त्रिधाबद्धोवृषभोरोरवीति
महोदेवोमर्त्याँ २ ऽआविवेश ॥ १ ॥ अग्नेवैश्वानरशाण्डिल्यगोत्रशांडिल्यासितदेवलेतित्रिप्रवरान्वितभूमिमातः वरुणपितः मेषध्वजप्राङ्
मुखममसंमुखोभवइत्यग्निंप्रतिष्ठाप्यॐअग्नयेनमइतिगंधादिभिःपूजयेत् ततःतस्मादाचार्यकुंडादुद्धरणंसर्वेषुपूर्वादिषुकुंडेषुकर्त्तव्यं ॥ इत्यग्निस्था-
पनम् ॥ अथनवग्रहस्थापनं । ईशान्याग्रहपीठेसूर्यादिनवग्रहाणामावाहनं । तत्रमध्येवर्तुलाकारेरविंप्राङ्मुखंरक्तपुष्पाक्षतैः । ॐआकृष्णेने

तिमंत्रस्यहिरण्यस्तूपऋषिस्त्रिष्टुप्छंदःसवितादेवतासूर्यावाहनेविनियोगः ॥ ॐआकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतंमर्त्यंञ्च ॥ हिरण्ययनसे-
वितारथेनादेवोयातिभुवनानिपश्यन् ॥ ॐभूर्भुवःस्वः कलिङ्गदेशोद्भवकाश्यपगोत्रसूर्यइहागच्छइहतिष्ठ ॐसूर्यायनमः इतिस्थापयेत ॥१॥
आग्नेय्यामर्द्धचंद्राकारेचक्रे प्रत्यङ्मुखंचंद्रंश्वेतपुष्पाक्षतैः । ॐइमंदेवाइत्यस्यवरुणऋषिःअंत्यष्टिछंदः । सोमोदेवतासोमावाहनेविनियोगः ॥
ॐइमंदेवाऽअसपत्नꣳसुवध्वम्महतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येन्द्रियाय ॥ इममुमुष्यपुत्रममुष्यैपुत्रमस्यैविशएषवोमीराजा-
सोमोस्माकम्ब्राह्मणानाꣳराजा ॥ ॐभूर्भुवःस्वःयमुनातीरदेशोद्भवआत्रेयगोत्रचंद्रइहागच्छइहतिष्ठ । ॐचंद्रायनमः ॥ २ ॥ याम्यांत्रिको-
णेदक्षिणाभिमुखंभौमंरक्तपुष्पाक्षतैः । ॐअग्निर्मूर्द्धेतिविरूपाक्षऋषिःगायत्रीछंदः अंगारकोदेवताअंगारकावाहनेविनियोगः ॥ ॐअग्निर्म्मू-
र्द्धादिवःककुत्पतिः पृथिव्याऽअयम् ॥ अपाꣳरेताꣳसिजिन्वति ॥ ॐभूर्भुवःस्वः अवंतिदेशोद्भवभारद्वाजगोत्रभौमइहागच्छइहतिष्ठ ॐभौ-
मायनमः ॥३॥ ईशान्यांबाणकारमंडलेउदङ्मुखंबुधंपीतपुष्पाक्षतैः । ॐउद्बुध्यस्वेतिपरमेष्ठीऋषिस्त्रिष्टुप्छंदः बुधोदेवताबुधावाहनेविनियो-
गः । ॐउद्बुध्यस्वाग्नेप्प्रतिजागृहित्वमिष्टापूर्त्तेसꣳसृजेथामयंच ॥ अस्मिन्त्सधस्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ ॐभूर्भुवःस्वः
मगधदेशोद्भवआत्रेयगोत्रबुधइहागच्छइहतिष्ठ ॐबुधायनमः ॥ ४ ॥ उत्तरेचतुरस्रमंडलेउदङ्मुखंबृहस्पतिंपीतपुष्पाक्षतैः । ॐबृहस्पतेइति
गृत्समदऋषिः त्रिष्टुप्छंदोबृहस्पतिर्देवताबृहस्पत्यावाहनेविनियोगः । ॐबृहस्पतेऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदय-
च्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ ॐभूर्भुवःस्वःसिंधुदेशोद्भवआङ्गिरसगोत्रबृहस्पतेइहागच्छइहतिष्ठ ॐबृहस्पतयेनमः ॥५॥

पूर्वपंचकोणमंडलेप्राङ्मुखंशुक्रंशुक्लपुष्पाक्षतैः । ॐअन्नात्परिस्रुतेतिप्रजापत्यश्विसरस्वतींद्राऋषयः अतिजगतीछंदःशुक्रोदेवताशुक्रावाहनवि
नियोगः । ॐअन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत् क्षत्रम्पयःसोमंप्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानंशुक्रमन्धसइन्द्रस्येन्द्रियमिदम्पयो
मृतम्मधु ॥ ॐभूर्भुवःस्वः भोजकटदेशोद्भव भार्गवगोत्रशुक्रइहागच्छइहतिष्ठ ॐशुक्रायनमः ॥ ६ ॥ पश्चिमेधनुषिमंडलेप्रत्यङ्मुखंशनिं
कृष्णपुष्पाक्षतैः । ॐशन्नोदेवीतिदध्यङाथर्वणऋषिर्गायत्रीछंदः शनिर्देवताशन्यावाहनेविनियोगः । ॐशन्नोदेविरभिष्टयआपोभवंतुपीतये ।
शंय्योरभिस्रवंतुनः ॥ ॐभूर्भुवःस्वः सौराष्ट्रदेशोद्भव काश्यपगोत्रशनैश्चरइहागच्छेहतिष्ठ ॐशनयेनमः ॥ ७ ॥ नैर्ऋत्येशूर्पाकारमंडलेदक्षि
णाभिमुखंराहुंकृष्णपुष्पाक्षतैः । ॐकयानश्चित्रइतिवामदेवऋषिःगायत्रीछंदोराहुर्देवताराह्वावाहनेविनियोगः । ॐकयानश्चित्रआभुवदूती
सदावृधःसखा ॥ कयाशचिष्ठयावृता । ॐभूर्भुवःस्वः राठिनदेशोद्भवपैठीनसगोत्रराहोइहागच्छइहतिष्ठ ॐराहवेनमः ॥ ८ ॥ वायव्यांध्व
जाकारमंडले दक्षिणाभिमुखंकेतुंधूम्रपुष्पाक्षतैः । ॐकेतुंकृण्वन्नितिमधुच्छंदाऋषिर्गायत्रीछंदः केतुर्देवताकेत्वावाहनेविनियोगः । ॐकेतुंकृण्व
न्नकेतवेपेशोमर्याअपेशसे ॥ समुषद्भिरजायथाः ॥ ॐभूर्भुवःस्वः अंतर्वेदिदेशोद्भवपैठीनसगोत्रकेतोइहागच्छइहतिष्ठ ॐकेतवेनमः इतिस्था
पयेत् ॥९॥ अथाधिदेवतानामावाहनंस्थापनंच । सर्वेआदित्याभिमुखाःस्थाप्याः । मध्येरविः । दक्षिणपार्श्वेश्वेतपुष्पाक्षतैः रुद्रमावाहयेत् । ॐ
त्र्यंबकमितिवसिष्ठऋषिरनुष्टुप्छंदः रुद्रोदेवतारुद्रावाहनेविनि० ॥ ॐत्र्यंबकंयजामहेसुगन्धिम्पुष्टिवर्धनम् ॥ उर्वारुकमिवबंधनान्मृत्योर्मु-
क्षीयमामृतात् । ॐभूर्भुवःस्वःरुद्रइहागच्छइहतिष्ठ ॥ १ ॥ आग्नेय्याचंद्रस्यदक्षिणेरक्तपुष्पाक्षतैरुमां । ॐश्रीश्चतेतिनारायणऋषिस्त्रिष्टुप्छंदःउ

मादेवताउमास्थापनेविनियोगः । ॐश्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मंऽइषाणसर्व्वलो-
कम्मंऽइषाण ॥ ॐभूर्भुवःस्वःउमेइहाग० ॥ २ ॥ याम्यांभौमस्यदक्षिणेपीतपुष्पाक्षतैःस्कंदं । ॐयदक्रंदइतिभार्गवजमदग्निदीर्घतमाऋषय-
स्त्रिष्टुपछंदःस्कंदोदेवतास्कंदावाहनेविनियोगः । ॐयदक्रन्दःप्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउ-
पस्तुत्यंमहिजातन्तेऽअर्व्वन् ॥ ॐभूर्भुवःस्वःस्कंदइहाग० ॥ ३ ॥ ईशान्यांबुधदक्षिणेपीतपुष्पाक्षतैःविष्णुं । ॐइदम्विष्णुरितिमेधातिथिऋ-
षिर्गायत्रीछंदोविष्णुर्देवताविष्णवावाहनेविनियोगः । ॐइदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳬंसुरेस्वाहा ॥ ॐभूर्भुवःस्वः
विष्णोइहाग० ॥ ४ ॥ उत्तरेगुरोर्दक्षिणेश्वेतपुष्पाक्षतैर्ब्रह्माणं । ॐआब्रह्मन् इतिप्रजापतिर्ऋषिर्यजुछंदःब्रह्मादेवताब्रह्मावाहनेविनियोगः । ॐ
आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामराष्ट्रेराजन्यःशूरइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिपुरन्धिर्योषाजिष्णूरथे
ष्ठाःसभेयोयुवास्ययजमानस्यवीरोजायतान्निकामेनिकामेनःपर्जन्योवर्षतुफलवत्योनऽओषधयःपच्यंतांयोगक्षेमोनःकल्पताम् ।ॐभूर्भुवःस्वः
ब्रह्मन्निहागच्छइहतिष्ठ ॥ ५ ॥ पूर्वेशुक्रदक्षिणेपीतपुष्पाक्षतैरिंद्रं । ॐत्रातारमिंद्रमित्यस्यगर्गऋषिस्त्रिष्टुपछंदःइंद्रोदेवताइंद्रावाहनेविनियोगः ।
ॐत्रातारमिंद्रमवितारमिन्द्रᳬंहवेहवेसुहवᳬंशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रᳬंस्वस्तिनोमघवाधात्विन्द्रः ॥ ॐभूर्भुवःस्वःइंद्र-
इहा० ॥ ६ ॥ पश्चिमेशनिदक्षिणेकृष्णपुष्पाक्षतैर्यमं । ॐयमायत्वाइतिदध्यंगाऋ०यजु० यमोदेवतायमावाहनेविनियोगः । ॐयमायत्वामखाय-
त्वासूर्यस्यत्वातपसे ॥ देवस्त्वासवितामद्ध्वानक्तुपृथिव्याःसᳬंस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ॐभूर्भुवःस्वःयमइहा० ॥ ७ ॥

नैर्ऋत्यांराहोर्दक्षिणेधूम्रपुष्पाक्षतैः कालं । ॐकार्षिरसिरितिप्रजापतिर्ऋषिरनुष्टुप्छंदः कालोदेवताकालावाहनेविनियोगः । ॐकार्षिरसि-
मुद्रस्युत्वाक्षित्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥ ॐभूर्भुवःस्वःकालइहा० ॥ ८ ॥ वायव्यांकेतुदक्षिणेरक्तपुष्पाक्ष-
तैश्चित्रगुप्तम् । ॐचित्रावसोइत्यस्यहिरण्यस्तूपऋषिःअतिजगतीछंदश्चित्रगुप्तोदेवताचित्रगुप्तावाहनेविनियोगः । ॐचित्रावसोस्वस्तितेपारम-
शीय ॥ ॐभूर्भुवःस्वश्चित्रगुप्तइहा० ॥ ९ ॥ इत्यधिदेवताः ॥ अथप्रत्यधिदेवतानामावाहनम् ॥ मध्येसूर्यस्यवामेरक्तपुष्पाक्षतैरग्निमावा-
हयेत् ॥ ॐअग्निंदूतंइतिविरूपाक्षऋषिःगायत्रीछंदोऽग्निर्देवताअग्न्यावाहनेविनियोगः । ॐअग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ २ ऽआ-
सादयादिह ॥ ॐभूर्भुवःस्वः अग्नेइहागच्छइहतिष्ठ ॥ १ ॥ आग्नेय्यांचंद्रवामेश्वेतपुष्पाक्षतैर्जलं ॥ ॐआपोहिष्ठेत्यस्यसिंधुद्वीपऋषिःगाय-
त्रीछंदः आपोदेवता अपआवाहनेविनियोगः ॥ ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ ॐभूर्भुवःस्वःआपइहाग०
॥ २ ॥ दक्षिणेभौमवामपार्श्वेरक्तपुष्पाक्षतैःभूमिं । ॐस्योनापृथिवीतिमेधातिथिऋषिःगायत्रीछंदःपृथिवीदेवताभूम्यावाहनेविनियोगः ।
ॐस्योनापृथिवीनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः । ॐभूर्भुवःस्वःपृथिविइहागच्छइहतिष्ठ ॥ ३ ॥ ईशान्यांबुधवामेपीतपुष्पा-
क्षतैर्विष्णुं । ॐइदंविष्णुरितिमेधातिथिऋषिर्गायत्रीछंदःविष्णुर्देवताविष्णवावाहनेविनियोगः । ॐइदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समू-
ढमस्यपाᳪंसुरेस्वाहा ॥ ॐभूर्भुवःस्वःविष्णोइहागच्छइहतिष्ठ ॥ ४ ॥ उत्तरेगुरुवामेपीतपुष्पाक्षतैरिंद्रं । ॐसजोषाइंद्रइतिविश्वामित्रऋषिस्त्रि-
ष्टुप्छंदः इंद्रोदेवता इंद्रावाहनेविनियोगः । ॐसजोषाइन्द्रसगणोमरुद्भिःसोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँरपमृधोनुदस्वाथाभय-

कृणुहिव्रिश्वतोनः ॥ ॐभूर्भुवःस्वःइंद्रइहा० ॥ ५ ॥ पूर्वेशुक्रस्यवामेपीतपुष्पाक्षतैः इंद्राणीं । ॐअदित्यैरास्नाइतिदध्यङाथर्वणऋषिःयजु-
श्छंद्रः इंद्राणीदेवता इंद्राण्यावाहनेविनियोगः । ॐअदित्यैरास्नासीन्द्राण्याऽउष्णीषं ॥ पूषासिघर्म्मायदीष्व ॥ ॐभूर्भुवःस्वः इंद्राणी-
हाग० ॥ ६ ॥ पश्चिमेशनेर्वामेश्वेतपुष्पाक्षतैः प्रजापतिं ॥ ॐप्रजापतेत्यस्यहिरण्यगर्भऋषिस्त्रिष्टुप्छंदःप्रजापतिर्देवताप्रजापत्यावाहनेविनि-
योगः । ॐप्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयंस्यामपतयोरयीणाम ॥ ॐभूर्भुवःस्वः
प्रजापतेइहा० ॥ ७ ॥ नैऋत्यांराहोर्वामेकृष्णपुष्पाक्षतैः नागं । ॐनमोस्तुसर्पेभ्यइत्यस्यप्रजापतिर्ऋषिरनुष्टुप्छंदः सर्पोदेवतासर्पावाहने-
विनियोगः । ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः ॥ ॐभूर्भुवःस्वः अष्टकुलीनागइहा० ॥ ८ ॥
वायव्यांकेतोर्वामेश्वेतपुश्पाक्षतैर्ब्रह्माणं । ॐब्रह्मयज्ञानमित्यस्यप्रजापतिर्ऋषिस्त्रिष्टुप्छदः ब्रह्मादेवताब्रह्मावाहनेविनियोगः । ॐब्रह्मयज्ञानं-
प्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ॐभूर्भुवःस्वः ब्रह्मन्निहागच्छइहतिष्ठ
॥ ९ ॥ इतिप्रत्यधिदेवताः ॥ अथपंचलोकपालानावाहयेत् ॥ नैर्ऋत्यांराहोरुत्तरभागेपीतपुश्पाक्षतैर्गणपतिमावाहयेत ॥ ॐगणानांत्वा
इतिप्रजापतिर्ऋषिःयजुश्छंदः गणपतिर्देवतागणपत्यावाहनेविनियोगः । ॐगणानांत्वागणपतिंहवामहेम्प्रियाणान्त्वाप्प्रियपतिंहवामहे-
निधीनान्त्वानिधिपतिंहवामहेवसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम ॥ ॐभूर्भुवःस्वः गणेशइहागच्छइहतिष्ठ ॥ १ ॥
पश्चिमेशन्युत्तरेरक्तपुश्पाक्षतैःदुर्गां । ॐअंबेऽअंबिकेत्यस्यप्रजापतिर्ऋषिः अनुष्टुप्छंदः दुर्गादेवतादुर्गावाहनेविनियोगः ॐअंबे अंबिके० ॥

ॐभूर्भुवः स्वः दुर्गेइहा० ॥ २ ॥ मध्येसूर्योत्तरेपीतपुष्पाक्षतैर्वायुं । ॐआनोनियुद्भिरित्यस्यवसिष्ठऋषिस्त्रिष्टुप्छंदः वायुर्देवतावायवावाहने-
विनियोगः ॥ ॐआनोनियुद्भिः शतिनीभिरध्वरᳪसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ॥
ॐभूभुःस्वः वायोइहागच्छइह० ॥ ३ ॥ पूर्वेशुक्रस्यपूर्वभागेनीलपुष्पैः आकाशं । ॐघृतंघृतपावानइतिप्रजापतिर्ऋषिःपंक्तिच्छंदः । आका-
शोदेवताआकाशावाहनेविनियोगः । ॐघृतंघृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यहविरसिस्वाहा ॥ दिशःप्रदिशऽआदि-
शोविदिशऽउद्दिशोदिग्भ्यःस्वाहा ॥ ॐभूर्भुवःस्वः आकाशइहा० ॥ ४ ॥ नैर्ऋत्यांराहोर्दक्षिणेश्वेतपुष्पाक्षतैः अश्विनौ । ॐयावांकशेतिमे-
धातिथिर्ऋषिःगायत्रीछंदःअश्विनौदेवतेअश्विनावाहनेविनियोगः । ॐयावाङ्कशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञम्मिमिक्षताम् ॥ उप-
यामगृहीतोस्यश्विभ्यान्त्वैषतेयोनिर्म्माध्वीभ्यान्त्वा ॥ ॐभूर्भुवःस्वः अश्विनौइहागच्छतंइहतिष्ठतं ॥ ५ ॥ ॐवास्तोष्पते० इत्यस्य वसिष्ठ
ऋषिः त्रिष्टुप्छंदः वास्तोष्पतिदेवता वास्तोष्पत्यावाहने विनियोगः ॥ ॐवास्तोष्पते० चतुष्पदे । ॐभूर्भुवःस्वः वास्तुपुरुष इहागच्छ इह-
तिष्ठ ॥ ॐनहिस्पशेतिविश्वामित्र ऋषिः त्रिष्टुप्छंदः क्षेत्राधिपतिदेवताक्षेत्राधिपत्यावाहने विनियोगः ॥ ॐ नहि स्पशमविदन्० देवाः ।
ॐभूर्भुवःस्वःक्षेत्रपाल इहागच्छ इह० ॥ इतिपंचलोकपालाः ॥ अथपूर्वादिदिक्षुइंद्रादीनावाहयेत् ॥ पूर्वे । ॐत्रातारमित्यस्यगर्गऋषिः । त्रिष्टु-
प्छंदःइन्द्रोदेवता इन्द्रवाहनेविनियोगः ॥ ॐत्रातारमिंद्रमवितारमिंद्रᳪहवेहवेसुहवᳪशूरमिंद्रं ॥ ह्वयामिशक्रम्पुरुहूतमिंद्रᳪस्वस्तिनोमघवा
धात्विन्द्रः ॥ ॐभूर्भुवःस्वःइंद्रइहागच्छइहतिष्ठ ॥ १ ॥ आग्नेय्यां । ॐत्वन्नोअग्नेइत्यस्यहिरण्यस्तूपआंगिरसऋषिः त्रिष्टुप्छंदः अग्निर्देवता

अग्न्यावाहनेविनियोगः । ॐत्वन्नोऽअग्नेवरुणस्यविद्वान् देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांᳬसिप्रमुमुग्ध्यस्मत् ॥ ॐ भूर्भुवःस्वः अग्नेइहागच्छ० ॥ २ ॥ याम्ये । ॐयमायत्वेतिदध्यंगार्थवणऋषिः यजुश्छंदः यमोदेवता यमावाहनेविनियोगः । ॐयमायत्वामुखायत्वासूर्यस्यत्वातपसे ॥ देवस्त्वासवितामध्वानक्तुपृथिव्याःसᳬस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ॐभूर्भुवः स्वः यमइहा० ॥ ३ ॥ नैर्ऋत्यां । ॐअसुन्वंतमित्यस्यप्रजापतिर्ऋषिः त्रिष्टुप् छंदः निर्ऋतिर्देवता नैर्ऋत्यावाहने० । ॐअसुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ॐभूर्भुवःस्वःनिर्ऋतेइहा० ॥ ४ ॥ पश्चिमे ॥ ॐतत्वायामीति शुनश्शेपऋषिः त्रिष्टुप्छंदः वरुणोदेवतावरुणावाहने विनियोगः ॥ ॐतत्वायामिब्रह्मणा वंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशᳬसमानआयुःप्रमोषीः ॥ ॐभूर्भुवःस्वः वरुणइहा० ॥ ५ ॥ वायव्यां ॐआनोनियुद्भिरित्यस्यवसिष्ठऋषिः त्रिष्टुप्छंदः वायुर्देवता वाय्वावाहनेविनियोगः ॥ ॐआनोनियुद्भिःशतिनीभिरध्वरᳬसहस्त्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ॥ ॐभूर्भुवःस्वः वायोइहा० ॥ ६ ॥ उत्तरे ॐवयᳬसोमेत्यस्यबंधुऋषिः गायत्रीछंदः सोमोदेवतासोमावहनेविनियोगः ॥ ॐवयᳬसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतःसचेमहि ॥ ॐभूभुवःस्वःसोमइहा० ॥ ७ ॥ ईशान्यां ॐतमीशानमित्यस्यगौतमऋषिः जगतीछंदः ईशानोदेवता ईशानावाहनेविनियोगः ॥ ॐतमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ॐभूर्भुवःस्वःईशानइहा० ॥ ८ ॥ ईशानपूर्वयोर्मध्येब्रह्माणं ॥ ॐ

अस्मेरुद्रेत्यस्यप्रगाथऋषिः त्रिष्टुप्छंदः ब्रह्मादेवता ब्रह्मावाहनेविनियोगः ॥ ॐअस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःसं
संतेस्तुवतेधायिपज्रइन्द्रज्येष्ठाअस्माँ २ अवंतुदेवाः ॥ ॐभूर्भुवः स्वः ब्रह्मन्इहा० ॥ ९ ॥ निर्ऋतिवरुणयोर्मध्येऽअनंतं ॐस्योनापृथिवीति
मेधातिथिऋषिःगायत्रीछंदः अनंतोदेवता अनंतावाहनेविनियोगः ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥
ॐभूर्भुवः स्वः अनंतइहा० ॥१०॥ इत्यावाह्य ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञःसमिमंदधातु ॥ विश्वेदेवास
इहमादयन्तामों ३ प्रतिष्ठ ॥११॥ इतिप्रतिष्ठाप्यततोदेशकालौसंकीर्त्यममइहसकलदुरितोपशमनद्वाराश्रीपरमेश्वरप्रीत्यर्थंसूर्यादिनवग्रहाणाम-
धिदेवतानांप्रत्यधिदेवतानांपंचलोकपालानांदशदिक्पालानांचपूजनमहंकरिष्ये । इतिसंकल्प्य ॐग्रहाऽऊर्जाहुतयोव्यन्तोविप्रायमतिम् ।
तेषांविशिप्प्रियाणाम्वोहमिषमूर्ज्जꣳसमग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ १ ॥ इतिपठित्वापश्चा-
त्तत्ग्रहवर्णयुतैः पुष्पाक्षतचंदनधूपदीपनैवेद्यादिभिःआकृष्णेनेत्यादिपूर्वोक्तैर्मंत्रैःसूर्यादीन्सर्वान्मंडलमध्यस्थापितान्देवान् पूजयेत् । तद्यथा
ॐसूर्यादिनवग्रहेभ्योनमः । ॐरुद्राद्यधिदेवताभ्योनमः । ॐअग्न्यादिप्रत्यधिदेवताभ्योनमः । ॐविनायकादिपंचलोकपालेभ्योनमः । ॐ
इंद्रादिदशदिक्पालेभ्योनमः । एवंसंपूज्यततोग्रहवेदीसमीपेभूमौपूर्ववत्नाममंत्रैःग्रहदेवताभ्योबलिंदद्यात् । सूर्यायगुडौदनं । सोमायघृतपा
यसं । कुजायमसूरान्नं । बुधायक्षीरोदनं । बृहस्पतये दध्योदनं । शुक्रायघृतौदनं । शनैश्चरायतिलपिष्टंकृच्छ्रान्नंवा । राहवेपायसं । केतवे
चित्रौदनं । अन्येभ्यःपायसबलीन्दत्वाअनयापूजयाआदित्यादिग्रहमण्डलदेवताःप्रीयंतामितिपठेत् ततईशानकोणेऽव्रणंकलशंस्थापयेत् ॥

भूमिस्पर्शनमंत्रः ॥ ॐभूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींयच्छपृथिवींदृंहपृथिवींमाहिंसीः ॥ १ ॥ धान्य-
मसीतिधान्यक्षेपणं । ॐधान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा ॥ दीर्घामनुप्रसितिमायुषेधांदेवोवः सविताहिरण्यपाणिः
प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि ॥ २ ॥ आजिघ्रेतिधान्योपरिकलशस्थापनं । ॐआजिघ्रकलशंमह्यात्वाविशंत्विंदवः ॥
पुनरूर्जानिवर्त्तस्वसानःसहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ ३ ॥ वरुणस्येत्युदकंपूरयेत् । ॐवरुणस्योत्तम्भनमसिवरुणस्य-
स्कंभसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ४ ॥ वसोःपवित्रेतिवस्त्रंकंठेवेष्टयेत् । ॐवसोः
पवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम ॥ देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्प्वाकामधुक्षः ॥ ५ ॥ याःफलिनीरिति-
पूगीफलं । ॐयाःफलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चंत्वंहसः ॥ ६ ॥ परिवाजेतिपंचरत्नानि ।
परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत ॥ दधद्रत्नानिदाशुषे ॥ ७ ॥ हिरण्यगर्भेतिहिरण्यं । ॐहिरण्यगर्भः समवर्त्तताग्रेभूतस्यजातः
पतिरेकऽआसीत ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ ८ ॥ गंधद्वारेतिगंधं । ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम ॥
ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ ९ ॥ याऽओषधीरितिसर्वौषधीः । ॐयाऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणामहः
शतंधामानिसप्तच ॥ १० ॥ ततोऽस्मिन्कलशे ( अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् । राजद्वाराद्गोकुलाच्चमृदमानीयनिक्षिपेत ) ॥
ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥११॥ इतिसप्तमृदः । काण्डात्काण्डादितिदूर्वा । ॐकाण्डात्काण्डात्प्ररो-

हंतीपरुषःपरुषस्परिं ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ १२ ॥ अश्वत्थेवइतिमंत्रेणपंचपल्लवान् । ॐअश्वत्थेवोनिषदनम्पर्णेवोव्वसतिः
ष्कृता ॥ गोभाजुऽइत्किलासथयत्सनवथपूरुषम् ॥ १३ ॥ पवित्रेस्थइतिमंत्रेणपवित्राणिक्षिपेत् । ॐपवित्रेस्थोवैश्णव्यौसवितुर्वःप्रसवऽउत्पु
नाम्यच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ॥ तस्यंतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ॥ १ ॥ पूर्णादर्वीतिमंत्रेणतंदुलपरितपात्र
कलशोपरिस्थापयेत् । ॐपूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्जंशतक्रतो ॥ १५ ॥ श्रीश्चतइतिश्रीफलं । ॐश्रीश्च
तेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ १६ ॥ ॐमनोजूतिर्जुषता
माज्यस्यबृहस्पतिर्य्यज्ञमिमंतनोत्वरिष्टंयज्ञःसमिमंदधातु ॥ विश्वेदेवासऽइहमादयंतामों ३ प्रतिष्ठ ॥ १७ ॥ इतिकलशप्रतिष्ठा ॥ ततस्तत्र
तत्त्वायामीतिवरुणमावाह्य ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयु
प्रमोषीः ॥ १८ ॥ ॐभूर्भुवःस्वःवरुणायनमः वरुणंआवाहयामिवरुणइहागच्छइहतिष्ठ । ॐवरुणायनमइति षोडशोपचारैःवरुणंपूजयेत् ।
ततोगंगाद्यावाहनम् । सर्वेसमुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयांतु यजमानस्य दुरितक्षयकारकाः ॥ १ ॥ ( ततःकलशाभिमं-
त्रणं ) । कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः ॥ मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥१॥ कुक्षौ तु सागराः सप्त सप्त-
द्वीपा वसुंधरा ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदोप्यथर्वणः ॥ अंगैश्च सहिताः सर्वे कलशंतु समाश्रिताः ॥ २ ॥ ( ततःकलशप्रार्थना ) ।
देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोसि यथा कुंभ विधृतो विष्णुना स्वयम् ॥ १ ॥ त्वत्तः सर्वाणि तीर्थानि देवाः सर्वे त्वयि

स्थिता: ॥ त्वयि तिष्ठंति भूतानि त्वयि प्राणा: प्रतिष्ठिता: ॥ २ ॥ शिव: स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापति: ॥ आदित्या वसवो रुद्रा विश्वेदेवा: सपैतृका: ॥ ३ ॥ त्वयि तिष्ठंति सर्वेपि यत: कामफलप्रदा: ॥ त्वत्प्रसादादिमं यज्ञं कर्त्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ ४ ॥ इतिकलशप्रार्थना ॥ अथसर्वदेवप्रतिष्ठासुप्रधानतयामूलभूतंसर्वतोभद्रमंडलंसदैवंसपूजनमाह । ( हेमाद्रौ-स्कांदे । प्रागुदीच्यां गता रेखा: कुर्यादेकोनविंशति: ॥ खंडेंदुस्त्रिपद: कोणे शृंखला पंचभि: पदै: ॥ १ ॥ एकादशपदा वल्ली भद्रंतु नवभि: पदै: ॥ चतुर्विंशत्पदा वापी विंशत्या परिधि: पदै: ॥ २ ॥ मध्ये षोडशभि: कोष्ठै: पद्ममष्टदलं स्मृतं ॥ श्वेतेंदु: शृंखला कृष्णा वल्लीर्नीलेन पूरयेत् ॥ ३ ॥ भद्रारुणासिता वापी परिधि: पीतवर्णक: ॥ बाह्यांतरदलश्वेता कर्णिका पीतवर्णका ॥ ४ ॥ परिध्या वेष्टितं पद्मं बाह्ये सत्वं रजस्तम: ॥ तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यांश्च सुरेश्वरान् ॥ ५ ॥ अथसर्वतोभद्रदेवतापूजनं । तत्रादौदेशकालौसंकीर्त्य अद्यपुण्यतिथौममेहजन्मनिजन्मांतरेवाकृतकायिकवाचिकमानसिकसांसर्गिकदोषपरिहारार्थंइहामुत्रसुखसौभाग्यसुखसंतत्यादिकफलप्राप्त्यर्थं श्रीनारायणप्रीतयेअमुकदेवप्रतिष्ठायज्ञकर्मणिएतत्सर्वतोभद्रमंडले वेदमंत्रैर्ब्रह्मादिषट्पंचाशद्देवतावाहनंप्रतिष्ठांपूजनंचकरिष्य इतिसंकल्प्य अक्षतान्गृहीत्वामध्येकर्णिकायांब्रह्माणमावाहयेत् । ॐब्रह्मयज्ञानमितिप्रजापतिर्ऋषि: त्रिष्टुप्छंदो ब्रह्मादेवता ब्रह्मस्थापनेविनियोग: । ॐब्रह्मंयज्ञानम्प्रथमंपुरस्ताद्विसीमत:सुरुचोव्वेनऽआव: ॥ सबुध्न्याऽउपमाऽअस्यविष्ठा:सतश्चयोनिमसतश्चविव: ॥ ॐभूर्भुव:स्व:ब्रह्मणे-नम: ब्रह्माणं आवाहयामि ॥ स्था० ॥ भो ब्रह्मन्निहागच्छइहतिष्ठ ॥ १ ॥ उत्तरेवाप्यांसोमं ॥ ॐवयꣳसोमेत्यस्यबंधुर्ऋषिर्गायत्रीछंद:

 सोमोदेवता सोमस्थापनेविनियोगः ॥ ॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतꣳ ॥ प्रजावन्तꣳसचेमहि । ॐभूर्भुवःस्वःसोमायनमःसोमं 
 आवाहयामिस्था० ॥ भो सोमइहागच्छइहतिष्ठ ॐसोमायनमः ॥ २ ॥ ईशान्याखंडेदौईशानं । ॐतमीशानमितिमंत्रस्यगौतमऋषिजग-
तीछंदःईशोदेवताईशस्थापनेविनियोगः ॥ ॐतमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम ॥ पूषानोयथावेदसामसद्वृधेरक्षि-
तापायुरदब्धꣳस्वस्तये ॥ ॐभूर्भुवःस्वःईशानायनमःईशानंआवाहयामिस्था० भो ईशानइहा० । ईशानायनमः ॥ ३ ॥ पूर्वस्यांदिशिवा-
प्यांइंद्रं । ॐत्रातारमिंद्रमितिमंत्रस्यगर्गऋषिस्त्रिष्टुप्छंदः इंद्रोदेवता इंद्रस्थापनेविनियोगः ॥ ॐत्रातारमिंद्रमवितारमिन्द्रꣳहवेहवेसुहवꣳ
शूरमिन्द्रम ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ ॐभूर्भुवःस्वःइंद्रायनमः इन्द्रंआवाहयामि ॥ स्था० ॥ भो इंद्र-
इहा० ॐइंद्रायनमः ॥ ४ ॥ आग्नेय्यांखंडेदौअग्निं । ॐत्वन्नोऽअग्नइत्यस्यहिरण्यस्तूपांगिरसऋषिः जगतीछंदःअग्निर्देवताअग्निस्थापनेवि-
नियोगः ॥ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांꣳसिप्रमुमुग्ध्यस्मत ॥ ॐभूर्भुवः
स्वःअग्नयेनमःअग्निंआवाहयामि ॥स्था०॥भो अग्नेइहा० ॐअग्नयेनमः ॥ ५ ॥ दक्षिणेवाप्यांयमं । ॐसुगन्नःपंथेतिप्रजापतिर्ऋषिस्त्रिष्टुप्छंदो-
यमोदेवतायमस्थापनेविनियोगः ॥ ॐसुगन्नꣳपंथामभयंदिशन्नऽएहिज्योतिष्मध्येह्यजरन्नऽआयुः ॥ अपैतुमृत्युरमृतम्मऽआगाद्वैवस्वतोनोऽअ-
भयंकृणोतु ॥ ॐभूर्भुवःस्वःयमायनमःयमंआवाहयामि ॥ स्था० ॥ भो यमइहा० ॐयमायनमः ॥ ६ ॥ नैर्ऋत्यांखंडेदौनिर्ऋतिं । ॐअसुन्वे-
तिमंत्रस्यप्रजापतिऋषिस्त्रिष्टुप्छंदः निर्ऋतिर्देवतानिर्ऋतिस्थापनेविनियोगः ॥ ॐअसुन्वन्तमयंजमानमिच्छस्तेनस्येत्यामन्विहितस्कररस्य ॥ 

अन्यमस्मादिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ॐभूर्भुवःस्वःनिर्ऋतयेनमःनिर्ऋतिंआवाहयामि ॥ स्था० ॥ भो निर्ऋतेइहा० ॐ
निर्ऋतयेनमः ॥ ७ ॥ पश्चिमेवारुण्यांवरुणं । ॐतत्वायामीतिमंत्रस्यशुनःशेपऋषिस्त्रिष्टुप्छंदोवरुणोदेवतावरुणस्थापनेविनियोगः । ॐतत्वा-
यामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ ॐभूर्भुवःस्वःवरुणायनमः
वरुणंआवाहयामि ॥ स्था० ॥ भो वरुणइहा० ॐवरुणायनमः ॥ ८ ॥ वायव्यांखंडेदौवायुं । ॐआनोनियुद्भिरितिमंत्रस्यवसिष्ठऋषिस्त्रिष्टु-
प्छंदोवायुर्देवता वायुस्थापनेविनियोगः । ॐआनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम ॥ वायोऽअस्मिन्त्सवनेमादय-
स्वयूयम्पातस्वस्तिभिःसदानः ॥ ॐभूर्भुवःस्वः वायवेनमःवायुंआवाहयामि ॥ स्था० ॥ भो वायोइहा० ॐवायवेनमः ॥ ९ ॥ वायुसोम-
योर्मध्यभद्रेअष्टवसून् ॥ ॐसुगावोदेवाइतिप्रजापतिऋषिः त्रिष्टुप्छंदः वसवोदेवताअष्टवसुस्थापनेविनियोगः ॥ ॐसुगावोदेवाःसदनाअ-
कर्मयाआजग्मेदꣳसवनंजुषाणाः ॥ भरमाणावहमानाहवीꣳष्यस्मेधत्तवसवोवसूनिस्वाहा ॥ ॐभूर्भुवःस्वःअष्टवसुभ्योनमः अष्टवसून्
आवाहयामि ॥ स्था० ॥ भो वसव इहा० ॥ १ ॥ सोमेइशानयोर्मध्येभद्रेएकादश रुद्रान् ॥ ॐरुद्राः सꣳसृज्येतिप्रजापतिऋषिःअनुष्टुप्छंदः
रुद्रादेवताएकादशरुद्रस्थापनेविनियोगः॥ ॐरुद्राःसꣳसृज्यपृथिवींबृहज्योतिःसमीधिरे ॥ तेषांभानुरजस्रऽइच्छुक्रोदेवेषुरोचते॥ ॐभूर्भुवः
स्वःएकादशरुद्रेभ्योनमः एकादशरुद्रान् आवाहयामि ॥ स्था० ॥ भो रुद्राःइहा० ॥ १ ॥ ईशानेंद्रयोर्मध्येभद्रेद्वादशादित्यान् ॥ ॐयज्ञो
देवानामित्यस्यकुत्सऋषिः यजुरंतात्रिष्टुप्छंदः आदित्यादेवताद्वादशादित्यस्थापनेविनियोगः ॥ ॐयज्ञोदेवानाम्प्रत्येतिसुम्नमादित्यासोभव-

तामृडयंतं ॥ आवोर्व्वाचींसुमतिर्व्ववृत्याद्ᳫंहोश्चिद्यावरिवोवित्तरासदादित्येभ्यस्त्वा ॥ ॐभूर्भुवःस्वःद्वादशादित्येभ्योनमःद्वादशादित्यान्
आवाहयामि ॥ स्था० ॥ भोद्वादशादित्याइहा० ॥ १ ॥ इंद्राग्न्योर्मध्येभद्रेअश्विनौ ॥ ॐयावांकशेत्यस्यमेधातिथिऋषिःयजुरंतागायत्रीछंदः
अश्विनौदेवतेअश्विस्थापनेविनियोगः ॥ ॐयावाङ्कशामधुमुत्यश्विनासूनृतावती ॥ तयायुज्ञम्मिमिक्षतम् ॥ उपयामगृहीतोस्यश्विभ्यां-
न्त्वैषतेयोनिर्म्माध्वीभ्यान्त्वा ॥ ॐभूर्भुवःस्वःअश्विभ्यांनमः अश्विनौआवाहयामि ॥ स्था० ॥ भो अश्विनौइहा० तं ॥ अग्नियमयोर्मध्ये-
भद्रेसपैतृकान् ॥ ॐओमासश्चर्षणीत्यस्यमधुछंदाऋषिःगायत्रीछंदःविश्वेदेवादेवतासपैतृकविश्वेदेवस्थापनेविनियोगः ॥ ॐओमासश्चर्षणी
धृतोविश्वेदेवासऽआगत ॥ दाश्वाᳫंसोदाशुषःसुतम् ॥ उपयामगृहीतोसिविश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः ॥ ॐ
भूर्भुवःस्वःसपैतृकविश्वेभ्योदेवेभ्योनमःसपैतृकानविश्वान्देवानआवाहयामि ॥ स्था० ॥ भो० स० वि० इहा० ॥ यमनिर्ऋतयोर्मध्येभद्रेस-
प्तयक्षान् । ॐअभित्यंदेवमित्यस्यप्रजापतिर्ऋषिःअष्टिछंदःसप्तयक्षादेवताःसप्तयक्षस्थापनेविनियोगः ॥ ॐअभित्यंदेवᳩसवितारमोण्योःकवि-
क्रतुमर्चामिसत्यसवᳩरत्नधामभिप्प्रियम्मतिङ्कविम् ॥ ऊर्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः ॥
प्रजाभ्यस्त्वाप्रजास्त्वानुप्प्राणन्तुप्रजास्त्वमनुप्प्राणिहि ॥ ॐभूर्भुवःस्वःसप्तयक्षेभ्योनमःसप्तयक्षान् आवाहयामि ॥ स्था० ॥ भो सप्तयक्षाइहा-
गच्छतइह० ॐसप्तयक्षेभ्योनमः ॥ ६ ॥ निर्ऋतिवरुणयोर्मध्येभद्रेभूतनागान् । ॐभूतायत्वेतिमंत्रस्यपराशरऋषिर्विराट्छंदः नारायणोदे-
वताभूतस्थापनेविनियोगः । ॐभूतायत्वानारातयेस्वरभिविख्येषन्दृᳩहंतान्दुर्य्याःपृथिव्यामुर्व्वन्तरिक्षमन्वेमिपृथिव्यास्त्वानाभौसादया-

म्यदित्याऽउपस्त्थेग्नेर्हव्यङ्रक्ष ॥ ७ ॥ ॐभूर्भुवःस्वःभूतेभ्योनमःभूतान् आ० स्था० ॥ भूतानिइहा० ॐभूतेभ्योनमः । तत्रैव । ॐनमो-
स्तुसर्पेभ्यइतिमंत्रस्यप्रजापतिर्ऋषिरनुष्टुप्छंदः सर्पोदेवतासर्पस्थापनेविनियोगः । ॐनमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदि-
वितेभ्यः सर्प्पेभ्योनमः ॥ ॐभूर्भुवःस्वःसर्पेभ्योनमःसर्पान् आवाहयामि ॥ स्था० ॥ सर्पाइहा० ॐसर्पेभ्योनमः ॥ ८ ॥ वरुणवाय्वोर्मध्ये-
भद्रेगंधर्वाप्सरसः । ॐगंधर्वस्त्वेतिमंत्रस्यगौतमऋषिर्द्विपदाविराट्छंदःगंधर्वोदेवतागंधर्वस्थापनेविनियोगः ॥ ॐगंधर्वस्त्वाविश्वावसुःपरि
दधातुविश्वस्यारिष्टचैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥ इंद्रस्यबाहुरसिदक्षिणोविश्वस्यारिष्टचैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥
मित्रावरुणौत्वोत्तरतःपरिधत्तान्ध्रुवेणधर्म्मणाविश्वस्यारिष्टचैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥ ॐभूर्भुवःस्वःगंधर्वेभ्योनमःगंधर्वान्
आवाहयामि स्था० ॥ गंधर्वाइहा० तत्रैव । ॐअयंपुरोहरिकेशइतिमंत्रस्यपरमेष्ठीऋषिःककुप्छंदोऽप्सरसोदेवताअप्सरःस्थापनेविनियोगः ।
ॐअयंपुरोहरिकेशःसूर्य्यरश्मिस्तस्यरथगृत्सश्चरथौजाश्चसेनानिग्रामण्यौ ॥ पुञ्जिकस्थलाचक्रतुस्थलाचाप्सरसौदंक्ष्णवः पशवोहेतिः पौरु-
षेयोवधः प्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ॐभूर्भुवःस्वः अप्सरोभ्योनमः अप्सरसः
आवाहयामि ॥ भो अप्सरसःइहागच्छतइहतिष्ठत ॥९॥ ब्रह्मसोमयोर्मध्येवाप्यांनंदंनंदीश्वरंशूलंच । ॐयदक्रंदइतिमंत्रस्यजमदग्निर्दीर्घतमा-
स्कंदऋषयस्त्रिष्टुप्छंदःस्कंदोदेवतास्कंदावाहनेविनियोगः । ॐयदक्रन्दःप्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्य-
बाहूऽउपस्तुत्यम्महिजातन्तेऽअर्व्वन् ॥ ॐभूर्भुवःस्वःस्कंदायनमः स्कंदंआवाहयामि स्था० ॥ भोस्कंदइहा० ॥१॥ तदुत्तरे । ॐआशुःशिशानो

वृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् ॥ सुक्रंदनोनिमिषऽएकवीरःशतᳫंसेनाऽअजयत्साकमिन्द्रः ॥ ॐभूर्भुवःस्वःॐनंदीश्वरायनमः नंदीश्वरंआवाहयामि स्था० ॥ भोनंदिन्इहाग० ॥ २ ॥ तत्रैव । ॐकार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥ ॐभूर्भुवःस्वः ॐशूलायनमः शूलं० आवाहयामि स्था०॥ भोशूलइहा० ॥ ३ ॥ तदुत्तरे । ॐकार्षिरसि० रोषधीः ॐभूर्भुवः स्वःमहाकालायनमःमहाकालं आवाहयामि स्था० ॥ भो महाकालइहा० ॥ ४ ॥ ब्रह्मेशानयोर्मध्येवल्लीषुसप्तप्रजापतीन् ॥ ॐप्रजापते नत्वदेतान्यन्यो विश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्त्वयममुष्यपितासावस्यपितावयᳫंस्यामपतयोरयीणाम् ॥ ॐ भूर्भुवःस्वःॐप्रजापतिभ्योनमः प्रजापतीन् आवाहयामि स्था० ॥ भो प्रजापतयइहा० ॥५॥ ब्रह्मेंद्रयोर्मध्येदुर्गां । अंबेऽअंबइत्यस्य प्रजापतिर्ऋषिः अनुष्टुप् छंदः दुर्गादेवता दुर्गास्थापनेविनियोगः ॥ ॐअंबेऽअंबिकेम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ॥ ॐभूर्भुवःदुर्गायैनमःदुर्गांआवाहयामि स्था० ॥ भो दुर्गेइहा० ॥ ६ ॥ दुर्गापूर्वेविष्णुं । ॐइदम्विष्णुरितिमंत्रस्यमेधातिथिर्ऋषिर्गायत्रीछंदोविष्णुर्देवताविष्णवावाहनेविनियोगः । ॐइदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳫंसुरेस्वाहा ॥ ॐभूर्भुवः स्वःविष्णवेनमःविष्णुंआवाहयामि स्था० विष्णोइहा० ॥ ७ ॥ ब्रह्माग्न्योर्मध्येवल्लीषुपितॄन् । ॐउदीरतामवरइतिमंत्रस्यशंखऋषिस्त्रिष्टुप्छंदःपितरोदेवतापित्रावाहनेविनियोगः । ॐउदीरतामवरऽउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतु पितरोहवेषु ॥ ॐभूर्भुवःस्वः पितृभ्योनमःपितॄन् आवाहयामिस्था० । भो पितरइहागच्छतइहतिष्ठत ॥ ८ ॥ ब्रह्मयमयोर्मध्येवाप्यांमृत्युरो

गान् । ॐपरंमृत्योइतिमंत्रस्यसंकुशिकऋषिस्त्रिष्टुप्छंदोमृत्युर्देवतामृत्युरोगावाहनेविनियोगः । ॐपरंमृत्योअनुपरेहिपंथांयस्तेअन्यइतरोदे-
वयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानंःप्रजाꣳरीरिषोमोतवीरान् ॥ ॐभूर्भुवःस्वः मृत्युरोगेभ्योनमः मृत्युरोगान् आवाहयामि स्था० ॥
भोमृत्युरोगाइहा० ॥ ८ ॥ ब्रह्मनिर्ऋत्योर्मध्येवल्लीषुगणपतिं । ॐगणानांत्वाइतिमंत्रस्यप्रजापतिऋषिर्जगतीछंदोगणपतिर्देवतागणपत्या-
वाहनेविनियोगः । ॐगणानांत्वागणपतिꣳहवामहेप्रियाणांत्वाप्रियपतिꣳहवामहेनिधीनांत्वानिधिपतिꣳहवामहे वसोमम ॥ आहमजा-
निगर्भधमात्वमजासिगर्भधम् ॥ ॐभूर्भुवःस्वःॐगणपतयेनमः गणपतिंआवाहयामि स्था० ॥ भो गणपतेइहा० ॥ ९ ॥ ब्रह्मवरुणयोर्मध्ये
वाप्यांअपः ॥ ॐअपोअद्येतिमंत्रस्यहिरण्यस्तूपऋषिस्त्रिष्टुप्छंदः आपोदेवता अपांस्थापनेविनियोगः ॥ ॐअपोऽअद्यान्वचारिषꣳरसेनसमं
भृक्ष्महि ॥ पयस्वानग्नऽआगमन्तम्मासꣳसृजवर्चसाप्रजयाचधनेनच ॥ ॐभूर्भुवःस्वः ॐअद्भ्योनमः अपः आवाहयामिस्था० ॥ भो आपइहा-
गच्छतइहतिष्ठत ॥ १० ॥ ब्रह्मवायुमध्येवल्लीषुमरुतः । ॐबृहदिंद्रायेतिमंत्रस्यपरमेष्ठीऋषिर्बृहतीछंदोमरुतोदेवतामरुत्स्थापनेविनियोगः ।
ॐबृहदिन्द्रायगायतमरुतोवृत्रहन्तमम ॥ येनज्योतिरजनयन्नृतावृधोदेवन्देवायजागृवि ॥ ॐभूर्भुवःस्वः ॐमरुद्भ्योनमः मरुतःआवाहयामि ॥
स्था० भो मरुतइहा० ॥ ११ ॥ ब्रह्मणःपादमूलेकर्णिकाधःपृथिवीं । ॐमहीद्यौरितिमंत्रस्यमेधातिथिर्ऋषिर्गायत्रीछंदः पृथिवीदेवता-
पृथिव्यावाहनेविनियोगः । ॐमहीद्यौःपृथिवीचनऽइमंयज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ॐभूर्भुवःस्वःपृथिव्यैनमः पृथिवींआ-
वाहयामि ॥ स्था० भो पृथिवीहा० ॥ १२ ॥ तत्रैवगंगादिसप्तसरितः । ॐइमंमेगंगेइतिमंत्रस्यसिंधुक्षित्प्रय्यमेधाऋषयः जगतीछंदःगंगादे-

वता गंगादिनद्यावाहनेविनियोगः । ॐइमंमेगंगेयमुनेसरस्वतिशतुद्रिस्तोमंसचतापरुष्णिया ॥ असिक्नियामरुद्वृधेवितस्तयार्जीकीयेशृणुह्या-
सुषोमया ॥ ॐभूर्भुवःस्वःगंगादिसरिद्भ्योनमः गंगादिसप्तसरितःआवाहयामि स्था० ॥ भो गंगादिसप्तसरितइहागच्छतइहतिष्ठत ॥ १३ ॥
तत्रैवसप्तसागरान् । ॐमापोमौषधीत्यस्यवामदेवऋषिरनुष्टुप्छंदः वरुणोदेवतासप्तसागरावाहनेविनियोगः । ॐमापोमौषधीर्हिꣳसीर्धाम्नो-
धाम्नोराजँस्ततोवरुणनोमुञ्च ॥ यदाहुरघ्न्याऽइतिवरुणेतिशपामहे ततोवरुणनोमुंच ॥ ॐभूर्भुवःस्वःसप्तसागरेभ्योनमःसप्तसागरान्
आवाहयामि स्था० ॥ भो सप्तसागराइहा० ॥ १४ ॥ तदुपरिमेरुंनाममंत्रेणावाहयेत् । ॐभूर्भुवःॐमेरवेनमः मेरुमावाहयामिस्थापयामि
भोमेरोइहागच्छइह० ॥१५॥ ततोमंडलाद्बहिःसोमादिसन्निधौक्रमेणआयुधान्यावाहयेत् । उत्तरे ॐभूर्भुवःस्वः ॐगदायैनमः गदामावा-
हयामिस्थापयामि ॥ १ ॥ ईशान्यां ॐभूर्भुवःस्वः त्रिशूलायनमः त्रिशूलमावाहयामिस्थापयामि भो त्रिशूलइहा० ॥२॥ पूर्वे ॐवज्रायनमः
वज्रमावाहया० ॥ ३ ॥ एवंद्वितीयोद्देशेनसर्वत्रावाहनं । आग्नेय्यां शक्तयेनमः ॥ ४ ॥ दक्षिणस्यां दंडायनमः ॥ ५ ॥ नैरृत्यांखड्गायनमः
॥ ६ ॥ पश्चिमे पाशायनमः ॥ ७ ॥ वायव्यां अंकुशायनमः ॥ ८ ॥ तद्बाह्ये उत्तरेगौतमायनमः ॥ १ ॥ ईशान्यां भरद्वाजाय० ॥ २ ॥
पूर्वे विश्वामित्राय० ॥ ३ ॥ आग्नेय्यां कश्यपाय० ॥४॥ दक्षिणेजमदग्नये० ॥ ५ ॥ नैरृत्यां वसिष्ठाय० ॥ ६ ॥ पश्चिमे अत्रयेनमः ॥ ७ ॥
वायव्यांअरुंधत्यै० ॥ ८ ॥ तद्बाह्येपूर्वादिक्रमेण पूर्वेऐंद्र्यैनमः ॥ १ ॥ आग्नेय्यां कौमार्यैनमः ॥ २ ॥ दक्षिणस्यां ब्राह्म्यैनमः ॥ ३ ॥
नैरृत्यां वाराह्यैनमः ॥ ४ ॥ पश्चिमायांचामुंडायैनमः ॥ ५ ॥ वायव्यां वैष्णव्यैनमः ॥ ६ ॥ उत्तरस्यां माहेश्वर्यैनमः ॥ ७ ॥ ईशान्यां

वैनायक्यैनमः ॥ ८ ॥ एवंषट्पंचाशद्देवानावाह्य ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवास-
ऽइहमादयंतामों ३ प्रतिष्ठ ॥ इतिप्रतिष्ठाप्ययथालब्धोपचारैःब्रह्मादीन्संपूज्यवेदिमध्यस्थेपद्मेताम्रकलशंस्थापयेत् ॥ ॐभूरसीतिभूमिंस्पृष्ट्वा
ॐभूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींयच्छपृथिवींदृꣳहपृथिवींमाहिꣳसीः ॥ १ ॥ ओषधयःसमितितत्रयवा-
न्वातंदुलान्प्रक्षिप्य । ॐओषधयःसमवदन्तसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तꣳराजन्पारयामसि ॥ ९ ॥ तत्र आजिघ्रमितिकल-
शंस्थापयेत् ॐआजिघ्रकलशंमह्यात्वाविशंत्विंदवः ॥ पुनरूर्जानिवर्तस्वसानःसहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ ३ ॥ ॐव-
रुणस्योत्तम्भनमसी० त्युदकंनिक्षिपेत् ॥ ४ ॥ सुजातो० इतिवस्त्रेणवेष्टयेत् ॐसुजातोज्योतिषासहशर्मवरूथमासदत्स्वः ॥ वासोऽअग्नेवि-
श्वरूपꣳसँव्ययस्वविभावसो ॥ ५ ॥ याःफलिनीरितिफलं । ॐयाःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुं-
चंत्वꣳहसः ॥ ६ ॥ परिवाजपतिरितिपंचरत्नानि ॥ ॐपरिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ७ ॥ ॐहिरण्यग-
र्भेतिहिरण्यंक्षिपेत् ॥ ८ ॥ ॐगंधद्वारामितिगंधंक्षिपेत् ॥ ९ ॥ याओषधीरितिसर्वौषधीः ॥ ॐयाऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥
मनैनुबभ्रूणामहꣳशतंधामानिसप्तच ॥ १० ॥ स्योनापृथिवी इतिकलशेसप्तमृदःक्षिपेत् ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः
शर्म्मसप्रथाः ॥ ११ ॥ कांडात्कांडादितिदूर्वा ॥ १२ ॥ अश्वत्थेवेतिपंचपल्लवान्कलशमुखेनिक्षिपेत् ॥ ॐअश्वत्थेवोनिषदनम्पर्णेवोवसति-
ष्कृता ॥ गोभाजऽइत्किलासथयत्सनवथपूरुषं ॥ १३ ॥ पूर्णादर्वी इतिमंत्रेणतंदुलपूरितपात्रंकलशोपरिस्थापयेत् ॥ ॐपूर्णादर्विपरापतसुपू-

र्णापुनरापत ॥ वृस्त्वेवृत्रिक्रीणावहाऽइषमूर्ज्जंᳲशतक्रतो ॥ १४ ॥ ॐमनोजूतिरिरितिप्रतिष्ठाप्यतत्र ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेय-
जमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशᳲसमानऽआयुःप्रमोषीः॥ॐभूर्भुवःस्वःवरुणइहागच्छइहतिष्ठ ॥ इत्यावाह्य ॐवरुणायनम
इतिवरुणंषोडशोपचारैःसंपूज्य ॥ ॐकलशस्यमुखेविष्णुरित्यादिसंप्रार्थ्यतदुपरिस्वर्णमयींप्रधानदेवप्रतिमामग्न्युत्तारणपूर्वकंसन्निधायपट्टवस्त्रा-
द्यैराच्छाद्य ॐसहस्रशीर्षापुरुषेत्यादिषोडशोपचारैःसंपूज्यप्रार्थयेत्॥ एह्येहि भगवन् विष्णो लोकानुग्रहकारक ॥ यज्ञभागं गृहाणेमं वासुदेव
नमोस्तुते ॥ १ ॥ ॐविष्णवेनमः । ॐमधुसूदनायनमः । ॐत्रिविक्रमायनमः । ॐवामनायनमः । ॐश्रीधरायनमः । ॐहृषीकेशाय-
नमः । ॐपद्मनाभायनमः । ॐदामोदरायनमः । एतैर्नामभिःपुनरपिसंपूज्यप्रणमेत् । शिवप्रतिष्ठायांतुवक्ष्यमाणलिंगतोभद्रमंडलेशिवंषो-
डशोपचारैःपूजयेदितिसर्वतोभद्रमंडलपूजनप्रयोगः ॥ अथद्वादशलिंगतोभद्रमंडलंसदैवतमाह ॥ उक्तंचरुद्रयामले । रुद्रउवाच । उद्धारं
कथयिष्येऽहं मदर्चार्थं तव प्रिय प्रिये । चतुस्त्रिंशत् ३४ समा रेखाःकुर्यात्पूर्वोत्तराः शुभाः ॥ १ ॥ मध्ये वृत्तं समालेख्यं तन्मध्ये च दशा-
ष्टकम् ॥ बहिरष्टदलं पद्मं ततः षोडशपत्रकम् ॥ २ ॥ चतुर्विंशतिपत्राढ्यं द्वात्रिंशत्पत्रकं तथा ॥ चत्वारिंशत्पत्रकं तु वृत्तं सूर्यसमप्रभम्
॥ ३ ॥ खंडेंदुस्त्रिपदैः कोणे शृंखलादशकोष्ठका ॥ एकविंशत्पदावल्ली भद्रं तु षट्पदैस्तथा ॥ ४ ॥ अष्टादशपदं लिंगं भद्रं चाष्टपदं तथा ॥
त्रयोदशपदा वापी कुर्याल्लिंगस्य सन्निधौ ॥ ५ ॥ पूज्योपर्यपि भद्राणि भवंति नवभिः पदैः ॥ एवं द्वादशलिंगाख्यं वापीषोडशकान्वित-



१ अग्न्युत्तारणसूक्तंवास्तुपूजायांपूर्वमुक्तंतत्रद्रष्टव्यम्.

भिरद्रिभिः सुतंसोमंपुनीतन ॥ मधावाधावतामधु ॥ १०१ ॥ नमसेदुपसीदतदध्नेदभिश्रीणीतन ॥ इंदुमिंद्रेदधातन ॥ १०२ ॥ अमित्रहाविचर्षणिः पवस्वसोमशंगवे ॥ देवेभ्योअनुकामकृत ॥ १०३ ॥ इंद्रायसोमपातवेमदायपरिषिच्यसे ॥ मनश्चिन्मनसस्पतिः ॥ १०४ ॥ पवमानसुवीर्यंरयिंसोमरिरीहिनः ॥ इंदविंद्रेणनोयुजा ॥ १०५ ॥ सोमाअसृग्रमिंदवः सुताऋतस्यसादने ॥ इंद्रायमधुमत्तमाः ॥ १०६ ॥ अभिविप्राअनूषतगावोवत्संनमातरः ॥ इंद्रंसोमस्यपीतये ॥ १०७ ॥ मदच्युत्क्षेतिसादनेसिंधोरूर्मविपश्चित ॥ सोमोगौरीअधिश्रितः ॥ ॥ १०८ ॥ दिवोनाभाविचक्षणोव्योवारेमहीयते ॥ सोमोयः सुक्रतुः कविः ॥१०९॥ यः सोमः कलशेष्वाँअंतः पवित्रआहितः ॥ तमिंदुः परिषस्वजे ॥ ११० ॥ प्रवाचमिंदुरिष्यतिसमुद्रस्याधिविष्टपि ॥ जिन्वन्कोशंमधुश्चुतम ॥१११॥ नित्यस्तोत्रोवनस्पतिर्धीनामंतः सबर्दुघः ॥ हिन्वानोमानुषायुगा ॥ ११२ ॥ अभिप्रियादिवस्पदासोमोहिन्वानोअर्षति ॥ विप्रस्यधारयाकविः ॥ ११३ ॥ आपवमानधारयरयिंसहस्रवर्चसम ॥ अस्मेइंदोस्वाभुवम ॥ ११४ ॥ २४ ॥ ॥ इति ऋग्वेदीयं पवमानसूक्तम ॥ ॥ अथ सोमसूक्तम ॥ ऋ० अ० ॥ १ ॥ अ० ॥ ६ ॥ व० ॥ १९ ॥ ॐत्वंसोमप्रचिकितोमनीषात्वंरजिष्ठमनुनेषिपंथाम ॥ तवप्रणीतीपितरोनइन्द्रोदेवेषुरत्नमभजन्तधीराः ॥ १ ॥ त्वंसोमक्रतुभिः सुक्रतुर्भूस्त्वंदक्षैः सुदक्षोविश्ववेदाः ॥ त्वंवृषावृषत्वेभिर्महित्वाद्युम्नेभिर्द्युम्न्यभवोनृचक्षाः ॥ २ ॥ राज्ञोनुतेवरुणस्यव्रतानिबृहद्गभीरन्तवसोमधाम ॥ शुचिष्ट्वमसिप्रियोनमित्रोदक्षाय्यो अर्यमेवासिसोम ॥३॥ यातेधामानिदिवियापृथिव्यांयापर्वतेष्वोषधीष्वप्सु ॥ तेभिर्नोविश्वैः सुमनाअहेळन्राजन्त्सोमप्रतिहव्यागृभाय ॥ ४ ॥ त्वंसोमासिसत्पतिस्त्वंराजोतवृत्रहा ॥ त्वंभद्रोअसिक्रतुः ॥ ५ ॥ त्वंचसोमनो-

वशोंजीवातुंनमंरामहे ॥ प्रियस्तोत्रोवनस्पतिः ॥ ६ ॥ त्वंसोंममहे भगंत्वंयूनंऋतायतेदक्षंदधासिजीवसें ॥ ७ ॥ त्वंनःसोमविश्वतोरक्षांरा-
जन्नघायतः ॥ नरिंष्येत्वावंतः सखां ॥ ८ ॥ सोमयास्तेंमयोभुवंऊतयः सन्तिदाशुषें ॥ ताभिर्नोंविताभंव ॥ ९ ॥ इमंयज्ञमिदंवचोंजुजुषा-
णउपागंहि ॥ सोमत्वंनोंवृधेभंव ॥ १० ॥ सोमंगीर्भिष्ट्वांवयंवर्धयांमोवचोविदंः ॥ सुमृळीकोनआविंश ॥ ११ ॥ गयस्फानोंअमीवहावंसु-
वित्पुंष्टिवर्धनः ॥ सुमित्रः सोंमनोभव ॥ १२ ॥ सोमंरारंधिनोंहृदिगावोनयवंसेष्वा ॥ मर्यंइवस्वओक्यें ॥ १३ ॥ यः सोंमसख्येतवंरारण-
द्देवमर्त्यः ॥ तंदक्षःसचतेकविः ॥ १४ ॥ ऊरुष्याणोंअभिशंस्तेः सोमनिपाह्यंहंसः ॥ सखांसुशेवंएधिनः ॥ १५ ॥ आप्यांयस्वसमेंतुतेवि-
श्वतंः सोमवृष्ण्यंम ॥ भवावाजंस्यसंगथे ॥ १६ ॥ आप्यांयस्वमदिन्तमसोमविश्वेंभिरंशुभिः ॥ भवांनःसुश्रवंस्तमःसखांवृधे ॥ १७ ॥ संतेप-
यांसिसमुयन्तुवाजाःसंवृष्ण्यांन्यभिमातिषाहंः ॥ आप्यायंमानोअमृतांयसोमदिविश्रवांस्युत्तमानिंधिष्व ॥ १८ ॥ यातेधामांनिहविषायजं-
न्तितातेविश्वांपरिभूरंस्तुयज्ञम ॥ गयस्फानः प्रतरंणः सुवीरोवीरहाप्रचंरासोमदुर्यान ॥ १९ ॥ सोमोंधेनुंसोमोअवंतमाशुंसोमोंवीरंकर्म-
ण्यंददाति ॥ सादन्यंविदथ्यंसभेयंपितृश्रवंणंयोददांशदस्मैं ॥ २० ॥ अषांळहंयुत्सुपृतंनासुपप्रिंस्वर्षामप्सांवृजनंस्यगोपाम ॥ भरेषुजांसुक्षि-
तिंसुश्रवंसंजयंन्तंत्वामनुंमदेमसोम ॥ २१ ॥ त्वमिमाओषंधीःसोमविश्वास्त्वमपोअंजनयस्त्वंगाः ॥ त्वमातंतन्थोर्व१न्तरिंक्षंत्वञ्ज्योतिषावि-
तमोंववर्थ ॥ २२ ॥ देवेनंनोमनंसादेवसोमरायो भागंसंहसावन्नभियुंध्य ॥ मात्वातंनदीशिषेवीर्यंस्योभयेंभ्यः प्रचिंकित्सागविंष्टौ ॥ २३ ॥
इति सोमसूक्तम ॥ अथ सुमंगल सूक्तम ॥ ऋ० अ० ॥ २ ॥ अ० ॥ ८ ॥ व० ॥ ११ ॥ ॐकनिंक्रदज्जनुंषंप्रब्रुवाणइयंर्तिवाचंमरितेव-

नावम् ॥ सुमङ्गलंश्चकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत ॥ १ ॥ मात्वाश्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोअस्ता ॥
पित्र्यामनुप्रदिशंकनिक्रदत्सुमङ्गलोभद्रवादीवदेह ॥ २ ॥ अवक्रन्ददक्षिणतोगृहाणांसुमङ्गलोभद्रवादीशंकुते ॥ मानःस्तेनईशतमाघशंसो-
बृहद्वदेमविदथेसुवीराः ॥ ३ ॥ इतिसुमंगलम् ॥ अथ शांत्यध्यायः ॥ ऋ० ॥ अ० ॥ ५ ॥ अ० ॥ ३ ॥ वर्ग ॥ २८ ॥ ॐशंनऽइंद्राग्नी-
भवतामवोभिः शंनइंद्रावरुणारातहव्या ॥ शमिंद्रासोमासुवितायशंयोः शन्नइंद्रापूषणावाजसातौ ॥ १ ॥ शंनोभगः शमुनःशंसोअस्तु-
शंनः पुरंधिःशमुसंतुरायः ॥ शंनः सत्यस्यसुयमस्यशंसः शंनोअर्यमापुरुजातोअस्तु ॥ २ ॥ शन्नोधाताशमुधर्तानोअस्तुशंनउरूचीभवतु
स्वधाभिः ॥ शंरोदसीबृहतीशंनोअद्रिः शंनोदेवानांसुहवानिसंतु ॥ ३ ॥ शंनोअग्निर्ज्योतिरनीकोअस्तुशंनोमित्रावरुणावश्विनाशम् ॥
शंनः सुकृतांसुकृतानिसंतुशंनं इषिरोअभिवातुवातः ॥ ४ ॥ शंनो द्यावापृथिवीपूर्वहूतौ शमन्तरिक्षंदृशयेनोअस्तु ॥ शंनओषधीर्वनिनो
भवन्तु शंनोरजसस्पतिरस्तुजिष्णुः ॥ ५ ॥ शंन इंद्रोवसुभिर्देवो अस्तुशमादित्येभिर्वरुणः सुशंसः ॥ शंनोरुद्रोरुद्रेभिर्जलाषः शंनस्त्वष्टा-
ग्नाभिरिहशृणोतु ॥ ६ ॥ शंनः सोमो भवतु ब्रह्मशंनः शंनोग्रावाणः शमुसन्तुयज्ञाः ॥ शंनः स्वरूणांमितयो भवंतुशंनः प्रस्व १ः शम्वस्तु-
वेदिः ॥ ७ ॥ शंनः सूर्यउरुचक्षाउदेतुशंनश्चतस्रःप्रदिशोभवंतु ॥ शंनः पर्वताध्रुवयो भवंतुशंनः सिंधवः शमुसन्त्वापः ॥ ८ ॥ शन्नोअदि-
तिर्भवतुव्रतेभिश्शनोभवंतुमरुतः स्वर्काः ॥ शंनोविष्णुः शमुपूषानोअस्तुशंनोभवित्रंशम्वस्तुवायुः ॥ ९ ॥ शंनोदेवः सवितात्रायमाणः
शंनोभवंतूषसोविभातीः ॥ शंनः पर्जन्योभवतुप्रजाभ्यः शंनः क्षेत्रस्यपतिरस्तुशंभुः ॥ १० ॥ शंनोदेवाविश्वदेवाभवंतुशंसरस्वतीसहधीभि-

रस्तु ॥ शमभिषाचः शमुरातिषाचः शंनोदिव्याः पार्थिवाःशंनोअप्याः ॥ ११ ॥ शंनः सत्यस्यपतयो भवन्तुशंनोअर्वतः शमुसन्तुगावः ॥
शंनऋभवः सुकृतः सुहस्ताः शंनोभवंतुपितरोहवेषु ॥ १२ ॥ शंनोअजएकपाद्देवोअस्तु शंनोहिर्बुध्न्यः १ शंसमुद्रः ॥ शंनोअपानपात्पे-
रुरस्तुशंनः पृश्निर्भवतुदेवगोपा ॥ १३ ॥ आदित्यारुद्रावसवोजुषंतेदंब्रह्मक्रियमाणंनवीयः ॥ शृण्वंतुनोदिव्याः पार्थिवासोगोजाताउतये-
यज्ञियासः ॥ १४ ॥ येदेवानांयज्ञियायज्ञियानांमनोर्यजत्राअमृताऋतज्ञाः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिः सदानः ॥ १५ ॥
इति शांतिकाध्यायः ॥ अथ इंद्रसूक्तम् ॥ ऋ० अ० ॥ ६ ॥ व० ॥ ७ ॥ योजातएवप्रथमोमनस्वान् देवो देवान्क्रतुनापर्यभूषत् ॥ यस्य
शुष्माद्रोदसीअभ्यसेतांनृम्णस्यमह्नासजनासइंद्रः ॥ १ ॥ यः पृथिवींव्यथमानामदृंहद्यः पर्वतान्प्रकुपिताँअरम्णात् ॥ योअंतरिक्षंविममे-
वरीयोयोद्यामस्तभ्नात्सजनासइन्द्रः ॥ २ ॥ योहत्वाहिमरिणात्सप्तसिंधून्योगाउदाजदपधावलस्य ॥ योअश्मनोरन्तरग्निंजजानसंवृक्स-
मत्सुसजनासइन्द्रः ॥ ३ ॥ येनेमाविश्वाच्यवनाकृतानियोदासंवर्णमधरंगुहाकः ॥ श्वघ्नीवयोजिगीवाँल्लक्षमाददर्यः पुष्टानिसजनासइंद्रः ॥
॥ ४ ॥ यंस्मापृच्छन्तिकुहसेतिघोरमुतेमाहुर्नैषोअस्तीत्येनम् ॥ सोअर्यः पुष्टीर्विजइवामिनातिश्रदस्मैधत्तसजनासइन्द्रः ॥ ५ ॥ योरध्रस्य-
चोदितायःकृशस्ययोब्रह्मणोनाधमानस्यकीरेः ॥ युक्तग्राव्णोयोविताषुशिप्रःसुतसोमस्यसजनासइंद्रः ॥ ६ ॥ यस्याश्वासःप्रदिशियस्यगावो-
यस्यग्रामायस्यविश्वेरथासः ॥ यः सूर्यंयउषसंजजानयो अपांनेतासजनासइंद्रः ॥ ७ ॥ यंक्रन्दसीसंयतीविह्वयेतेपरेवरउभयाअमित्राः ॥
समानंचिद्रथमातस्थिवांसानानाहवेतेसजनासइंद्रः ॥ ८ ॥ यस्मान्नऋतेविजयन्तेजनासोयंयुध्यमाना अवसेहवन्ते ॥ योविश्वस्यप्रतिमानं-

बभूवयोअच्युतच्युत्सजनासइंद्रः ॥९॥ यः शश्वतोमह्येनोदधानानमन्यमानाञ्छर्वाजघान ॥ यः शर्धतेनानुददाति शृध्यायोदस्योर्हतासजना-
सइंद्रः ॥ १० ॥ यः शंबरंपर्वतेषुक्षियन्तंचत्वारिंश्यांशरद्यन्वविंदन् ॥ आजायमानंयोअहिंजघानदानुंशयानंसजनासइंद्रः ॥ ११ ॥ यः
सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवेसप्तसिंधून् ॥ योरौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तंसजनासइंद्रः ॥ १२ ॥ द्यावाचिदस्मै पृथिवीन-
मेते शुष्माच्चिदस्यपर्वताभयन्ते ॥ यःसोमपानिचितोवज्रबाहुर्योवज्रहस्तः सजनासइंद्र॥ १३ ॥यः सुन्वन्तमवतियः पचंतंयः शंसन्तंयः शश-
मानमूती ॥ यस्यब्रह्मवर्धनं यस्य सोमोयस्येदंराधः सजनासइंद्रः ॥ १४ ॥ यःसुन्वतेपचतेदुध्रआचिद्वाजंदर्दर्षिसकिलासिसत्यः ॥ वयन्तइंद्र-
विश्वहप्रियासः सुवीरासोविदथमावदेम ॥ १५ ॥ इति इंद्रसूक्तम् ॥ अथ रक्षोघ्नं सूक्तम् ॥ ऋ० अ० ॥ ३ ॥ अ० ॥ ४ ॥ व० ॥ २३ ॥
ॐ कृणुष्वपाजः प्रसितिंनपृथ्वींयाहिराजेवामवाँइभेन ॥ तृष्वी मनुप्रसितिन्द्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ १ ॥ तवभ्रमासआशुयापं
तन्त्यनुस्पृशधृषताशोशुचानः ॥ तपूंष्यग्नेजुह्वापतङ्गानसंन्दितोविसृजविष्वगुल्काः ॥ २ ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोअस्या
अदंधः ॥ योनोदूरेअघशंसोयोअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ ३ ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्य १ मित्राँओषतात्तिग्महेते ॥ योनोअरा-
तिंसमिधानचक्रेनीचातंधक्ष्यतसंनशुष्कम् ॥ ४ ॥ ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनांजामिम-
जामिंप्रमृणीहिशत्रून् ॥ ५ ॥ इति रक्षोघ्नम् ॥ इति पूर्वद्वारपालजाप्यसूक्तानि ॥ अथ पूर्वे ऋग्वेदिनां जापकजप्यानि सूक्तानि ॥ ऋ० ॥
अ० ॥ ८ ॥ अ० ॥ ७ ॥ व० ॥ १४ ॥ ॐ रात्रीव्यख्यदायतीपुरुत्रादेव्य १ क्षभिः ॥ विश्वाअधिश्रियोधित ॥ १ ॥ ओर्वप्राअमर्त्यानि-

वतोदेव्यु १ द्वतः ॥ ज्योतिषाबाधतेतमः ॥ २ ॥ निरुस्वसारमस्कृतोषसंदेव्यायती: ॥ अपेदुहासतेतमः ॥ ३ ॥ सानोअद्ययस्यावयंनिते-
यामन्नविक्ष्महि ॥ वृक्षेनवसतिंवयः ॥ ४ ॥ निग्रामासोअविक्षतनिपद्वन्तोनिपक्षिणः ॥ निश्येनासश्चिदर्थिनः ॥ ५ ॥ यावयावृक्यं १ वृकं-
यवयस्तेनमूर्म्ये ॥ अथानः सुतराभव ॥ ६ ॥ उपमापेपिशत्तमः कृष्णंव्यक्तमस्थित ॥ उषऋणेवयातय ॥ ७ ॥ उपतेगाइवाकरंवृणीष्वदु-
हितर्दिवः ॥ रात्रिस्तोमंनजिग्युषे ॥ ८ ॥ इति रात्रिसूक्तम् ॥ अथ रौद्रं सूक्तम् ॥ ऋ० अ० ॥ १ ॥ अ० ॥ ८ ॥ व० ॥ ५ ॥ ओँइमा-
रुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेअस्मिन्ननातुरम् ॥ १ ॥ मृळानोरुद्रोतनोमयस्कृधि-
क्षयद्वीरायनमसाविधेमते ॥ यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्रप्रणीतिषु ॥ २ ॥ अश्यामतेसुमतिंदेवयज्यया क्षयद्वीरस्यतवरुद्र-
मीढ्वः ॥ सुम्नायन्निद्विशोअस्याकमाचरारिष्टवीराजुहवामतेहविः ॥ ३ ॥ त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे ॥ आरेअस्मद्दैव्यं-
हेळोअस्यतुसुमतिमिद्वयमस्यावृणीमहे ॥ ४ ॥ दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे ॥ हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छ-
र्दिरस्मभ्यंयंसत् ॥ ५ ॥ इदंपित्रेमरुतामुच्यते वचः स्वादोः स्वादीयोरुद्रायवर्धनम् ॥ रास्वाचनोअमृतमर्तभोजनंत्मनेतोकायतनयायमृळ
॥ ६ ॥ मानोमहान्तमुतमानोअर्भकंमानउक्षन्तमुतमान उक्षितम् ॥ मानोवधीःपितरंमोतमातरंमानः प्रियास्तन्वोरुद्ररीरिषः ॥ ७ ॥
मानस्तोकेतनयेमानआयौमानो गोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतः सदमित्त्वाहवामहे ॥ ८ ॥ उपतेस्तो-
मान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे ॥ भद्राहितेसुमतिर्मृळयत्तमाथा वयमवइत्तेवृणीमहे ॥ ९ ॥ आरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरा-

यसुम्नमुस्मेतेअस्तु ॥ मृळाचनोअधिचब्रूहिदेवाधाचनः शर्मयच्छद्विबर्हाः ॥ १० ॥ अवोचामनमो अस्माअवस्यवः शृणोतुनोहवं रुद्रोम-
रुत्वान् ॥ तन्नोमित्रोवरुणोमामहंतामदितिः सिंधुः पृथिवीउतद्यौः ॥ ११ ॥ इति रुद्रसूक्तम् ॥ ततः पवमानं सुमंगलं च जपेत् ( पव-
मानं स्वादिष्ठयेत्यादिसुमंगलं कनिक्रददित्यादि च पूर्वमुक्तम् ) अथ पुरुषसूक्तम् ॥ ऋ० अ० ॥ ८ ॥ अ० ॥ ४ ॥ व० ॥ १७ ॥ ॐस-
हस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलम् ॥ १ ॥ पुरुषएवेदंसर्वंयद्भूतंयच्च भव्यम् ॥ उतामृतत्वस्येशा-
नोयदन्नेनातिरोहति ॥ २ ॥ एतावानस्यमहिमातोज्यायांश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतं दिवि ॥ ३ ॥ त्रिपादूर्ध्वउदैत्पु-
रुषः पादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ ४ ॥ तस्माद्विराळजायत विराजोअधिपूरुषः ॥ सजातोअत्य-
रिच्यत पश्चाद्भूमिमथोपुरः ॥ ५ ॥ १ ॥ यत्पुरुषेणहविषा देवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यं ग्रीष्मइध्मःशरद्धविः ॥ ६ ॥ तंयज्ञं-
बर्हिषिप्रौक्षन्पुरुषं जातमग्रतः ॥ तेन देवाअयजंत साध्याऋषयश्चये ॥ ७ ॥ तस्माद्यज्ञात्सर्वहुतः संभृतंपृषदाज्यम् ॥ पशून्तांश्चक्रेवायव्या-
नारण्यान्ग्राम्याश्चये ॥ ८ ॥ तस्माद्यज्ञात्सर्वहुतऋचः सामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ ९ ॥ तस्मादश्वाअजायंत
येकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः ॥ १० ॥ २ ॥ यत्पुरुषंव्यदधुः कतिधाव्यकल्पयन् ॥ मुखं किमस्य कौबाहू
का ऊरू पादा उच्येते ॥ ११ ॥ ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ ११ ॥ ॥ ७० ॥
चंद्रमा मनसो जातश्चक्षोः सूर्यो अजायत ॥ मुखादिंद्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥ नाभ्या आसी दंतरिक्षं शीर्ष्णो द्यौः समवर्तत ॥

पुद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अंकल्पयन् ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः ॥ देवा यद्यज्ञं तन्वाना अबध्नन्पु-
रुषं पशुम् ॥ १५ ॥ यज्ञेनयज्ञमयजंत देवास्तानिधर्माणिप्रथमान्यासन् ॥ तेह नाकंमहिमानः सचंत यत्र पूर्वे साध्याः संति देवाः ॥१६॥
इति ऋग्वेदीयं पौरुषं सूक्तम् ॥ अथ ऋग्वेदीयं वामदेव्यं सूक्तम् । ऋ० अ० ॥ ३ ॥ अ० ॥ ६ ॥ व० ॥ २४ ॥ ॐ कयानश्चित्रआभु-
वदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ १ ॥ कस्त्वासत्योमदानांमंहिष्ठोमत्सदन्धसः ॥ दृळहाचिदारुजेवसु ॥ २ ॥ अभीषुणः सखी-
नामविताजरितॄणाम् ॥ शतंभवास्यूतिभिः ॥ ३ ॥ अभीनआववृत्स्वचक्रंनवृत्तमर्वतः ॥ नियुद्भिश्चर्षणीनाम् ॥ ४ ॥ प्रवताहिक्रतूनामाहाप-
देवगच्छसि ॥ अभक्षिसूर्येसचा ॥ ५ ॥ संयत्तइन्द्रमन्यवः संचक्राणिदधन्विरे ॥ अधत्वे अधसूर्ये ॥ ६ ॥ उतस्माहित्वामाहुरिन्मघवानंश-
चीपते ॥ दातारमविदीधयुम् ॥ ७ ॥ उतस्मासद्यइत्परिशशमानायसुन्वते ॥ पुरूचिन्मंहसेवसु ॥ ८ ॥ नहिष्मातेशतंचनराधोवरन्तआ-
मुरः ॥ नच्यौलानिकरिष्यतः ॥ ९ ॥ अस्माँअवन्तुतेशतमस्मान्त्सहस्रमूतयः ॥ अस्मान्विश्वाअभिष्टयः ॥ १० ॥ अस्माँइहावृणीष्वसख्या-
यस्वस्तये ॥ महोरायेदिवित्मते ॥ ११ ॥ अस्माँअविड्ढिविश्वहेंद्ररायापरीणसा ॥ अस्मान्विश्वाभिरूतिभिः ॥ १२ ॥ अस्मभ्यंताँअपावृधि-
व्रजाँअस्तेवगोमतः ॥ नवाभिरिंद्रोतिभिः ॥ १३ ॥ अस्माकंधृष्णुयारथोद्युमाँइन्द्रानपच्युतः ॥ गव्युरश्वयुरीयते ॥ १४ ॥ अस्माकमुत्त-
मंकृधिश्रवोदेवेषुसूर्य ॥ वर्षिष्ठन्द्यामिवोपरि ॥ १५ ॥ इति वामदेव्यम् ॥ इति ऋग्वेदिनां पूर्वे द्वारपालादिजाप्यसूक्तानि ॥ अथ दक्षिणे
यजुर्वेदिनां द्वारपालादिजाप्यसूक्तानि ॥ तत्रादौ रुद्रसूक्तम् ॥ यजु० अध्यायः ॥ १६ ॥ ॥ ॐ नमस्तेरुद्रमन्यवऽउतोतइषवेनमः ॥

बाहुभ्यामुततेनमः ॥ १ ॥ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ २ ॥ यामिषुङ्गिरिश-
न्तहस्तेबिभर्ष्यस्तवे ॥ शिवाङ्गिरित्रताङ्कुरुमाहिꣳ सीःपुरुषञ्जगत् ॥ ३ ॥ शिवेनुवचसात्वागिरिशाच्छावदामसि ॥ यथानः सर्वमिज्जगद-
यक्ष्मꣳ सुमनाऽअसत् ॥ ४ ॥ अध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् ॥ अहीँश्च सर्वाञ्जम्भयन्त्सर्वाश्चयातुधान्योधराचीः परासुव ॥ ५ ॥
असौयस्ताम्म्रोऽअरुणऽउतबभ्रुःसुमङ्गलः ॥ येचैनꣳ रुद्राऽअभितोदिक्षुश्रिताः सहस्रशोवैषा ꣳ हेडऽईमहे ॥ ६ ॥ असौयोवसर्पति-
नीलग्ग्रीवोविलोहितः ॥ उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यः सदृष्टोमृडयातिनः ॥ ७ ॥ नमोस्तुनीलग्ग्रीवायसहस्राक्षायमीढुषे ॥ अथो-
येऽअस्यसत्वानोहन्तेभ्योकरन्नमः ॥ ८ ॥ प्रमुञ्चधन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ॥ याश्चतेहस्तऽइषवः परातामगवोवप ॥ ९ ॥ विज्य-
न्धनुःकपर्दिनोविशल्योबाणवाँ २ उत ॥ अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः ॥ १० ॥ यातेहेतिर्म्मीढुष्टमहस्तेबभूवते धनुः ॥
तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥ ११ ॥ परितेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः ॥ अथोयऽइषुधिस्तवारेऽअस्मन्निधेहितम् ॥
॥ १२ ॥ अवतत्यधनुष्ट्वꣳसहस्राक्षशतेषुधे ॥ निशीर्य्यशल्यानाम्मुखाशिवोनःसुमनाभव ॥ १३ ॥ नमस्तऽआयुधायानाततायधृष्णवे ॥
उभाभ्यामुततेनमोबाहुभ्यान्तवधन्वने ॥ १४ ॥ मानोमहान्तमुतमानोऽअर्भकम्मान ऽउक्षन्तमुतमान ऽउक्षितम् ॥ मानोवधीः
पितरम्मोतमातरम्मानः प्रियास्तन्वोरुद्ररीरिषः ॥ १५ ॥ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोवी-
रान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्वाहवामहे ॥ १६ ॥ नमोहिरण्यबाहवेसेनान्येदिशाञ्चपतयेनमोनमोवृक्षेभ्योहरिकेशेभ्यः पशू-

नाम्पतये नमो नमः शष्पिञ्जराय त्विषीमते पथीनांपतये नमो नमो हरिकेशायोपवीतिने पुष्टानाम्पतये नमो नमो बभ्लुशाय ॥ १७ ॥ नमो ब-
भ्लुशाय व्याधिनेन्नानाम्पतये नमो नमो भवस्य हेत्यै जगताम्पतये नमो नमो रुद्रायाततायिने क्षेत्राणाम्पतये नमो नमः सूतायाहन्त्यै वनानाम्पत-
ये नमो नमो रोहिताय ॥ १८ ॥ नमो रोहिताय स्थपतये वृक्षाणाम्पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये नमो नमो मन्त्रिणे वाणि-
जाय कक्षाणाम्पतये नमो नमऽउच्चैर्घोषायाक्रन्दयते पत्तीनाम्पतये नमो नमः कृत्स्नायतया ॥ १९॥ नमः कृत्स्नायतया धावते सत्त्वनाम्पतये नमो
नमो नमः सहमानाय निव्याधिनऽआव्याधिनीनाम्पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमो नमो निचेरवे परिचरायारण्यानाम्प-
तये नमो नमो वञ्चते ॥ २० ॥ नमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमो नमो निषङ्गिणऽइषुधिमते तस्कराणाम्पतये नमो नमः सृकायिभ्यो जि-
घांसद्भ्यो मुष्णताम्पतये नमो नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः ॥ २१ ॥ नमऽउष्णीषिणे गिरिचराय कुलुञ्चानाम्पत-
ये नमो नमऽइषुमद्भ्यो धन्वाविभ्यश्च वो नमो नमऽआतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नमऽआयच्छद्भ्योऽस्यद्भ्यश्च वो नमो नमो विसृ-
जद्भ्यः ॥ २२ ॥ नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्यऽआसीनेभ्यश्च वो नमो नमस्ति-
ष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः ॥ २३ ॥ नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो नमऽ आव्या-
धिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नमऽउगणाभ्यस्तृꣳहतीभ्यश्च वो नमो नमो गणेभ्यः ॥ २४ ॥ नमो गणेभ्यो गणपतिभ्यश्च वो नमो
नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमः सेनाभ्यः ॥२५॥

बाहुभ्यामुततेनमः ॥ १ ॥ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ २ ॥ यामिषुङ्गिरिश-
न्तहस्तेबिभर्ष्यस्तवे ॥ शिवाङ्गिरित्रताङ्कुरुमाहिꣳ सीःपुरुषञ्जगत् ॥ ३ ॥ शिवेनवचसात्त्वागिरिशाच्छावदामसि ॥ यथानः सर्वमिज्जगद-
यक्ष्मꣳ सुमनाऽअसत् ॥ ४ ॥ अध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् ॥ अहीँश्च सर्वाञ्जम्भयन्त्सर्वाश्चयातुधान्योधराचीःपरासुव ॥ ५ ॥
असौयस्ताम्रोऽअरुणऽउतबभ्रुःसुमङ्गलः ॥ येचैनꣳ रुद्राऽअभितोदिक्षुश्रिताः सहस्रशोवैषा ꣳ हेडऽईमहे ॥ ६ ॥ असौयोवसर्पति-
नीलग्ग्रीवोविलोहितः ॥ उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यः सदृष्टोमृडयातिनः ॥ ७ ॥ नमोस्तुनीलग्ग्रीवायसहस्राक्षायमीढुषे ॥ अथो-
येऽअस्यसत्त्वानोहन्तेभ्योकरन्नमः ॥ ८ ॥ प्रमुञ्चधन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ॥ याश्चतेहस्तऽइषवः पराताभगवोवप ॥ ९ ॥ विज्य-
न्धनुःकपर्दिनोविशल्योबाणवाँ २ उत ॥ अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः ॥ १० ॥ यातेहेतिर्म्मीढुष्टमहस्तेबभूवते धनुः ॥
तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥ ११ ॥ परितेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः ॥ अथोयऽइषुधिस्तवारेऽअस्मन्निधेहितम् ॥
॥ १२ ॥ अवतत्यधनुष्ट्वꣳसहस्राक्षशतेषुधे ॥ निशीर्य्यशल्यानाम्मुखाशिवोनःसुमनाभव ॥ १३ ॥ नमस्तऽआयुधायानाततायधृष्णवे ॥
उभाभ्यामुततेनमोबाहुभ्यान्तवधन्वने ॥ १४ ॥ मानोमहान्तमुतमानोऽअर्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् ॥ मानोवधीः
पितरम्मोतमातरम्मानः प्रियास्तन्वोरुद्ररीरिषः ॥ १५ ॥ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोवी-
रान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्त्वाहवामहे ॥ १६ ॥ नमोहिरण्यबाहवेसेनान्येदिशाञ्चपतयेनमोनमोवृक्षेभ्योहरिकेशेभ्यः पशू-

नाम्पतयेनमोनमः शष्पिञ्जरायत्त्विषीमतेपथीनांपतयेनमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमोनमोबभ्लुशाय ॥ १७ ॥ नमोब-
भ्लुशायेव्याधिनेन्नानाम्पतयेनमोनमोभवस्यहेत्यैजगताम्पतयेनमोनमोरुद्रायाततायिनेक्षेत्राणाम्पतयेनमोनमः सूतायाहन्त्यैवनानाम्पत-
येनमोनमोरोहिताय ॥ १८ ॥ नमोरोहितायस्थपतयेवृक्षाणाम्पतयेनमोनमोभुवन्तयेवारिवस्कृतायौषधीनाम्पतयेनमोनमोमन्त्रिणे वाणि-
जायकक्षाणाम्पतयेनमोनमऽउच्चैर्घोषायाक्रन्दयतेपत्तीनाम्पतयेनमोनमः कृत्स्नायतया ॥ १९॥ नमः कृत्स्नायतयाधावतेसत्त्वनाम्पतयेनमो-
नमोनमः सहमानायनिव्याधिनऽआव्याधिनीनाम्पतयेनमोनमोनिषङ्गिणे ककुभायस्तेनानाम्पतयेनमोनमोनिचेरवेपरिचरायारण्यानाम्प-
तयेनमोनमोवञ्चते ॥ २० ॥ नमोवञ्चतेपरिवञ्चतेस्तायूनाम्पतयेनमोनमोनिषङ्गिणऽइषुधिमतेतस्कराणाम्पतयेनमोनमः सृकायिभ्योजि-
घांसद्भ्योमुष्णताम्पतयेनमोनमोसिमद्भ्योनक्तञ्चरद्भ्योविकृन्तानाम्पतयेनमः ॥ २१ ॥ नमऽउष्णीषिणेगिरिचरायकुलुञ्चानाम्पत-
येनमोनमऽइषुमद्भ्योधन्वाविभ्यश्चवोनमोनमऽआतन्वानेभ्यः प्रतिदधानेभ्यश्चवोनमोनमऽआयच्छद्भ्योस्यद्भ्यश्चवोनमोनमोविसृ-
जद्भ्यः ॥ २२ ॥ नमोविसृजद्भ्योविध्यद्भ्यश्चवोनमोनमः स्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमः शयानेभ्यऽआसीनेभ्यश्चवोनमोनमस्ति-
ष्ठद्भ्योधावद्भ्यश्चवोनमोनमः सभाभ्यः ॥ २३ ॥ नमः सभाभ्यः सभापतिभ्यश्चवोनमोनमोश्वेभ्योश्वपतिभ्यश्चवोनमोनमऽ आव्या-
धिनीभ्योविविध्यन्तीभ्यश्चवोनमोनमऽउगणाभ्यस्तृंहतीभ्यश्चवोनमोनमोगणेभ्यः ॥ २४ ॥ नमोगणेभ्योगणपतिभ्यश्चवोनमो-
नमोव्रातेभ्योव्रातपतिभ्यश्चवोनमोनमो गृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमोनमः सेनाभ्यः ॥२५॥

नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो रथिभ्यो ऽअरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमो महद्भ्यो ऽअर्भकेभ्य-
श्च वो नमः ॥ २६ ॥ नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमो नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो-
नमः श्वनिभ्यो मृगयुभ्यश्च वो नमो नमः श्वभ्यः ॥ २७ ॥ नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय-
च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्द्दिने ॥ २८ ॥ नमः कपर्द्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च
नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय ॥ २९ ॥ नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृ-
द्धाय च सवृधे च नमोग्र्याय च प्रथमाय च नमऽआशवे ॥ ३० ॥ नमऽआशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च नमऽऊर्म्याय चावस्व-
न्याय च नमो नादेयाय च द्वीप्याय च ॥ ३१ ॥ नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो-
जघन्याय च बुध्न्याय च नमः सोभ्याय ॥ ३२ ॥ नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नमः श्लोक्याय चावसान्याय च-
नमऽउर्वर्याय च खल्याय च नमो वन्याय ॥ ३३ ॥ नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नमऽआशुषेणाय चाशुरथाय च नमः
शूराय चावभेदिने च नमो बिल्मिने ॥ ३४ ॥ नमो बिल्मिने च कवचिने च नमो वर्म्मिणे च वरूथिने च नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्या-
य चाहनन्याय च नमो धृष्णवे ॥ ३५ ॥ नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुध-
न्वने च ॥ ३६ ॥ नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च नमः कूप्याय ॥ ३७ ॥

नमः॑ कू॒प्या॑य चावट्या॑य च॒ नमो॒ वीध्र्या॑य चातप्या॑य च॒ नमो॒ मेघ्या॑य च विद्युत्या॑य च॒ नमो॒ वर्ष्या॑य चावर्ष्या॑य च॒ नमो॒ वात्या॑य ॥ ३८ ॥ नमो॒ वा-
त्या॑य च॒ रेष्म्या॑य च॒ नमो॑ वास्त॒व्या॑य च वास्तु॒पाय॑ च॒ नमः॒ सोमा॑य च रु॒द्राय॑ च॒ नम॑स्ता॒म्राय॑ चारु॒णाय॑ च॒ नमः॑ श॒ङ्गवे॑ ॥ ३९ ॥ नमः॑ श॒ङ्गवे॑ च पशु॒पत॑ये च॒
नम॑ऽउ॒ग्राय॑ च भी॒माय॑ च॒ नमो॑ऽग्रेव॒धाय॑ च दूरेव॒धाय॑ च॒ नमो॑ ह॒न्त्रे च॒ हनी॑यसे च॒ नमो॑ वृ॒क्षेभ्यो॒ हरि॑केशेभ्यो॒ नम॑स्ता॒राय॑ ॥ ४० ॥ नमः॑ शम्भ॒वाय॑
च मयो॒भवाय॑ च॒ नमः॑ शङ्क॒राय॑ च मयस्क॒राय॑ च॒ नमः॑ शि॒वाय॑ च शि॒वत॑राय च ॥ ४१ ॥ नमः॒ पार्या॑य चावा॒र्याय॑ च॒ नमः॑ प्र॒तर॑णाय चो॒त्तर॑णाय च॒
नम॒स्तीर्थ्या॑य च॒ कूल्या॑य च॒ नमः॒ शष्प्या॑य च॒ फेन्या॑य च॒ नमः॑ सिक॒त्या॑य ॥ ४२ ॥ नमः॑ सिक॒त्या॑य च प्रवा॒ह्या॑य च॒ नमः॑ किꣳशि॒लाय॑ च क्षय॒णाय॑ च॒ न-
मः॑ कप॒र्दिने॑ च पुल॒स्तये॑ च॒ नम॑ऽइरि॒ण्या॑य च प्रप॒थ्या॑य च॒ नमो॒ व्रज्या॑य ॥ ४३ ॥ नमो॒ व्रज्या॑य च॒ गोष्ठ्या॑य च॒ नम॒स्तल्प्या॑य च॒ गेह्या॑य च॒ नमो॑ हृद॒य्या॑य च
निवे॒ष्प्या॑य च॒ नमः॒ काट्या॑य च गह्वरे॒ष्ठाय॑ च॒ नमः॒ शुष्क्या॑य ॥ ४४ ॥ नमः॒ शुष्क्या॑य च हरि॒त्या॑य च॒ नमः॑ पाꣳस॒व्या॑य च रज॒स्या॑य च॒ नमो॒ लोप्या॑य चो
ल॒प्या॑य च॒ नम॒ऽऊर्व्या॑य च॒ सूर्व्या॑य च॒ नमः॑ प॒र्णाय॑ ॥ ४५ ॥ नमः॑ प॒र्णाय॑ च पर्णश॒दाय॑ च॒ नम॑ऽउद्गु॒रमा॑णाय चाभिघ्न॒ते च॒ नम॑ऽआखिद॒ते च॑ प्रखि
द॒ते च॒ नम॑ऽइषु॒कृद्भ्यो॑ धनु॒ष्कृद्भ्य॑श्च वो॒ नमो॒ नमो॑ वः॒ किरि॒केभ्यो॑ दे॒वाना॒ꣳ हृद॑येभ्यो॒ नमो॑ विचि॒न्वत्केभ्यो॒ नमो॑ विक्षि॒णत्केभ्यो॒ नम॑ऽआ-
निर्ह॒तेभ्यः॑ ॥ ४६ ॥ द्रापे॒ऽअन्ध॑सस्पते॒ दरि॑द्र॒ नील॑लोहित ॥ आ॒सां प्र॒जाना॑मे॒षां प॑शू॒नां मा भे॒र्मा रो॒ङ्मो च॑ नः॒ किञ्च॒नाम॑मत् ॥ ४७ ॥
इ॒मा रु॒द्राय॑ त॒वसे॑ कप॒र्दिने॑ क्ष॒यद्वी॑राय॒ प्र भ॑रामहे म॒तीः ॥ यथा॒ शमस॑द्द्वि॒पदे॒ चतु॑ष्पदे॒ विश्वं॑ पु॒ष्टं ग्रामे॑ऽअ॒स्मिन्न॑नातु॒रम् ॥ ४८ ॥ या ते॑ रुद्र शि॒
वा त॒नूः शि॒वा वि॒श्वाहा॑ भेष॒जी ॥ शि॒वा रु॒तस्य॑ भेष॒जी तया॑ नो मृड जी॒वसे॑ ॥ ४९ ॥ परि॑ नो रु॒द्रस्य॑ हे॒तिर्वृ॑णक्तु॒ परि॑ त्वे॒षस्य॑ दुर्म॒तिर॑घा॒योः ॥ अव॑-

स्थिरामघवंद्भ्यस्तनुष्ष्वमीढ्वस्तोकायतनयायमृड ॥ ५० ॥ मीढुष्टमशिवतमशिवोनःसुमनाभव ॥ परमेवृक्षऽआयुधन्निधाय कृत्तिं
वसानऽआचरपिनाकम्बिभ्रदागहि ॥ ५१ ॥ विकिरिद्रविलोहितनमस्तेऽअस्तुभगवः ॥ यास्तेसहस्रꣳ हेतयोन्यमस्मन्निवपन्तुताः ॥
॥ ५२ ॥ सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥ तासामीशानोभगवःपराचीनामुखाकृधि ॥ ५३ ॥ असङ्ख्यातासहस्राणियेरुद्राऽअधि-
भूम्याम् ॥ तेषाꣳ सहस्रयोजनेवधन्वानितन्मसि ॥ ५४ ॥ अस्मिन्महत्यर्णवेन्तरिक्षेभवाऽअधि ॥ तेषाꣳ सहस्रयोजनेवधन्वानित-
न्मसि ॥ ५५ ॥ नीलग्ग्रीवाःशितिकण्ठा दिवꣳरुद्राऽउपश्रिताः ॥ तेषाꣳ सहस्रयोजनेवधन्वानितन्मसि ॥ ५६ ॥ नीलग्ग्रीवाःशि-
तिकण्ठाःशर्वाऽअधःक्षमाचराः ॥ तेषाꣳ सहस्रयोजनेवधन्वानितन्मसि ॥ ५७ ॥ येवृक्षेषुशष्पिञ्जरानीलग्ग्रीवाविलोहिताः ॥ तेषा०
॥ ५८ ॥ येभूतानामधिपतयोविशिखासःकपर्दिनः ॥ तेषा० ॥ ५९ ॥ येपथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः ॥ तेषा० ॥ ६० ॥
येतीर्थानिप्रचरन्तिसृकाहस्तानिषङ्गिणः ॥ तेषा० ॥ ६१ ॥ येन्नेषुविविध्यन्तिपात्रेषुपिबतोजनान् ॥ तेषा० ॥ ६२ ॥ यऽएतावन्तश्चभूयाꣳसश्चदिशोरुद्रावितस्थिरे ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ६३ ॥ नमोस्तुरुद्रेभ्योयेदिवियेषांवर्षमिषवः ॥ तेभ्योदशप्राची-
र्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६४ ॥
नमोस्तुरुद्रेभ्योयेन्तरिक्षेयेषांवातऽइषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुते-
नोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६५ ॥ नमोस्तुरुद्रेभ्योयेपृथिव्यांयेषामन्नमिषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणा-

॥ ७३ ॥

दशंप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६६ ॥ इति रौद्रंसूक्तम् ॥
अथ पौरुषंसूक्तम् ॥ य० अ० ॥ ३१ ॥ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥
पुरुषऽएवेदꣳ सर्व्वंय्यद्भूतंय्यच्चभाव्यम् ॥ उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एतावानस्यमहिमातोज्ज्यायाँश्चपूरुषः ॥ पादोस्य-
व्विश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्द्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततोव्विष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥
॥ ४ ॥ ततोव्विराडजायतव्विराजोऽअधिपूरुषः ॥ सजातोअत्त्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदा-
ज्ज्यम् ॥ पशूँस्ताँश्चक्रेव्वायव्यानारण्यान्ग्राम्याश्चये ॥ ६ ॥ तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानिजज्ञिरे ॥ छन्दाꣳसिजज्ञिरे तस्माद्यजु-
स्तस्मादजायत ॥ ७ ॥ तस्मादश्वाऽअजायन्तयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥ ८ ॥ तंय्यज्ञम्बर्हिषिप्रौ-
क्षन्पुरुषञ्जातमग्रतः ॥ तेनदेवाऽअयजन्तसाध्याऽऋषयश्चये ॥ ९ ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासीत्किम्बाहू-
किमूरूपादाऽउच्येते ॥ १० ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्याꣳ शूद्रोऽअजायत ॥ ११ ॥ चन्द्रमा-
मनसोजातश्चक्षोः सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ १२ ॥ नाभ्याऽआसीदन्तरिक्षꣳ शीर्ष्णोद्यौः सम-
वर्त्तत ॥ पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथालोकाँ २ ऽअकल्पयन् ॥ १३ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसन्तोस्यासीदाज्ज्यङ्ग्रीष्मऽ-
इध्मःशरद्धविः ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः ॥ देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेन-

यज्ञमयजन्तदेवास्तानि धर्म्माणिप्रथमान्यासन् ॥ तेहनाकम्महिमानः सचन्तयत्रपूर्व्वेसाद्ध्याःसन्तिदेवाः ॥ १६ ॥ इति पुरुषसूक्तम् ॥
अथ श्लोकाध्यायं यजु० अ ३० ॥ ॐदेवसवितः प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगन्धर्व्वः केतपूः केतन्नः पुनातुवाचस्पतिर्व्वा-
चन्नःस्वदतु ॥ १ ॥ तत्सवितुर्व्वरेण्यम्भर्ग्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ २ ॥ विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्र-
न्तन्न ऽ आसुव ॥ ३ ॥ विभक्तारᳪ हवामहेवसोश्चित्रस्यराधसः ॥ सवितारन्नृचक्षसम ॥ ४ ॥ ब्रह्मणेब्राह्मणक्षत्रायराजन्यम्मरुद्भ्योवै-
श्यन्तपसेशूद्रन्तमसेतस्करन्नारकायवीरहणम्पाप्मनेक्लीबमाक्रयायाऽअयोगूक्कामायपुंश्चलूमतिक्रुष्टायमागधम ॥ ५ ॥ नृत्तायसूतङ्गीताय-
शैलूषन्धर्म्मायसभाचरन्नरिष्ठायै भीमलन्नर्म्मायरेभᳪ हसायकारिमानन्दायस्त्रीषखम्प्रमदे कुमारीपुत्रम्मेधायैरथकारन्धैर्य्यायतक्षाणम ॥
॥ ६ ॥ तपसेकौलालम्मायायैकर्म्मारᳪ रूपायमणिकारᳪ शुभेवपᳪ शरव्यायाऽइषुकारᳪ हेत्यैधनुष्कारङ्कर्म्मणेज्याकारन्दिष्टायरज्जुसर्ज्जम्मृ-
त्यवेमृगयुमन्तकायश्वनिनम ॥ ७ ॥ नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्योनैषादम्पुरुषव्याघ्रायदुर्म्मदङ्गन्धर्व्वाप्सरोभ्योव्रात्यम्प्रयुग्भ्यऽउन्मत्तᳪ
सर्प्पदेवजनेभ्योप्रतिपदमयेभ्यःकितवमीर्य्यतायाऽअकितवम्पिशाचेभ्योबिदलकारीय्यातुधानेभ्यःकण्टकीकारीम ॥ ८ ॥ सन्धयेजा-
रङ्गेहायोपपतिमार्त्यैपरिवित्तनिर्ऋत्यैपरिविविदानमराध्याऽएदिधिषुःपतिन्निष्कृत्यैपेशस्कारीᳪ संज्ञानायस्मरकारीम्प्रकामोद्यायो-
पसदंवर्णायानुरुधम्बलायोपदाम ॥ ९ ॥ उत्सादेभ्यः कुब्जम्प्रमुदेवामनन्द्वार्भ्यः स्रामᳪ स्वप्नायान्धमधर्म्मायवधिरम्पवित्रायभिषजं-
प्रज्ञानायनक्षत्रदर्शमाशिक्षायैप्रश्निनमुपशिक्षायाऽअभिप्रश्निनम्मर्य्यादायैप्रश्नविवाकम ॥ १० ॥ अर्म्मेभ्योहस्तिपञ्जवायाश्वपम्पु-

ष्ट्यैंगोपालंब्वीर्य्यायाविपालन्तेजसेजपालमिरायैकीनाशङ्कीलालायसुराकारम्भद्रायगृहपꣳ श्रेयसेवित्तधमाध्यक्ष्यायानुक्षत्तारम् ॥ ११ ॥
भायैदार्व्वाहारम्प्रभायाऽअग्न्येधम्ब्रध्नस्यंविष्टपायाभिषेक्तारंव्वर्षिष्ठायनाकायपरिवेष्टारंदेवलोकायपेशितारम्मनुष्यलोकायप्रकरितारꣳ सर्वे-
भ्योलोकेभ्यऽउपसेक्तारमवऽऋत्यैव्वधायोपमंथितारम्मेधायव्वासःपल्पूलीम्प्रकामायरजयित्रीम् ॥ १२ ॥ ऋतयेस्तेनहृदयंव्वैरहत्यायपि-
शुनंव्विवित्त्यैक्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारम्बलायानुचरम्भूम्नेपरिष्कन्दम्प्रियायप्प्रियवादिनमरिष्ट्याऽअश्वसादꣳ स्वर्ग्गायलोकायभागदु-
घंव्वर्षिष्ठायनाकायपरिवेष्टारम् ॥ १३ ॥ मन्यवेयस्तापङ्क्रोधायनिसरंय्योगाययोक्तारꣳ शोकायाभिसर्तारङ्क्षेमायव्विमोक्तारमुत्कूलनि-
कूलेभ्यस्त्रिष्ठिनंव्वपुषेमानस्कृतꣳ शीलायाञ्जनीकारीन्निर्ऋत्यैकोशकारींय्यमायासूम् ॥ १४ ॥ यमाययमसूमथर्व्वभ्योवतोकाꣳ संव्वत्स-
रायपर्य्यायिणीम्परीवत्सरायाविजातामिदावत्सरायातीत्त्वरीमिद्वत्सरायातिष्कद्वरींव्वत्सरायव्विजर्ज्जराꣳ संवत्सरायपलिक्नीमृभुभ्यो-
जिनसन्धꣳ साध्येभ्यश्चर्म्मम्नम् ॥ १५ ॥ सरोभ्योधैवरमुपस्थावराभ्योदाशंव्वैशन्ताभ्योबैन्दन्नड्वलाभ्यःशौष्कलम्पारायमार्ग्गारम-
वारायकैवर्त्तन्तीर्थेभ्यऽआन्दंव्विषमेभ्योमैनालꣳ स्वनेभ्यःपर्णकङ्गुहाभ्यःकिरातꣳ सानुभ्योजम्भकम्पर्व्वतेभ्यः किम्पूरुषम् ॥ १६ ॥
बीभत्सायैपौल्कसंव्वर्णायहिरण्यकारन्तुलायैव्वाणिजम्पश्चादोषायग्लाविनंव्विश्वेभ्योभूतेभ्यः सिध्मलम्भूत्यैजागरणमभूत्यैस्वपनमार्त्त्यैज-
नवादिनंव्व्यृद्ध्याऽअपगल्भꣳ संꣳशरायप्प्रच्छिदम् ॥ १७ ॥ अक्षराजायकितवङ्कृतायादिनवदर्शन्त्रेतायैकल्पिनन्द्वापरायाधिकल्पिनं-
मास्कन्दायसभास्थाणुम्मृत्यवे गोव्यच्छमन्तकायगोघातङ्क्षुधेयोगाम्विकृन्तन्तम्भिक्षमाणऽउपतिष्ठतिदुष्कृतायचरकाचार्य्यम्पाप्मनेसैल-

गम्म् ॥ १८ ॥ प्रतिश्रुत्कायाऽअर्तनङ्घोषायभषमन्तायबहुवादिनमनन्तायमूकꣳ शब्दायाडंबराघातम्महसेवीणावादङ्क्रोशायतूणवध्ध्मम्-
वरस्प्परायशङ्खध्ध्मंव्वनायव्वनपमन्यतोरण्यायदावपम् ॥ १९ ॥ नर्म्मायपुँश्श्चलूँ हसायकारिंय्यादंसेशाबल्याङ्ग्रामण्युङ्गणकमभि-
क्रोशकुन्तान्महसेवीणावादम्पाणिग्घ्नन्तूणवध्ध्मन्तान्नृतायानन्दायतलवम् ॥ २० ॥ अग्नयेपीवानम्पृथिव्व्यैपीठसर्प्पिणंव्वायवेचाण्डाल-
मन्तरिक्षायव्वꣳ शनर्तिनन्दिवेखलतिꣳ सूर्य्यायहर्य्यक्षन्नक्षत्रेब्भ्यः किर्म्मिरञ्चन्द्रमसेकिलासमन्हेशुक्लम्पिङ्गाक्षꣳ रात्र्यैकृष्णम्पिङ्गाक्षम् ॥
॥ २१ ॥ अथैतानष्टौव्विरूपानालभतेतिदीर्ग्घञ्चातिह्रस्वञ्चातिस्त्थूलञ्चातिकृशञ्चातिशुक्लञ्चातिकृष्णञ्चातिकुल्वञ्चातिलोमशञ्च ॥ अशूद्रा-
ऽअब्राह्मणास्तेप्राजापत्त्याः ॥ मागधः पूँश्चलीकितवꣳक्लीबोशूद्राऽअब्राह्मणास्तेप्प्राजापत्त्याः ॥ २२ ॥ इति श्लोकाऽध्यायःसमाप्तः ॥
अथ शुक्रियं ऋचं वाचं सूक्तम् ॥ यजु० अ० ॥ ३६ ॥ ॐ ऋचंवाचम्प्रपद्येमनोयजुः प्प्रपद्येसामप्प्राणम्प्रपद्येचक्षुःश्श्रोत्रम्प्रपद्ये ॥
व्वागोजः÷सहौजोमयिप्प्राणापानौ ॥ १ ॥ यन्मेच्छिद्रञ्चक्षुषोहृदयस्यमनसोव्वातितृणम्बृहस्पतिम्मेतद्दधातु ॥ शन्नोभवतुभुवनस्ययस्पतिः÷
॥ २ ॥ भूर्भ्भुवःस्वः तत्सवितुर्व्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः÷ प्प्रचोदयात् ॥ ३ ॥ कयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥
कयाशचिष्ठयावृता ॥ ४ ॥ कस्त्वासत्योमदानाम्मꣳ हिंष्ठोमत्सदन्धसः ॥ दृढाचिदारुजेवसु ॥ ५ ॥ अभीषुणः सखीनामविताजरितॄणाम् ॥
शतम्भवास्यूतिभिः÷ ॥ ६ ॥ कयात्वन्नऽऊत्याभिप्प्रमन्दसेवृषन् ॥ कयास्तोतृब्भ्यऽआभर ॥ ७ ॥ इन्द्रोव्विश्वस्यराजति ॥ शन्नोऽअस्तु-
द्विपदेशञ्चतुष्पदे ॥ ८ ॥ शन्नोमित्रः शंव्वरुणः शन्नोभवत्वर्य्यमा ॥ शन्नऽइन्द्रोबृहस्पतिः शन्नोविष्णुरुरुक्क्रमः ॥ ९ ॥ शन्नोव्वातः÷

पर्वतो शन्नस्तपतुसूर्य्यः ॥ शन्नःकनिक्रदद्देवः पर्ज्जन्योऽअभिवर्षतु ॥ १० ॥ अहानिशम्भवन्तुनः शꣳ रात्रीःप्प्रतिधीयताम् ॥ शन्नऽ-
इन्द्राग्ग्नीभवतामवोभिः शन्नऽइन्द्रावरुणारातहव्या ॥ शन्नऽइन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शंय्योः ॥ ११ ॥ शन्नो
देवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ १२ ॥ स्योनापृथिविनो भवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्प्रथाः ॥ १३ ॥
आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ १४ ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ १५ ॥
तस्म्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ १६ ॥ द्यौःशान्तिरन्तरिक्षꣳ शान्तिःपृथिवीशांतिरापःशांतिरोषधयः
शान्तिः ॥ वनस्प्पतयः शांतिर्व्विश्श्वेदेवाःशान्तिर्ब्रह्मशान्तिः सर्व्वꣳ शांतिः शांतिरेवशान्तिः सामाशान्तिरेधि ॥ १७ ॥ दृतेदृꣳ हमामि-
त्रस्यमाचक्षुषासर्व्वाणिभूतानिसमीक्षंताम् ॥ मित्रस्याहञ्चक्षुषासर्वाणिभूतानिसमीक्षे ॥ मित्रस्यचक्षुषासमीक्षामहे ॥ १८ ॥ दृतेदृꣳ हमा ॥
ज्योक्तेसन्दृशिजीव्यासञ्ज्योक्तेसन्दृशिजीव्यासम ॥ १९ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्यांस्तेऽअस्म्मत्तपन्तुहेतयः
पावकोऽअस्म्मब्भ्यꣳ शिवोभव ॥ २० ॥ नमस्तेऽअस्तुविद्युतेनमस्तेस्तनयित्नवे ॥ नमस्तेभगवन्नस्तुयतः स्वः समीहसे ॥ २१ ॥
यतोयतः समीहसेततोनोऽअभयंकुरु ॥ शन्नःकुरुप्प्रजाब्भ्योभयन्नः पशुभ्यः ॥ २२ ॥ सुमित्रियानऽआपओषधयःसन्तुदुर्म्मित्रियास्तस्मै-
सन्तुय्योस्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥ २३ ॥ तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदः शतञ्जीवेमशरदःशतꣳ शृणुयामशरदः
शतंप्रब्रवामशरदः शतमदीनाः स्यामशरदः शतम्भूयश्चशरदः शतात् ॥ २४ ॥ इति शुक्रियं ऋचं वाचं सूक्तम् ॥ अथ मण्डलाध्यायः ॥

यदेतन्मण्डलंतपतितन्महदुक्थंतादृचः सऋचांलोकोथयदेतदर्च्चिर्दीप्यतेतन्महाव्रतंतानिसामानिससाम्नांलोकोथयऽएषऽएतस्मिन्मण्डलेपु-
रुषः सोग्निस्तानियजूꣳषिसयजुषांलोकः ॥ १ ॥ सैषात्रय्येवविद्यातपति तद्वैतदप्यविद्वाꣳ सआहुस्त्रयीवा ऽएषाविद्यातपतीतिवाग्घै-
वतत्पश्यन्तीवदति ॥ २ ॥ सएषएषमृत्युर्यएषएतस्मिन्मण्डलेपुरुषोथैतमृतंयदेतदर्चिर्दीप्यते तस्मान्मृत्युर्नम्रियतेमृतेह्यन्तस्तदुनदृश्यतेह्यन्तः
॥ ३ ॥ तदेषश्लोकोभवत्यन्तरंमृत्योरमृतमित्यवरꣳ ह्येतन्मृत्योरमृतंमृत्यावमृतमाहितमित्येतस्मिन् हिपुरुषएतन्मण्डलंप्रतिष्ठितन्तपतिमृत्यु-
र्विवस्वन्तंवस्त ऽइत्यसौवाआदित्योविवस्वानेषह्यहोरात्रेविवस्तेतमेषवस्तेसर्वतोह्यनेनपरिवृतोमृत्योरात्माविवस्वतीत्येतस्मिन् हिमण्डलऽएत-
स्यपुरुषस्यात्मैतदेषश्लोको भवति ॥ ४ ॥ तयोर्वाएतयोरुभयोरेतस्यचार्चिषऽएतस्यपुरुषस्यैतन्मण्डलं प्रतिष्ठातस्मान्महदुक्थम्परस्मैनशꣳ
सन्नेदेतांप्रतिष्ठांछिनदाऽइत्येताꣳ हसप्रतिष्ठांछिनत्तियोमहदुक्थंपरस्मैशꣳ सतितस्मादुक्थशसंभूयिष्ठंपरिचक्षते प्रतिष्ठाच्छिन्नोहिभवतीत्यधि-
दैवतम् ॥ ५ ॥ अथाधियज्ञं यदेतन्मण्डलन्तपत्ययꣳ सरुक्मोथयदेतदर्शिर्दीप्यतऽइदन्तत्पुष्करपर्णमापोह्येताआपः पुष्करपर्णमथयऽएष-
एतस्मिन्मण्डलेपुरुषोयमेवसयोयꣳ हिरण्मयःपुरुषस्तदेतद्वैतत्रयꣳ संस्कृत्येहोपधत्तेतद्यज्ञस्यैवानुसꣳ स्थामूर्द्धमुत्क्रामतितदेतमप्येतियएष-
तपतितस्मादग्निन्नाद्रियेतपरिहन्तुममुत्रह्येषतदाभवतीत्युएवाधियज्ञम् ॥ ६ ॥ अथाध्यात्मं यदेतन्मण्डलंतपतियश्चैषरुक्मइदंतच्छुक्लमक्षन्न-
थयदेतदर्चिर्दीप्यतेयच्चैतत्पुष्करपर्णमिदंतत्कृष्णमक्षन्नथयएषएतस्मिन्मण्डलेपुरुषोयश्चैषहिरण्मयःपुरुषोयमेवसयोयंदक्षिणेक्षन्पुरुषः ॥ ७ ॥ ॥ ७६ ॥
सएषएवलोकम्पृणातामेषसोग्निरभिसंपद्यतेतस्यैतन्मिथुनंयोयꣳ सव्येक्षन्पुरुषोर्द्धमहैतदात्मनोयन्मिथुनंयदावैसहमिथुनेनाथसर्वोथकृत्स्नः

तायेतद्यत्तेद्वेभवतोद्वंद्वꣳ हि मिथुनं प्रजननंतस्माद्द्वेद्वेलोकंपृणेउपधीयेतेतस्माद्द्वाभ्यांद्वाभ्यांचितिंप्रणयन्ति ॥ ८ ॥ सएवएवेंद्रोयोयंदक्षिणे-
क्षन्पुरुषोयेमिन्द्राणीताभ्यांदेवाएतांविधृतिमकुर्वन्नासिकांतस्माज्जायायाअन्तेनाश्नीयाद्वीर्यवान् हास्माज्जायतेवीर्यवन्तमुहसाजनयतियस्या-
अन्तेनाश्नाति ॥ ९ ॥ तदेतद्देवव्रतꣳ राजन्यबंधवोमनुष्याणामनुतमांगोपायन्तितस्मादेतेषुवीर्यवाञ्जायतेमृतवाकाव्रयसा ७७ साक्षिप्रश्ये-
नंजनयति ॥ १० ॥ तौहृदयाकाशंप्रत्यवेत्यमिथुनीभवतस्तौयदामिथुनस्यान्तंगच्छतोथहैतत्पुरुषः स्वपितितद्यथाहैवेदं मानुषस्यमिथुन-
स्यान्तंगत्वासम्विदइवभवत्येवꣳ हैवैतदसंविदइवभवतिदैवꣳ ह्येतन्मिथुनंपरमोह्येषआनन्दः ॥ ११ ॥ तस्मादेवंविच्छिस्वप्याल्लोक्यꣳ हैतेए-
वतद्देवतेमिथुनेनप्रियेणधाम्नासमर्द्धयतितस्मादुहस्वपतंधुरेवनबोधयेन्नेदेतेदेवतेमिथुनीभवन्त्यौहिनसानीतितस्मादुहैतत्सुषुपुषः श्लेष्मणमिव-
मुखंभवत्येतेएवतद्देवतेरेतः सिंचतस्तस्माद्रेतसइदꣳ सर्वꣳ संभवतियदिदंकिञ्च ॥ १२ ॥ सऽएषएवमृत्युर्यएषएतस्मिन्मण्डलेपुरुषोयश्चायं
दक्षिणेक्षन्पुरुषस्तस्यहैतस्यहृदयेपादावतिहतौतौहैतदाच्छिद्योत्क्रामतिसयदोत्क्रामत्यथहैतत्पुरुषोम्रियतेतस्मादुहैतत्प्रेतमाहुराच्छेद्यस्येति ॥
॥ १३ ॥ एषउएवप्राणऽएषहीमाः सर्वाःप्रजाः प्रणयतितस्यैतेप्राणाः स्वाः सयदास्वपित्यथैनमेतेप्राणाः स्वाअपियन्तितस्मात्स्वाप्ययः
स्वाप्ययोहवैतꣳ स्वप्नइत्याचक्षतेपरोक्षंपरोक्षकामाहिदेवाः ॥ १४ ॥ सएतैः सुप्तोनकस्यचनवेदनमनसासङ्कल्पयतिनवाचान्नस्यरसंविजाना-
तिनप्राणेनगंधंविजानातिनचक्षुषापश्यतिनश्रोत्रेणशृणोत्येतꣳ ह्येतेतदापीताभवन्तिसएषएकः सनप्रजासुबहुधाव्याविष्टस्तस्मादेकासतीलो-
कम्पृणासर्वमग्निमनुविभवंत्यथयदेकएवतस्मादेका ॥ १५ ॥ तदाहुरेकोमृत्युर्बह्व ३ इत्येकश्चबह्वश्चेतिहब्रूयाद्यदिहासावमुत्रतेनैकोथय-

दिहप्रजासुवहुधाव्या विष्टस्तेनोबहुवः ॥ १६ ॥ तदाहुरन्तिकेमृत्युर्दूरा ३ इत्यन्तिकेचदूरेचेतिहब्रूयाद्यदुहायमिहाध्यात्मन्तेनान्तिकेथयदसा-
वमुत्रतेनोदूरे ॥ १७ ॥ तदेषश्लोकोभवत्यन्ने भात्यश्रितोरुसानाᳪसंक्षरेमृतइतियदेतन्मण्डलंतपतितदन्नमथयएषएतस्मिन्मण्डलेपुरुषः ॥
सोत्तासएतस्मिन्नन्नेपश्रितोभातीत्यधिदेवतम् ॥ १८ ॥ अथाध्यात्ममिदमेवशरीरमन्नमथयोयंदक्षिणेक्षन्पुरुषः सोत्तासएतस्मिन्नन्नेपश्रि-
तोभाति ॥ १९ ॥ तमेतमग्निरित्यध्वर्यवउपासतेयजुरित्येषहीदᳪ सर्वंयुनक्तिसामेतिच्छंदोगाऽएतस्मिन्हीदᳪ सर्वᳪ समानमुक्थमितिब-
ह्वृचाएषहीदᳪ सर्वमुत्थापयतियातुरितियातुविद एतेनहीदᳪ सर्वंयतंविषमितिसर्पाः सर्पइतिसर्पविद ऊर्गितिदेवारयिरितिमनुष्यामाये-
त्यसुराः स्वधेतिपितरोदेवजलइतिदेवजनविदोरूपमितिगंधर्वागंधइत्यप्सरसस्तंयथायथोपासतेतदेवभवतितद्धैनान् भूत्वावतितस्मादेनमेवं-
वित्सर्वैरेवैतैरुपासीतसर्वᳪ हैतद्भवतिसर्वᳪ हेनमेतद्भूत्वावति ॥ २० ॥ सएषत्रीष्टकोग्निर्ऋगेकायजुरेकासामैकातद्यांकाञ्चात्रचोपदधातिरु-
क्मएवतस्याआयतनमथयांयजुषापुरुषएवतस्याआयतनमथयाᳪसाम्नापुष्करपर्णमेवतस्याआयतनमेवन्त्रीष्टकः ॥ २१ ॥ तेवाएतेउभेए-
षचरुक्मएतच्चपुष्करपर्णमेतंपुरुषमपीतउभेह्यृक्सामेयजुरपीतएवम्वेकेष्टकः ॥ २२ ॥ सएषएवमृत्युर्यएषएतस्मिन्मण्डलेपुरुषोयश्चायंदक्षि-
णेक्षन्पुरुषः ॥ सएषएवंविदआत्माभवतिसयदैवंविदस्माँल्लोकात्प्रैत्यथैतमेवात्मानमभिसंभवतिसोभवतिमृत्युर्ह्यस्यात्माभवति ॥ २३ ॥ इति
मण्डलाध्यायं ब्राह्मणसूक्तम् ॥ इति द्वारजाप्यसूक्तानि ॥ अथ जापकजप्यानिसूक्तानि ॥ तत्रादौ शाक्रंसूक्तम् ॥ यजु० अ० १७ मंत्र
३३ ॥ ॐआशुः शिशानोवृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽएकवीरः शतᳪ सेनाअजयत्साकमिन्द्रः ॥ १ ॥

सङ्क्रन्दनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिन्द्रेणजयततत्सहध्वंयुधोनरऽइषुहस्तेनवृष्णा ॥ २ ॥ सऽइषुहस्तैःसनि-
षङ्गिभिर्वशीसꣳ स्रष्टासयुधऽइन्द्रोगणेन ॥ सꣳ सृष्टजित्सोमपाबाहुशर्ध्युग्रधन्वाप्रतिहिताभिरस्ता ॥ ३ ॥ बृहस्पतेपरिदीयारथेनर-
क्षोहामित्राँ २ ऽअपबाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणोयुधाजयन्नस्माकमेध्यविताराथानाम् ॥ ४ ॥ बलविज्ञायस्स्थविरः प्रवीरः
सहस्वान्वाजीसहमानऽउग्रः ॥ अभिवीरोऽअभिसत्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ५ ॥ गोत्रभिदङ्गोविदंवज्रबाहुञ्जयन्तम-
ज्मप्रमृणन्तमोजसा ॥ इमꣳ सजाताऽअनुवीरयध्वमिन्द्रꣳ सखायोऽअनुसꣳ रभध्वम् ॥ ६ ॥ अभिगोत्राणिसहसागाहमानोदयोवीरः
शतमन्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाडयुध्योस्माकꣳ सेनाऽअवतुप्रयुत्सु ॥ ७ ॥ इन्द्रऽआसान्नेताबृहस्पतिर्दक्षिणायज्ञःपुरऽएतु-
सोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्रम् ॥ ८ ॥ इन्द्रस्यवृष्णोवरुणस्यराज्ञऽआदित्यानाम्मरुताꣳशर्द्धऽउग्रम् ॥
महामनसाम्भुवनच्च्यवानाङ्घोषोदेवानाञ्जयतामुदस्थात् ॥ ९ ॥ उद्धर्षयमघवन्नायुधान्युत्सत्वनाम्मामकानाम्मनाꣳसि ॥ उद्वृत्रहन्वा-
जिनां वाजिनान्युद्रथानाञ्जयताँयन्तुघोषाः ॥ १० ॥ अस्माकमिन्द्रःसमृतेषुध्वजेष्वस्माकंयाऽइषवस्ताजयन्तु ॥ अस्माकंवीराऽउत्तरेभ-
वन्त्वस्माँ २ ऽउदेवाऽअवताहवेषु ॥ ११ ॥ अमीषाञ्चित्तम्प्रतिलोभयन्तीगृहाणाङ्गान्यप्वेपरेहि ॥ अभिप्रेहिनिर्दहहृत्सुशोकैरन्धेनामित्रा
स्तमसासचन्ताम् ॥ १२ ॥ अवसृष्टापरापतशरव्येब्रह्मसꣳशिते ॥ गच्छामित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः ॥ १३ ॥ प्रेताजयतान-
रऽइन्द्रोवः शर्मयच्छतु ॥ उग्रावःसन्तु बाहवोनाधृष्यायथासथ ॥ १४ ॥ असौयासेनामरुतः परेषामभ्येतिनऽओजसास्पर्द्धमाना ॥

ताँ२ऽहततमसापवव्रतेनयथामीअन्योऽ अन्यन्नजानन् ॥ १५ ॥ यत्रबाणाःसम्पतन्तिकुमाराविशिखाऽइव ॥ तन्नऽइन्द्रोबृहस्पतिरदितिः
शर्म्मयच्छतुविश्वाहाशर्म्मयच्छतु ॥ १६ ॥ मर्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्वरीयोवरुणस्तेकृणोतुज-
यन्तन्त्वानुदेवामदन्तु ॥ १७ ॥ इति शाक्रं सूक्तम् ॥ अथ रौद्रं सूक्तम् ॥ यजु० अ० ॥ १६ ॥ मंत्र ॥ ४८ ॥ इमारुद्रायतवसेकपर्द्दिने-
क्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥ १ ॥ यातेरुद्रशिवातनूः शिवाविश्वाहाभे-
षजी ॥ शिवारुतस्यभेषजीतयानोमृडजीवसे ॥ २ ॥ परिनोरुद्रस्यहेतिर्वृणक्तुपरित्त्वेषस्यदुर्म्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्व-
मीढ्वस्तोकायतनयायमृड ॥ ३ ॥ मीढुष्टमशिवतमशिवोनः सुमना भव ॥ परमेवृक्षऽआयुधन्निधायकृत्तिंवसानऽआचरपिनाकम्बिभ्रदा-
गहि ॥ ४ ॥ विकिरिद्रविलोहितनमस्तेऽअस्तु भगवः ॥ यास्तेसहस्रꣳ हेतयोन्यमस्मन्निवपन्तुताः ॥ ५ ॥ सहस्राणिसहस्रशोबाह्वोस्त-
वहेतयः ॥ तासामीशानोभगवः पराचीनामुखाकृधि ॥ ६ ॥ इति रौद्रंसूक्तम् ॥ अथ सौम्यं सूक्तम् ॥ यजु० अ० ॥ ३४ ॥ मंत्र ॥ २१ ॥
ॐ सोमोधेनुꣳ सोमोऽअर्वन्तमाशुꣳ सोमोवीरङ्कर्म्मण्यन्ददाति ॥ सादन्यंविदथ्यꣳ सभेयम्पितृश्रवणंयोददाशदस्मै ॥ १ ॥ त्वमि-
माऽओषधीःसोमविश्वास्त्वमपोऽअजनयस्त्वङ्गाः ॥ त्वमाततन्थोर्वन्तरिक्षन्त्वञ्ज्योतिषाविततमोववर्त्थ ॥ २ ॥ देवेननोमनसादेवसोमरायो
भागꣳ सहसावन्नभियुद्ध्य ॥ मात्वातनदीशिषेवीर्य्यस्योभयेभ्यःप्रचिकित्सागविष्टौ ॥ ३ ॥ अष्टौव्यख्यत्ककुभः पृथिव्यास्त्रीधन्वयो
जनासप्तसिंधून् ॥ हिरण्याक्षःसवितादेवऽआगाद्दधद्रत्नादाशुषेवार्य्याणि ॥ ४ ॥ हिरण्यपाणिः सवितविचर्षणिरुभेद्यावापृथिवीऽअ-

न्तरीयते ॥ अपामीवाम्बाधते वेति सूर्य्यम भिकृष्णेन रजसा द्यामृणोति ॥ ५ ॥ हिरण्यहस्तोऽअसुरः सुनीथः सुमृडीकः स्ववाँयात्वर्वाङ् ॥
अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषङ्गृणानः ॥ ६ ॥ इति सौम्यं सूक्तम् ॥ अथ कौष्माण्डं सूक्तम् ॥ यजु० अ० ॥ २० ॥
मंत्र ॥ १४ ॥ ॐ यद्देवा देवहेडनन्देवासश्चकृमा वयम् ॥ अग्निर्म्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳ हसः ॥१॥ यदि दिवा यदि नक्तमेनाꣳसि चकृ-
मा वयम् ॥ वायुर्म्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳ हसः ॥ २ ॥ यदि जाग्रद्यदि स्वप्नऽएनाꣳसि चकृमा वयम् ॥ सूर्य्यो मा तस्मादेनसो-
विश्वान्मुञ्चत्वꣳ हसः ॥ ३ ॥ यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ॥ यच्छूद्रे यदर्य्ये यदेनश्चकृमा वयम् यदेकस्याधि धर्म्मणि तस्यावयजं-
नमसि ॥ ४ ॥ इति कौष्मांडंसूक्तम् ॥ ततो जातवेदसं ( आग्नेयं ) सूक्तं पठेत् ॥ अथ जातवेदसं सूक्तम् ॥ यजुः अ० २७ मं० १ ॥
ॐ समास्त्वाग्नऋतवो वर्धयन्तु संवत्सराऋषयो यानि सत्या ॥ संदिव्येन दीदिहि रोचनेन विश्वाआभाहि प्रदिशश्चतस्रः ॥ १ ॥ संचेध्यस्वाग्ने-
प्रचबोधयैनमुच्चतिष्ठ महते सौभगाय ॥ माचरिषदुपसत्ता तेअग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये ॥ २ ॥ त्वामग्ने वृणते ब्राह्मणाइमे शिवोअग्ने सं-
वरणे भवानः ॥ सपत्नहानो अभिमातिजिच्च स्वेगये जागृह्यप्रयुच्छन् ॥ ३ ॥ इहैवाग्ने अधिधारया रयिं मात्वा निक्रन्पूर्वचितो निकारिणः ॥
क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः ॥ ४ ॥ क्षत्रेणाग्ने स्वायुः सꣳ रभस्व मित्रेणाग्ने मित्रधेये यतस्व ॥ सजातानां मध्यमस्थाएधि-
राज्ञामग्ने विहव्यो दीदिहीह ॥ ५ ॥ अतिनिहो अतिस्रिधोऽत्यचित्तिमत्यरातिमग्ने ॥ विश्वाह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवीराꣳ रयिं दाः
॥ ६ ॥ अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह ॥ विश्वाआशाः प्रमुञ्चन्मानुषीर्भियः शिवेभिरद्य परिपाहि नो वृधे ॥ ७ ॥

बृहस्पतेसवितर्बोधयैनꣳ सꣳ शितंचित्सन्तराꣳ सꣳ शिशाधि ॥ वर्धयैनंमहतेसौभगायविश्वएनमनुमदन्तुदेवाः ॥ ८ ॥ अमुत्रभूयादधय-
द्यमस्यबृहस्पते अभिशस्तेरमुञ्चः ॥ प्रत्यौहतामश्विनामृत्युमस्माद्देवानामग्नेभिषजाशचीभिः ॥ ९ ॥ उद्वयंतमसस्परिस्वः पश्यन्तउत्तरम् ॥
देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमम् ॥ १० ॥ इति जातवेदसमनुवाकम् ॥ अथ सौरं सूक्तम् ॥ यजु० अ० ॥ ३३ ॥ मंत्र ॥ ३० ॥
विभ्राड्बृहत्पिबतुसोम्यम्मध्वायुर्दधद्यज्ञपतावविह्रुतम् ॥ वातजूतोयोऽअभिरक्षतित्मनाप्रजाःपुपोषपुरुधाविराजति ॥ १ ॥
उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः ॥ दृशेविश्वायसूर्यम् ॥ २ ॥ येनापावकचक्षसाभुरण्यन्तञ्जनाँ २ अनु ॥ त्वंवरुणपश्यसि ॥ ३ ॥
दैव्यावध्वर्यूआगतꣳ रथेनसूर्यत्वचा ॥ मध्वायज्ञꣳ समञ्जाथे ॥ तम्प्रत्नथायंवेनश्चित्रन्देवानाम् ॥ ४ ॥ आनऽइडाभिर्विदथेसुशस्तिवि-
श्वानरः सवितादेवऽएतु ॥ अपियथायुवानोमत्सथानोविश्वञ्जगदभिपित्वेमनीषा ॥ ५ ॥ यदद्यकच्चवृत्रहन्नुदगाऽअभिसूर्य ॥ सर्वन्तदि-
न्द्रतेवशे ॥ ६ ॥ तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य ॥ विश्वमाभासिरोचनम् ॥ ७ ॥ तत्सूर्यस्यदेवत्वन्तन्महित्वमध्याकर्त्तोर्विततꣳ
सञ्जभार ॥ यदेदयुक्तहरितः सधस्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥ ८ ॥ तन्मित्रस्यवरुणस्याभिचक्षेसूर्योरूपङ्कृणुतेद्योरुपस्थे ॥ अन-
न्तमन्यद्रुशदस्यपाजः कृष्णमन्यद्धरितः सम्भरन्ति ॥ ९ ॥ बण्महाँ २ ऽअसिसूर्यबडादित्यमहाँ २ ऽअसि ॥ महस्तेसतोमहिमापनस्यतेद्धा-
देवमहाँ २ ऽ असि ॥ १० ॥ बट्सूर्यश्रवसामहाँ २ असिसत्रादेवमहाँ २ असि ॥ मह्नादेवानामसुर्यः पुरोहितोविभुज्ज्योतिरदाभ्यम् ॥ ॥ ७९ ॥
॥ ११ ॥ श्रायन्तऽइवसूर्यंविश्वेदिन्द्रस्यभक्षत ॥ वसूनिजातेजनमानऽओजसाप्रतिभागन्नदीधिम ॥ १२ ॥ अद्यादेवाऽउदितासूर्यस्य-

निरꣳहसः पिपृतानिरवद्यात् ॥ तन्नोमित्रोवरुणोमामहन्तामदितिः सिन्धुः पृथिवीऽउतद्यौः ॥ १३ ॥ आकृष्णेनरजसावर्त्तमानोनि
वेशयन्नमृतंमर्त्यञ्च ॥ हिरण्ययेन सवितारथेनादेवोयातिभुवनानिपश्यन् ॥ १४ ॥ इति सौरसूक्तम् ॥ अथ शांतिकमंत्राः ॥ ॐआनो-
भद्राः क्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ देवानाम्भ-
द्रासुमतिर्ऋजूयतान्देवानाꣳ रातिरभिनोनिवर्त्तताम् ॥ देवानाꣳ सख्यमुपसेदिमावयन्देवानऽआयुः प्रतिरन्तुजीवसे ॥ २ ॥
तान्पूर्वयानिविदाहूमहेवयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥ अर्य्यमणंवरुणꣳ सोमंमश्विनासरस्वतीनः सुभगामयस्करत् ॥ ३ ॥ तन्नो-
वातोमयोभुवातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणः सोमसुतोमयोभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशान-
ञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्तिनऽइन्द्रोवृद्ध-
श्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वामरुतः पृश्निमातरः शुभं-
यावानोविदथेषुजग्मयः ॥ अग्निर्जिह्वामनवः सूरचक्षसोविश्वेनोदेवाऽ अवसागमन्निह ॥ ७ ॥ भद्रङ्कर्णेभिः शृणुयामदेवाभद्रम्पश्येमा
क्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितंयदायुः ॥ ८ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् ॥
पुत्रासोयत्रपितरो भवन्तिमानोमद्ध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाऽअ-
दितिः पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ १० ॥ इति शांत्यनुवाकम् ॥ अथ पावमानसूक्तम् ॥ यजु० अ० ॥ १९ ॥ मंत्र ॥

ॐ पुनन्तुंमापितरं÷ सोम्यासं÷ पुनन्तुंमापितामहाः पुनन्तुप्रपितामहाः ॥ पवित्रेणशतायुषा पुनन्तुंमापितामहाः पुनंतुप्रपितामहाः ॥
पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै ॥ १ ॥ अग्नआयूं ꣳषिपवसआसुवोर्जमिषंचनः आरेबाधस्वदुच्छुनाम् ॥ २ ॥ ॐपुनन्तुंमादेवजनाः
पुनन्तुमनंसाधियं÷ ॥ पुनन्तुविश्वाभूतानिजातवेदः पुनीहिमां ॥ ३ ॥ पवित्रेणपुनीहिमाशुक्रेणदेवदीद्यंत् ॥ अग्नेक्रत्वाक्रतूँ१ऽरनुं ॥ ४ ॥
यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा ॥ ब्रह्मतेनंपुनातुमा ॥ ५ ॥ पवमानः सोऽअद्यनं÷ पवित्रेणविचर्षणिः ॥ यः पोतासपुंनातुमा ॥ ६ ॥
उभाभ्यांदेवसवितः पवित्रेणसवेनंच ॥ माम्पुंनीहिविश्वतं÷ ॥ ७ ॥ वैश्वदेवीपुंनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृंष्ठाः ॥ तयाम-
दन्तः सधमादेषुवयꣳ स्यामपतयोरयीणाम् ॥ ८ ॥ इति पावमानसूक्तम् ॥ इति यजुर्वेदिनां द्वारपालादिजाप्यसूक्तानि समाप्तानि ॥
अथ पश्चिमेसामवेदिनां द्वारपालजाप्यसूक्तानि ॥ तत्रादौ वामदेव्यसूक्तम् ॥ सामवेदे उत्तरार्चिकस्य प्रथमप्रपाठके द्वादशं सूक्तम् ॥
कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ १ ॥ कस्त्वासत्योमदानामंहिष्ठोमत्सदन्धसः ॥ दृढाचिदारुजेवसु ॥ २ ॥
अभीषुणः सखीनामविताजरितृणाम् ॥ शतंभवास्यूतये ॥ ३ ॥ इति वामदेव्यं सूक्तम् ॥ अथ बृहत्सामसूक्तम् ॥ साम० अध्याय ॥ ३ ॥
खंड ॥ ४ ॥ ॐत्वामिद्धिहवामहेसातौवाजस्यकारवः ॥ त्वांवृत्रेष्विन्द्रसत्पतिंनरस्त्वांकाष्ठास्वर्वतः ॥ १ ॥ सत्वंनश्चित्रवज्रहस्तधृष्णुयामह-
स्तवानोअद्रिवः ॥ गामश्वꣳ रथ्यमिन्द्रसंकिरसत्रावाजंनजिग्युषे ॥ २ ॥ इति बृहत्साम ॥ अथ ज्येष्ठसामसूक्तम् ॥ साम० अ० ॥ ८ ॥ ॥ ८० ॥
खं० ॥ ३ ॥ ॐ मूर्धानंदिवोअरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् ॥ कविंसम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ १ ॥

त्वांविश्वेअमृतजायमान१ँशिशुंनदेवाअभिसंनवन्ते ॥ तवक्रतुभिरमृतत्वमायन्वैश्वानरयत्पित्रोरदीदेः ॥ २ ॥ नाभींयज्ञाना सदनं रयीणाम-
हामाहावम भिसंनवन्त ॥ वैश्वानरंरथ्यमध्वराणांयज्ञस्यकेतुंजनयन्तदेवाः॥३॥ इतिज्येष्ठसाम॥ अथ रथंतरम् ॥ अभित्वाशूरनोनुमोऽदुग्धाइव-
धेनवः ॥ ईशानमस्यजगतःस्वर्द्दशमीशानमिंद्रतस्थुषः ॥ १ ॥ ( नत्वावां अन्योदिव्योनपार्थिवोनजातोनजनिष्यते ॥ अश्वायन्तोमघवन्नि-
न्द्रवाजिनोगव्यन्तस्त्वाहवामहे ॥ २ ॥ ) त्वामिद्धिहवामहेसातौवाजस्यकारवः ॥ त्वांवृत्रेष्विन्द्रसत्पतिंनरस्त्वांकाष्ठास्वर्वतः ॥ २ ॥ अभिप्रः
सुराधसमिन्द्रमर्चयथाविदे ॥ योजरितृभ्योमघवापुरूवसुः सहस्रेणेवशिक्षति ॥ ३ ॥ तंवोदस्ममृतीषहंवसोर्मन्दानमन्धसः ॥ अभिवत्संन-
स्वसरेषुधेनवइन्द्रंगीर्भिर्नवामहे ॥ ४ ॥ तरोभिर्वोविदद्वसुमिन्द्रंसबाधऊतये ॥ बृहद्गायन्तः सुतसोमेअध्वरेहुवेभरंनकारिणाम् ॥ ५ ॥
तरणिरित्सिषासतिवाजंपुरन्ध्यायुजा ॥ आवइन्द्रंपुरुहूतंनमेगिरानेमिंतष्टेवसुद्रुवम् ॥ ६ ॥ पिबासुतस्यरसिनोमन्स्वानइन्द्रगोमतः ॥
आपिर्नोबोधिसधमाद्योवृंधे ३ ऽस्मांअवन्तुतेधियः ॥ ७ ॥ त्वंह्येहिचेरवेविदाभगंवसुत्तये ॥ उद्वावृषस्वमघवन्गविष्टय उदिन्द्राश्वमिष्टये
॥ ८ ॥ नहिवश्चरमंचनवसिष्ठः ॥ परिमंसते अस्माकमद्यमरुतः सुतेसचाविश्वेपिबन्तुकामिनः ॥ ९ ॥ माचिदन्यद्विशंसतसखायोमारिष-
ण्यत ॥ इन्द्रमित्स्तोतावृषणंसचासुतेमुहुरुक्था च शंसत ॥ १० ॥ इतिरथंतरंसूक्तम् ॥ ततः ॐसहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥
सभूमिंसर्वतोवृत्वात्यतिष्ठद्दशांगुलम् ॥ १ ॥ त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ तथाविष्वङ्व्यक्रामदशनानशनेअभि ॥ २ ॥
पुरुषएवेदंसर्वंयद्भूतंयच्चभाव्यम् ॥ पादोस्यसर्वाभूतानित्रिपादस्यामृतंदिवि ॥ ३ ॥ एतावानस्यमहिमा ततोज्यायांश्चपूरुषः ॥ उतामृतत्वस्ये-

शानोयदन्नेनातिरोहति ॥ ४ ॥ ततोविराडजायतविराजोअधिपूरुषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥ कयानश्चित्रआभु-
वदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ ६ ॥ इतिपुरुषव्रतयोः पठितंषडृचात्मकं पुरुषसूक्तं पठेत् ॥ अत्ररुद्रसूक्तम् ॥ आवोराजान-
मध्वरस्यरुद्रं होतारं सत्ययजं रोदस्योः ॥ अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥१॥ इन्धेराजासमर्योनमोभिः यस्यप्रती-
कमाहुतंघृतेन नरोहव्येभिरीडतेसबाध ॥ आग्निरग्रमुषसामशोचि ॥ २ ॥ इतिरुद्रसूक्तम् ॥ ततआज्यदोहानि ३ देवव्रतसंज्ञानित्रीणि ३
चपठेत् ॥ ॐमूर्द्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निम् ॥ कविंसम्राजमतिथिंजनानामासन्ना पात्रंजनयन्तदेवाः ॥ इति मंत्र-
माज्यदोहसंज्ञकं त्रिधाजपेत् ॥ ३ ॥ ॐअधिपतये मित्रपतयेक्षत्रपतयेस्वःपतयेधनपतयेनमइत्यादिदेवव्रतसंज्ञकमनुवाकंत्रिधाजपेदिति ॥ ३ ॥
अथशांतिकाध्यायः ॥ अबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासम् ॥ यह्वाइवप्रवयामुज्जिहानाःप्रभानवः सिस्रतेनाकमच्छ ॥ १ ॥
इत्यस्यत्रिधाजपः ॥ अबोध्याग्निर्ज्मउदेतिसूर्योव्यु ३ षाश्चन्द्रामह्यावोअर्चिषा ॥ आयुक्षातामश्विनायातवेरथंप्रासावीद्देवः सविताजगत्पृ-
थक् ॥ १ ॥ यद्युञ्जाथेवृषणमश्विनारथंघृतेननोमधुनाक्षत्रमुक्षतम् ॥ अस्माकंब्रह्मपृतनासुजिन्वतंवयंधनाशूरसाताभजेमहि ॥ २ ॥ अर्वाङ्-
त्रिचक्रोमधुवाहनोरथोजीजीराश्वोअश्विनोर्यातुसुष्टुतः ॥ त्रिबन्धुरोमघवाविश्वसौभगः शंनआवक्षद्द्विपदेचतुष्पदे ॥ ३ ॥ अथभारुंडसू-
क्तम् ॥ इमंस्तोममर्हतेजातवेदसेरथनिवसंमहेमामनीषयाभद्राहिनः ॥ प्रमतिरस्यसंसद्यग्नेसख्येमारिषामावयंतव ॥ १ ॥ भरामेध्मंकृणवा
माहवींषितेचितयन्तःपर्वणावयम् ॥ जीवातवेप्रतरंसाधयाधियोऽग्नेसख्येमारिषामावयंतव ॥ २ ॥ शकेमत्वासमिधं साधयाधियस्त्वेदेवाह-

विरदन्त्याहुतम् ॥ त्वमादित्याँआवहतान्ह्यु ३ इमस्यग्नेसख्येमारिषामावयंतव ॥ ३ ॥ मूर्द्धानंदिवोअरतिं पृथिव्यावैश्वानरमृत आजात-
मग्निम् ॥ कविंसम्राजमतिथिंजनानामासन्नापात्रं जनयन्त देवाः ॥ ४ ॥ वित्वदापोनपर्वतस्य पृष्ठादुक्थेभिरग्नेजनयन्तदेवाः ॥ तंत्वागिर-
सुष्टुतयो वाजयन्त्याजिन्नगिर्वाहोजिग्युरश्वाः ॥ ५ ॥ आवोराजानमध्वरस्य रुद्रंहोतारं सत्ययजंरोदस्योः ॥ अग्निंपुरातनयित्नोरचित्ता-
द्धिरण्यरूपमवसेकृणुध्वम् ॥ ६ ॥ इंधेराजासमर्य्योनमोभिर्यस्यप्रतीकमाहुतंघृतेन ॥ नरोहव्येभिरीलतेसबाध आग्निरग्रमुषसामशोचि ॥
॥ ७ ॥ प्रकेतुना बृहतायात्यग्निरारोदसीवृषभोरोरवति ॥ दिवश्चिदंतादुपमामुदानउपामुपस्थेमहिषोववर्द्ध ॥ ८ ॥ अग्निंनरोदीधितिभि-
ररण्योर्हस्तच्युतंजनयंतप्रशस्तम् ॥ दूरेदृशंगृहपतिमथर्युम् ॥ ९ ॥ इत्येषांत्रिधाजपः ॥ इति भारुंडानि ॥ इतिद्वारपालजाप्यसूक्तानि ॥
अथसामगानांजापकजप्यानि ॥ अथवैराजंसूक्तम् ॥ पिबासोममिन्द्रमन्द्रतुत्वायंतेसुषावहर्य्यश्वाद्रिः सोतुर्बाहुभ्यां सुयतोनार्वा ॥ १ ॥
यस्तेमदोयुज्यश्चारुरस्तियेनवृत्राणिहर्य्यश्वहंसि ॥ सत्वामिन्द्रप्रभूवसोममत्तु ॥ २ ॥ बोधासुमेमघवन्घाचमेमायांतेवसिष्ठोअर्चंतिप्रशस्तिम् ॥
इमाब्रह्मसधमादे जुषस्व ॥ ३ ॥ इतिवैराजम् ॥ ततः पौरुषंसूक्तंजपेत् ॥ अथसौपर्णसूक्तम् ॥ उद्वेदभिश्रुतामघंवृषभंनर्य्यापसम् ॥ अस्ता-
रमेषिसूर्य्य ॥ १ ॥ नवयोनवतिंपुरोविभेदबाह्वोजसा ॥ अहिंचवृत्रहावधीत् ॥ २ ॥ सनइन्द्रः शिवः सखाश्वावद्गोमद्यवमत् ॥ उरुधारे-
वदोहते ॥ ३ ॥ इतिसौपर्णम् ॥ ततोरुद्रसंहितांपठेत् ॥ रुद्रसंहिताआवोराजानमित्यादिवर्गद्वयंपूर्वमुक्तम् ॥ अथशैशवंसूक्तम् ॥ उच्चाते-
जातमन्धसोदिविभूम्यादुदे ॥ उग्रं शर्ममहिश्रवः ॥ १ ॥ सनइन्द्रायजयज्यवेवरुणायमरुद्भ्यः ॥ वरिवोवित्परिस्रव ॥ २ ॥ एनाविश्वान्यर्य

आद्युम्नानिमानुषाणाम् ॥ सिषासन्तोवनामहे ॥ ३ ॥ इतिशैशवम् ॥ ततः पंचनिधनंसूक्तं रहस्यावीतंपठेत् ॥ अथगायत्रंसूक्तम् ॥ ॐतत्स
वितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ १ ॥ सोमान ँ स्वरणंकृणुहिब्रह्मणस्पते ॥ कक्षीवन्तंयऔशिजः ॥ २ ॥
अग्नआयू ँ षिपवसआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनाम् ॥ ३ ॥ इतिगायत्रम् ॥ ततोज्येष्ठसाममूर्द्धानंदिवइत्यादिपूर्व-
मुक्तंपठेत् ॥ ( वामदेवं कयानश्चित्रेति पठेत् ) बृहत्सामत्वामिद्धिहवामहेइत्यादिपूर्वोक्तम् ) ॥ सोम्यं सोमवृतंसंतेपयांसीसीत्या-
दिकम् ॥ अथरौरवंसूक्तम् ॥ पुनानःसोमधारयापोवसानोअर्षसि ॥ आरत्नधायोनिमृतस्यसीदस्युत्सोदेवहिरण्ययः ॥ १ ॥ दुहान-
ऊधर्दिव्यंमधुप्रियंप्रत्न ँ सधस्थमासदत् ॥ आपृच्छ्यंधरुणंवाज्यर्षसिनृभिर्धूतोविचक्षणः ॥ २ ॥ इतिरौरवम् ॥ ततोरथंतरंसूक्तम् अभित्वा-
शूरनोनुम इत्यादिपूर्वोक्तंपठेत् ॥ गवांव्रतंसूक्तम् ॥ तेमन्वंतरंप्रथमं ॥ अग्निमीळेइत्यनयोर्गीतं सामद्वयम् ॥ अथविकर्णसूक्तम् ॥ विभ्रा-
ड्बृहत्पिबतुसोम्यंमध्वायुर्दधद्यज्ञपतावविन्हुतम् ॥ वातजूतोयोअभिरक्षतित्मनाप्रजाः पिपर्त्तिबहुधाविराजति ॥ १ ॥ विभ्राड्बृहत्सुभृतं-
वाजसोत्तमंधर्मंदिवोधरुणेसत्यमर्पितम् ॥ अमित्रहावृत्रहादस्युहन्तमंज्योतिर्जज्ञेअसुरहासपत्नहा ॥ २ ॥ इद ँ श्रेष्ठंज्योतिषाज्योतिरुत्तमं-
विश्वजिद्धनजिदुच्यतेबृहत् ॥ विश्वभ्राड्भ्राजोमहिसूर्य्योदृशउरुपप्रथेसहओजोअच्युतम् ॥ ३ ॥ इतिविकर्णम् ॥ अथरक्षोघ्नम् ॥ ॐअग्ने-
रक्षाणोअ ँ हसःप्रतिस्मदेवरीषतः ॥ तपिष्ठैरजरोदह ॥ १ ॥ अग्नेयुक्ष्वाहियेतवाश्वासोदेवसाधवः ॥ अरंवहन्त्याशवः ॥ २ ॥ अथयशः ॥
बृहदिन्द्रायगायतमरुतोवृत्रहन्तमम् ॥ येनज्योतिरजनयन्नृतावृधोदेवंदेवायजागृवि ॥ १ ॥ इतियशः ॥ अथक्षेपकसूक्तानि ॥ इन्द्रायसाम-

गायतविप्रायबृहतेबृहत् ॥ ब्रह्मकृतेविपश्चितेपनस्यवे ॥ १ ॥ त्वमिन्द्राभिभूरसित्वꣳ सूर्य्यमरोचयः ॥ विश्वकर्म्माविश्वदेवोमहा ꣳअसि ॥
॥ २ ॥ विभ्राजंज्योतिषास्व ३ रगच्छोरोचनंदिवः ॥ देवास्तइन्द्रसख्यायर्येमिरे ॥ ३ ॥ इति ॥ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥
इन्द्रायपातवेसुतः ॥ १ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहतम् ॥ द्रोणासधस्थमासदत् ॥ २ ॥ वरिवोधातमोभवमꣳ हिष्ठोवृत्रहन्तमः ॥
पर्षिराधोमघोनाम् ॥ ३ ॥ गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः ॥ ब्रह्माणस्त्वाशतक्रतउद्वꣳ शमिवयेमिरे ॥ १ ॥ यत्सानोःसान्वारुहो-
भूर्यस्पष्टकर्त्त्वम् ॥ तदिन्द्रोअर्थंचेततियूथेनवृष्णिरेजति ॥ २ ॥ युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा ॥ अथानइन्द्रसोमपागिरामुपश्रुतिंचर
॥ ३ ॥ इतिसामवेदिनांद्वारपालादिजाप्यसूक्तानिसमाप्तानि ॥ ( अथाथर्वणानांद्वारपालसूक्तानि ) तत्रादौ ( अथर्वाणम् ) सूक्तम् ॥
ॐ अथर्वाणांपितरंदेवबन्धुंमातुर्गर्भंपितुरसुंयुवानम् ॥ यइमंयज्ञंमनसाचिकेतप्रणोवोचस्तमिहेहब्रवः ॥ १ ॥ इतिकेचित् ॥ १ ॥
केचित् ॥ छंदोगायबृहज्ञायेत्यादिकमित्यन्ये ॥ तच्चसंहितायामदृष्टत्वान्नोद्धतम् ॥ अथांगिरसं सूक्तम् ॥ ॐ अङ्गिरसोनः पितरोनवग्वा
अथर्वाणोभृगवः सोम्यासः ॥ तेषांवयं सुमतौ यज्ञियानामपिभद्रेसौमनसेस्याम ॥ १ ॥ अङ्गिरोभिर्यज्ञियैरागहीहयमवैरूपैरिह मादयस्व ॥
विवस्वन्तंहुवेयः पितातेऽस्मिन्बर्हिष्यानिषद्य ॥ २ ॥ इमं यमप्रस्तरमाहिरोहाङ्गिरोभिः पितृभिः संविदानः आत्वामंत्राः कविशस्तावह-
न्त्वेनाराजन्हविषो मादयस्व ॥ ३ ॥ इतएत उदारुहन्दिवस्पृष्ठान्यारुहन् ॥ प्रभुर्जयो यथायथा द्यामङ्गिरसोययुः ॥ ४ ॥ इति बहवः ॥
अङ्गिरोसिजन्मनेत्यादिकमिति पाठ्यमित्यन्ये ॥ तच्च संहितायामदृष्टत्वान्नेहमया उद्धृतम् ॥ अथनीलरुद्रं सूक्तम् ॥ यातेरुद्रइषूमास्यद-

ङ्गेभ्योहृदयायच ॥ इदंतामद्यत्वद्वयंविषूचींविवृहामसि ॥ १ ॥ यास्तेशतंधमनयोऽङ्गान्यनुविष्ठिताः ॥ तासांतेसर्वासांवयं निर्विषाणिह्वयामसि ॥ २ ॥ नमस्ते रुद्रास्यतेनमः प्रतिहितायै नमो विसृज्यमानायैनमो निपतितायै ॥ ३ ॥ अथापराजितादेवीसूक्तम् ॥ परिवर्त्मानिसर्वतइन्द्रः पूषाचसस्रतुः ॥ मुह्यन्त्वद्यामूः सेना अमित्राणां परस्तराम् ॥ १ ॥ मूढा अमित्राश्चरता शीर्षाणइवाहयः ॥ तेषां वो अग्निमूढानामिन्द्रोहन्तुवरंवरम् ॥ २ ॥ ऐषुनह्यवृषाजिनंहरिणस्य भयं कृधि ॥ पराङ्मित्र एषात्वर्वाची गौरुपेषतु ॥ ३ ॥ इत्यपराजितासूक्तम् ॥ ४ ॥ ( मधुसूक्तम् ) ॥ ॐमधुवाताऋतायते मधुक्षरन्तिसिंधवः ॥ माध्वीर्नःसन्त्वोषधीः ॥ १ ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः ॥ मधुद्यौरस्तु नः पिता ॥ २ ॥ मधुमान्नोवनस्पतिर्म्मधुमा २ँऽ अस्तुसूर्य्यः ॥ माध्वीर्गावो भवन्तु नः ॥ ३ ॥ इति मधुसूक्तम् ॥ अथ रोधसंसूक्तम् ॥ ॐ अभयंद्यावापृथिवी इहास्तु नोऽभयं सोमः सविता नः कृणोतु ॥ अभयंनोऽस्तूर्वं१न्तरिक्षंसप्तऋषीणां च हविषाभयंनोअस्तु ॥ १ ॥ अस्मैग्रामायप्रदिशश्चतस्रऊर्जंसंभूतंस्वस्तिसविताऩःकृणोतु ॥ असाविन्द्रोअभयंनःकृणोत्वन्यत्रराज्ञामभियातुमन्युः ॥ २ ॥ अनमित्रंनोअधरादनमित्रंनउत्तरात् ॥ इन्द्रानमित्रंनःपश्चादनमित्रंपुरस्कृधि ॥ ३ ॥ इति रोधसम् ॥ अथ शांतिकाध्यायः ॥ ॐ शन्नइन्द्राग्नीभवतामवोभिः शंनइन्द्रावरुणारातहव्या ॥ शमिंद्रासोमासुविताययशंयोः शंनइंद्रा पूषणावाजसातौ ॥ १ ॥ शंनो भगः शमुनःशंसोअस्तु शंनःपुरंधिः शमुसन्तुरायः ॥ शंनःसत्यस्यसुयमस्यशंसःशन्नोअर्यमापुरुजातोअस्तु ॥ २ ॥ शंनोधाताशमुधर्तानोअस्तु शंनउरूचीभवतुस्वधाभिः ॥ शंरोदसीबृहतीशंनोअद्रिःशंनो देवानां सुहवानि सन्तु ॥ ३ ॥ शंनो अग्निर्ज्योतिरनीको अस्तु शंनोमित्रावरु-

णावुश्विनाशम् ॥ शंनंःसुकृतां सुकृतानि सन्तुशंनं इषिरो अभिवांतुवातंः ॥ ४ ॥ शंनोद्यावांपृथिवीपूर्वहूंतौशमुन्तरिक्षंदृशयेनोअस्तु ॥
शंनुओषंधीर्वुनिनोंभवन्तुशंनोरजंसुस्पतिंरस्तुजिष्णुः ॥ ५ ॥ शंनुइन्द्रोवसुभिर्देवोऽअंस्तुशमांदित्येभिर्वरुणःसुशंसंः ॥ शंनोंरुद्रोरुद्रेभिर्ज-
लांषःशंनस्त्वष्टाग्नाभिरिहश्रृंणोतु ॥ ६ ॥ शंनुः सोमोंभवतुब्रह्मशंनुःशंनोग्रावाणुःशमुसन्तुयज्ञाः ॥ शंनुःस्वरूंणांमितयोंभवन्तुशंनंःप्रस्व१
शम्वंस्तुवेदिंः ॥ ७ ॥ शंनुः सूर्य्यंउरुचक्षाउदेतुशंनोंभवन्तुप्रदिशश्चतंस्रः ॥ शंनुः पर्वताध्रुवयों भवन्तुशंनुः सिंधंवुः शमुसन्त्वापंः ॥ ८ ॥
शंनोअदितिर्भवतुव्रतेभिःशंनोंभवन्तुमुरुतंःस्वर्काः ॥ शंनो विष्णुः शमुपूषानोंअस्तुशंनोंभुवित्रंशम्वंस्तुवायुः ॥ ९ ॥ शंनोंदेवःसेवितात्राय
माणः शंनोंभवन्तूषसोंविभातीः ॥ शंनंः पुर्जन्योंभवतुप्रजाभ्यः शंनुः क्षेत्रंस्यपतिरस्तुशंभुः ॥ १० ॥ इति शांतिकाध्यायः ॥ इति द्वारपा-
लजाप्यसूक्तानि ॥ अथजापकजप्यानि ॥ (शान्तिकपौष्टिकानि) शंनइंद्राग्नीइत्यादिपूर्वोक्तानि ॥ १० ॥ अथर्ववेदीयंपौरुषंसूक्तम् ॥
सुहस्रंवाहुःपुरुंषःसहस्राक्षः सुहस्रंपात् ॥ सभूमिंविश्वतोंवृत्वात्यंतिष्ठद्दशाङ्गुलम् ॥ १ ॥ त्रिभिःपुद्भिर्द्यामरोहुत्पादोस्येहाभंवुत्पुनंः ॥
तथाव्यंक्रामुद्विष्वङ्ङशनानशुनेअनुं ॥ २ ॥ तावन्तोअस्यमहिमानुस्ततोज्यायांश्चपूरुषः ॥ पादोंस्युविश्वाभूतानिंत्रिपादंस्यामृतंन्दिवि
॥ ३ ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभाव्यम् ॥ उतामृतत्त्वस्येश्वुरोयदुन्येनाभवत्सुह ॥ ४ ॥ यत्पुरुषंव्यदंधुः कतिधाव्यंकल्पयन् ॥ मुखंकिमंस्य-
किंवाहूकिमूरूपादांउच्येते ॥ ५ ॥ ब्राह्मणोंऽस्यमुखंमासीद्बाहुराजन्योंऽभवत् ॥ मध्यंतदंस्ययद्वैश्यंः पुद्भ्यांशूद्रोअंजायत ॥ ६ ॥ चन्द्रमा
मनंसोजातश्चक्षोःसूर्य्योंऽअजायत ॥ मुखादिन्द्रश्चाग्निश्चंप्राणाद्वायुरंजायत ॥ ७ ॥ नाभ्यांआसीदुन्तरिक्षंशीर्ष्णोद्यौःसमंवर्तत ॥ पुद्भ्यांभूमि

दिशःश्रोत्रात्तथालोकाअंकल्पयन् ॥ ८ ॥ विराडग्रेसमभवद्विराजोअधिपूरुषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ९ ॥ यत्पुरु-
षेणहविषादेवायज्ञमतन्वत ॥ वसन्तोअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ॥ १० ॥ तंयज्ञंप्रावृषाप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाअयजन्त-
साध्यावसवश्चये ॥ ११ ॥ तस्मादश्वाअजायन्तयेचकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः ॥ १२ ॥ तस्माद्यज्ञात्सर्व-
हुतऋचःसामानिजज्ञिरे ॥ छन्दांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ १३ ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतंपृषदाज्यम् ॥ पशून्तांश्चक्रेवाय-
व्यानारण्यान्ग्राम्याश्चये ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाअबध्नन्पुरुषंपशुम् ॥ १५ ॥ मूर्ध्नोदेवस्य-
बृहतो अंशवः सप्तसप्ततीः ॥ राज्ञः सोमस्याजायन्तजातस्यपुरुषादधि ॥ १६ ॥ इति पौरुषेयं सूक्तम् ॥ ॥ अथ शान्तिकानि मंत्राणि ॥
शान्ताद्यौःशान्तापृथिवीशान्तमिदमुर्व१न्तरिक्षम् ॥ शान्ताउदन्वतीरापःशान्तानःसन्त्वोषधीः ॥ १ ॥ शान्तानिपूर्वरूपाणिशान्तंनोअ-
कृताकृतम् ॥ शान्तंभूतञ्चभव्यञ्चसर्वमेवशमस्तुनः ॥ २ ॥ इयंयापरमेष्ठिनीवाग्देवीब्रह्मसंशिता ॥ ययैवससृजेघोरंतयैवशान्तिरस्तुनः ॥
॥ ३ ॥ इदंयत्परमेष्ठिनंमनोवाब्रह्मसंशितं ॥ येनैवससृजेघोरंतेनैवशान्तिरस्तुनः ॥४॥ इमानियानि पञ्चेन्द्रियाणिमनःषष्ठानिमेहृदिब्रह्मणा-
संशितानि ॥ यैरेवससृजेघोरंतैरेवशान्तिरस्तुनः ॥ ५ ॥ शंनोमित्रः शंवरुणःशंविष्णुःशंप्रजापतिः ॥ शंनइन्द्रोबृहस्पतिः शंनो भवत्वर्यमा
॥ ६ ॥ शंनोमित्रः शंवरुणःशंविवस्वाञ्छमन्तकः ॥ उत्पाताःपार्थिवान्तरिक्षाच्छंनोदिविचराग्रहाः ॥ ७ ॥ शंनोभूमिर्वेपमानाशमुल्का ॥ ८४ ॥
निर्हतंचयत ॥ शंगावो लोहितक्षीराः शंभूमिरवतीर्यती ॥ ८ ॥ नक्षत्रमुल्काभिहतंशमस्तुनः शंनोऽभिचाराः शमुसन्तु कृत्याः ॥ शन्नो-

निखानावंलगाः शमुल्कादेशोपसर्गाः शमुनो भवंतु ॥ ९ ॥ शंनोग्रहाश्चन्द्रमसाः शमादित्याश्चराहुणा ॥ शंनोमृत्युर्धूमकेतुः शंरुद्रा-
स्तिग्मतेजसः ॥ १० ॥ शंरुद्राःशंवसवः शमादित्याः शमग्नयः ॥ शंनोमहर्षयोदेवाः शंदेवीः शंबृहस्पतिः ॥ ११ ॥ ब्रह्मप्रजापतिर्धाता-
लोकावेदाः सप्तऋषयोऽग्नयः ॥ तेमेकृतंस्वस्त्ययनमिन्द्रोमेशर्मयच्छतुब्रह्मामेशर्मयच्छतु ॥ १२ ॥ विश्वेमेदेवाःशर्मयच्छंतुसर्वेमेदेवाः शर्म-
यच्छन्तुयानिकानिचिच्छान्तानिलोकेसप्तऋषयोविदुः ॥ सर्वाणिशंभवन्तुमेशंमेअस्त्वभयंमेअस्तु ॥ १३ ॥ पृथिवीशान्तिरंतरिक्षंशान्तिर्द्यौः
शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयःशान्तिर्विश्वेदेवाः शान्तिः सर्वेमेदेवाः शान्तिः शान्तिः शान्तिभिः ॥ ताभिः शान्तिभिः
सर्वशान्तिभिः शमयाम्यहं यदिहघोरंयदिहक्रूरंयदिहपापंतच्छान्तंतच्छिवंसर्वमेवशमस्तुनः ॥ १४ ॥ इतिशान्तिसूक्तम् ॥ ततोयथाशक्ति
प्रधानदेवमंत्रान्जपेयुः ॥ इति सर्वदेवप्रतिष्ठाप्रकाशेचतुर्वेदिनांसूक्तकथननामषष्ठःपरिच्छेदः ॥ ६ ॥ ॥ अथाधिवासनं ॥ अथसायंकाले-
विष्णोर्वाशंकरस्यान्यदेवस्यवाधिवासनंकुर्यात् । तत्राचार्योयजमानऋत्विक्सुवासिनीसहितस्तूर्यघोषेणशिल्पिशालांगत्वादेवस्याग्रेकलश-
स्थापनविधिनाकलशंसंस्थाप्यप्रतिष्ठांचकृत्वातीर्थान्यावाहयेत् । ॐकाशीकुशस्थलीमायावंत्ययोध्यामधोःपुरी ॥ शालिग्रामंसगोकर्णंनर्मदा-
चसरस्वती ॥ १ ॥ तीर्थान्येतानिकुंभेस्मिन् विशंतुब्रह्मशासनात् ॥ गंगाद्याःसरितःसर्वासमुद्राश्चसरांसिच ॥ वृषारूढासरोजाक्षीपद्महस्ता-
शशिप्रभा ॥ २ ॥ आगच्छतुसरिज्ज्येष्ठागंगापापप्रणाशिनी ॥ नीलोत्पलदलश्यामापद्महस्तांबुजेक्षणा ॥ ३ ॥ आयातुयमुनादेवीकूर्मयान-
स्थितासदा ॥ प्राचीसरस्वतीपुण्यापयोष्णीगौतमीतथा ॥ उर्मिलाचंद्रभागाचसरयूगंडकीतथा ॥ ४ ॥ एतानद्याश्चतीर्थानिगुह्यक्षेत्राणि-

सर्वशः ॥ तानिसर्वाणिकुंभेस्मिन्विशंतुब्रह्मशासनात् ॥ ५ ॥ इत्यादितीर्थान्यावाह्य । कुंभस्यचतुर्दिक्षुविदिक्षुचइंद्रायनमः । अग्नयेनमः । यमायनमः । निर्ऋतयेनमः । वरुणाय० । वायवे० । कुबेराय० । ईशानाय० । ब्रह्मणे० । अनंतायनमः ॥ इतिदिक्पालान्गंधादिभिः संपूज्य । ततःप्रतिमादिषुन्यूनातिरिक्तपाषाणदोषप्राणिवधादिदुर्निमित्तोपशमनार्थंप्रतिमायोग्यंस्थंडिलंकृत्वातत्रपंचभूसंस्कारान्कृत्वातत्राग्निंप्रतिष्ठाप्यप्राणानायम्यदेशकालौसंकीर्त्यप्रतिमानिर्माणेप्राणिवधादिदोषनिरासार्थंदुर्निमित्तोपशमनायघृतेनतिलैर्वाहोमंकरिष्यइतिसंकल्प्यब्रह्मोपवेशनादिआघाराज्यभागौहुत्वादेवमंत्रेणाज्याहुतिशतद्वयंशमीपल्लवाक्षतैर्घृतैस्तिलैर्वा ॐ परंमृत्योऽअनुपरेहि० इतिमंत्रेणमृत्यवे १०८ ॥ ॐअघोरेभ्योथघोरेभ्य० इत्यनेनत्र्यंबकंयजामहे० यद्ग्रामेयदरण्येइत्यनेनचाष्टोत्तरशतंवाहुत्वापूर्णाहुतिंचहुत्वादेवंप्रार्थयेत् ॥ त्वयिसंपूजयामीशंनारायणमनामयं ॥ रहितोसर्वदोषैस्त्वंऋद्धियुक्तोसदाभव ॥ १ ॥ इतिप्रार्थ्यप्रतिमांकुशैःसंमार्ज्यतूर्यसुवासिनीगीतवेदघोषेणमध्वाज्याभ्यंगेनदेवस्यव्रणभंगःकार्यः ॥ एवंव्रणभंगंकृत्वामृदागोमयेनगोमूत्रेणभस्मनाक्षीरेणचपृथक्पृथक्जलांतरितेनस्नापयित्वागंधादिभिरभ्यर्च्यसितपुष्पैःसंपूज्यसुवर्णपात्रेमधुसर्पिषीसंस्थाप्यसुवर्णशलाकयामधुसर्पिर्भ्यांनेत्रेआपूर्य्यमधूच्छिष्टेननेत्रावरणंचकृत्वा पश्चात्स्थापितकुंभोदकेनशिल्पी देवंसंस्नाप्ययजमानायदापयेत् । ततोयजमानःशिल्पिवर्गंवस्त्रालंकारैःसंतोष्यप्रतिमांगृहीत्वाआचार्यंप्रार्थयेत् ॥ भोगुरोप्रतिमांसावयवांनिरीक्षस्व । आचार्योंहिप्रतिमांसावयवांनिरीक्षेत ॥ ततोदेवस्यदक्षिणहस्तेसितोर्णादिसूत्रनिर्मितंसर्वौषधिमनःफलसहितंआचार्यवितस्तिमात्रंदोरकंमूलमंत्रेणबध्नीयात् ॥ अथजलाधिवासनं ॥ तत आचार्यः ऋत्विग्भिःसह जलयात्रोपयोगिसंभारानसंगृह्य

शंखतूर्यादिवेदसुवासिनीमंगलगीतैः सवस्त्रांप्रतिमांरथे आरोपयति ॥ तत्रमंत्रः ॥ ॐरथेतिष्ठन्नयतिवाजिनं ÷ पुरोयत्रयत्रकामयतेसुखा-
रथिः ॥ अभीशूनांमहिमानंपनायतमनं ÷ पश्चादनुयच्छंतिरश्मयं ÷ ॥ इतिवैदिकमंत्रेणमूर्तिंब्रह्मारथेऽऽरोपयेत् । पश्चान्नद्यांवासरसित-
डागकूपयोर्वानीत्वाऽधिवासयेत् ॥ तत्रादौपुण्याहवाचनंकृत्वा ॐ आनोभद्राः क्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदं÷ ॥ देवा-
नोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥१॥ ॐदेवानांभद्रासुमतिर्ऋजूयतान्देवानांरातिरभिनोनिवर्तताम् ॥ देवानांसख्य-
मुपसेदिमाव्वयंदेवानऽआयुःप्रतिरन्तुजीवसे ॥ २ ॥ ॐतान्पूर्व्वयानिविदाहुमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥ अर्यमणंवरुणꣳसोम-
मश्विनासरस्वतीनःसुभगामयस्करत् ॥ ३ ॥ ॐतन्नोव्वातोमयोभुवातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसुतोमयोभुवस्त-
दश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ ॐतमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेव्वयम् ॥ पूषानोयथाव्वेदसामसद्वृधेरक्षितापायु-
रदब्धःस्वस्तये ॥ ५ ॥ ॐस्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिनं÷पूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥
ॐपृषदश्वामरुतःपृश्निमातरःशुभंय्यावानोविदथेषुजग्मयः ॥ अग्निजिह्वामनवःसूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ ७ ॥ ॐभद्रं-
कर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ ८ ॥ ॐशतमिन्नुशरदोऽअन्ति-
देवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ ॐअदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता-
तासपितासपुत्रः ॥ विश्वेदेवाऽअदितिःपञ्चजनाअदितिर्जातमदितिर्जनित्त्वम् ॥ १० ॥ इत्यादिशांतिपाठसूक्तानिपठित्वानद्यादितीरं

ॐइन्द्रघोषस्त्वाव्वसुभिःपुरस्तात्पातुप्प्रचेतास्त्वारुद्रैः पश्चात्पातुमनोजवास्त्वापितृभिर्दक्षिणतःपातुव्विश्वकर्म्मात्त्वादित्यैरुत्तरतः पात्विद-
महन्तप्तंव्वावर्हिद्धायज्ञान्निःसृजामि ॥ १ ॥ ॐचित्पतिर्म्मापुनातुव्वाक्पतिर्म्मापुनातुदेवोमासवितापुनात्वच्छिद्रेण पवित्रेणसूर्य्यस्यरश्मि-
भिः । तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ॥ २ ॥ इतिमंत्रद्वयेन पंचगव्येनप्रोक्ष्यतत्रपूजासंभारंसंस्थाप्यवस्त्राच्छादितंदे-
वंमूलमंत्रेणजलेऽधिवासयेत् । ततउदङ्मुखोयजमानःकृताचमनप्राणायामःकीर्तितदेशकालः अमुकदेवप्रतिष्ठायागस्यपरिपूर्त्तिद्वाराश्रीवरुण-
देवताप्रीत्यर्थंश्रीगणेशपूजापूर्वकजलमातृजीवमातृक्षेत्रपालवरुणपूजनंकरिष्ये इतिसंकल्प्य । ॐगणानांत्वागणपतिꣳहवामहेप्प्रियाणांत्त्वा-
प्प्रियपतिꣳहवामहेनिधीनांत्वानिधिपतिꣳहवामहेव्वसोमम ॥ आहमजानिगर्ब्भधमात्त्वमजासिगर्ब्भधम् ॥ ॐ भूर्भुवःस्वःगणेशइहागच्छ
इहतिष्ठ इत्यावाह्य गणपतिंषोडशोपचारैःसंपूज्य । ॐसिद्धिबुद्धिसहितायगणाधीशायइदंसदीपमाषभक्तबलिंसमर्पयामि इतिगणेशा-
यबलिंदद्यात् ॥ अथजलमातृर्जलेपूजयेत् ।ॐमत्स्यैनमः । १ । ॐकच्छप्यैनमः । २ । ॐकूर्म्यैनमः । ३ । ॐवाराह्यैनमः । ४ । ॐदर्दुर्य्यै-
नमः । ५ । ॐशिशुमार्य्यैनमः । ६ । ॐईश्वर्य्यैनमः । ७ । एवंनाममंत्रेणप्रत्येकंषोडशोपचारैःसंपूजयेत् । अथजीवमातृपूजनंअक्षतपुंजेषु-
वाभित्तौरेखासुकुर्यात् । ॐमत्स्यैनमः । १ । ॐहृद्यैनमः । २ । ॐगोधायैनमः । ३ । ॐमकर्य्यैनमः । ४ । ॐडुंडुभ्यैनमः । ५ । ॐदर्दु-
र्य्यैनमः । ६ । ॐजलयैनमः । ७ । इतिप्रत्येकंगंधादिनापूजयेत् । ततः ॐचतुःषष्टियोगिनीभ्योनमः इतिकुंकुमादिनाजलेयोगिनीपूजा ।
ततोवायव्यांक्षेत्रपालंकुंकुमेनपुरुषाकारलिखितंपूजयेत् । ॐक्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसि ॥ मात्वाहिꣳसीन्मामाहिꣳसीः ॥ ॐभूर्भुवः

स्वः क्षेत्रपालइहागच्छइहतिष्ठ इत्यावाह्य ॐक्षेत्रपालायनमः इतिगंधादिभिःसंपूज्य कुंकुमदीपयुतंदधिमाषभक्तबलिं ॐक्षेत्रपाल महाबाहो महाबल पराक्रम ॥ क्षेत्राणां रक्षणार्थाय बलिंगृह्णनमोनमः ॥ १ ॥ इतिमंत्रेणक्षेत्रपालायदद्यात् ॥ अथजलपूजनं ॥ ॐअद्भ्योनमः । ॐसप्तसागरेभ्योनमः । ॐमानसादिसरोभ्योनमः । ॐपुष्करादितीर्थेभ्योनमः । ॐगंगादिमहानदीभ्योनमः ॥ इतिगंधाक्षतान्जलेक्षिपेत् ॥ ततोवरुणपूजा ॥ ॐतत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ ॐभूर्भुवःस्वःवरुणइहागच्छइहतिष्ठ इत्यावाह्य ॐवरुणायनमःइतिगंधादिनासंपूज्यमाषभक्तबलिंदद्यात् । इतिवरुणपूजनम् ॥ ततः पंचामृतंहस्तेगृहीत्वापयःपृथिव्यामित्यादिस्वस्वमंत्रेणजलेक्षिपेत् । ततः कलशस्थापनविधिनाविदिक्षु चत्वारोमध्येचएवंपंचकलशान्संस्थाप्य । तेषु ॐतत्वायामीतिवरुणमावाह्यगंधादिभिः संपूज्य । आम्रपल्लवपुष्पमालादिभिः शोभितान्कुर्यात् एवंगणेशादीन्संपूज्य जलस्थितंदेवंप्रार्थयेत् । त्वदधिष्ठानसंयोग्यं त्वत्प्रसादात्सुरेश्वर ॥ इतिविज्ञाप्यधूपार्तिक्यंकृत्वासप्तपंचत्रिरात्रंचैकरात्रंवायाममुहूर्तंवाजलेतदधिवासयेत् । ततः ॐसहस्रशीर्षाइतिपुरुषसूक्तपाठःपंचाक्षररुद्रजपःअघोरमंत्रपाठः ( अन्वितेनमूर्तिरक्षाकरणं ) अन्येषुसूर्यादिसूक्तपाठःसप्तरात्रादिषुनिशावसानेप्रातःकालेचसद्यःपक्षेघटिकाद्वयानंतरंजलान्निष्कास्यवस्त्राच्छादितेतीरेसंस्थाप्यस्नानगंधादिनासंपूज्यसमलंकृत्यआचार्यादिभ्योहिरण्यदक्षिणांदत्वा अन्येभ्योभूयसींचदत्वापूर्वस्थापितकलशैःसहदेवंतत्स्थानादुत्थापयेत् ॥ तत्रमंत्रः ॥ ॐउत्तिष्ठोत्तिष्ठ गोविंद उत्तिष्ठ गरुडध्वज ॥ उत्तिष्ठ कमलाकांत त्रैलोक्यमंगलंकुरु ॥ १ ॥ ॐउत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुमरुतःसुदानवऽइन्द्रप्राशूर्भ-

वासचा ॥ ॥ इतिमंत्रेणउत्थाप्यआचार्योरथेविमानेवायानेवासर्वाभरणैर्भूषितांप्रतिमांविष्णोर्वाशंकरस्यजयशब्दैर्वेदध्वनिभिःसुवासिनीमंगलगीतैः मृदंगादिघोषैः शनैःशनैर्मार्गेनयेत् ॥ अमुनाप्रकारेणजलेनीत्वाजलाच्छन्नैःदेवंमहामंडपप्रादक्षिण्येनस्नानमंडपमानयेत् ॥ ततोवेदिकायांभद्रासनोपरिप्राङ्मुखंदेवंतदग्रेकलशांश्च ॥ ॐभद्रंकर्णेभिरितिस्थापयेत् । इतिजलाधिवासनविधिः ॥ अथस्नानविधिरुच्यते ॥ तत्रादौगुरुःस्नानमंडपेवेदिकात्रयंउत्तरोत्तरक्रमेणकृत्वास्नपनद्रव्यसंभृतिंकृत्वा ॐनमोनारायणायेत्यभिमंत्रितपंचगव्येनभूमिंवेदिकात्रयंचसंप्रोक्ष्य ॥ तत्रदक्षिणवेदिकायामास्तृतवालुकायामक्षतैःस्वस्तिकमालिख्यतत्रचभद्रपीठंनिधायवेदिकायाःपश्चात् वारिपूर्णान्सपल्लवान्षट्कलशान् रक्तत्रिसूत्रवेष्टितान् मृत्पल्लववृक्षीयकषायगोमूत्रगोमयभस्मगंधोदकैःप्रपूर्यतेषांसमीपेपुनःअपरान् पंचदेवतासंज्ञांश्चचिह्नयित्वागंधोदकेनापूर्यउदक्संस्थपंक्तिरूपेणकलशस्थापनप्रयोगविधिनास्थापयेत् ॥ तत्रांत्यस्थपतिसंज्ञकतीर्थोदककलशैकः ॥ एवमेवंमध्यवेदिकायाःपश्चिमभागेएकादशकलशान्संस्थाप्य ॥ भद्रपीठोत्तरवेद्याः ( तृतीयवेद्याः ) परितोऽष्टौकलशान्पूर्वादिक्रमेण क्षारोदक ॥ १ ॥ क्षीर ॥ २ ॥ दधि ॥ ३ ॥ सर्पिः ॥ ४ ॥ इक्षुरस ॥ ५ ॥ सुरा ॥ ६ ॥ दूर्वोदक ॥ ७ ॥ दर्भोदक ॥ ८ ॥ युतान्हिरण्यगर्भाद्यैरष्टभिर्मंत्रैर्विन्यसेत् ॥ ततोऽन्येचवेद्याःपश्चिमभागेमृत्तिका ॥ १ ॥ गोमय ॥ २ ॥ गोमूत्र ॥ ३ ॥ भस्म ॥ ४ ॥ मिलितपंचगव्य ॥ ५ ॥ क्षीर ॥ ६ ॥ दधि ॥ ७ ॥ घृत ॥ ८ ॥ मधु ॥ ९ ॥ शर्करा ॥ १० ॥ युतकलशाःस्थाप्यास्तत्रैवचतुर्दशशुद्धजलकलशाःस्थाप्याः । अथान्यान्पंचत्रिंशत्कलशानासादयेत् । तेषुपंचत्रिंशत्कलशेषुमध्येपंचसु उष्णोदकं । उष्णोदकं । पंचामृतं । पल्लवकषायः । ओषधीः ।५। पंचसुपृथक्पृथक्पंचामृतानि

॥ ५ ॥ पंचसुजलं ॥ ५ ॥ पुनःदशसुक्रमात् ॥ पुष्पैः ॥ १ ॥ फलैः ॥ २ ॥ सौवर्णजलेन ॥ ३ ॥ गोशृंगोदकेन ॥ ४ ॥ धान्यैः ॥ ५ ॥ सहस्रछिद्रैः ॥ ६ ॥ सर्वौषधिभिः ॥ ७ ॥ पंचपल्लवैः ॥ ८ ॥ दूर्वाभिः ॥ ९ ॥ नवरत्नैः ॥ १० ॥ युताःकार्याः । अवशिष्टेषुदशसुशुद्धज-लमापूर्यकदंबादिपल्लवैः शोभितान्कृत्वालोकपालान् आवाह्यसर्वेपि ॐआजिघ्रकलशंइत्यनेनस्थाप्याः ॥ अथदशपल्लवानि ॥ १० ॥ कदं-बपल्लव ॥ १ ॥ शाल्मलीपल्लव ॥ २ ॥ जंबूपल्लव ॥ ३ ॥ अशोकपल्लव ॥ ४ ॥ प्लक्षपल्लव ॥ ५ ॥ उदुंबरपल्लव ॥ ६ ॥ वटपल्लव ॥ ७ ॥ बिल्वपल्लव ॥ ८ ॥ नागपल्लव ॥ ९ ॥ पलाशपल्लव ॥ १० ॥ एतानिदशपर्णानि ॥ ततोऽन्यान्यपिवस्तूनि । सूक्ष्मवस्त्रं । सुगंधितैलं । यवाद्युद्वर्त्तनचूर्णं । सुगंधामलकचूर्णं । जटामांस्यानीत्यासादयेत् । ततःप्रथमवेदिकायाःपश्चात्स्थापितेषुकलशेषुमध्ये अंत्यस्थपतिपतिसं-ज्ञकंतीर्थोदककलशंदेवसमीपेकृत्वातीर्थान्यावाहयेत् ॥ ॐकाशीकुशस्थलीमायावंत्ययोध्यामधोःपुरी ॥ शालिग्रामंसगोकर्णंनर्मदाचसर-स्वती ॥ १ ॥ तीर्थान्येतानिकुंभेस्मिन् विशंतुब्रह्मशासनात् ॥ वृषारूढासरोजाक्षी पद्महस्ता शशिहस्ता ॥ २ ॥ आगच्छतु सरिज्ज्येष्ठा गंगा पापप्रणाशिनी ॥ नीलोत्पलदलश्यामा पद्महस्तांबुजेक्षणा ॥ ३ ॥ आयातु यमुना देवी कूर्मयानस्थिता सदा ॥ प्राची सरस्वती पुण्या पयोष्णी गौतमी तथा ॥ ४ ॥ ऊर्मिला चंद्रभागा च सरयू गंडकी तथा ॥ जंबुका च शतद्रुश्च कलिका सुप्रभा तथा ॥ ५ ॥ वितस्ता च विपाशा च शर्मदा च पुनःपुनः ॥ गोदावरी महावर्ता शर्करावर्तमार्जनी ॥ ४ ॥ कावेरी कौशिकी चैव तृतीया च महानदी ॥ विटंका प्रतिकूला च सोमनंदा च विश्रुता ॥ १ ॥ करतोया वेत्रवती देविका वेणुका च या ॥ आत्रेयगंगा वैतरणी काश्मिरी ह्लादिनी च या

॥ ८ ॥ स्राविनी च सवित्रा सा कल्माषाशंसिनी तथा ॥ वसिष्ठा च अपापा च सिंधुवत्यारुणी तथा ॥ ९ ॥ ताम्रा चैव त्रिसंध्या च तथा मंदाकिनी परा ॥ तैलकाद्री च पारा च दुंदुभिर्नाकुली तथा ॥१०॥ नीलगंधा च गोधा च पूर्णचंद्रा शशिप्रभा ॥ अमरेशं प्रभासं च नैमिषं पुष्करं तथा ॥ ११ ॥ आषाढीडिंडिभारत्नं भारभूतं बलाकुलम् ॥ हरिश्चंद्रं परं गुह्यं मध्यं मध्यमकेश्वरं ॥ १२ ॥ श्रीपर्वतं समाख्यातं जलेश्वरमतःपरं ॥ आम्रातकेश्वरं चैव महाकालं तथैव च ॥ १३ ॥ केदारमुत्तमं गुह्यं महाभैरवमेव च ॥ गया चैव कुरुक्षेत्रं गुह्यं कनकलं तथा ॥ १४ ॥ विमलं चंद्रहासं च माहेंद्रं भीममष्टकम् ॥ वस्त्रापदं रुद्रकोटिं अविमुक्तं महालयं ॥ १५ ॥ गोकर्णं भद्रकर्णं च हेमासंस्थानमष्टमम् ॥ छागलाद्रंद्विरंडं च कर्कोटं मंडलेश्वरं ॥ १६ ॥ कालंजरवनं चैव देवदारुवनं तथा ॥ शंकुकर्णं तथैवेह स्थलेश्वर-मतः परं ॥ १७ ॥ एता नद्यश्च तीर्थानि गुह्यक्षेत्राणि सर्वशः ॥ तानि सर्वाणि कुंभेऽस्मिन्विशंतु ब्रह्मशासनात् ॥ १८ ॥ इतितीर्थान्यावाह्य कलशस्य मुखे विष्णुरित्यभिमंत्रणंकृत्वा । देवदानवसंवादेइतिप्रार्थ्यगीतवादित्रनिनदैर्देवंस्नापयेत् ॥ ततोयजमानःशिल्पिवर्गतत्परिचार-कांश्चवस्त्रालंकारैःसंतोष्यक्षमध्वमितितान्प्रतिब्रूयात् ॥ अथाचार्यः ॥ सिद्धार्थघृतपायसैः । ॐत्र्यंबकंयजामहे इतिमंत्रेण शंखदुंदुभिघंटा-निनादैर्बहिर्निर्गत्यप्रागादिदिक्षुस्वस्वनाममंत्रेणदिक्पालेभ्योबलिंदद्यात् । आचमनंचकुर्यात् । तद्यथा ॥ पूर्वस्यां इंद्रायसांगाय इमंबलिं-समर्पयामि । भोइंद्रदिशंरक्षबलिंभक्ष यजमानस्याभ्युदयंकुरु० ॥ १ ॥ आग्नेय्यां अग्नये सांगाय इमंबलिं समर्पयामि । भोअग्नेदिशंरक्षबलिं-भक्ष यजमानस्याभ्युदयंकुरु० ॥ २ ॥ दक्षिणस्यां । यमायसांगाय इमं० भोयमदिशं० ॥ ३ ॥ नैर्ऋत्यां । निर्ऋतयेसांगाय० इमंबलिं० ॥ ४ ॥

पश्चिमायां । वरुणायसांगाय इमंबलिं० ॥ ५ ॥ वायव्यां । वायवेसांगाय इमंबलिंसमर्पं० ॥ ६ ॥ उत्तरस्यां । कुबेरायसांगाय इमं० ॥ ७ ॥
ईशान्यां । ईशानाय सांगाय इमंबलिं० ॥ ८ ॥ एवंबलिंदत्वा । आचम्यदेवसमीपमागत्य ॐ त्रातारमिंद्रमित्याद्यैर्दशभिर्मंत्रैर्मंडपांतर्दि-
क्षुरक्षांकृत्वादेवस्यपुरतश्चतुरोब्राह्मणानुपवेश्यस्वस्तिवाचयित्वातेभ्योदक्षिणांदत्वादेवंस्नापयेत् ॥ तद्यथा । ॐअग्निर्मूर्द्धेतिमृदा । ॐ अग्निर्मूर्द्धा-
दिवऽककुत्पतिं÷पृथिव्याऽअयम् ॥ अपाꣳरेताꣳसिजिन्वति ॥ १ ॥ ततःशुद्धोदकं यज्ञायज्ञाव इतिकषायैः । ॐयज्ञायज्ञावोऽअग्नयेगि-
रागिराचदक्षसे ॥ प्रप्रंवयममृतंजातवेदसम्प्रियम्मित्रन्नशꣳसिषम् ॥ २ ॥ ततःशुद्धोदकस्नानं । गायत्र्यागोमूत्रेण ॐभूर्भुवःस्व÷तत्सवि-
तुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोन÷प्रचोदयात् ॥ ३ ॥ ततःशुद्धोदकेन । गंधद्वारामितिगोमयेन । ॐगंधद्वारांदुराधर्षांनित्यपुष्टांक-
रीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ ४ ॥ मंत्रांतेसर्वत्रशुद्धोदकस्नानं । मानस्तोकइतिभस्मना । ॐमानस्तोकेतनयेमा-
नऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तःसदमित्वाहवामहे ॥ ५ ॥ तत्सवितुरितिगंधतोयेन ।
ॐतत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोन ÷ प्रचोदयात् ॥ ६ ॥ ततःपंचकलशैःपंचदेवत्यैःस्नापयेत् ॥ तत्रक्रमः ॥ ॐनमःशंभ-
वायइतिप्रथमेन । ॐनमं÷शंभवायचमयोभवायचनमं ÷ शङ्करायचमयस्करायचनमं ÷ शिवायचशिवतरायच ॥ १ ॥ ॐहꣳसरतिद्विती-
येन । ॐहꣳसऽशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ २ ॥
यातेरुद्रेतितृतीयेन । ॐयातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ ३ ॥ विष्णोरराटमसी-

तिचतुर्थेन । ॐविष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ ४ ॥ ब्रह्मयज्ञानमितिपंचमेन ।
ॐब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ५ ॥ ततःशुद्धोद-
कस्नानं । एवंदेवंसंस्नाप्य शतंजीवेतिमंत्रेणदूर्वाक्षतसितपुष्पैः संपूज्य ॐशतंजीवशरदोवर्धमानःशतंहेमन्ताञ्छतमुवसन्तान्शतमिन्द्राग्नीस-
विताबृहस्पतिःशतायुषाहविषेमंपुनर्दुः ॥ १ ॥ पीतवस्त्रेणाच्छाद्यद्वितीयवेद्यां । ॐभद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥
स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहिदेवहितंयदायुः । इतिमंत्रेणभद्रासनंनिधाय । ॐस्तीर्णंवर्हिःसुष्टरीमाजुषाणोरुपृथुप्रथमानम्पृथि-
व्याम् ॥ देवेभिर्युक्तमदितिः सजोषाःस्योनंकृण्वानासुविते दधातु ॥ इतिमंत्रांतेप्रागग्रान्कुशानास्तीर्यतत्रप्रणवेनदेवंनिधायआचार्यउत्तरा-
भिमुखोभूत्वा कुंकुमाक्तेनसूत्रेणलिंगमावेष्ट्य ॐहिरण्यगर्भ इतिमंत्रेणपूर्वकल्पितंसुवर्णपात्रंताम्रपात्रंवाऽऽदायतत्रमधुघृतंमेलयित्वा । ॐम-
धुवाताऽऋतायतेमधुक्षरन्तिसिंधवः॥माध्वीर्नःसन्त्वोषधीः ॥१॥घृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा॥द्यावापृथिवीवरुणस्यध-
र्म्मणाविष्कभितेअजरेभूरिरेतसा॥२॥इतिमंत्रद्वयेनाभिमंत्रयेत् । ततोमधुघृताक्तांसुवर्णशलाकांकृत्वाप्रतिमायामुखंलिंगस्यचनेत्राणिकल्पयेत् ।
तद्यथा । ॐचित्रंदेवानामुदगादनीकञ्चक्षुर्म्मित्रस्यवरुणस्याग्नेः॥इत्यर्धर्चेन ॐअग्निर्ज्योतिर्ज्योतिरग्निःस्वाहासूर्य्योज्योतिर्ज्योतिःसूर्य्यःस्वा-
हा ॥ अग्निर्वर्च्चोज्योतिर्वर्च्चःस्वाहासूर्य्योवर्च्चोज्योतिर्वर्च्चःस्वाहा ॥ ज्योतिःसूर्य्यःसूर्य्योज्योतिःस्वाहा॥इत्यनेनचनेत्रद्वयंकल्पयित्वा। ॐआकृ-
ष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ इतिमंत्रेण ऊर्ध्वाधःपृथग्भूतंपद्मपुटद्व-

यंकल्पयित्वा नेत्रमध्येनेत्रत्रिभागेनवर्तुलांकनीनिकांकुर्यात्। अत्रनेत्रोन्मीलनसमयेमुहूर्त्तमात्रंघटीद्वयंदेवस्यपुरतोनकोपितिष्ठेत्। प्रथमंसुवर्णपा-
यसंभक्ष्यभोज्यमादर्शंफलंचशीघ्रंदर्शयेत॥ एवंकृते । सौम्याशुभाद्दष्टिर्भवति । ततः । शिल्पिशस्त्रेणरेखामुल्लेखयेत। ततोगुरुर्मधुसर्पिर्भ्यामभ्यु-
ज्य ॐइमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्याशुषोमया ॥ इतिमंत्रेणाभ्युक्ष्यपुनर्मृज्जो-
मयाभ्यांशिल्पिशस्त्रदोषनिवृत्त्यर्थंस्नापयेत्॥ मृद्‌गोमयाभ्यांइतिदक्षिणवेदीवत्पूर्वोक्तमंत्रैःस्नपनंकार्यंएकादशकलशैरित्यर्थः) अत्रप्रतिमाबहु-
लेपूर्वोक्तंस्नपनादिकंनेत्रोन्मीलनंचसर्वेषामेवकुर्यात्॥ ततःसुवर्णपात्रंशलाकांस्नानवस्त्राणिप्रतिमाकर्त्रेशिल्पिनेवागुरवेदद्यात। सहिरण्यांगांच-
गुरवेदद्यात ।( इतिमध्यवेदिविधिः ) पश्चात् कुंडसमीपमागत्य। ॐत्र्यंबकंयजामहे इतिमंत्रेणहोमंकृत्वादिक्पालेभ्योबलिंदत्वाआचामेत ।
ततोमंडपंप्रविश्यप्राणानायम्यदेवस्यपुरतःचतुरोब्राह्मणान्पूर्ववयस्कान् भोजयित्वादक्षिणाभिःसंतोष्यतेभ्यआशिषंगृहीत्वाविसर्जयेत् । इति-
नेत्रांजनं । अथआचार्योदेशकालौसंकीर्त्य अस्यांमूर्त्तौलिंगेवाएतद्देवताधिष्ठानयोग्यतासिद्ध्यर्थंनानाद्रव्योदककलशैःमहास्नानशुद्धिमहंक-
रिष्ये इतिसंकल्प्य यत्रस्नानंदेवेनकृतंतस्माद्भद्रासनाद्देवं उत्थापयेत ॥ तत्रमंत्रः ॐउत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतः॑सु-
दानवइंद्रप्राशूर्भवासचा ॥ इतिमंत्रेणदेवमुत्थाप्य ॥ ॐभद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳩंसस्तनू-
भिर्व्यशेमहिदेवहितंयदायुरितिमंत्रेणउत्तरस्यांवेद्यांभद्रासनेस्थापयित्वा ॐत्रिपादूर्ध्वैतिमंत्रेणस्नानायपादपीठंकल्पयेत् ॐत्रिपादूर्ध्वऽउदैत्पु-
रुषः॒पादोस्येहाभवत्पुनः॑ ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ १ ॥ पुरुषऽएवेदᳪइतिनिवेद्यं ॐपुरुषऽएवेदᳪसर्वंयद्भूतंयच्चभा-

न्यृम ॥ उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ १ ॥ तत अव्यंगावयवादिभिर्जीवपुत्रादिभिः सुंदरीभिः सुवासिनीभिः लौकिकैः गीतैः सह
समुद्रज्येष्ठाइत्यादिचतुर्भिर्मंत्रैश्चतुर्भिःकलशैर्देवंस्नापयेत् ॥ ॐसमुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोर-
रादताआपोदेवीरिहमामवंतु ॥ १ ॥ ॐयाआपोदिव्याउतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः ॥ समुद्रार्थायाःशुचयःपावकास्ताआपो-
देवीरिहमामवन्तु ॥ २ ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु
॥ ३ ॥ यासुराजावरुणो यासुसोमोविश्वे देवायासूर्जंमदंति ॥ वैश्वानरोयास्वग्निः प्रविष्टस्ताआपोदेवीरिहमामवंतु ॥ ४ ॥ इतिचतुर्भिः
कलशैःसंस्नाप्यदधिदूर्वाहरिद्राकुंकुमाक्तैरक्षतैरभ्यर्च्यकृतमंगलंसौभाग्यद्रव्यार्पणपुरःसरंशालिपिष्टोद्भवैःपंचभिर्नवभिर्वानीराजितैःदेवंपूज-
येत् ॥ अन्नात्परिस्रुतेतिमंत्रेणाक्षतान् ॐअन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रम्पयःसोमंप्रजापतिः ॥ ऋतेनंसत्यमिन्द्रियंविपानंशुक्र-
मन्धसइंद्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ १ ॥ ॐश्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम ॥ इष्णन्निषाणामुम्म-
इषाणसर्वलोकंमइषाणइतिमंत्रेणपुष्पाणि । धूरसीतिधूपंकृत्वा ॐधूरसिधूर्वधूर्वन्तंधूर्वतंयोऽस्मान्धूर्वतितंधूर्वयं वयंधूर्वामः ॥ देवानामसि-
वह्नितमंसस्नितमंपप्रितमंजुष्टतमंदेवहूतमम ॥ १ ॥ प्रार्थयेत् ) नमस्तेचैसुरेशानिप्रकृतेविश्वकर्मणः ॥ प्रभाविताशेषजगद्धात्रितुभ्यंनमो-
नमः ॥ १ ॥ त्वयिसंपूजयामीशंनारायणमनामयं ॥ रहिताशेषदोषश्चऋद्धियुक्तासदाभवेति ॥ ततोदेवस्यदक्षिणहस्तेसितोर्णापट्टसूत्रमाचार्य-
वितस्तिमात्रंप्रतिमावितस्तिमात्रंवामूलमंत्रेण । ॐयदाबध्नन्दाक्षायणाहिरण्यंशतानीकायसुमनस्यमानाः ॥ तन्मआबध्नामिशतशार-

दायायुष्म्माञ्जरदंष्टिर्य्यथासम् ॥ १ ॥ इतिमंत्रेणवाबध्नीयात् ॥ सर्वसत्वमयं शांतं परं ब्रह्म सनातनम् ॥ त्वामेवालंकरिष्यामि त्वं वंद्यो
भवते नमः ॥ १ ॥ इतिपठेत् । ततश्चतुर्भिःकलशैःपुनर्देवंस्नापयेत् । इदमापइत्याद्येन । ॐइदमापःप्रवहतावद्यञ्चमलंचयत् ॥ यच्चाभि-
दुद्रोहानृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातस्म्मादेनसःपवमानश्चमुञ्चतु ॥ १ ॥ आपोदेवीरितिद्वितीयेन । ॐआपोदेवीःप्प्रतिगृभ्णीत-
भस्म्मैतत्स्योनेकृणुद्ध्वःसुरभाऽउलोके ॥ तस्म्मैनमन्ताञ्जनयःसुपत्नीर्म्मातेवपुत्रम्बिभृताप्स्वेनत् ॥ २ ॥ इमंमे इतितृतीयेन । ॐइमम्मेव्व-
रुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥३॥ तत्त्वायामीतिचतुर्थेन । ॐतत्त्वायामिब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥
अहेडमानोव्वरुणेहवोद्ध्युरुशःसमानऽआयुःप्प्रमोषीः ॥ ४ ॥ ततोऽग्निर्मूर्द्धेतिमंत्रेणाष्टपलमितेनमृत्तिकाकलशेनदेवंस्नापयेत् । ॐअग्निर्मूर्द्धा
दिवःकुकुत्पतिःपृथिव्याऽअयम् ॥ अपाᳬरेताᳬसिजिन्वति ॥ १ ॥ ॐसमुद्रादूर्मिरितिशुद्धोदकेन । ॐसमुद्रादूर्मिर्मधुमाँ २ उदार
दुपाᳬशुनासमम्मृतत्त्वमानट् ॥ घृतस्यनामगुह्यंय्यदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ ॐगंधद्वारामितिसप्तपलमितेनगोमयकलशेन ।
ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ २ ॥ व्वरुणस्योत्तंभनमसीतिशुद्धोदकेन । ॐव्वरुणस्यो-
त्तम्भनमसिव्वरुणस्यस्कम्भसर्ज्जनीस्त्थोव्वरुणस्यऽऋतसदन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद ॥ १ ॥ तत्सवितुरिति-
द्वादशपलगोमूत्रकलशेन । ॐतत्सवितुर्व्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ३ ॥ आपोहिष्ठेतिशुद्धोदकेन । ॐआपोहि-
ष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ २ ॥ प्रसद्येतिमुष्टिसंमितभस्मकलशोदकेन ॥ ॐप्रसद्यभस्म्मनायोनिमपश्चपृथिवी-

मग्ने ॥ सꣳसृज्यमातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः ॥ ४ ॥ योवइतिशुद्धोदकेन । ॐयोवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरि-
वमातरः ॥ १ ॥ पयःपृथिव्यामितित्रिपलसंमितपंचगव्यकलशोदकेन । ॐपयःपृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्व-
तीःप्प्रदिशःसन्तुमह्यम् ॥ ५ ॥ देवीरापइतिशुद्धोदकेन ॥ ॐदेवीरापोऽअपान्नपाद्योवऽऊर्म्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः ॥ तन्देवेभ्यो-
देवत्रादत्तशुक्रपेभ्योयेषाम्भागस्थस्वाहा ॥ १ ॥ आप्यायस्वेतिषोडशपलक्षीरकुंभेन । ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवा-
वाजस्यसंगथे ॥ ६ ॥ तस्माऽअरङ्गमामवइतिशुद्धोदकेन । ॐतस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ १ ॥ दधि-
क्राव्णइतिपंचविंशतिपलदधिकुंभेन । ॐदधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयुꣳषितारिषत् ॥
॥ ७ ॥ युंजानइतिशुद्धोदकेन । ॐयुञ्जानऽप्प्रथमम्मनस्तत्त्वायसविताधियः ॥ अग्नेर्ज्योतिर्न्निचाय्यपृथिव्याऽअद्ध्याभरत् ॥ ॐघृतवती-
तिसप्तपलघृतकुंभेन । ॐघृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा ॥ द्यावापृथिवीवरुणस्यधर्म्मणाविष्कभितेऽअजरेभूरिरेतसा ॥
॥ ८ ॥ देवस्येतिजलेन ॥ ॐदेवस्यत्वासवितुःप्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्य्यन्त्रेणाग्नेऽसाम्म्राज्येना-
भिषिञ्चामि॥२॥मधुवाताइतित्रिपलमधुकुंभेन।ॐमधुवाताऽऋतायतेमधुक्षरन्तिसिन्धवः॥माध्वीर्न्नःसन्त्वोषधीः॥९॥आपोऽअस्मानितिजलेन ।
आपोऽअस्मान्मातरःशुन्धयन्तुघृतेननोघृतप्वःपुनन्तु॥विश्वꣳहिरिप्रम्प्रवहन्तिदेवीरुदिदाभ्यःशुचिरापूतऽएमि॥२॥आयङ्गौरितित्रिपलशर्क- ॥ ९१ ॥
राकुंभेन । ॐआयङ्गौःपृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्चप्प्रयन्त्स्वः ॥ १० ॥ ओपाहयद्बृहतीरित्युदकेनप्रक्षाल्य ॥ ॐआपोहयद्बृह-

तीर्द्विश्श्वमायुन्गर्भुन्दधानाजुनयन्तीरुग्निम् ॥ ततोदेवानाॐसमवर्त्ततासुरेकुःकस्मैदेवायहविषाविधेम ॥ २ ॥ यज्ञायज्ञाव इतिसूक्ष्मतंतु-
वस्त्रेणसंमार्ज्य ॥ ॐयज्ञायज्ञावोऽअग्नयेगिरागिराचदक्षसे ॥ प्रप्रवयममृतंजातवेदसम्प्रियम्मित्रन्नशंसिषम् ॥ १ ॥ सुगंधतैलेनाभ्यज्य ।
ॐद्रुपदादिवमुमुचानःस्विन्नःस्नातोमलादिव ॥ पूतम्पवित्रेणेवाज्यमापःशुन्धन्तुमैनसःइतिमंत्रेण यवशालिगोधूममसूरबिल्वचूर्णैरुद्वर्त्य ।
ॐयातेरुद्रशिवातनूरितियक्षकर्दमेनानुलिंपेत् ॥ ( यक्षकर्दमस्तु । कस्तूरिकायाद्वौभागौद्वौभागौकुंकुमस्यच ॥ चंदनस्यत्रयोभागाःशशिन-
स्त्वेकएवहीत्युक्तः ) ॥ ॐयातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशंतमयागिरिशन्ताभिचाकशीहि ॥ १ ॥ ततोजटामांस्या-
नुलिप्य । मानस्तोक इतिप्रतद्विष्णुरितिमंत्रद्वयेनउष्णोदककलशद्वयाभ्यांदेवंस्नापयेत् ॥ ॐमानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽ-
अश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तःसदमित्त्वाहवामहे ॥ १ ॥ ॐप्रतद्विष्णुस्तवतेवीर्य्येण मृगोनभीमःकुचरोगिरिष्ठाः ॥
यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियन्तिभुवनानिविश्वा ॥ २ ॥ ततः पंचनद्यइतिपंचामृतेन । ॐपञ्चनद्यःसरस्वतीमपियन्तिसस्रोतसः ॥ सर-
स्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ ३ ॥ यज्ञायज्ञाव इतिपंचपल्लवकषायकलशेन । ॐयज्ञायज्ञावोऽअग्नयेगिरागिराचदक्षसे ॥ प्रप्रवयम-
मृतंजातवेदसम्प्रियम्मित्रन्नशंसिषम् ॥ ४ ॥ याऽओषधीरितिऔषधीकलशेन । ॐयाऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनु-
बभ्रूणामहःशतन्धामानिसप्तच ॥ ५ ॥ ततः पृथक्पृथक्दुग्धादिद्रव्यैर्देवंस्नापयेत् ॥ ॐपयः पृथिव्यामितिदुग्धेन । ॐपयःपृथिव्याम्प-
यऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीःप्प्रदिशःसन्तुमह्यम् ॥ ततःशुद्धोदकेनवरुणस्योत्तंभनमसीति । दधिक्राव्णइतिदध्ना ।

ॐदधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूꣳषितारिषत् ॥ २ ॥ पुनःशुद्धोकेन संतेपयाꣳसि ।
ॐघृतंघृतपावान इतिघृतेन । ॐघृतंघृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यहविरसिस्वाहा ॥ दिशःप्रदिशऽआदिशोविदिश-
ऽउद्दिशोदिग्भ्यःस्वाहा ॥ ३ ॥ पुनःशुद्धोदकेन आप्यायस्वमदि० ॥ ४ ॥ पुनःशुद्धोदकेन तत्त्वायामि० । ॐमधुवातेतिमधुना । ॐमधु-
वाताऽऋतायतेमधुक्षरन्तिसिन्धवः ॥ माध्वीर्नःसन्त्वोषधीः ॥ ५ ॥ अपाꣳरसमितिशर्करोदकेन । ॐअपाꣳरसमुद्वयसꣳसूर्य्येसन्तꣳस-
माहितम् ॥ अपाꣳरसस्ययोरसस्तंवोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ पुनःशुद्धोदकेन-
अप्स्वग्ने० । ततोगंधद्वारामितिगंधोदकेन ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ १ ॥
द्यौःशांतिरिति शांतिकलशोदकेन । ओषधीरितिसितपुष्पोदकेन । ॐओषधीरितिमातरस्तद्वोदेवीरुपब्रुवे ॥ सनेयमश्वङ्गाम्वासऽआत्मा-
नन्तवपूरुष ॥ १ ॥ याःफलिनीरित्यष्टफलकलशेन । ॐयाःफलिनीर्य्याऽअफलाऽअपुष्पाय्याश्चपुष्पिणीः ॥ वृहस्पतीप्रसूतास्तानोमु-
ञ्चत्वꣳहसः ॥ २ ॥ हिरण्यगर्भ इतिसुवर्णोदककलशेन । ॐहिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्या-
मुतेमाङ्कस्मैदेवायहविषाविधेम ॥ ३ ॥ हविष्मतीरितिगोशृंगोदकेन । ॐहविष्मतीरिमाऽआपोहविष्माँ २ ऽआविवासति ॥ हविष्मा-
न्देवोऽअध्वरोहविष्माँ २ ऽअस्तुसूर्य्यः ॥ ४ ॥ धान्यमसीतिधान्योदकेन । ॐधान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा ॥
दीर्घामनुप्रसितिमायुषेधान्देवोवःसविताहिरण्यपाणिःप्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि ॥ ५ ॥ सहस्राणि इतिस-

हस्रधाराकलशेन । ॐसुहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥ तासामीशानोभगवत्पराचीनामुखाकृधि ॥ ६ ॥ याओषधीरितिसर्वौषधि-
जलेन ॥ ७ ॥ नमोस्तुसर्पेभ्य इतिपंचपल्लवोदकेन । ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः ॥ ८ ॥
काण्डात्काण्डादितिदूर्वोदकेन ॐकाण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ इतिदूर्वोदकेन ॥ ९ ॥
अश्वत्थव्यरूयदितिरत्नोदकेन । ॐअष्टौव्यरूयत्ककुभःपृथिव्यास्त्रीधन्वयोजनासप्तसिन्धून् ॥ हिरण्याक्षऽसवितादेवऽआगाद्दधद्रत्नादाशुषे-
वार्य्याणि ॥ १० ॥ इमंमेइतितीर्थोदकेन ( लौकिकेन ) ॐइमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्याऽअसिक्न्यामरुद्वृधेवितस्तया-
र्जीकीयेशृणुह्याशुषोमया ॥ ९ ॥ पुनरष्टभिः कलशैः फलपुष्पमंगलमूलतोयेनपूर्वकल्पितैः समुद्रसंज्ञितैः स्नपयेत् । कयानश्चित्रेतिक्षारसमुद्रो-
दकेन । ॐकयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ १ ॥ आप्यायस्वेतिक्षीरकुंभेन ॥ ॐआप्यायस्वसमेतुतेविश्वतः
सोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥ २ ॥ दधिक्राव्ण इतिदधिकुंभेन । ॐदधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनो-
मुखाकरत्प्रणऽआयुंꣳषितारिषत् ॥ ३ ॥ घृतवतीतिघृतकुंभेन । ॐघृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा ॥ द्यावापृथिवी-
वरुणस्यधर्म्मणाविष्कभितेऽअजरेभूरिरेतसा ॥ ४ ॥ पयःपृथिव्यामितिइक्षुरसकुंभेन । ॐपयःपृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षे-
पयोधाः ॥ पयस्वतीःप्प्रदिशः सन्तुमह्यम् ॥ ५ ॥ देवंबर्हिरितिसुरोदककुंभेनवा । ॐदेवम्बर्हिर्व्वारितीनान्देवमिन्द्रमवर्द्धयत् ॥ स्वासस्थ-
मिन्द्रेणासन्नमन्याबर्हीꣳष्यभ्यभूद्वसुवनेवसुधेयस्यवेतुयज ॥ ६ ॥ स्वादिष्ठयेतिदूर्वोदकेनवा । ॐस्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥

इन्द्रायुपातवेसुतः ॥ ७ ॥ सरस्वतीयोन्यामितिनालिकेरजलेनदर्भोदकेनवा । ॐसरस्वतीयोन्यांगर्ब्भमन्तरश्विभ्याम्पत्नीसुकृतम्बिभर्ति ॥
अपाꣳरसेनुवरुणोनसाम्नेंद्रꣳश्रियैजनयन्नप्सुराजा ॥ ८ ॥ ततःपंचत्रिंशत्कलशेषुमध्येयेअन्तिमादशपल्लवान्वितालोकपालकलशास्तै-
र्देवंस्नपयेत् ॥ तत्र त्रातारमिन्द्रमितिकदंबपल्लवकुंभेन । ॐत्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूत-
मिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ १ ॥ त्वन्नोऽअग्न इतिशाल्मलीपल्लवोदकेन ॥ ॐत्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासि-
सीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ २ ॥ सुगंनःपंथेतिजंबूपल्लवोदकेन । ॐसुगन्नःपंथाम्प्रदिशन्नऽएहि-
ज्योतिष्मध्येह्यजरन्नआयुः ॥ अपैतुमृत्युरमृतम्मऽआगाद्वैवस्वतोनोऽअभयङ्कृणोतु ॥ ३ ॥ असुन्वंतइतिअशोकपल्लवोदकेन । ॐअसुन्न्व-
न्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ४ ॥ तत्त्वायामीतिप्लक्षपल्लवो-
दकेन । ॐतत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ ५ ॥ आनो-
नियुद्भिरितिउदुंबरपल्लवोदकेन । ॐआनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयंपात
स्वस्तिभिःसदानः ॥ ६ ॥ वयꣳसोमेतिवटपल्लवोदकेन । ॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ७ ॥ तमीशानइ-
तिबिल्वपल्लवोदकेन । ॐतमीशानंजगतस्तस्थुषस्पतिंधियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥
॥ ८ ॥ नमोस्तुसर्पेभ्यइतिनागपल्लवोदकेन । ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ ९ ॥

ब्रह्मयज्ञानमितिपलाशपल्लवोदकेन । ॐब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनि-
मसतश्चविवः ॥ १० ॥ ॐत्र्यंबकंयजामहेइतिरुद्राक्षोदकेन ॥ १ ॥ एभिर्मंत्रैः संस्नाप्य ॥ ॐसहस्रशीर्षेतिपुरुषसूक्तेनयथासंभवकलशैः भेरी-
शंखतूर्यकोलाहलध्वनिपुण्यस्त्रीमंगलगीतैः ब्रह्मघोषैः षोडशाष्टचतुरादिभिर्देवंस्नापयित्वासुगंधिनासितवस्त्रेणपरिमृज्य ॥ ॐविश्वतश्चक्षुरुत-
विश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ सम्बाहुभ्यांधमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवएकः इतिमंत्रेणसंकलीकृत्यदेवमावाहयेत् ॥
एह्येहि भगवन्विष्णो लोकानुग्रहकाम्यया ॥ यज्ञभागं गृहाणेमंवासुदेव नमोस्तुते ॥ १ ॥ देवभेदेनमंत्रोहः कर्तव्यः । इत्यावाह्यहिरण्य-
वर्णेतिहिरण्यपात्रेणपाद्यं अर्घ्यंचदद्यात् ॥ ॐहिरण्यवर्णांहरिणींसुवर्णरजतस्रजाम ॥ चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह ॥ १ ॥ ततो-
विभ्राडित्याचमनं ॥ ॐविभ्राड्बृहत्पिबतुसोम्यंमध्वायुर्दधद्यज्ञपतावविह्रुतम् । वातजूतोयोऽअभिरक्षतित्मनाप्रजाःपुपोषपुरुधाविरा-
जति ॥ २ ॥ त्र्यंबकमितिचंदनानिविलेपयेत् । ॐत्र्यंबकंयजामहेसुगंधिम्पुष्टिवर्द्धनम ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ३ ॥
वेदाहमित्युपवीतं । ॐवेदाहमेतम्पुरुषम्महान्तमादित्यवर्णतमसःपरस्तात् ॥ तमेवविदित्वातिमृत्युमेतिनान्यःपन्थाविद्यतेयनाय ॥ ४ ॥
युवासुवासेतिवस्त्रम् । ॐयुवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तन्धीरासःकवयउन्नयन्तिस्वाध्योमनसादेवयंतः ॥ ५ ॥
ततो वेदाहमेतमित्युत्तरीयम् ॥ ६ ॥ इदम्विष्णुरितिपुष्पं । ॐइदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांसुरेस्वाहा ॥ ७ ॥ धूरसी-
तिधूपं । ॐधूरसिधूर्वधूर्वन्तन्धूर्वतंयोऽस्मान्धूर्वतितन्धूर्वयम्वयन्धूर्वामः ॥ देवानामसिवह्नितमसस्नितमम्पप्रितमञ्जुष्टतमंदेवहूतमम ॥ ८ ॥

चंद्रमामनस इतिदीपं । ॐचंद्रमामनसोजातश्चक्षोःसूर्योऽअजायत ॥ श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ ९ ॥ अन्नपते इतिनैवेद्यं ॥ ॐअन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारन्तारिषऽऊर्जन्नोधेहिद्विपदेचतुष्पदे ॥ १० ॥ आचमनीयंकरोद्वर्त्तनंतांबूलंफलादि-समर्प्य नीराजनंकृत्वा । ॐयज्ञेनयज्ञमयजन्तदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकम्महिमानः सचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ इतिपुष्पांजलिंदत्वापुरुषसूक्तेन ज्येष्ठसाम्ना वैराजगायत्रसामभिः स्तुत्वा तैलपात्रस्नानवस्त्रासननैवेद्यादिकंशिल्पिनेदद्यात् । एतत्संक्षेपतः प्रोक्तं स्नानकर्म जगत्पते ॥ एतद्वै साधकः कृत्वा सर्वान्कामान्समश्नुते १ ॥ इतिदेवस्नपनविधिः ॥ अथाऽधिवासनं ॥ तच्चमंडपस्ययथोक्तको-णेधान्यराशिषुसप्तसुसर्वेषांदेवानांउपवेशनंकृत्वा शय्यायांदेवमधिवासयेत् ॥ अधिवासनावसरे द्वादश ब्राह्मणान्पायसान्नेनदेवोनःप्रीयतां-इतिभोजयेत् ॥ ततःसमलंकृताश्चत्वारोगाःसदक्षिणाःसवत्साःआचार्येभ्योदत्वादेवंअधिवासतेत् । (पूर्वमुखेप्रासादे अग्निकोणेशय्या । पश्चिममुखेप्रासादे वायुकोणेशय्या । उत्तरमुखेप्रासादेईशानकोणेशय्या । दक्षिणमुखेप्रासादे नैर्ऋत्यकोणेशय्या) तत्रादौपुरुषसूक्तेनदेवं-स्तुत्वा ॥ ॐउत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुमरुतःसुदानवऽइन्द्रप्राशूर्भवासचा ॥ १ ॥ उत्तिष्ठोत्तिष्ठगोविंद उत्तिष्ठ गरुड-ध्वज ॥ उत्तिष्ठ कमलाकांत त्रैलोक्यं मंगलं कुरु ॥ २ ॥ उत्तिष्ठोत्तिष्ठ कंसारे त्यज निद्रां जगत्पते ॥ साधवः संप्रतीक्षंतेत्वद्दर्शनमहो-त्सवाः ॥ ३ ॥ इत्युत्थाप्य । रथेतिष्ठन्नितिरथमारोपयेत् । ॐरथेतिष्ठन्नयतिवाजिनःपुरोयत्रयत्रकामयतेसुषारथिः ॥ अभीशूनाम्महिमानं-

१ इमानिसूक्तानिसूक्तप्रकरणेद्रष्टव्यानि ।

॥ श्रीः ॥

# अथ शान्तिसारानुक्रमणिका प्रारभ्यते ।

॥ इति शान्तिसारानुक्रमणिका समाप्ता ॥

॥ गणेशाय नमः ॥ ॥ श्रीरामकृष्णपितरंनत्वोमांबासदाशिवंराममम्॥दिनकरशर्मातनुतेशान्तिकसारंसुखायविबुधानाम् ॥ १ ॥ ग्रन्थेस्मि
न्शान्तिसाराख्येयेमयार्थानिरूपिताः॥ तेषामादौसुबोधायक्रियतेनुक्रमःस्फुटम् ॥ २ ॥ कथितोयुतहोमोत्रलक्षहोमस्ततःपरम् ॥ कोटि
होमस्तस्यचोक्ताभेदाःशतमुखादयः ॥ आदित्यादिग्रहाणांचप्रत्येकंशांतयस्ततः ॥ शनिस्तुतिर्ग्रहस्नानंग्रहयोगेचशान्तिकम् ॥ विवाहादौ
गुरोःशान्तिःप्रतिशुक्रादिशांतयः ॥ विरुद्धग्रहणेशान्तिःशान्तिर्वैनायकीततः ॥महारुद्रादिविधयस्तथारुद्राभिषेचनम् ॥ पंचामृतेनस्नप
नंसहस्रघटकंतथा ॥ महास्नानविधिस्तद्वन्महापूजातदुत्तरम्॥ त्वरितस्याथरुद्रस्यविधानंसमुदीरितम्॥ लिंगस्यपार्थिवस्याथपूजाचंडीवि
धिस्ततः॥दुर्गाकल्पोथसर्पस्यसंस्कारोवास्तुशान्तिकम्॥रजोदर्शनशान्तिश्चशांतिर्वैधव्ययोगके॥उक्तश्चार्कविवाहोथगोमुखप्रसवस्तथा ॥
तथाकृष्णचतुर्दश्याःसिनीवाल्याश्चशान्तिकम्॥शान्तिःकुह्वाश्चदर्शस्यमूलाश्लेषाविधिस्ततः॥ ज्येष्ठाशान्तिस्ततःप्रोक्तानक्षत्रैक्येवशान्ति
कम्॥ व्यतीपातेचवैधृत्यांसंक्रमेचैवशान्तिकम्॥नक्षत्राणांतिथीनांचगंडांतेशान्तिकंततः ॥उत्तरादौदिनस्यापिक्षयेविषघटीषुच॥ शान्ति
र्ग्रहणजेप्युक्तायमलोत्पत्तिशान्तिकम् ॥ शान्तिःसदंतजननेत्रिकशान्तिस्ततःपरम्॥सिंहादौचप्रसूतस्यगवादेःशान्तिकंततः ॥ दिनमासा
ब्दभेदेनबालशान्तिस्ततःपरम् ॥ रोगर्क्षतिथिवारादिशांतयोज्वरशांतयः॥ पंचकेचतथाशांतिस्त्रिपुष्करमृतेततः॥ त्रिपादर्क्षमृतेशान्तिर्वि
योगग्रहशान्तिकम् ॥गजाश्वगोपीडनेचकाकमैथुनदर्शने॥वायसांतःप्रवेशेचपल्लीसरटशांतिकम्॥कपोतस्यततःशान्तिःकृत्याशान्तिस्ततः
परम् ॥ विद्युद्धतेतथाशान्तिरद्भुतानांचलक्षणम् ॥ उत्पातपाककालस्यशान्तिःसाधारणीततः ॥ देवताग्न्योर्वृक्षवृष्ट्योर्जलानांचविकारके॥

उपस्कारविकारेचमृगेपक्षिविकारके ॥ अनिमित्तेगृहादेंश्वपातेशान्तिस्ततःपरम् ॥नानोत्पातेषुशान्तिश्चमृतजीवनशान्तिकम् ।उल्काशान्ति
रकालेचहस्तिनोमदआगते ॥ हस्तिन्याश्वतथाधेनोर्मदेशान्तिस्ततःपरम् ॥ शान्तिर्भंगेश्वदंष्ट्राणांभंगेलिंगादिकस्यच ॥ दुःस्वप्नदर्शने
शान्तिःपर्जन्याभावशान्तिकम् ॥ आद्योराजाभिषेकश्चप्रतिवर्षाभिषेचनम् ॥ सिंहासनच्छत्रविधिर्दुर्गस्यविधिरीरितः ॥ तत्रनवग्रहमखस्य
धर्मत्वेनसर्वशान्तिप्रकृतित्वात्सआदौनिरूप्यतेसद्विविधः ॥ अयुतहोमादियुक्तःकेवलश्चेति ॥ तत्राद्योमात्स्यादावुक्तः ॥ द्वितीयोयाज्ञव
ल्क्यस्मृत्यादौ ॥ द्विविधस्यापिधर्माणांसंकरःप्रयोगपारिजातेउक्तः ॥ सकाम्योनैमित्तिकश्च ॥ कार्यारंभेषुसर्वेषुप्रतिष्ठास्वध्वरेषुच ॥ नववे
श्मप्रवेशेचगर्भाधानादिकर्मसु ॥ आरोग्यस्नानसमयेसंक्रांतौरोगसंभवे। अभिचारेचयःकुर्याद्ग्रहपूजांविधानतः ॥सोभीष्टफलमाप्नोतिनिर्विघ्ने
नसंशयः ॥इतिप्रयोगपारिजातेउत्पलपरिमलोक्तेः ॥ अत्रनिमित्तसतम्यानित्यत्वमपीतितत्रैवोक्तम् ॥ नित्येमंडपोनास्तीत्यप्युक्तंतत्रैवमा
त्स्ये ॥ नित्यंनैमित्तिकंहित्वासर्वमन्यत्समंडपम् । कर्मांगभूतग्रहयज्ञोभ्युदयदिनात्पूर्वंसप्तदिनमध्येकार्यइत्युक्तंपारिजाते।सत्रिविधः ॥एका
ग्निरनेककर्तृकः । एकाग्निरेककर्तृकः । अनेकाग्निरनेककर्तृकश्चेति ॥ आद्यस्यनिषेधः पारिजातेआश्वलायनोक्तेः ॥ एकस्तुबहुकुंडेषुकुर्या
द्ग्रहमखंगुरुः ॥ बहुष्वहःसुचैकस्मिन्नह्निवातद्विधानवित् ॥ एककुंडेतुनवभिर्नैवहोमःप्रशस्यते ॥ इदंचनवाचार्यपक्षेज्ञेयम् । अत्रशूद्राणाम
प्यधिकारः ॥ धर्मेप्सवस्तुधर्मज्ञाःसतांधर्ममनुष्ठिताः ॥ मंत्रवर्ज्यंनदुष्यंतिप्रशंसांप्राप्नुवंतिचेतिशूद्रधर्मप्रकरणेमनूक्तेः ॥यत्त्विदंमेधातिथिर्व्या
ख्यौमंत्ररहितोयोब्राह्मणादीनामुपवासादिधर्मउक्तस्तमनुतिष्ठन्तःशूद्रानदुष्यंतिनपुनःसमंत्रकाण्यपिमंत्रवर्जमनुतिष्ठंतोनदुष्यंतीति ॥ तद

अथकाकमैथु

दुक्तवाक्यवैयर्थ्यापत्तेः नचसमंत्रककर्मविधीनांशूद्रान्प्राप्तप्रवृत्तेः कर्मणिमंत्रवर्जिताविधातुमशक्येतिवाच्यम् ॥ मंत्ररहितयविशिष्टकर्मवि
धौबाधकाभावात् ॥ तथाच ॥ ब्राह्मणादिकर्तृकोऽधानवदत्रकर्मभेदः यद्वात्रमंत्राभावः सर्वकर्मांगत्वेनविधीयते सचप्रकरणाच्छूद्रविषयः॥
ननुयत्रतुलातडागोत्सर्गादौचतुर्णामपिवर्णानां शूद्रेणापिप्रकर्तव्यमित्यादिवचनाच्छूद्राधिकारस्तत्रैवमंत्रवर्जितविधानमस्त्विति चेन्न संको
चेप्रमाणाभावात्॥नचैवंसंध्यावंदनादौशूद्रस्यमंत्रवर्जमधिकारःस्यादितिवाच्यम् ॥ द्विजत्वस्यतत्राधिकारतावच्छेदकत्वात् किंचशूद्रस्यस
मंत्रकतुलादानादावधिकारोरथकारवत् अतएवमाधवेन ॥ दक्षिणार्थंतुयोविप्रःशूद्रस्यजुहुयाद्धविः॥ ब्राह्मणस्तुभवेच्छूद्रःशूद्रस्तुब्राह्मणोभवे
दितिपराशरवाक्यम् ॥ यत्रविप्रःशूद्रस्यदक्षिणामादाय तदीयंहविः शान्तिपुष्ट्याद्यथर्ववेदिकैर्मन्त्रैर्जुहोतितत्रब्राह्मणस्यैवदोषः ॥ शूद्रस्तु
होमफलंलभेतैवेतिव्याख्यातम् ॥ ततसिद्धोग्रहमखमूलाद्युत्पत्तिवास्तुशांत्यादौशूद्रस्याधिकारः ॥ अतएवमोक्षधर्मेशूद्रंप्रकृत्य मं
त्रवर्जंनदुष्यंतिकुर्वाणाः पौष्टिकींक्रियामित्युक्तम् ॥ कुमारीचशुभंपतिमितिचलक्षहोमे ॥ नचशूद्रस्याग्न्यभावादनधिकारः ॥
अस्यश्रौतत्वगार्ह्यत्वाभावेनलौकिकाग्न्यधिकरणत्वाच्छूद्रस्यचतत्सत्वात् । अतएवमनुः । वैवाहिकेग्नौकुर्वीतगार्ह्यंकर्मयथाविधि ॥ पंच
यज्ञविधानंचपक्तिंचान्वाहिकींगृहीति वैवाहिकपदेनदारकालदायाद्यकालहरणसंस्कृतोग्निरुच्यते स्मार्तंकर्मविवाहाग्नौकुर्वीतप्रत्यहंगृही ॥
दायकालाहृतेवापिश्रौतंवैतानिकाग्निष्विति याज्ञवल्क्योक्तावपिस्मार्तपरम् ॥ मनूक्त्याउपसंहारात् ॥ तेनगार्ह्यस्यवैवाहिकाग्न्य
धिकरणत्वादेतस्यस्मार्तत्वेनगार्ह्यत्वाभावात लौकिकाग्न्यधिकरणत्वम् ॥ अतएवगार्ह्यमौपासनेकुर्यात्सर्वाधानीतुलौकिके ॥

स्मार्तंचलौकिकेकुर्याच्छ्रौतंवैतानिकाग्निष्वितिस्मृत्यर्थसारेस्मार्तगार्ह्ययोर्भेद उक्तः एतेनसर्वाधानिनः स्मार्तकर्मार्थंपुनःस्मार्ताग्न्युत्पादना
र्थंवदन्वृत्तिकारःपरास्तः स्मार्ताग्नौनवग्रहमखइतिविज्ञानेश्वरोक्तिस्तुकात्यायनविषयस्तत्सूत्रेतथोक्तेः अतएवविनायकशान्तौलौकि
काग्निरेवउक्तः ॥ व्रतहेमाद्रौकालिकापुराणमपि ॥ स्त्रीबालशूद्रमूर्खैस्तुहोतव्यंप्रत्यहंतथा ॥ सभ्येथोवावसथ्येवानतुकुंडेकदा
चनेतिसभायांभवःसभ्योलौकिकइत्यर्थः ॥ अवसथइतिगृहनामगृहसंबन्धीपाकाग्निरित्यर्थः ॥ कुंडपदेनश्रौतगार्ह्यौलक्ष्येतेतयोर्नि
षेधोनित्यानुवादस्तस्मादयुतहोमादिकंलौकिकाग्नावेवश्रौतस्मार्ताग्न्योरितिसिद्धम् ॥ अथायुतहोमादिविधिः ॥ मात्स्ये ॥ वैशंपाय
नमासीनमपृच्छच्छौनकःपुरा ॥ सर्वकामाप्तयेनित्यंकथंशांतिकपौष्टिकम्॥शान्तिकमनिष्टशामकम्॥पौष्टिकमैहिकफलजनकम् ॥वैशंपा
यनउवाच ॥ श्रीकामःशान्तिकामोवाग्रहयज्ञंसमाचरेत्॥वृष्ट्यायुःपुष्टिकामोवातथैवाभिचरन्पुनः ॥ ग्रहशांतिंप्रवक्ष्यामिपुराणश्रुतिचोदि
ताम्॥पुण्येह्निविप्रकथितेकृत्वाब्राह्मणवाचनम्॥ग्रहान्ग्रहाधिदेवांश्चस्थाप्यहोमंसमाचरेत्॥ ग्रहयज्ञस्त्रयःप्रोक्ताःपुराणश्रुतिभाषितम्॥ गर्त
स्योत्तरपूर्वेणवितस्तिद्वयविस्तृताम् ॥ वप्रद्वयवृतांवेदींवितस्त्युच्छ्रायसंयुताम् ॥ संस्थापनायदेवानांचतुरस्रामुदक्प्लवाम् ॥ स्कांदेतु ॥
तस्माच्चोत्तरपूर्वेणस्थंडिलंहस्तमात्रकम् ॥ त्रिवप्रंचतुरस्रंचवितस्त्युच्छ्रायसंमितामितिवेदः त्रिमेखलात्वमुक्तम् ॥ अग्निप्रणयनंकृत्वातस्या
मावाहयेत्सुरान् ॥ देवतानांततःस्थाप्याविंशतिर्द्वादशाधिकाः ॥ सूर्यःसोमस्तथाभौमोबुधजीवसितार्कजाः ॥ राहुःकेतुरितिप्रोक्ताग्रहालो
कहितावहाः ॥ संस्मरेद्रक्तमादित्यमंगारकसमन्वितम् ॥ सोमशुक्रौतथाश्वेतौबुधजीवौचपिंगलौ॥ मंदोराहुस्तथाकृष्णौधूम्रान्केतुगणान्वि

दुः ॥ ग्रहवर्णानिदेयानिवासांसिकुसुमानिच ॥ धूपामोदोत्रसुरभिरुपरिष्टाद्वितानकम् ॥ शोभनंस्थापयेत्प्राज्ञःफलपुष्पसमन्वितम् ॥ गुडौ
दनंरवेर्दद्यात्सोमायघृतपायसम् ॥ अंगारकायसंयावंबुधायक्षीरषाष्टिकम् ॥ लोहितायहविष्यान्नमितिस्कान्देपाठः ॥ दध्योदनंतुजीवायशु
क्रायचघृतौदनम् ॥ शनैश्चरायकृसरमाजमांसंचराहवे ॥ चित्रौदनंतुकेतुभ्यः सर्वभक्षैरथार्चयेत् ॥ स्कांदे ॥ मिश्रितंतिलमाषैश्चनैवेद्यंतुश
नैश्चरे ॥ राहोर्मांसौदनंचैवकेतोश्चित्रौदनंतथेतिपाठः ॥ प्रागुत्तरेणतस्माच्चदध्यक्षतविभूषितम् ॥ चूतपल्लवसंछन्नंफलवस्त्रयुगान्वितम् ॥
पंचरत्नसमायुक्तंपंचभंगसमन्वितम् ॥ स्थापयेदव्रणंकुंभंवरुणंतत्रविन्यसेत् ॥ गंगाद्याः सरितःसर्वाःसमुद्राश्चसरांसिच ॥ गजाश्वर
थ्यावल्मीकसंगमाद्ध्रदगोकुलात् ॥ मृदमानीयविप्रेन्द्रसर्वौषधिसमन्विताम् ॥ स्नानार्थंविन्यसेत्तत्रयजमानस्यधर्मवित् ॥ सर्वेसमुद्राः
सरितस्तीर्थानिजलदानदाः ॥ आयांतुयजमानस्यदुरितक्षयकारकाः ॥ एवमावाहयित्वातानमरान्मुनिसत्तम ॥ होमंसमारभेत्सर्पिर्य
वव्रीहितिलादिना ॥ अर्कःपलाशःखदिरस्त्वपामार्गोथपिप्पलः ॥ उदुंबरःशमीदूर्वाकुशाश्चसमिधस्त्विमाः ॥ एकैकस्याष्टशत
कमष्टाविंशतिवापुनः ॥ होतव्यामधुसर्पिर्भ्यांदध्नाचैवसमन्विताः ॥ प्रादेशमात्राःसमिधःसरलाअपलाशिनीः ॥ समिधःकल्पयेत्प्राज्ञः
सर्वकर्मसुसर्वदा ॥ देवानामपिसर्वेषामुपांशुपरमार्थवित ॥ स्वेनस्वेनैवमन्त्रेणहोतव्याःसमिधःपृथक् ॥ होतव्यंचघृताद्युक्तंचरुभक्ष्यादिकं
पुनः ॥ मंत्रैर्दशाहुतीर्हुत्वाहोमंव्या हृतिभिस्ततः ॥ उदङ्मुखाःप्राङ्मुखावाकुर्युर्ब्राह्मणपुंगवाः ॥ दशेतिसंख्यादेवतादिविषया॥मंत्रवंतश्चक
र्तव्याश्चरवःप्रतिदैवतम् ॥ हुत्वौदनंचरुंसम्यक्ततोहोमंसमारभेत् ॥ आकृष्णेनेतिसूर्यायहोमःकार्योद्विजन्मना ॥ आप्यायस्वेतिसोमा

शांति-
॥ ३ ॥

यमंत्रेणजुहुयात्पुनः ॥अग्निर्मूर्धादिवोमंत्रमितिभौमायकीर्तयेत्॥ अग्नेविवस्वदुषसइतिसोमसुतायवै ॥ बृहस्पतेपरिदीजारथेनेतिगुरोर्मतः॥
शुक्रंतेअन्यदितिचशुक्रस्यापिनिगद्यते॥ शनैश्चरायतुपुनःशन्नोदेवीतिहोमयेत् ॥कयानश्चित्रऽआभुवदितिराहोरुदाहृतः॥ केतुंकृण्वन्नि
तिब्रूयात्केतूनामपिशांतये ॥ आवोराजेतिरुद्रस्यबलिहोमंसमारभेत्॥ आपोहिष्ठेत्युमायास्तुयोनेतिस्वामिनस्तथा ॥ विष्णोरिदंविष्णु
रितित्वमित्स्वेतिस्वयंभुवः॥इंद्रमिद्देवतातयइंद्रायजुहुयात्पुनः॥तथायमस्यचायंगौरितिहोमःप्रकीर्तितः ॥ कालस्यब्रह्मजज्ञानमितिमंत्रः
प्रशस्यते ॥ चित्रगुप्तस्यवाज्ञातमितिवेदविदोविदुः ॥ अग्निंदूतंवृणीमहइतिवह्नेरुदाहृतः ॥ उदुत्तमंवरुणइत्यपांमंत्रःप्रकीर्तितः॥
भूमेःपृथिव्यंतरिक्षमितिवेदेषुठच्यते॥ सहस्रशीर्षापुरुषइतिविष्णोरुदाहृतः ॥ इंद्रायेंदोमरुत्वतइतिशक्रस्यशस्यते॥ उत्तानपर्णेसुभगे
इतिदेव्याःसमारभेत् ॥ प्रजापतेःपुनर्होमःप्रजापतइतिस्मृतः॥ नमोस्तुसर्पेभ्यइतिसर्पाणांमंत्रउच्यते ॥ एषब्रह्मायऋत्विजइतिब्रह्मण्यु
दाहृतः ॥विनायकस्यचातूनइतिमंत्रोबुधैःस्मृतः॥जातवेदसेसुनवामदुर्गामंत्रोयमुच्यते॥आदित्प्रत्नस्यरेतसआकाशस्यउदाहृतः ॥ कृणा
शिशूर्महीनांतुतद्वद्वायोःप्रकीर्तितः॥एषोउषाअपूर्व्येत्यश्विनोर्मंत्रोयमुच्यते॥पूर्णाहुतिन्तुमूर्धानंदिवइत्यभिपातयेत्॥ अथाभिषेकमंत्रेणवा
द्यमंगलगीतकैः॥ यजमानस्यकर्तव्यंचतुर्भिःस्नपनंद्विजैः ॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणो
विभुः ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः॥ ब्रह्म
णासहिताःसर्वेदिक्पालाःपांतुतेसदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिःकांतिस्तुष्टिश्चमातरः ॥

सार.
॥ २

एतास्त्वामभिषिंचंतुधर्मपत्न्यःसमागताः ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिंचन्तुराहुःकेतुश्चतर्पिताः ॥ देव
दानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमुनयोगावोदेवमातरएवच ॥देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः॥ अस्त्राणिसर्वशस्त्राणिराजा
नोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिंचंतुसर्वकामार्थ
सिद्धये ॥ ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः ॥ सर्वौषधैःसर्वगंधैःस्नापितोवेदपुंगवैः ॥ यजमानः सपत्नीकःसर्त्विजस्तुसमा
हितः ॥ दक्षिणाभिःप्रयत्नेनपूजयेद्गतविस्मयः ॥ सूर्यायकपिलांधेनुंशंखंदद्यात्तथेंदवे ॥ रक्तंधुरंधरंदद्याद्भौमायककुदान्वितम् ॥
बुधायजातरूपंतुगुरवेपीतवाससी ॥ श्वेताश्वंगुरवेदद्यात्कृष्णांगामर्कसूनवे ॥ आयसंराहवेदद्यात्केतुभ्यश्छागमुत्तमम् ॥ सुवर्णेनसमाःकार्या
यजमानेनदक्षिणाः॥ सर्वेषामथवागावोदातव्याहेमभूषिताः ॥सुवर्णमथवादद्याद्गुरुर्वायेनतुष्यति॥ स्वमंत्रेणप्रदातव्याःसर्वाःसर्वत्रदक्षिणाः॥
कपिलेसर्वभूतानांपूजनीयासिरोहिणी॥तीर्थदेवमयीयस्मादतः शांतिंप्रयच्छमे।पुण्यस्त्वंशंखपुण्यानांमंगलानांचमंगलम्॥विष्णुनाविधृतो
नित्यमतःशांतिंप्रयच्छमे॥धर्मस्त्वंवृषरूपेणजगदानंदकारकः।अष्टमूर्तेरधिष्ठानमतःपाहिसनातन।हिरण्यगर्भगर्भस्त्वंहेमबीजंविभावसोः॥
अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ पीतवस्त्रयुगंयस्माद्वासुदेवस्यवल्लभम्॥ प्रदानात्तस्यमेविष्णुरतःशांतिंप्रयच्छमे॥विष्णुस्त्वमश्वरूपे
णयस्मादमृतसंभवः ॥ चंद्रार्कवाहनोनित्यमतःशांतिंप्रयच्छमे ॥ यस्मात्त्वंपृथिवीसर्वाधेनुःकेशवसन्निभा॥ सर्वपापहरानित्यमतःशांतिंप्र
यच्छमे।यस्मादायसकार्याणितवाधीनानिसर्वदा॥लांगलाद्यायुधादीनितस्माच्छांतिंप्रयच्छमे॥ यस्मात्त्वंसर्वयज्ञानामंगत्वेनव्यवस्थिता॥

यानंविभावसोर्नित्यमतःशांतिंप्रयच्छमे ॥ गवामंगेषुतिष्ठंतिभुनानिचतुर्दश॥यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच॥यस्मादशून्यंशयनं
केशवस्यशिवस्यच ॥ शय्याममाप्यशून्यास्तुदत्ताजन्मनिजन्मनि ॥ यथारत्नेषुसर्वेषुसर्वेदेवाःप्रतिष्ठिताः॥ तथाशांतिंप्रयच्छंतुरत्नदानेनमे
सुराः ॥ यथाभूमिप्रदानस्यकलांनार्हंतिषोडशीम् ॥ दानान्यन्यानिमेशांतिर्भूमिदानाद्भवत्विह ॥ एवंसंपूजयेद्भक्त्यावित्तशाठ्येनवर्जितः ॥
वस्त्रकांचनरत्नाद्यैर्धूपमाल्यानुलेपनैः।अनेनविधिनायस्तुग्रहपूजांसमाचरेत्॥सर्वान्कामानवाप्नोतिप्रेत्यस्वर्गेमहीयते॥ यस्तुपीडाकरोनित्य
मल्पवित्तस्यचग्रहः॥सतंयत्नेनसंपूज्यशेषानप्यर्चयेन्नरः॥स्कांदेतु॥तमेवपूजयेद्भक्त्यादक्षिणाभिःस्वशक्तितः॥इत्युत्तरार्द्धंपठंति॥ सदैवायुत
होमोयंनवग्रहमखेस्मृतः॥विवाहोत्सवयज्ञेषुप्रतिष्ठादिषुकर्मसु॥निर्विघ्नार्थंमुनिश्रेष्ठतथोद्वेगाद्भुतेषुच॥ वश्यकर्माभिचारादितथैवोच्चाटनादि
कम् ॥ नवग्रहमखंकृत्वाततःकाम्यंसमारभेत् ॥ अन्यथाफलदंपुंसांनकाम्यंजायतेक्वचित् ॥ तस्मादयुतहोमस्यविधानंतुसमाचरेत्॥स्कांदे
॥ देवदानवगंधर्वायक्षराक्षसकिन्नराः ॥पीड्यंतेग्रहपीडाभिः किंपुनर्भुविमानवाः ॥ शनैश्चरेणसौदासोनरमांसेनियोजितः ॥ राहुणापीडि
तोराजानलोभ्रांतोमहीतले ॥ अंगारकविरोधेनरामोराष्ट्राद्विवासितः ॥ अष्टमेनशशांकेनहिरण्यकशिपुर्हतः ॥रविणासप्तमस्थेनरावणोवनि
पातितः ॥गुरुणाजन्मसंस्थेनहतोराजासुयोधनः ॥ पांडवाबुधपीडायांविकर्मणिवियोजिताः ॥ षष्ठेनोशनसायुद्धेहिरण्याक्षोनिपातितः ॥
एतेचान्येचबहवोग्रहदोषैस्तुपीडिताः॥ वृष्ट्यायुःपुष्टिकामोवाग्रहयज्ञंसमाचरेत् ॥ नवग्रहमखेकुर्यादृत्विजश्चतुरःशुभान्॥ अथवाचैकमभ्य
र्च्यविधिनाब्राह्मणासह ॥ जन्मभूर्गोत्रमग्निश्चवर्णस्थानमुखानिच ॥ योज्ञात्वाकुरुतेशांतिंग्रहास्तेनावमानिताः॥ उत्पन्नोर्कःकलिंगेषुयमुना

यांचचंद्रमाः ॥ अंगारकस्त्ववंत्यांचमगधायांहिमांशुजः॥सैंधवेषुगुरुर्जातःशुक्रोभोजकटे तथा॥शनैश्चरस्तुसौराष्ट्रेराहुर्वैराठिनापुरे ॥ अंतर्वे
द्यांतथाकेतुरित्येताग्रहभूमयः॥यस्ययस्यचयद्गोत्रंतत्तद्वक्ष्याम्यतः परम्॥आदित्यःकाश्यपोगोत्रआत्रेयश्चंद्रमाभवेत्॥ भारद्वाजोभवेद्भौमस्त
थात्रेयश्चसोमजः॥ शक्रपूज्योंगिरोगोत्रःशुक्रोवैभार्गवस्तथा॥ शनिःकाश्यपएवाथराहुःपैठीनसिस्तथा॥ केतवोजैमिनीयाश्चग्रहाग्निस्तदनं
तरम् ॥ आदित्येकपिलोनामपिंगलःसोमउच्यते ॥ धूमकेतुस्तथाभौमेजाठराग्निर्बुधेस्मृतः ॥ गुरोश्चैवशिखीनामशुक्रेभवतिपाचकः ॥
शनैश्चरेमहातेजाराहुकेत्वोर्हुताशनः ॥ भास्करांगारकौरक्तौशुक्लौशुक्रनिशाचरौ ॥ सोमपुत्रोगुरुश्चैवतावुभौपीतकौस्मृतौ ॥
कृष्णंशनैश्चरंविद्याद्राहुंचित्राश्चकेतवः ॥ मध्येतुभास्करंविद्याच्छशिनंपूर्वदक्षिणे ॥ दक्षिणेलोहितंविद्याद्बुधःपूर्वोत्तरेणतु ॥ उत्तरेतुगुरुं
विंद्यात्पूर्वेणैवतुभार्गवम् ॥ पश्चिमेतुशनिंविंद्याद्राहुंदक्षिणपश्चिमे ॥ पश्चिमोत्तरतःकेतुःस्थाप्योवैशुक्लतंदुलैः ॥ अथवावर्णकैःकार्याः
स्वस्ववर्णादिधातुभिः ॥ शुक्रार्कौप्राङ्मुखौज्ञेयौगुरुसौम्यावुदङ्मुखौ ॥ प्रत्यङ्मुखःशनिःसोमःशेषादक्षिणतोमुखाः ॥ प्रत्यङ्मुखावूर्ध्व
दृष्टीउदङ्मुखौवामदृष्टी॥प्रत्यङ्मुखावधोदृष्टीदक्षिणतोमुखाः दक्षिणदृष्टयः॥आदित्याभिमुखाइत्युक्तेरितिहेमाद्रिः ॥ वर्णरूपगुणैर्युक्तान्
व्याहृत्यावाहयेत्तुतान् ॥ वक्ष्येस्थानानिदेवानामीश्वरादियथाक्रमम् ॥ सूर्यस्यैवोत्तरंशंभुमुमांसोमस्यदक्षिणे ॥ स्कंदमंगारकस्यैवदक्षिण
स्यांनिवेशयेत ॥ सौम्यात्पश्चिमतोविष्णुंब्रह्माजीवस्यपूर्वतः ॥ इंद्रमैंद्र्यांसिताद्विंद्यान्मंदादाग्नेयतोयमम्॥ राहोःपूर्वोत्तरेकालंसर्वभूतभया
वहम् ॥ केतोर्नैर्ॠत्यदिग्भागेचित्रगुप्तंनिधापयेत् ॥ उत्तरेशनिसूर्याभ्यां गुरुकेत्वोश्चदक्षिणे ॥ गणाधिपःप्रतिष्ठाप्यःसर्वदेवनमस्कृतः ॥

शांति-
॥ ५ ॥

भानुंतुमंडलाकारंसोमंतुचतुरस्रकम् । अंगारकंत्रिकोणंचबुधंबाणाकृतिंतथा॥ गुरुंदीर्घंचतुरस्रंपंचास्रंभार्गवंतथा॥धनुस्तुल्यंशनिंविंद्याद्राहुं शूर्पाकृतिंतथा ॥ ध्वजाकारःकेतवश्चग्रगणेशंतत्ररूपिणम्॥स्थापयेच्छुक्लतंडूलैरित्येतस्मिन्पक्षेमंडलाकारेणस्थापनमितिहेमाद्रिः॥दिवाकर कुजाभ्यांहिदापयेद्रक्तचंदनम् ॥ चंद्रेचभार्गवेचैवसितवर्णंप्रदापयेत् ॥ कुंकुमेनतुसंयुक्तंचंदनंजीवसौम्ययोः ॥ अगुरुंचंदनंदद्याद्राहुकेत्वर्क जेषुच ॥ ग्रहवर्णानिपुष्पाणिगायत्र्याधूपमाददेत् ॥ रवेःकंदुरकंधूपंशशिनस्तुघृताक्षताः ॥ भौमेसर्जरसंचैवअगुरुंचबुधेस्मृतम्॥ सिल्हकं गुरवेदद्याच्छुक्रेबिल्वगिरंतथा॥शुग्गुलंमंदचारेतुलाक्षाराहोश्चकेतवे ॥ उद्दीप्यस्वेतिमंत्रेणदीपंदद्यादतंद्रितः ॥ अन्नहीनोदहेद्राष्ट्रंमंत्रहीनस्तु ऋत्विजः॥ यजमानमदाक्षिण्योनास्तियज्ञसमोरिपुः ॥ अहिंसकस्यदांतस्यधर्मार्जितधनस्यच॥नित्यंचनियमस्थस्यसदासानुग्रहाग्रहाः॥ ग्रहागावोनरेंद्राश्चब्राह्मणाश्चविशेषतः॥ पूजिताःपूजयंत्येतेनिर्दहंत्यपमानिताः ॥ ग्रहाणामिदमातिथ्यंकुर्यात्संवत्सरादपि॥आरोग्यबलसं पन्नोजीवेच्चशरदांशतम् ॥ ग्रहप्रतिमालक्षणंमात्स्ये॥पद्मासनःपद्मकरःपद्मगर्भसमद्युतिः ॥ सप्ताश्वरथसंयुक्तोद्विभुजःस्यात्सदारविः ॥ श्वेतः श्वेतांबरधरोदशाश्वःश्वेतवाहनः ॥ गदापाणिर्द्विबाहुश्चकर्तव्योवरदःशशी ॥ रक्तमाल्यांबरधरःशक्तिशूलगदाधरः ॥ चतुर्भुजोमेषगामीवर दःस्याद्धरासुतः ॥ पीतमाल्यांबरधरः कर्णिकारसमद्युतिः ॥ खड्गचर्म गदापाणिःसिंहस्थोवरदोबुधः ॥ देवदैत्यगुरूतद्वत्पीतश्वेतौचतुर्भु जौ॥दंडिनौवरदौकार्यौसाक्षसूत्रकमंडलू॥इंद्रनीलद्युतिःशूलीवरदोगृध्रवाहनः । बाणबाणासनधरःकर्तव्योर्कसुतःसदा॥करालवदनःखड्गच र्मशूलीवरप्रदः॥नीलसिंहासनस्थश्चराहुरत्रप्रशस्यते॥धूम्राद्विबाहवःसर्वेगदिनोविकृताननाः॥गृध्रासनगतानित्यंकेतवःस्युर्वरप्रदाः॥सर्वेकि

रा(टन:कार्याग्रहालिकाहितावहाः ॥ अंगुलेनोच्छ्रिताःसर्वेशतमष्टोत्तरंसदा ॥ याज्ञवल्क्यः ॥ ताम्रकात्स्फाटिकाद्रक्तचंदनात्स्वर्णजावुभौ॥
रजतादायसःसीसात्कांस्यात्कार्यानवग्रहाः॥ ब्रह्मयामलेतु॥ताम्राचुकारयेद्भानुंरजतेननिशाकरम्॥ कुजजीवज्ञरूपाणिसुवर्णेनतुकारयेदिति
विशेषः ॥ (अथलक्षहोमविधिर्मात्स्ये) ॥कथितोयुतहोमोयंलक्षहोममतः शृणु॥सर्वकामाप्तयेयस्माल्लक्षहोमंविदुर्बुधाः॥पितॄणांवल्लभःसाक्षा
द्भुक्तिमुक्तिफलप्रदः ॥ ग्रहताराबलंलब्ध्वाकृत्वाब्राह्मणवाचनम् ॥ गृहस्योत्तरपूर्वेणमंडपंकारयेद्बुधः॥रुद्रायतनभूमौवाचतुरस्रमुदक्प्लवम् ॥
दशहस्तानथाष्टौवाहस्तान्कुर्याद्विधानतः ॥ प्रागुत्तरप्लवांभूमिंकारयेद्यत्नतोनरः ॥ प्रागुत्तरंसमासाद्यप्रदेशंमंडपस्यतु ॥ शोभनंकार
येत्कुंडंयथावल्लक्षणान्वितम् ॥ नवग्रहमखेकुंडहस्तमात्रंप्रशस्यते ॥ चतुरस्रंसमंताच्चयोनिवक्रंसमेखलम् ॥ चतुरंगुलविस्तारामेखलातद्वदु
च्छ्रिता ॥ प्रागुदक्प्रवणाकार्यासर्वतःसमविस्तृता ॥ शांत्यर्थंसर्वलोकानांनवग्रहमखेस्मृता ॥ मानहीनाधिकंकुंडमनेकभयदंभवेत् ॥
यस्मात्तस्मात्सुसंपूर्णंशांतिकुंडंविधीयते ॥ अस्माद्दशगुणइत्यग्रेदर्शनादेतावत्पर्यंतमयुतहोमांगविधानम् ॥ इदंचकुंडपरिमाणंनलक्ष
होमे तत्रपरिमाणांतरविधानात् ॥ किंत्वयुतहोमे ॥ अस्माद्दशगुणःप्रोक्तोलक्षहोमःस्वयंभुवा ॥ आहुतीभिस्तथान्नेनदक्षिणाभिस्तथैवच॥
आहुतीभिरितिनसमिदाद्याहुतिग्रहणम्॥वशिष्ठसंहितायामयुतहोमादित्रयपुरस्कारेण तत्राष्टशतादिसंख्याविधानात्॥ अन्नेनेतिब्राह्मणभो
जनेनेत्यर्थः ॥ द्विहस्तविस्तृतंतद्वच्चतुर्हस्तायतंपुनः ॥ लक्षहोमेभवेत्कुंडंयोनिवक्रंत्रिमेखलम् ॥ तद्वच्छब्दोविकल्पार्थः ॥ वक्रंकंठः । योनि
श्चवक्रंचत्रिमेखलाश्चविद्यंतेयस्येत्यर्थः ॥ तस्यचोत्तरपूर्वेणवितस्त्युच्छ्रायसंमितम् ॥ प्रागुदक्प्रवणंतत्रचतुरस्रंसमंततः ॥ विष्कंभार्द्धो

च्छ्रितंप्रोक्तंस्थंडिलंविश्वकर्मणा॥ विष्कंभार्द्धमष्टादशांगुलानिवप्रांगुलसहितानि ॥ संस्थापनायदेवानांवप्रत्रयसमावृतम् ॥ द्विरंगुलोच्छ्रि
तोवप्रःप्रथमःसमुदाहृतः ॥ त्र्यंगुलोच्छ्रायसंयुक्तंवप्रद्वयमथोपरि ॥ त्र्यंगुलस्यचविस्तारःसर्वेषांकथ्यतेबुधैः ॥ दशांगुलोच्छ्रिताभित्तिः
स्थंडिलस्यतथोपरि ॥ तस्मिन्नावाहयेद्देवान्पूर्ववत्पुण्यतंडुलैः ॥ आदित्याभिमुखाःसर्वेसाधिप्रत्यधिदेवताः ॥ स्थापनीयामुनिश्रेष्ठनोत्तरे
णपराङ्मुखाः॥गरुत्मानधिकस्तत्रसंपूज्योभूतिमिच्छता॥सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः॥विषपापहरोनित्यमतःशान्तिंप्रयच्छमे॥
पूर्ववत्कुंभमामंत्र्यतद्वद्धोमंसमारभेत् ॥ सहस्राणांशतंहुत्वासमित्संख्याधिकंपुनः ॥ घृतकुंभवसोर्धारांपातयेदनलोपरि ॥ औदुंबरीमथार्द्रां
चसर्वंशाखाविवर्जिताम् ॥ बहुमात्रांस्रुचंकृत्वाततस्तंभद्वयोपरि ॥ घृतधारांतयासम्यगग्नेरुपरिपातयेत् ॥ स्रावयेत्सूक्तमाग्नेयंवैष्णवंरौद्रमैंद
वम् ॥ महावैश्वानरंसामज्येष्ठंसामचपाठयेत् ॥ स्नानंचयजमानस्यपूर्ववन्मंत्रवाचनम् ॥ स्नानमभिषेकः ॥ पूर्ववत्सुरास्त्वेत्यादिमंत्रैः ॥
दातव्यायजमानेनपूर्ववद्दक्षिणाःपृथक् ॥ कामक्रोधविहीनेनऋत्विग्भ्यःशांतचेतसा॥नवग्रहमखेविप्राश्चत्वारोवेदवेदिनः॥ अथवाऋत्विजौ
शांतौद्वावेवश्रुतिकोविदौ ॥ कार्यावयुतहोमेतुनप्रसज्जेतविस्तरे ॥ तद्वच्चेदथवा चाष्टौलक्षहोमेतुऋत्विजः ॥ कर्तव्याःशक्तितस्तद्वच्चत्वारोवा
विमत्सराः ॥ नवग्रहमखेसर्वंलक्षहोमेदशोत्तरम् ॥ दद्यादद्यान्मुनिश्रेष्ठभूषणान्यपिशक्तितः ॥ शयनानिसवस्त्राणिहैमानिकटकानिच ॥
कर्णांगुलिपवित्राणिकंठसूत्राणिशक्तिमान् ॥ तमेवपूजयेद्भक्त्याद्वौवात्रीन्वायथाविधि ॥ एकमप्यर्चयेद्भक्त्याब्राह्मणंवेदपारगम् ॥ ॥ ६
दक्षिणाभिःप्रयत्नेननबहूनल्पवित्तवान् ॥ अनेनैकाचार्यकर्तृकप्रयोगउक्तः ॥ लक्षहोमस्तुकर्तव्योयथावित्तंभवेद्बहु ॥ पुत्रार्थीलभते

पुत्रंधनार्थीलभतेधनम् ॥ भार्यार्थीलभतेभार्यांकुमारीचशुभंपतिम् ॥ भ्रष्टराज्यस्तथाराज्यंश्रीकामःश्रियमाप्नुयात् ॥ यंयंप्रार्थयतेकामंतंतंप्राप्नोतिपुष्कलम् ॥ निष्कामःकुरुतेयस्तुसपरंब्रह्मगच्छति ॥ ( अथकोटिहोमविधिर्मात्स्ये ) ॥ तस्माच्छतगुणःप्रोक्तःकोटिहोमःस्वयंभुवा ॥ आहुतीभिःप्रयत्नेनदक्षिणाभिःफलेनच ॥ पूर्ववद्ग्रहदेवानामावाहनविसर्जने ॥ होममंत्रास्तथाचोक्ताःस्नानेदानेतथैवच ॥ कुंडमंडपवेदीनांविशेषोयंनिबोधमे ॥ चतुर्हस्तंभवेत्कुंडंचतुरस्रंसमंततः ॥ योनिवक्रद्वयोपेतंतदाप्याहुस्त्रिमेखलम् ॥ द्व्यंगुलोच्छ्रिताकार्याप्रथमामेखलाबुधैः ॥ त्र्यंगुलोच्छ्रितातद्वद्द्वितीयापरिकीर्तिता ॥ उच्छ्रायविस्ताराभ्यांचतृतीयाचतुरंगुला ॥ चतुरंगुलविस्तारःपूर्वयोरपिशस्यते ॥ वितस्तिमात्रायोनिःस्यात्षट्सप्तांगुलविस्तृता ॥ वितस्तिशब्दःकुंडार्थपरः ॥ कूर्मपृष्ठोन्नतामध्येपार्श्वयोश्चांगुलोच्छ्रिता ॥ गजोष्ठसदृशीतद्वदायताच्छिद्रसंयुता ॥ एतत्सर्वेषुकुंडेषुयोनिलक्षणमिष्यते ॥ मेखलोपरिसर्वत्रअश्वत्थदलसंनिभा ॥ वेदीचकोटिहोमेस्याद्वितस्तीनांचतुष्टयम् । चतुरस्रासमातद्वत्त्रिभिर्वप्रैःसमावृता ॥ वप्रप्रमाणंपूर्वोक्तंवेदिकायास्तथोच्छ्रयः॥ तथाषोडशहस्तःस्यान्मंडपश्चचतुर्मुखः॥पूर्वद्वारेषुसंस्थाप्यबहृचवेदपारगम्॥यजुर्वेदंतथायाम्योपश्चिमेसामवेदिनम् ॥ अथर्ववेदिनंतद्वदुत्तरेस्थापयेद्बुधः । अष्टौतुहोमकाःकार्यावेदवेदांगवेदिनः ॥ एवंद्वादशतान्विप्रान्वस्त्रमाल्यानुलेपनैः॥ पूर्ववत्पूजयेद्भक्त्यासर्वाभरणभूषणैः ॥ रात्रिसूक्तंचरौद्रंचपावमानंसुमंगलम् ॥ पूर्वतोबहृचःशान्तिपठन्नास्तउदङ्मुखः ॥ शाक्रंरौद्रंचसौम्यंचकूष्मांडंजातवेदसम्॥पाठयेदक्षिणद्वारेयजुर्वेदिनमुत्तमम् ॥ सुपर्णमथवैराजमाग्नेयंरुद्रसंहिताम्॥ज्येष्ठसामतथाशान्तिछंदोगःपश्चिमेपठेत्॥शान्तिसूक्तंचसौरंचतथाश

च्छ्रितंप्रोक्तंस्थंडिलंविश्वकर्मणा॥ विष्कंभार्द्धमष्टादशांगुलानिवप्रांगुलसहितानि ॥ संस्थापनायदेवानांवप्रत्रयसमावृतम् ॥ द्विरंगुलोच्छ्रि
तोवप्रःप्रथमःसमुदाहृतः ॥ त्र्यंगुलोच्छ्रायसंयुक्तंवप्रद्वयमथोपरि ॥ त्र्यंगुलस्यचविस्तारःसर्वेषांकथ्यतेबुधैः ॥ दशांगुलोच्छ्रिताभित्तिः
स्थंडिलस्यतथोपरि ॥ तस्मिन्नावाहयेद्देवान्पूर्ववत्पुण्यतंडुलैः ॥ आदित्याभिमुखाःसर्वेसाधिप्रत्यधिदेवताः ॥ स्थापनीयामुनिश्रेष्ठनोत्तरे
णपराङ्मुखाः॥गरुत्मानधिकस्तत्रसंपूज्योभूतिमिच्छता॥सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः॥विषपापहरोनित्यमतःशान्तिंप्रयच्छमे॥
पूर्ववत्कुंभमामंत्र्यतद्वद्धोमंसमारभेत् ॥ सहस्राणांशतंहुत्वासमित्संख्याधिकंपुनः ॥ घृतकुंभवसोर्धारांपातयेदनलोपरि ॥ औदुंबरीमथार्द्रां
चसर्वशाखाविवर्जिताम् ॥ बहुमात्रांस्रुचंकृत्वाततस्तंभद्वयोपरि ॥ घृतधारांतयासम्यगग्नेरुपरिपातयेत् ॥ स्रावयेत्सूक्तमाग्नेयंवैष्णवंरौद्रमैंद
वम् ॥ महावैश्वानरंसामज्येष्ठंसामचपाठयेत् ॥ स्नानंचयजमानस्यपूर्ववन्मंत्रवाचनम् ॥ स्नानमभिषेकः ॥ पूर्ववत्सुरास्त्वेत्यादिमंत्रैः ॥
दातव्यायजमानेनपूर्ववद्दक्षिणाःपृथक् ॥ कामक्रोधविहीनेनऋत्विग्भ्यःशांतचेतसा॥नवग्रहमखेविप्राश्चत्वारोवेदवेदिनः॥ अथवाऋत्विजौ
शांतौद्वावेवश्रुतिकोविदौ ॥ कार्यावयुतहोमेतुनप्रसज्जेतविस्तरे ॥ तद्वच्चेदथवाचाष्टौलक्षहोमेतुऋत्विजः ॥ कर्तव्याःशक्तितस्तद्वच्चत्वारोवा
विमत्सराः ॥ नवग्रहमखेसर्वेलक्षहोमेदशोत्तरम् ॥ दत्त्वादद्यान्मुनिश्रेष्ठभूषणान्यपिशक्तितः ॥ शयनानिसवस्त्राणिहैमानिकटकानिच ॥
कर्णांगुलिपवित्राणिकंठसूत्राणिशक्तिमान् ॥ तमेवपूजयेद्भक्त्याद्वौवात्रीन्वायथाविधि ॥ एकमप्यर्चयेद्भक्त्याब्राह्मणंवेदपारगम् ॥ ॥ ६ ॥
दक्षिणाभिःप्रयत्नेननबहूनल्पवित्तवान् ॥ अनेनैकाचार्यकर्तृकप्रयोगउक्तः ॥ लक्षहोमस्तुकर्तव्योयथावित्तंभवेद्बहु ॥ पुत्रार्थीलभते

पुत्रंधनार्थीलभतेधनम् ॥ भार्यार्थीलभतेभार्यांकुमारीचशुभंपतिम् ॥ भ्रष्टराज्यस्तथाराज्यंश्रीकामःश्रियमाप्नुयात् ॥ यंयंप्रार्थयतेकामंतंतंप्राप्नोतिपुष्कलम् ॥ निष्कामःकुरुतेयस्तुसपरंब्रह्मगच्छति ॥ (अथकोटिहोमविधिर्मात्स्ये) ॥ तस्माच्छतगुणःप्रोक्तःकोटिहोमःस्वयंभुवा ॥ आहुतीभिःप्रयत्नेनदक्षिणाभिःफलेनच ॥ पूर्ववद्ग्रहदेवानामावाहनविसर्जने ॥ होममंत्रास्तथाचोक्ताःस्नानेदानेतथैवच ॥ कुंडमंडपवेदीनांविशेषोयंनिबोधमे ॥ चतुर्हस्तंभवेत्कुंडंचतुरस्रंसमंततः ॥ योनिवक्रद्वयोपेतंतदाप्याहुस्त्रिमेखलम् ॥ द्व्यंगुलोच्छ्रिताकार्याप्रथमामेखलाबुधैः ॥ त्र्यंगुलोच्छ्रितातद्वद्द्वितीयापरिकीर्तिता ॥ उच्छ्रायविस्ताराभ्यांचतृतीयाचतुरंगुला ॥ चतुरंगुलविस्तारःपूर्वयोरपिशस्यते ॥ वितस्तिमात्रायोनिःस्यात्षट्सप्तांगुलविस्तृता ॥ वितस्तिशब्दःकुंडार्थपरः ॥ कूर्मपृष्ठोन्नतामध्येपार्श्वयोश्चांगुलोच्छ्रिता ॥ गजोष्ठसदृशीतद्वदायताच्छिद्रसंयुता ॥ एतत्सर्वेषुकुंडेषुयोनिलक्षणमिष्यते ॥ मेखलोपरिसर्वत्रअश्वत्थदलसंनिभा ॥ वेदीचकोटिहोमेस्याद्वितस्तीनांचतुष्टयम् । चतुरस्रासमातद्वत्त्रिभिर्वप्रैःसमावृता ॥ वप्रप्रमाणंपूर्वोक्तंवेदिकायास्तथोच्छ्रयः ॥ तथाषोडशहस्तःस्यान्मंडपश्चचतुर्मुखः ॥ पूर्वद्वारेषुसंस्थाप्यबह्वृचवेदपारगम् ॥ यजुर्वेदंतथायाम्योपश्चिमेसामवेदिनम् ॥ अथर्ववेदिनंतद्वदुत्तरेस्थापयेद्बुधः । अष्टौतुहोमकाःकार्यावेदवेदांगवेदिनः ॥ एवंद्वादशतान्विप्रान्वस्त्रमाल्यानुलेपनैः ॥ पूर्ववत्पूजयेद्भक्त्यासर्वाभरणभूषणैः ॥ रात्रिसूक्तंचरौद्रंचपावमानंसुमंगलम् ॥ पूर्वतोबह्वृचःशान्तिपठन्नास्तउदङ्मुखः ॥ शाक्रंरौद्रंचसौम्यंचकूष्मांडंजातवेदसम् ॥ पाठयेदक्षिणद्वारेयजुर्वेदिनमुत्तमम् ॥ सुपर्णमथवैराजमाग्नेयंरुद्रसंहिताम् ॥ ज्येष्ठसामतथाशान्तिछंदोगःपश्चिमेपठेत् ॥ शान्तिसूक्तंचसौरंचतथाशा

कुनकंशुभम् ॥ पौष्टिकंचमहाराजन्नुत्तरेणाप्यथर्ववित् ॥ पंचभिःसप्तभिर्वापिहोमःकार्योत्रपूर्ववत् ॥ द्वादशसंख्यैरित्यर्थः।वाशब्दश्चपूर्वोक्ता
पेक्षया।स्नानेदानेचमंत्रास्तुतएवमुनिसत्तमाः ॥ वसोर्धाराविधानंचलक्षहोमवदिष्यते ॥ अनेनविधिनायस्तुकोटिहोमंसमाचरेत् ॥ सर्वान्का
मानवप्नोतिततोविष्णुपदंव्रजेत् ॥ यःपठेच्छृणुयाद्वापिग्रहयज्ञत्रयंनरः ॥ सर्वपापविशुद्धात्मापदमिंद्रस्यगच्छति ॥ अत्रनिकायिनांतुपूर्व
स्येतिन्यायेनग्रहयज्ञत्वसामान्येनउत्तरोत्तरस्यपूर्वविकारत्वम् ॥ तस्यैवचलक्षहोमवदित्यनुवादः। अथपदार्थाः। मार्कंडेयः। शिरस्नातस्तु
कुर्वीतदैवंपित्र्यमथापिवा॥ प्राङ्मुखोदङ्मुखोवापिश्मश्रुकर्मचकारयेत्॥सएव।देवार्चनादिकार्याणितथागुर्वभिवादनम्॥ कुर्वीतसम्यगाच
म्यप्रयतोपिसदाद्विजः ॥ वृद्धमनुः । प्राणानायम्यकुर्वीतसर्वकर्माणिसयुतः ॥ मार्कण्डेयः । संकल्प्यविधिवत्कुर्यात्स्नानदानव्रतादिकम्
(तत्रादौगणेशपूजा) आदौविनायकः पूज्य अंतेचकुलदेवतेतिगृह्यपरिशिष्टात् । नक्रतेत्वत्क्रियतेकिंचनेतिमंत्रलिंगाच्चततोनांदीश्राद्धंपुण्या
हवाचनमितिगर्भाधानादिसंस्कारेष्विष्टापूर्तक्रतुष्वपि । वृद्धिश्राद्धंपुराकार्यंकर्मादौस्वस्तिवाचनमितित्रिकांडीस्मरणात् । शौनकः पुण्या
हवाचनविधिंवक्ष्यामोथयथाविधि ॥ प्रयोक्तुःकर्मणामादावन्तेचोदयसिद्धये । गणेशपूजोत्तरत्वंवाचारात् छंदोगपरिशिष्टे । कर्मादिषुतुस
र्वेषुमातरःसगणाधिपाः ॥ पूजनीयाःप्रयत्नेनपूजिताःपूजयंतिताः ॥ प्रतिमासुचशुभ्रासुलिखितावापटादिषु॥अपिवाक्षतपुंजेषुनैवेद्यैश्चपृथ
ग्विधैः ॥कुड्यलग्नांवसोर्धारांसप्तधारांघृतेनतु॥ कारयेत्पंचधारांवानातिनीचांनचोच्छ्रिताम् ॥ आयुष्याणिचशांत्यर्थंजप्त्वातत्रसमाहितः ॥
षड्भ्यःपितृभ्यस्तदनुश्राद्धदानमुपक्रमेत् ॥ अत्रसर्वेष्वितिसर्वत्रानुषज्यते ॥ तेनगणेशमातृपूजावसोर्धारानांदीश्राद्धानांसर्वकर्मांगत्वम् ।

मातृशब्देनगौर्यादिदेवमातरोब्राह्म्यादिमनुष्यमातरश्चगृह्यंते । शातातपोपि । नानिष्ट्वातुपितॄन्श्राद्धेकर्मकिंचित्समाचरेत्॥कन्यापुत्रविवाहेषुप्रवेशेनववेश्मनः ॥ नामकर्मणिबालानांचूडाकर्मादिकेतथा ॥ सीमंतोन्नयनेचैवपुत्रादिमुखदर्शने ॥नांदीमुखान्पितॄनादौतर्पयेत्प्रयतोगृहीत्यस्यकन्यापुत्रेत्यादिवचनैरुपसंहारोक्तंवचनंनानिष्ट्वापितृयज्ञेनवैदिकंकिंचिदाचरेन्नवग्रहयज्ञादौनांदीश्राद्धमितिवाच्यम् ॥ उभयोरेकस्मृतिगतत्वेनोपसंहारयोगात् । नाष्टकासुभवेच्छ्राद्धंनश्राद्धेश्राद्धमिष्यते ॥ नसोष्यंतिजातकर्मप्रोषिता गतकर्मस्वितिछंदोगपरिशिष्टस्यवैयर्थ्यापत्तेश्च । ततऋत्विग्वरणंतेचायुतहोमेचत्वारोद्वौवा नवग्रहमखेविप्राश्चत्वारोवेदवादिनः ॥ अथवाऋत्विजौशांतौद्वावेवश्रुतिकोविदौ ॥ कार्यावयुतहोमेतुनप्रसज्जेतविस्तरइतिमात्स्यात् ॥ चतुःपक्षेब्रह्मचार्यौद्वौचर्त्विजाविति हेमाद्रिः । द्विपक्षेब्रह्मचार्यौअथवाचैकमभ्यर्च्येद्विधिनाब्रह्मणासहेतिस्कांदात् । लक्षहोमेतुमात्स्ये । तद्वद्द्वादशवाष्टौवालक्षहोमेपिऋत्विजः ॥ कर्तव्याः शक्तितस्तद्वच्चत्वारोवाविमत्सराः ॥ आचार्यब्रह्मसहितानामेवेयंसंख्या। कोटिहोमेतुमात्स्ये । एवंद्वादशवाविप्रान्वस्त्रमाल्यानुलेपनैः ॥ वसिष्ठसंहितायांत्वयुतलक्षकोटिहोमानुपक्रम्यषोडशब्राह्मणाञ्छुद्धान्दंभानृतविवर्जितान् । तेषांमध्येश्रेष्ठतममाचार्यंतंप्रकल्पयेदित्युक्त्वा । आचार्येभ्योनवभ्यश्चग्रहार्चनफलंततइत्युक्तेर्नवाचार्याएकोब्रह्माषट्ऋत्विजइतिपक्षउक्तः। अस्मिंश्चपक्षेएकेनाचार्यकर्म कार्यमपरेतमन्वारभेरन्नुपक्रमोपसंहारयोर्विरोधादित्युक्तम् । प्रयोगपारिजाते । अयंचपक्षोयुतहोमादिरहितनवग्रहमखेपिभवतीत्युक्तंतत्रैव । अत्रचधेन्वादिनवग्रहदक्षिणानवभ्योदेयाः । हेमाद्रिस्तु । कोटिहोमेयदिफलकालानुरोधेनसमाप्तिः शीघ्रमिष्टातदाविंशतिशतंविंशतिर्द्वात्रिंशच्चतुःषष्टिशतंवाऋत्विजोवृणुयादि

त्यूचे भविष्योत्तरेपि ॥ नियोजयेद्द्विजांस्तत्रशतसंख्यान्नृपोत्तम ॥ अलाभेतुबहूनांचयथालाभंनियोजयेत् ॥ नसंख्यानियमश्चात्रब्राह्मणानां नरोत्तम ॥ नकालनियमश्चैवस्वेच्छयायज्ञउच्यते ॥ जापकद्वारपालाश्चसर्वपक्षेषुभिन्ना । इतिहेमाद्रिः । ततोमधुपर्कः । संपूज्यमधुपर्केण ऋत्विजः कर्मकारयेत् ॥ अपूज्यकारयेत्कर्मकिल्बिषेणैवयुज्यतइतिविश्वामित्रोक्तेः । पूर्वोक्तमात्स्योक्तेश्च । लैंगे । वस्त्रयुग्मंतथाऽप्यूरंकेयूरंकर्णभूषणम् । अंगुलीभूषणंचैवमणिबंधस्यभूषणम् । कंठाभरणयुक्तानिप्रारंभेधर्मकर्मणः ॥ पुरोहितायदत्त्वाथऋत्विग्भ्यश्चापिदापयेत ॥ अप्पूरोजलपात्रंमंत्रवद्वरणंमधुपर्कइतिकेचित् ॥ मधुपर्कस्यवरणांगत्वाद्यत्रवरणंतत्रमधुर्कइतिवृत्तिकृत् । वस्तुतऋत्विजोवृत्वामधुपर्कमाहरेतइत्यत्रक्रममात्रविधिनामधुपर्कस्यनवरणांगत्वम् । किंतूभयोर्ऋत्विगंगत्वम् ॥ तेनस्मार्तेमंत्रवद्वरणाभावेपिऋत्विजोवृत्वामधुपर्कोभवति । तेनात्रवरणोत्तरमाशौचादिपातेऋत्विक्परावृत्तिरित्युक्तम् । मधुपर्कोत्तरंकर्तव्यम् । मात्स्ये । यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः ॥ पश्चिमद्वारमाश्रित्यप्रविशेद्यागमंडपम् ॥ संग्रहे । समंततश्चसिद्धार्थान्किरेद्रक्षोघ्नमंत्रतः ॥ प्रतिष्ठासारे । सर्वतः पंगमव्येनप्रोक्षयेद्यागमंडपम् । आपोहिष्ठात्र्यृचेनैवततः स्वस्त्ययनंजपेत् ॥ शारदातिलके । अंगंसंकोचयन्नंतःप्रविशेद्दक्षिणांघ्रिणा । नैर्ऋत्यांदिशिवास्त्वीशंब्रह्माद्यांश्चसमर्चयेत् ॥ हेमाद्रौतु ॥ तोरणपूजोत्तरंवास्तुपूजोक्ता । मंडपंसंप्रविश्याथतोरणादिप्रपूज्यच ॥ वास्तुयागंततः कुर्यात्प्रासादेमंडपेऽथवा । वास्तुपूजनंसहोमकंवा । शारदायाम् । पायसान्नैर्बलीन्हरेदितिबलिमात्रोक्तेः ॥ ततस्तुलापुरुषवन्मंडपपूजा ॥ (ततोग्निस्थापनम्) तत्रायुतहोमः एकहस्तंकुंडम् । लक्षहोमेद्विहस्त चतुर्हस्तंवा । कोटिहोमेषोडशहस्तम् । मात्स्ये तथोक्तेः कुंडंचमंडपेशानभागेतदीशानभागेवे

दिरितिहेमाद्रिः। तथाचवेदीमंडपाद्बहिर्भागेवापीष्टा । वसिष्ठसंहितायाम्। अयुतादिहोमंप्रकृत्य। कुंडंतन्मध्यभागेतुकारयेच्चतुरस्रकम्। कुंडस्ये
शानभागेतुपूजावेदिंप्रकल्पयेदित्युक्तम् । भविष्येतुकोटिहोमंप्रकृत्य । कुंडस्यपूर्वभागेतुवेदिंकुर्याद्विचक्षणइत्युक्तम् । गोभिलेनतु ।
कुंडस्यप्रागुदीच्यांवाप्राच्यामुत्तरतोपिवा । चतुरस्रंचतुर्द्वारंकर्तव्यंग्रहपीठकम् । श्रीकामःपूर्वतःकुर्य्यात्पुष्ट्यर्थंदक्षिणेनतु ॥
पश्चाद्द्विजन्मसिद्ध्यर्थंशांत्यर्थंचोत्तरेणतु ॥ ईशान्यांसर्वकामायचाग्नेय्यांचाभिचारके ॥ नैर्ऋत्यांपुत्रलाभायपुष्ट्यर्थंवायवेनत्वित्युक्तम् ।
स्थंडिलपक्षेपि । वेदिरावश्यकीशिष्टाचारादितिपारिजातः । गोद्भवंगौरीतिलकंतिलकंलिंगमाल्यपि ॥ लताविताानिकाप्यष्ट
लिंगोद्भवमिमानिषट् ॥ मंडलान्यागमोक्तानिभवंतिधृतयेभृशम् ॥ कपालोदरवज्राख्यंशूलमाल्याभिधंतथा ॥ शैववैष्णवचक्रंचेत्यु
दितंमंडलत्रयम् ॥ हरेर्हरस्यचप्रीत्यैभवेदित्यागमोदितम् ॥ ग्रहादेर्मंडलंभानोःसर्वतोभद्रमर्चने ॥ लक्ष्म्याश्चसर्वतोभद्रंपूजनेमंडलंतथा॥
सिंहोदरप्रकृतिकंपद्मोदरसमाह्वयम्॥ वाग्देव्याःसर्वतोभद्रंमंडलंचधराह्वयम्॥ भगवत्यादिकानांचशक्तीनांमंडलंभवेत् ॥ पूजनेसर्वतोभद्रमेक
लिंगोद्भवंतथा ॥ भैरवक्षेत्रपालादिपूजनेमंडलानितु॥ सर्वतोभद्रमुख्यानिशैवोक्तान्यखिलान्यपि ॥ यतःस्यात्सर्वतोभद्रंसर्वदेवप्रियप्रदम्॥
सर्वेषांमंडलानांतुप्रकृतित्वेननिश्चितम्॥ अतोभिधीयतेतस्यसमुद्धारेयथागमम्॥ अन्येषांमंडलानांतुसर्वेषामितिविस्तरात्॥ शैवादिष्वागम
ग्रन्थेषुद्धारस्यप्रकल्पनम् ॥ तत्वसागरसंज्ञायांसंहितायांप्रपंचितम् ॥ यथाविधिबृहत्पंचरात्रादिष्वागमेष्वपि ॥ निम्नतोतुंगताहीनेसुश्लक्ष्णे
वेदिकातले ॥ ईशानादिप्लवेनार्द्रेविलिप्तेगोमयेनच ॥ धत्तूरपल्लवैर्धृष्टैर्यद्वापामार्गपल्लवैः ॥ देवाराधनमंत्रेणमंत्रितात्पंचगव्यतः ॥

अभ्युक्षितेस्त्रमंत्रेणकृत्वादिक्साधनंततः ॥ खङ्किकामानसूत्रंचगन्धाद्यैरभिपूजयेत्॥उत्तराख्यंचतुर्भिःस्यान्मंडलंचतुरस्त्रकम् ॥ हस्तैर्हस्तद्व यंचस्यान्मध्यमंहस्तमात्रकम् ॥ कनिष्ठमानहस्तंतुपूर्तयोगेप्रशस्यते ॥ बिंदुनालाञ्छनंतत्रकुर्यान्मंत्रप्रदेशतः ॥ तस्योपरिसमंसूत्रं कृत्वापश्चिमपूर्वयोः ॥ उदक्दक्षिणायस्तद्वत्ककुभोस्तदनंतरम् ॥ बिंदुपूर्वाक्षयोर्मध्येबिंदुमध्यंविनिक्षिपेत् ॥ तस्योपरिक्षिपेत्सूत्रंद क्षिणोत्तरदिग्गतम् ॥ मध्याबिंदोःप्रतीच्याश्चमध्याबिंदुंविनिक्षिपेत् ॥ उदग्दक्षिणगंसूत्रंवीथीमध्येपृथक्पृथक् ॥ एवंसूत्रद्वयंचालपात्पूर्वप श्चिमदिग्गतम् ॥ एवंषोडशसंख्येषुकोष्ठकेषुकृतेषुच ॥ पूर्वपश्चिमगंसूत्रंवीथीमध्येपृथक्पृथक् ॥ दक्षिणोत्तरगंप्राग्वत्क्षिपेत्सूत्रचतुष्टयम् ॥ कोष्ठकानांभवेदेवंचतुःषष्टिश्चमंडले ॥ अष्टानामथवीथीनांपूर्वपश्चिमदिग्गतम् ॥ सूत्रंविनिक्षिपेद्द्वयोमध्यदेशेपृथक्पृथक् ॥ कोष्ठकानां समग्राणामेवंविरचितेसति ॥ षट्पंचाशच्छतेद्वेचसंख्याप्रोक्तात्रमंडले॥वीथ्यांयत्प्रांतवर्तिन्यांकोष्ठकानांचतुष्टयम् ॥ मध्यंतद्वाद्वितीयस्यां मध्यस्थंकोष्ठकद्वयम् ॥ एषामंतररेखासुरंजितोन्मार्जितासुच॥स्थानंयदेकतांप्राप्तंतद्भवेद्वारसंज्ञकम् ॥ एकमेवयदाद्वारपार्श्वयोःकोष्ठकंभ वेत् ॥ प्रांतवीथ्यांद्वितीयस्यांवीथ्यांपूर्वंव्यवस्थितम् ॥ त्रयंत्रयंतुकोष्ठानामेषारेखासुमध्यतः॥उन्मार्जितासुयत्स्थानंद्वारशोभाह्वयंतुतत्॥ द्वारशोभासमीपस्थंप्रांतवीथ्यांव्यवस्थितम् ॥ कोष्ठत्रितयकंवीथ्यांद्वितीयस्यांतुकोष्ठकम् ॥ एवंसंतश्चतुर्थेषुरेखासून्मार्जितासुच ॥ स्थानंव्यवस्थितंयस्मादुपशोभाह्वयंतुतत् ॥ एवमन्यासुदिक्षुस्याद्वारादीनाम्प्रकल्पना ॥ कोणेषुकोष्ठबद्धंस्यात्पार्श्वस्थमुपशो भना ॥ तत्रमध्येनिविष्टासुरेखासून्मार्जनेकृते ॥ स्थानंयन्मंडलेतत्तुभवेत्कोणसमाह्वयम् ॥ एवंद्वाराणिचत्वारिद्वारशोभाष्टकं

तथा ॥ उपशोभाष्टकंतद्वत्तथाकोणचतुष्टयम् ॥ तृतीयस्याश्चतुर्थ्याश्चवीथ्यारेखाकदंबके ॥ उन्मार्जितेमध्यगतेभवेद्वीथ्याःसमंततः ॥ पंचम्याअपिवीथ्याश्चमध्येकोष्ठचतुष्टयम् ॥ तत्रमध्यस्थरेखाणांसर्वतोत्पुंसनेकृते ॥ तत्स्थानमेकतांप्राप्तंपीठपद्माह्वयंतुतत् ॥ पार्श्वयोःपीठपद्मायाःकोणस्थंकोष्ठकद्वयम् ॥ प्राग्वत्तत्रैकतांनीतेपीठस्यचरणंतुतत् ॥ वीथ्याःषष्ठयास्तुसप्तम्याअष्टम्यामध्यवर्तिनीम् ॥ रेखांत्यक्त्वोपरेखाणांप्राग्वदुत्पुंसनेकृते ॥ बृहत्कोष्ठचतुष्कंस्यान्मंडलाभ्यंतरस्थितम् ॥ ईशानकोणादारभ्ययावत्कोणस्तुनैर्ऋतः ॥ सूत्रंकोष्ठयुगस्यैकंमध्यबिंदोरथोपरि ॥ आग्नेयकोणाद्वायव्यकोणावधितथैवच ॥ अन्यत्रकोष्ठयुग्मेपिसूत्रमन्यद्विनिक्षिपेत् ॥मध्यतःपीठपद्मायत्सूत्रंबिंद्ववधिस्थितम् ॥ दिक्चतुष्केपिचतुरस्तस्यभागान्प्रकल्पयेत ॥ तेषुभागश्चतुर्थोयोमध्यबिंदुसमीपगः ॥तस्याद्येवर्तुलाकारंक्षिपेत्सूत्रंसमंततः॥ तन्मध्येकर्णिकाकार्याबहिस्तद्वद्वितीयके ॥ भागेतुवर्तुलाकारंसूत्रंप्राग्वद्विनिक्षिपेत् ॥ तन्मध्येकेसराणिस्युःकेसरेभ्योबहिःस्थिते ॥ भागेतृतीयकेप्राग्वद्वृत्तसूत्रंविनिक्षिपेत् ॥ तन्मध्येष्टौदलानिस्युस्तेभ्योबाह्येचतुर्थके ॥ भागेन्यद्वर्तुलाकारंक्षिपेत्सूत्रंसमंततः ॥ अष्टसंख्यानिसूत्रस्यदलाग्राणितुसर्वतः॥इत्येकंमंडलंप्रोक्तंसर्वतोभद्रसंज्ञकम्॥एतस्मादिक्षुसर्वासुबहिर्वीथीप्रमाणतः ॥ सूत्रत्रयंसत्त्वरजस्तमःसंज्ञंविनिक्षिपेत् ॥ पंचवर्णेनचूर्णेनमंडलंपूरयेत्ततः ॥ हरिद्रारचितंचूर्णंकर्णिकायांविनिक्षिपेत् ॥ धातुवर्णंकेसरेषुव्रीहितंदुलसंभवम् ॥ दलेषुनिक्षिपेद्दत्तेभ्योबाह्यप्रदेशतः ॥ शम्यापराजिताचूर्णंव्योमरेखांतरेक्षिपेत् ॥ पीठपद्माबहिर्वीथ्यांनिशाचूर्णंविनिक्षिपेत् ॥ द्वारेषुश्वेतवर्णंचद्वारशोभासुलोहितम् ॥ हरिद्राभुपशोभासुतद्वत्तंदुलसंभवम् ॥ कोणेषुनिक्षिपेच्चूर्णंमंडलस्यबहिःपुनः ॥ श्वेतंतुसत्त्ववीथ्याख्येरजःसंज्ञेचलोहि

तम् ॥ कृष्णंतमोभिधानंचक्रमाच्चूर्णंविनिक्षिपेत्॥इदंसर्वतोभद्रम् ॥ चक्रारविंदंवक्ष्यामिपुंडरीकाक्षवल्लभम् ॥ चतुरस्रंपुराप्रोक्तंक्षेत्रमानश्च मान्वितम् ॥ कृत्वातद्धस्तमात्रंतुदद्यात्तत्रभ्रमान्बुधः ॥ एकादशप्रमाणेननाम्नाचैवब्रवीमितान् ॥ अंगुलानांचतुष्केणप्रथमोत्रभ्रमःस्मृतः ॥ नाभिक्षेत्रभ्रमश्चात्रद्वितीयस्त्वंगुलेनतु ॥ ततोर्धांगुलमानेनकार्यंभ्रमचतुष्टयम् ॥ आराश्चतद्वदूर्ध्वंस्यान्नाभ्यामेकांगुलेभ्रमः ॥ शोभाक्षेत्रंतदूर्ध्वंस्यात्तदूर्ध्वंस्याद्भ्रमद्वयम् ॥ क्षेत्रस्यहस्तमात्रस्थंचैतन्मानंप्रकीर्तितम्॥अनयैवदिशाकार्यंद्विगुणंत्रिगुणस्यतु ॥ ततश्चाराः प्रकर्तव्यालक्षणंतुसुवच्म्यहम् ॥ यावत्योराःप्रकर्तव्यास्तावद्भागांस्तुभाजयेत् ॥ क्षेत्रंततस्त्वराभागंप्रत्येकंभाजयेद्बुधः ॥ ऊर्ध्वाधोभागषट्केनचतुर्विंशतिकोष्ठकाः ॥ भवंतितैतरामूलंचतुर्भिःकारयेद्बुधः ॥ चत्वारोमध्यतः स्थाप्याःकोष्ठकास्तुतदंततः ॥ भवंतितैतरामूलंचतुर्भिःकारयेद्बुधः ॥ चतुष्टयंकोष्ठकानांमध्याच्चैवतथाभ्रमः ॥ उभयोःपार्श्वयोःकृत्वातद्भ्रमाभ्यांपुनर्भ्रमः ॥ संश्लिष्टंकारयेत्प्राज्ञोभ्रमयोरर्धचंद्रवत् ॥ एवंतुशेषलोपेनप्रकटाराप्रदृश्यते ॥ तथैकातद्वदन्यास्तुकर्तव्याःसाधकोत्तमैः ॥ अर्धारांवायदाकुर्यात्तदैकंतुभ्रमंभवेत् ॥ मध्येनभागेचारायाभागभक्तेक्रमात्पुनः ॥ सूत्रंदद्यादर्धसूत्रंनिलीनंप्रकटंततः ॥ अर्धाराहृश्यतेतत्रशोभाक्षेत्रंतथाधिया ॥ शोभांप्रकल्पयेत्प्राज्ञोयथाशोभाशुताभवेत् ॥ नलिनीवहमत्स्यंवाशृंगारान्वाप्रकल्पयेत् ॥ द्वारेक्षेत्रद्वयंचात्रत्वारामानेनभाजयेत् ॥ कोष्ठकानांचतुष्कोणंतत्रद्वारंप्रकल्पयेत् ॥ द्वाराद्वारांतरंयच्चवीथिकास्ताःप्रकल्पयेत् ॥ यावत्योराभवंत्यत्रतथाद्वारप्रकल्पना ॥ अक्षक्षेत्रेतुकर्तव्यंपद्मपत्रंसितंशुभम् ॥ नाभिःकृष्णाप्रकर्तव्यारक्तासर्वास्त्वराःकृताः ॥ नेमीपीताथनीलाचरेखाःसर्वाःसितास्तथा ॥ रेखाचतुष्टयंकार्य्यंचतुर्वर्णविभागतः ॥ द्वाराणिश्वे

तवर्णानिवीथयोभद्रवत्स्मृताः ॥ एवंद्वित्रिचतुःपंचगुणमानेनकल्पयेत ॥ चतुश्चक्रंपंचचक्रमष्टचक्रंतुकारयेत् ॥ अनयैवदिशाभूमेर्वि
स्तारःपरिमाणतः ॥ इतिचक्रारविंदम् ॥ चतुर्विंशतिधाक्षेत्रंकृत्वाष्टाभिः सरोरुहम् । मध्यकोष्ठेषुलिंगानित्वष्टाष्टाभिःप्रकल्पयेत् ॥ तत्राद्या
भिर्वरंपद्मंपङ्क्तिःकंठचतुष्टयम् ॥ पङ्क्तिरुत्तरपद्मंचवेदिंक्षुरवदाचरेत् ॥ लिंगोत्सेधस्त्रिभिःकोष्ठैर्विस्तारंद्विपदेनच ॥ पद्मस्याभिमुखंलिंगंविद
ध्यान्नपराङ्मुखम् ॥ विदिक्षुस्वस्तिकानेवमष्टाभिस्तुयथातथा ॥ ईशानकोणादारभ्यपांक्तिंत्यक्त्वातुदक्षिणाम् ॥ सपंक्तावेवमृद्धीयात्पदका
नित्रयोदश ॥ तदग्रेचक्रमेदत्तश्चत्वार्यथपदद्वयम् ॥ तदग्रात्पुनरेवंचस्वपंक्त्यभिमुखंयथा।तथाग्निकोणादारभ्यविहायापरपंक्तिकम् ॥ नैर्ऋ
ताच्चतथारभ्यविहारोत्तरपंक्तिकाम् ॥ वायव्यकोणादारभ्यत्यक्त्वावैपूर्वपंक्तिकाम् ॥ शेषंपूर्वमितिज्ञेयमितिस्वस्तिकलक्षणम् ॥ इतिसम्य
ग्विहायाथरजसैवंप्रपूरयेत् ॥ लिंगंपीठंचशुक्लेनकंठस्योभयपार्श्वगम ॥ चतुष्पदंततोधामात्सुरक्तेनमनोहरम् ॥ पंचपंचातिरक्तेनलिंगस्योभ
यपार्श्वतः ॥ चत्वारस्तुबहिःपीतनीलरक्तसितेनच ॥ पूरयित्वेतिलिंगानिस्वस्तिकानपिपूरयेत् ॥ ईशादिवायुपर्यंतंक्रमात्कोणचतुष्टयम् ॥
सितरक्तपीतकृष्णैःपार्श्वोदरनिभंत्रयम् ॥ लिंगस्वस्तिकसंयुक्तंलिंगस्वस्तिकमंडलम्॥सर्वकामप्रदंत्वेतदाचार्याःसंप्रचक्षते ॥ केवलैःस्वस्ति
कैश्चैवस्वस्तिकंपरिगीयते ॥ इतिलिंगस्वस्तिकम् ॥ चतुरस्रीकृतेक्षेत्रेविंशद्भागेसमंततः ॥ मध्यषड्भागिकंपद्मंपीठंस्याद्भागिकंततः ॥
भोगेनवीथिकातुस्यात्पीठंपद्मंचपूर्ववत ॥ तद्बहिर्वीथिकावप्रौभागिकौद्वारमुक्तवत् ॥ नवनाभमिदंप्रोक्तंमंडलंनवपंकजम् ॥ पद्मस्थानेथवा
कुर्यात्तन्मात्रस्वस्तिकान्नव॥दिक्षुमध्येथवाब्जानांयद्वामध्येविदिक्षुच॥पद्मस्वस्तिकमित्येवंमंडलंसर्वकामदम् ॥ चतुर्भिर्मध्यमैःकोष्ठैरसव्यं

भ्रामयेद्भुजम् ॥ नद्यावर्तवदापीठंकर्णांतंस्वस्तिकंभवेत् ॥ विचित्रेणैवकर्णेनलोकपालाभिधेनवा ॥ स्वस्तिकान्रजसाचैवपूरयेच्छेषमुक्तवान् ॥
इतिपद्मस्वस्तिकम् ॥ अथकरणप्रकारस्त्रैविक्रम्यामेव । चतुरस्रंक्षेत्रंचतुर्दिक्षुविंशत्याभागैर्विभज्यकोष्ठशतचतुष्टययुतंनिष्पाद्यसमंताद्बा
ह्यपंक्तौवीथींविधायतदनंतरपंक्तिचतुष्टयेप्रतिपंक्तिकोष्ठद्वयंमध्येपरिलोप्यचतुर्दिक्षुद्वाराणिकुर्यात् । तद्वारानुगतानितत्पार्श्वयोरष्टौलिंगा
निविदध्यात् । तद्यथा ॥ बाह्यवीथ्यनंतरंद्वारसम्बन्धकोष्ठत्रयेणपीठंतदुपरितनकोष्ठकत्रयेणदक्षिणोत्तरकोष्ठद्वयस्यबाह्यतःएकैकरेखालोपना
न्मध्यकोष्ठेनैकेनकंठंतदुपरिचकोष्ठत्रयेणजलपदंतदुपरिकंठंालगएवंसर्वाण्यपिलिंगानिविधायकोणेषुकर्णकोष्ठांश्चतुरोलतार्थंसंलक्ष्यकृता
लिंगांतरालेशेषरेखाविलोप्यतदुपरितनोद्धरितकोष्ठकेषुवीथीपीठपद्मानिसर्वतोभद्रवत्कुर्यात् । इतिलतालिंगोद्भवम् ॥ सप्तधाविभज्यैकोनपं
चाशत्कोष्ठकंसंपाद्यबहिर्विभागेनचतुर्विंशतिकोष्ठकैः । समंताद्वीथींनिष्पाद्यउर्वरितपंचविंशतिकोष्ठकेषुपूर्वादिदिक्षुकोष्ठकाष्टकंनवपंच
मध्येसंस्थाप्यशेषषोडशकोष्ठलोपेनवीथिकाचतुष्टयांतर्नवपद्मानिअसक्तानिकृत्वावीथ्यनुगान्यष्टद्वाराणिचकुर्यादसंसक्तंनवनाभद्वयम् ॥
चतुरस्रमष्टधाविभज्यचतुःषष्टिपदंकृत्वा ॥ मध्यकोष्ठचतुष्टयेपद्मंपीठंचसंपाद्यतदनंतरपंक्तौपद्मार्धेनवीथीतदनंतरपंक्तौचतुर्दिक्षुपद्मसमानिच
त्वारिद्वाराणिद्वारकोष्ठकमानेनकंठोपकंठकपोलान्कुर्यात् । इतिविभज्यब्रह्मस्थानात्सूत्रभ्रमेण अंगुलानिचत्वारिवृत्तानिकृत्वा ॥ दिक्षुविदि
क्षुतत्संधिषुसंध्यंतरेषुचद्वात्रिंशत्सूत्राणिदत्त्वातृतीयवृत्तेसंध्यंतरसूत्राद्बहिःपार्श्वभ्रमेणषोडशार्धचंद्रान्कृत्वा । दिक्षुविदिक्ष्वर्धचंद्रद्वयं
मध्येचतुर्थवृत्तेदलाग्राणि ॥ तृतीयवृत्तेदलसंधीन्द्वितीयवृत्तेकेसराग्राणिप्रथमवृत्ततद्वत्प्रमाणांपीतांकर्णिकांतन्मध्येनीलवर्णानिचबी

जानिर्वीथीमूलमध्याग्रेषुशुक्लरक्तपीतकेसरजालदलानि चप्रतिवारणयासहशुक्लवर्णानीतिपद्मंनिष्पादयेत् । तत्राभ्युन्नतदलाग्रंसुक्तिका मस्यवीक्ष्याग्रंदिक्पालानांवागोकर्णाग्रंगणानांमंडलाग्रंअश्वत्थदलपत्रकंगौरीसरस्वत्यादीनांविधेयम् ॥ तत्रशालिपिष्टेनश्वेतहरिद्रयापी तंसिंदूरधात्वादिनारक्तंदग्धयवादिनाकृष्णंशमीपत्रादिनानीलंतद्वर्णकार्थविशेषकामोमुक्ताविद्रुमादिनाएतदेवरजःकुर्यादिति । कोटिहो मेतुकुंडविशेषः । पश्चिमदक्षिणयोर्योनिद्वयंकार्यम् ॥ योनिवक्त्रद्वयोपेतंतदप्याहुस्त्रिमेखलमितिमात्स्यात् । भट्टास्तु । यो निर्वक्त्रंचेतिद्वयमाहुः । अग्निस्थापनंचयजमानशाखया । यःस्वशाखांपरित्यज्यपरशाखांसमाश्रयेत् । अप्रमाणमृषिंकृत्वासोंधेतम सिमज्जतीतिपराशरोक्तेः । सांगकर्मविधेर्यजमानंप्रतिप्रवृत्तेश्च । स्वाध्यायोध्येतव्यइत्यध्ययनविधिनाऽनुष्ठानोपयुक्तज्ञानजनकत्वे नाध्ययनस्यदृष्टार्थत्वबोधनाच्च । ननुवेदानधीत्यवेदौवेत्यादिनाशाखांतरस्याप्यध्ययनंबोधितंतदपिचपूर्ववत् । दृष्टार्थमेवअतोनस्व परशाखास्थयोर्विशेषः ॥ अतएवशाखांतराधिकरणोपपादितः । सर्वशाखीयांगोपसंहारोपिसंगच्छते । अन्यथाशाखांतरविहि तपदार्थज्ञानाभावात्तदुपसंहारोसंगतःस्यादितिचेत्नएवंवेदांतरम् । यच्छाखांतरस्थपदार्थज्ञानेनतदनुष्ठानसंभवेपिनस्ववेदीयशाखांतर स्थंपदार्थानुष्ठानंसंभवति । स्वाध्यायोध्येतव्यइत्यत्रस्वाध्यायस्योपादेयत्वेनविवक्षितैकसंख्यत्वादिक्रमापात्तैकवेदस्थायाएकस्याएवशा खायाअध्ययनस्यविधानात्॥तदाहुर्भट्टपादाः॥अत्रस्वाध्यायशब्देनस्वशाखैवगृह्यतइति।वेदानधीत्येतिस्मृत्यांतुवेदांतरस्थानामनेकासाम पिशाखानामध्ययनंविधीयतइतिकेचित्।परंतुवेदांतरस्यप्रतिशाखेपर्याप्तत्वाद्वेदांतरस्थाप्येकैवशाखाध्येतव्येत्याहुः॥ अन्येतुस्वाध्यायपदे

नस्वपित्रादिपरिगृहीतनानावेदगतैकैकैवशाखागृह्यते । तथाचेदमेववेदानधीत्येतिस्मृतेर्मूलमितिलाघवमित्यस्तुविप्रतिपत्तिः । सर्वथास्वाध्यायोध्येतव्यइत्येतद्विधिविहिताध्ययनजन्यज्ञानलाभेनसंभवतिक्रतुविधिचारितार्थ्येऽविहितैच्छिकपाठजन्यज्ञानस्यकर्मण्यनुपयोगः । अन्यथाशूद्रस्यापिताद्दशज्ञानसंभवेनकर्माधिकारःस्यात् । एतेनस्त्रीशूद्रौनाधीयेतामिततयोरध्ययनस्यनिषेधात्तज्जन्यज्ञानाभावेनक्रत्वधिकारइतिवदंतःपार्थसारथिमिश्राः परास्ताः । तथाहि । यथातप्तेपयसिदध्यानयतिसावैश्वदेव्यामिक्षेतिसर्वनाम्नातच्छब्देनतापविशिष्टमेवपयःप्रतिनिर्दिश्यते ॥ एवमष्टमेवर्षेब्राह्मणमुपनयीततमध्यापयीतेत्यत्रापितच्छब्देनपुंस्त्वाष्टवर्षत्वादिविशिष्टउपनीतएवपरामृश्यतेविनियुज्यतेचाध्ययनेनचत्रैवर्णिकवच्छूद्रस्योपनयनंविहितम् । नचाष्टवर्षत्वादिवद्ब्राह्मणत्वस्यापिपूर्ववाक्येश्रवणाद्ब्राह्मणस्यैवाध्ययनेधिकारःस्यान्नक्षत्रियविशोरितिवाच्यम्।इज्याध्ययनदानानिवैश्यस्यक्षत्रियस्येतिस्मृत्यातयोःप्राप्तेःस्मृतेस्तुमूलब्राह्मणपदाविवक्षयालाघवादियमेवश्रुतिः।श्रुत्यंतरंचेत्यन्यदेतत्।सर्वथात्रैवर्णिकानामेववेदाध्ययनजन्यज्ञानेनाधिकारोनशूद्रस्याध्ययनविधेरभावात्। निषेधस्तुन्यायबलइत्यस्तुप्रसक्तानुप्रसक्तम्।स्ववेदीयस्वशाखांतरस्थपदार्थस्थानुष्ठानंतुवैधज्ञानाभावान्नभवति। अतएववाजसनेयितैत्तिरीयादीनामदृष्टार्थानांप्रधानभूतानामपिशाखांतरस्थानामधिकानांग्रहयोगाभ्यासानामदृष्टार्थानांचांगानामनुष्ठानाभावःसंगच्छते। अन्यथाप्रधानभावेननित्यस्यापिज्योतिष्टोमादिप्रयोगसिद्धिःस्यात्।स्ववेदीशाखांतरस्थस्यतुस्वशाखाविरुद्धस्यापिसूत्राद्युपात्तस्यभवति ॥ सूत्राध्ययनस्यस्वाध्यायाध्ययनवद्वैधत्वात् । स्वशाखीयपदार्थानुष्ठानाशक्तौतुतद्विधिविरुद्धस्याप्यनुद्धरणादिप्रायश्चित्तचातुर्मास्यप्रयोगगतपंचाह्निकैकाहादेरिवस

वति। अनेनैवाभिप्रायेणाकरणाच्छाखांतरस्थस्यापिश्रेष्ठत्वमाहुर्देवयाज्ञिकाः।सूत्राध्ययनस्यवैधत्वादेवचर्ग्वेदाद्येकशाखाध्यायिनामिदानीं
तनानांसकलशिष्टानामाधानदर्शपूर्णमासज्योतिष्टोमादिकर्माधिकारोनिर्वहणीयः । अन्यथावैधज्ञानाभावेनसुदुर्घरःस्यात्वेदांतरस्थमंत्रा
णांतुसूत्रप्रतीकोपात्तत्वात्।तदध्ययनेनैवाध्ययनसिद्धिः ! अधीतायांवेदांतरशाखायांसूत्रेवायस्त्वशाखाविरुद्धमागतंतदध्ययनजन्यज्ञाना
विशेषेणानुष्ठेयत्वेनप्रसक्तमपिस्मृत्यानिषिध्यते।यथा।यःस्वशाखांपरित्यज्यपरशाखांसमाश्रयेत्॥ अप्रमाणमृषिंकृत्वासोंधेतमसिमज्जतिइ
ति॥एतेनस्वपरशाखास्थानांसूत्रोपनिबद्धानामंगानांतुल्योविकल्पइतिश्रीमदनंतयाज्ञिकोक्तिःपरास्ता।शाखांतराधिकरणीयःसर्वांगोपिसं
हारस्तुवेदांतरीयशाखांतरस्थांगविषयः । सूत्रोपात्तस्ववेदीयशाखांतरस्थाविरुद्धांगविषयश्चेतिदिक् । विशेषःकश्यपसंहितायाम् । नक्षत्रे
यत्रभानुःस्यात्तदाद्यंतत्रिकंत्रिके ॥ सूर्यज्ञशुक्रसौरीणामिंदुभौमबृहस्पतेः ॥ राहोःकेतोश्चनिर्दिष्टंवदनादौशुभाशुभम् ॥ दुष्टेनकुर्याद्धवनमि
त्याहुर्भार्गवादयइति ॥ इदंचकाम्यविषयम् ॥ संस्कारेषुविचारोस्यनकार्योनापिवैष्णवे ॥ नित्यनैमित्तिकेकार्योनचाब्देमुनिभिः
स्मृतइतितत्रैवोक्तेः ॥ दैवाद्धोमकरणेशांतिर्विष्णुधर्मोत्तरे । क्रूरग्रहमुखेचैवसंजातेहवनेशुभे ॥ शांतिंविधायगांदद्याद्ब्राह्मणायकुटुंबिने ॥
आयसींप्रतिमांकृत्वानिक्षिपेत्तामधोमुखीम् ॥ गोमूत्रमधुगंधाद्यैरर्चितांप्रतिमांततः ॥ श्वभ्रेनिधायसंपूज्यतत्रहोमोविधीयतइति ॥ अन्यद
पिवर्ज्यंकैश्चिदुक्तम् ॥ अर्कश्चंद्रादष्टमेज्ञाच्चतुर्थेमंदःशुक्रादष्टमेंगारकश्च ॥ राहुर्धर्मेजीवतःखेटसुतेहोमेनाशःपुत्रदाराधनानामिति ॥ तिथि
वारयुतिःसैकावेदभक्तावशेषकान् ॥ निवासोग्नेर्व्योम्निरूपेवित्तप्राणविनाशदः ॥ पातालेद्धिकशेषेणधनसंचयनाशनम् ॥ गुणवेदावशेषेण

भूमौविपुलसौख्यदइति । आब्दिकेयुगादिनिमित्तहोमेजपाद्यंगहोमेपिनदिनंशोध्यम् । तस्यस्वतंत्रकालत्वाभावात् ॥ अग्निश्चलौकिकः।
गार्ह्यमौपासनेकुर्यात्सर्वाधानींतुलौकिके । स्मार्तंचलौकिकेकार्यंश्रौतंवैतानिकाग्निष्विवितिस्मृत्यर्थसारात् । कातीयानांतुस्मार्तोपितत्सूत्रेत
थोक्तेः । गोभिलगृह्ये । आहूयचैवहोतव्यंयत्रयोविहितोनलः॥तथा॥ शुभंपात्रंतुकांस्यंस्यात्तेनाग्निंप्रणयेद्बुधः ॥ तस्याभावेशरावेणनवेना
भिमुखंचतम् ॥ तथा ॥ लक्षहोमेचवह्निःस्यात्कोटिहोमेहुताशनः पूर्णाहुत्यामिलोनामशान्तिकेवरदःस्मृतः ॥ देवीपुराणे ॥ शुभोग्रहवि
धौह्यग्निर्लक्षहोमेपराजितः ॥ कोटिहोमेशितोवह्निःसर्वकामप्रदायकः ॥ ततोवेद्यांग्रहस्थापनम् । अग्निप्रणयनंकृत्वाततस्त्वावाहयेत्सुरानि
तिमात्स्यात् ॥ वसिष्ठसंहितायाम् ॥ लिखेदष्टदलंपद्मंवेदिकोपरितंदुलैः ॥ तथा ॥ यथारुचिप्रमाणेनप्रतिमाःकल्पयेत्सुधीः ॥ ग्रहपूज
नेचमात्स्यादावादित्यक्रमः । बौधायनेनतुरविभौमशुक्रसोमबुधगुरुमंदादिक्रमउक्तः । आवाहनंचव्याहृतिमंत्रेण । आवाहनंव्याहृति
भिस्तथैवाग्निकुमारकावितिमात्स्यात् । व्याहृत्यावाहयेत्तुतानितिस्कंदाच्चेतिहेमाद्रिः । मदनरत्नेतु । आवाहनस्थापनंभिन्नम् । अतो
व्याहृतिभिरावाह्यतत्तन्मंत्रेणस्थापनंकार्यमित्युक्तम् । प्रयोगपारिजातेतु । प्रणवंत्वादितःकृत्वाभूर्भुवःस्वस्ततःपरम् ॥ चतुर्थ्यानामसंयुक्तं
नमस्कारांतयोजितम् । एषमंत्रःसमाख्यातोग्रहपूजाविधायकः ॥ अनेनावाहनंकुर्यादनेनैवविसर्जयेदितिवामनवचनाद्ग्रहगायत्र्यापूजनमु
क्तम् । बौधायनेत्वावाहनवाक्येविशेषउक्तः ॥ किरीटिनंपद्मासनंपद्मकरंपद्मगर्भसमद्युतिम् ॥ सप्ताश्वंसप्तरज्जुंकलिंगदेशजंकाश्यपगोत्रजं ॥ १६ ॥
विश्वामित्रर्षित्रिष्टुप्छंदसंरक्ताम्बरधरंरक्ताभरणभूषितंरक्तगंधानुलेपनंरक्तध्वजपताकिनंमुकुटकेयूरशोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वा

णंग्रहमंडलेप्रविष्टमधिदेवताग्निसहितंप्रत्यधिदेवतेश्वरसहितंरक्तवृत्तमंडलेपूर्वाभिमुखमादित्यमावाहयामि । किरीटिनंरक्तमाल्यांबरधरं
शक्तिशूलगदाधरंचतुर्भुजंमेषगमनमवंतिदेशजंवसिष्ठगोत्रजंजामदग्न्यर्षिंजगतीच्छंदसंरक्तांबरधरंरक्ताभरणभूषितंरक्तगंधानुलेपनंरक्तच्छ
त्रध्वजपताकिनंमुकुटकेयूरमणिशोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्टमधिदेवताभूमिसहितंप्रत्यधिदेवतास्कंदसहितं
त्रिकोणरक्तमंडलेदक्षिणाभिमुखमंगारकमावाहयामि । किरीटिनंश्वेतवर्णंचतुर्भुजंदंडिनंवरदमक्षसूत्रकमंडलुंभोजकटदेशजंभार्गवगोत्रजं
शौनकर्षिंपंक्तिच्छदसंश्वेताम्बरधरंश्वेताभरणभूषितंश्वेतगधानुलेपनंश्वेतच्छत्रध्वजपताकिनंमुकुटकेयूरशोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षि
णीकुर्वाणंग्रहमंडलेप्रविष्टमाधिदेवतेंद्राणीसहितंप्रत्यधिदेवतेंद्रसहितंशुक्लपंचकोणमंडलेप्राङ्मुखंशुक्रमावाहयामि । किरीटिनंश्वेतवर्णं
गदापाणिंद्विभुजमाग्नेयभागमत्रिगोत्रमात्रेयर्षिमनुष्टुप्छंदसंश्वेतांबरधरंश्वेताभरणभूषितंश्वेतंश्वेतगंधानुलेपनंश्वेतध्वजपताकिनंमुकुटकेयू
रशोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्टंअधिदेवतांबुसहितंप्रत्यधिदेवतोमासहितंचतुरस्रमंडलेप्रत्यङ्मुखंसोममावा
हयामि । किरीटिनंपीतमाल्यांबरधरंपीतवर्णंखड्गगदाचर्मपाणिभूषितंसिंहस्थंवरदंमगधदेशजमत्रिगोत्रजंभरद्वाजर्षिंबृहतीच्छंदसंपीतां
बरधरंपीताभरणभूषितं पीतगंधानुलेपनंपीतच्छत्रध्वजरथपताकिनकेयूरशोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेउत्तराभि
मुखंसौम्यमावाहयामि । किरीटिनंपीतांबरंपीतवर्णंचतुर्भुजंदंडिनंवरदंसाक्षसूत्रकमंडलुंसिंधुदेशजमांगिरसगोत्रजंवसिष्ठर्षिमनुष्टुप्छंदसंपी
तांबरधरंपीतमाल्यानुलेपनंपीतच्छत्रध्वजरथपताकिनंमुकुटकेयूरशोभितमारुह्यरथंदिव्यंमेरुंप्रदक्षिणीकुर्वाणंग्रहमंडलेप्रविष्टमाधिदेवतेंद्रस

हितंप्रभृतिश्चगृहार्चनफलंततइत्युक्त्वासमिदाज्येतिश्लोकौपठितवान् । सएव।ततस्तेभ्योयथाशक्तिदातव्यादक्षिणाततः ॥ आचार्यार्द्धंजापके
राष्ट्रदेब्राह्मणेचाथतुष्टये॥आज्यंनिरीक्ष्यदत्त्वाचब्राह्मणान्भोजयेत्ततः॥तत्रैवाश्वलायनः।एकमेकाहुतौविप्रहोमेत्वन्नेनभोजयेत्॥अंत्याद्योमध्य
मितमोविप्रमेकंशताहुतौ ॥ सहस्रस्याहुतेचैकंजघन्योऽविप्रभोजनात ॥ तस्माद्दातुमशक्तोयोदक्षिणांचान्नमेवच॥जपैःप्रणामैस्तोत्रैश्चतोष
मि। किंग्रहान् ॥ भविष्योत्तरे । ततःसमाप्तेयज्ञेतुकारयेत्सुमहोत्सवम् ॥ शंखतूर्यनिनादेनब्रह्मघोषवरेणच ॥ अथपितामहकृतोऽयुतहो
मणगंधाोगः । कर्मसंकल्प्यगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकृत्वाऽचार्यब्रह्मर्त्विग्वरणंकुर्यात् । तत्रमंत्राः । आचार्यस्तु
तंयत्यधिशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेऽस्मिन्नाचार्यत्वंकुरुप्रभो ॥ यथाचतुर्मुखोब्रह्मासर्ववेदधरःप्रभुः ॥ तथात्वंममयज्ञेस्मि
ध्यदेशजाद्विजोत्तम ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यार्चितामया ॥ सुप्रसन्नाःप्रकुर्वंतुशांतिकंविधिपूर्वकम् ॥ ततःसर्वान्मधुपर्केणार्चयेत् ।
रमणिशोरिधरःशुक्लमाल्यानुलेपनः॥साचार्यर्त्विग्यजमानोमंगलघोषेणजलपूर्णकलशहस्तः । ॐभद्रंकर्णेभिः० जनित्वनमितिमंत्रैर्मण्डपं
ममंडलेदक्षिण्यपश्चिमद्वारेणप्रविश्य । यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा ॥ स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥ अपक्रामंतुभूता
नात्माभिमुखसर्वतोदिशम् ॥ सर्वेषामविरोधेनब्रह्मकर्मसमारभेत्॥इतिगौरसर्षपान्विकीर्यशुचीवोहव्येतित्र्यृचेनापोहिष्ठेतित्र्यृचेनभूमिंप्रोक्ष्य
श्वेतुन्यसेत्प्रर्यमितिमंत्रद्वयंजपेत् ॥ ततोमंडपपक्षेतन्नैर्ऋत्येवास्तुवेदिंकृत्वावेदीशानादिकोणचतुष्के । विशंतुभूतलेनागालोकपालाश्च
वायुंचदक्षिणेस्मन्मंडपेवतिष्ठंतुआयुर्बलकराःसदेतिमंत्रेणचतुरः शंकून्रोपयित्वा । ततः । आग्नेयादिशंकुपार्श्वेमाषभक्तबलीन्दद्यात्।अग्नि

भ्योप्यथसर्पेभ्योयेचान्येतत्समाश्रिताः ॥ तेभ्योबलिंप्रयच्छामिपुण्यमोदनमुत्तममिति ॥एवंमंत्रत्रयेणनैर्ऋत्यवायव्येशान्याम्॥शंकुपार्श्वे
माषभक्तबलीन्दत्वा। तेचमंत्राः । नैर्ऋत्याधिपतिश्चैवनैर्ऋत्यांयेचराक्षसाः॥बलिंतेभ्यःप्रयच्छामिसर्वेगृह्णंतुमंत्रितम्॥ॐ नमोवायुरक्षेभ्यो
येचान्येतत्समाहिताः॥बलिंतेभ्यः० । रुद्रेभ्यश्चैवसर्पेभ्योयेचान्येतत्साश्रिताः॥बलिंतेभ्यःप्रयच्छामिगृह्णंतुसततोत्सुकाः॥ततोह्युपरिवस्त्रेषु
वर्णादिशलाकया। ॐ शांतायैनमः।यशोवत्यैनमः। कांतायैनमः।विशालायैनमः ।प्राणवाहिन्यैनमः।सत्यैनमः। सुमनायैनमः।नंदायैनमः
भद्रायै० ।इतिपश्चादारभ्यप्रागंताउदक्संस्थानवरेखाःकृत्वा। पुनः। हिरण्यायै०।सुव्रतायै०। लक्ष्म्यै०। विभूत्यै०। विमलायै०। विप्रायै०
जयायै०।कालायै०। विशोकायै०। इतिदक्षिणारंभाउदगंताःप्राक्संस्थानवरेखाःकृत्वा। मध्येकोष्ठचतुष्टयमेकीकृत्यकोणेषुरेखांदत्त्वातेनार्द्ध
पदानिसंपद्यंते।ततस्तत्रब्रह्मादीनावाहयेत्। वास्तोश्चतुरस्रंशरीरंदेवाअक्रम्यस्थिताइति।तत्तद्देवपदेच तत्तद्देवावाहनम्।तत्रमध्यपदचतुष्केहृ
दये।ब्रह्मणेन०ब्रह्माणंआवाहयामि।पूर्वपदद्वयेदक्षिणस्तने अर्यम्णेन०।अर्यमणं०।दक्षिणपदद्वयेजठरदक्षिणेविवस्वते०।विवस्वंतं पश्चिमपद
द्वयेजठरवामेमित्राय० ।मित्रं०।उदक्पदद्वयेवामस्तनेपृथ्वीधरा पृथ्वीधरं०तत्रब्रह्मसमीपस्थानेआग्नेयपदार्धयोर्दक्षिणहस्तेसावित्रसवितारौ
तत्रपूर्वार्द्धेसावित्रायनमःसावित्रं०। पश्चिमार्द्धेसवित्रे०।सवितारं०।नैर्ऋत्यपदार्द्धयोर्वृषणमेंढ्रयोर्विबुधाधिपजयो०तत्रपूर्वार्द्धेविबुधाधिपाय०
विबुधाधिपं०।पश्चिमार्द्धेजयाय०।जयं०।वायव्यपदार्द्धयोर्वामहस्तेराजयक्ष्मरुद्रौ। तत्रपूर्वार्द्धेराजयक्ष्मणे०राजयक्ष्माणं०पश्चिमार्द्धेरुद्राय०
रुद्रं०ईशानपदार्द्धयोरूरौमुखयोरापापवत्सौ।तत्रपूर्वार्द्धेअद्भ्योन०अपःआ०पश्चिमार्द्धेआपवत्साय०आपवत्सं०ईशानपददक्षिणार्द्धेवास्तोः

शिरसिशिखिनेनमः शिखिनं। तद्दक्षिणसार्द्धपदेदक्षिणनेत्रेपर्जन्याय० पर्जन्यं० तद्दक्षिणपदद्वयेदक्षिणश्रोत्रे। जयंतायनमः जयंतं। तद्दक्षिणपद द्वयेदक्षिणांसे। कुलिशायुधाय० कुलिशायुधं०। तद्दक्षिणपदद्वयेदक्षिणबाहौ। सूर्याय० सूर्यं०। तद्दक्षिणपदद्वयेदक्षिणबाहौ। सत्याय० सत्यं०। तद्दक्षिणसार्द्धपदेदक्षिणकूर्परेभृशाय० भृशं०। तद्दक्षिणाग्नेयपदार्द्धेदक्षिणप्रबाहौ। आकाशाय० आकाशं। तत्पश्चिमार्द्धेदक्षिणप्रबाहौ। वायवेन० वायुं०। तत्पश्चिमार्द्धपदेदक्षिणमणिबंधे। पूष्णेन० पूषणं०। तत्पश्चिमपदद्वयेदक्षिणपार्श्वे। वितथाय० वितथं। तत्पश्चिमपदद्वयेदक्षिणपार्श्वे। गृहक्षताय० गृहक्षतं। तत्पश्चिमपदद्वयेदक्षिणोरौ। यमाय० यमं०। तत्पश्चिमपदद्वयेदक्षिणजानौ। गंधर्वाय० गंधर्वं। तत्पश्चिमसार्द्धपदे दक्षिणजंघायां। भृंगराजाय० भृंगराजं। तत्पश्चिमनैर्ऋत्यपदार्द्धेदक्षिणस्फिचि। मृगायन० मृगं। तदुत्तरार्द्धेपादयोः। पितृभ्योन० पितॄन्आ वा०। तदुत्तरसार्द्धपदेवामस्फिचि दौवारिकाय० दौवारिकं०। तदुत्तरपदद्वयेवामजंघायां। सुग्रीवाय० सुग्रीवं०। तदुत्तरपदद्वयेवामजानौ। पुष्पदंताय० पुष्पदंतं। तदुत्तरपदद्वयेवामोरौ। वरुणाय० वरुणं०। तदुत्तरपदद्वयेवामपार्श्वे। असुराय० असुरं०। तदुत्तरस्यार्द्धपदेवामपार्श्वे शेषाय० शेषं। तदुत्तरवायव्यपदार्द्धेवाममणिबंधे। पापाय० पापं०। तत्प्राक्पदार्द्धे वामबाहौ। रोगायन० रोगं० तत्प्राक्सार्द्धपदेवामबाहौ। अहये० अहिं। तत्प्राक्पदद्वयेवामकूर्परे। मुख्यायन० मुख्यं०। तत्प्राक्पदद्वयेवामबाहौ। भल्लाटाय० भल्लाटं०। तत्प्राक्पदद्वयेवामबाहौ। सोमाय० सोमं०। तत्प्राक्पदद्वयेवामांसे। सर्पेभ्यो० सर्पान्आ०। तत्प्राक्सार्द्धपदेवामश्रोत्रे। अदितये० अदितिं०। तत्प्रागर्द्धपदेवामनेत्रे। दितये० दितिं०। उत्तरेवास्तोष्पतेवसिष्ठोवास्तोष्पतिस्त्रिष्टुप्वास्तोष्पत्यावाहनेविनियोगः। ॐवास्तोष्पते० सुवर्णमय्यांमूर्तौवास्तोष्पतये०

वास्तोष्पतिमावाहयामि। ततः ईशानादि विदिक्षु। ऐशान्येचरक्यै० चरकीं०।आग्नेयेविदार्यै० विदारीं०। नैर्ऋत्येपूतनायै०पूतनां०।उत्तरेपा
पराक्षस्यै० पापराक्षसीं०। मंडलपूर्वादिदिक्षु। तत्रपूर्वे स्कंदाय० स्कंदमा०। दक्षिणेअर्यम्णे० अर्यम्णं०। पश्चिमेजृम्भकायजृम्भकम्०।
उत्तरेपिलिपिच्छाय०पिलिपिच्छं०।तदस्तुमित्रा०गृहावै०इतिप्रतिष्ठाप्य।ततःसर्वान्संपूज्यमंडलादैशानेकुंभंसंस्थाप्यमंडलाग्रेपायसबली
न्दद्यात्। तद्यथा। ॐ ब्रह्मणेनमः। एषपायसबलिर्नमम। एवंसर्वत्र। ॐ अर्यम्णेनमःपाय०। विवस्वते०।मित्राय०। पृथ्वीधराय०सावित्रा०
सवित्रे०। विबुधाधिपाय०। जयाय०। राजयक्ष्मणे०। रुद्राय०। अद्भ्योनमः। आपवत्सायन०।शिखिने०। पर्जन्याय। जयंताय०।
कुलिशायुधाय०। सूर्याय०। सत्याय०। भृशाय०। आकाशाय०। वायवेन०। पूष्णेन०। वितथाय०। गृहक्षताय०। यमाय०। गंधर्वा
य०। भृंगराजाय०। मृगाय०। पितृभ्यो०। दौवारिकाय०। सुग्रीवाय०। पुष्पदंताय०। वरुणाय०। असुराय०। शेषाय०। पापाय०।
रोगाय०। अहये०। मुख्याय०। भल्लाटाय०। सोमाय०। सर्पेभ्यो०। अदितये०। दितये०। एषपायसब०। ततश्चरक्यादिभ्यःमा
षभक्तबलीन्दद्यात्। सयथा। चरक्यै०एषमाषभक्तब०।एवमग्रेपि विदार्यै०। पूतनायै०।पापराक्षस्यै०।स्कंदाय०।अर्यम्णे०। जृंभकाय०।
पिलिपिच्छाय०। एषपायसबलिः इतिबलीन्दत्वा०। ततःपावमानेनराक्षोघ्नेन चसूक्तेनत्रिसूत्र्यामंडपंवेष्टयेत्।अथद्वारपूजा।तत्रपूर्वद्वारेऊर्ध्वं
श्रियैनमः।अधःदेहल्यै०।वामदक्षिणस्तंभयोःगणेशाय०।स्कंदाय०।तत्रकलशद्वये।गंगायै।यमुनायै०।दक्षिणद्वारे०।ऊर्ध्वंश्रियैनमः।अधःदेह
ल्यैनमः।स्तंभयोःपुष्पदंतायनमः।कपर्दिने०।कलशद्वयेगोदायै०।कृष्णायै०।पश्चिमद्वारे।ऊर्ध्वंश्रियैन०।अधःदेहल्यै०। स्तंभयोर्नंदिने०चं

डाय० कलशद्वयेरेवायै० नर्मदायै । उत्तरद्वारेऊर्ध्वंश्रियै० ॥ अधःदेहल्यैनमः ॥ स्तंभयोःमहाकालाय०॥ भृंगिणे०॥कलशद्वयेवारुण्यै० वेण्यैन० ॥ इतिद्वारपूजा ॥ ततस्तोरणादिपूजांकरिष्येइतिसंकल्प्य ॥ तत्रपूर्वस्यांदिशिमंडपाद्बहिर्हस्तमात्रेअश्वत्थंवटंवासुदृढंशोभनना मकंवाशंखचिह्नितंतोरणंन्यस्य ॥ ॐ अग्निमीळेपुरोहितं० ॥ सुदृढतोरणायनमः ॥ सुदृढतोरणंआवाहयामि ॥ सुदृढतोरणायन० ॥ गंधं समर्पयामि ॥ पुष्पधूपदीपनैवेद्यतांबूलदक्षिणांतोपचारैःपूजयेत्॥तत्रराहवेनमः॥राहुंआ०॥बृहस्पतये० । बृहस्पतिंआ०॥ राहुबृहस्पतिभ्यां गंधाद्युपचारान्समर्पयेत् ॥ तत्रैकःकलशःस्थाप्यः ॥ तत्रमंत्राः ॥ महीद्यौरितिभूमिंस्पृष्ट्वातत्रओषधयः संवदंतइतियवान्आकलशेष्विति कलशंस्थापयित्वा ॥ इमंमेगंगेइतिजलेनापूर्यगन्धद्वारामितिगंधंक्षिप्त्वायाओषधीरितिसर्वौषधीःक्षिपेत् ॥ औषधयःसमितियवान्॥कांडा त्कांडादितिदूर्वाः॥अश्वत्थेवइतिपंचपल्लवान्॥स्योनापृथिवीतिसप्तमृदः॥याःफलिनीरितिफलम् । सहिरत्नानीतिपंचरत्नानि ॥ हिरण्यरूपइ तिहिरण्यम्॥युवासुवासाइतिवस्त्रेणसूत्रेणवासुखेवेष्टयेत्॥पूर्णादर्वीत्युपरिधान्यपूर्णपात्रंन्यसेत्॥ तस्मिन्कलशे ध्रुवाय०ध्रुवं०॥ध्रुवायनमः॥ गंधाद्युपचारान्समर्पयामि ॥ ततोदक्षिणेगत्वा ॥ औदुंबरंप्लाक्षंवासुभद्रंविकटनामकंवाचक्रचिह्नितंतोरणंन्यस्य । ॐ इषेत्वोर्जेत्वावायव स्थोपायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मणे ॥ सुभद्रतोरणायसुभद्रतोरणंआवाहयामि । सुभद्रतोरणायन० गंधाद्युपचारान्समर्पये त् । तत्रसूर्यायन०सूर्यंआवा० । अंगारकाय०अंगारकंआ० । सूर्याङ्गारकाभ्यांनमःगंधाद्युपचारान्समर्पयेत् । तत्रैकःकलशःस्थाप्यःतस्मि न्कलशेधरायैनमःधरांआ०धरायैनमःगंधाद्युपचारान्समर्पयेत्।ततःपश्चिमेगत्वाप्लाक्षमौदुंबरंवासुकर्मसुभीमनामकंवागदादिचिह्नितंतोरणं

न्यस्य ॐ अग्नआया ० षि ० सुकर्मतोरणायन ० सुकर्मतोरणंआ ० गंधाद्युपचारान्स ० । तत्र शुक्राय ० शुक्रं ० बुधाय ० बुधं ० । शुक्रबुधाभ्यांनमः गं
धाद्युपचारान्स ० तत्रैकः कलशः स्थाप्यः । तस्मिन्कलशेवाक्पतयेनमः वाक्पतिं ० वाक्पतये ० गंधाद्युपचारान्स ० । ततउत्तरेगत्वा । वटमाश्व
त्थंवापलाशंवासुहोत्रंसुप्रभंवापद्मचिह्नितंतोरणंन्यस्य । ॐ शन्नोदेवी ० नः । सुहोत्रतोरणाय ० सुहोत्रतोरणंआ ० सुहोत्रतोरणायन ० गंधाद्यु
पचारान्स ० । तत्रसोमायनमः सोमं ० । केतवेन ० । केतुं ० । शनैश्चरायन शनैश्चरं ० । सोमकेतुशनैश्चरेभ्योन ० गंधाद्युप ० । तत्रैकः कलशः स्थाप्यः
तस्मिन्कलशेविघ्नेशाय ० विघ्नेशंआ ० विघ्नेशाय ० गंधाद्युपचारा ० । ततः पूर्वेगत्वापूर्ववन्महीद्यौरित्यादिनाप्रतिद्वारशाखंकलशद्वयंसंस्थाप्य
प्रतिकलशंमंत्रावृत्तिः । अस्मिन्कलशद्वयेऐरावताख्यदिग्गजाय ० ऐरावताख्यदिग्गजं ० ऐरावताख्यदिग्गजाय ० गंधा पचारान्स ० । तत्रऋग्वे
दिनावृत्विजौ । ऋग्वेदः पद्मपत्राक्षोगायत्र्यः सोमदैवतः । अत्रिगोत्रस्तुविप्रेन्द्रऋत्विक्त्वंमेमखेभवेतिप्रत्येकंवृत्वा । ॐ अग्निमीळेइतिमंत्रे
णप्रत्येकंगंधाद्युपचारैः पूजयेत् । ततः सहस्राक्षंमत्तैरावतसंस्थितम् ॥ पीतकिरीटिनंकुंडलधरंदक्षिणवामकरस्थवज्रोत्पलमिंद्रंध्यात्वा
ॐ एह्येहिसर्वामरसिद्धसाध्यैरभिष्टुतोवज्रधरामरेश ॥ संवीज्यमानोप्सरसांगणेनरक्षाध्वरंनोभगवन्नमस्ते । भोइंद्रइहागच्छइहतिष्ठइंद्रंसांगंसप
वारंसायुधंसशक्तिकंद्वारकलशेआवाहयामि । ॐ आशुः शिशानो ० मिंद्रः इतिमंत्रेणपीतांपताकांपीतध्वजंचद्वयमपिदशहस्तदंडंपंच
हस्तदंडंवोच्छ्रयेत् । ॐ त्रातारमिंद्रम ० द्रः इंद्राय इंद्रंआ ० इंद्राय ० गंधाद्युप ० । इंद्रः सुरपतिः श्रेष्ठोवज्रहस्तोमहाबलः ॥ शतयज्ञाधिपोदेवस्त
स्मैनित्यंनमोनमइतिनत्वा ॥ इंद्रायसांगायसपरिवारायसायुधायसशक्ति ० एतंमाषभक्तबलिंसमर्पयामीतिबलिंदत्त्वाचामेत् । ततः आग्नेय्यांग

त्वातत्रपूर्ववत्कलशंसंस्थाप्य । तत्रपुंडरीकाय०पुंडरीकंआ० अमृतायअमृतं० पुंडरीकामृताभ्यां० गंधाद्युप०अनंतरं छागस्थंरक्तवर्णंद
क्षिणवामकरद्वयधृतशक्तिकमंडलुंयज्ञोपवीतिनमाग्निंध्यात्वा ॥ एह्येहिसर्वामरहव्यवाहमुनिप्रवर्यैरभितोभिजुष्ट ॥ तेजोवतालोकगणेनसार्द्धं
ममाध्वरंपाहिकवेनमस्ते॥ भोअग्नेइहागच्छइहतिष्ठआग्निंसांगंसपरिवारंसायुधंसशक्तिकंअस्मिन्कलशेआवा०। ॐआग्निंदूतं०तुं इतिमंत्रेणर
क्तांपताकांरक्तंध्वजंचोच्छ्रयेत् ततःत्वन्नोअग्नेवरुण०त् अग्नये०अग्निंआ० अग्नये०गंधाद्युपचारान्स० ॥ आग्नेयःपुरुषोरक्तःसर्वदेवमयोऽ
व्ययः ॥ धूम्रकेतुरजोध्यक्षस्तस्मैनित्यंनमोनमइतिनत्वा॥ अग्नयेसांगायसपरिवारायसायुधायसशक्तिकायएतंमाषभक्तबलिंसमर्पयामीति
बलिंदत्त्वाचामेत् ॥ ततोदक्षिणेगत्वाप्रतिद्वारशाखंकलशद्वयंसंस्थाप्य । तत्रकलशद्वयेवामनाख्यदिग्गजाय०वामनाख्यदिग्गजं०वामना
ख्यदिग्गजाय०गंधाद्युपचारान्० ॥ तत्रयजुर्वेदिनावृत्विजौअस्मिन्दक्षिणद्वारेशांतिसूक्तजपार्थंनत्वामहंवृणे ॥ कातराक्षोयजुर्वेदस्त्रैष्टुभोवि
ष्णुदैवतः ॥ काश्यपेयस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभवेतिप्रत्येकंवृत्वा । ॐइषेत्वोर्जेत्वाणे इतिप्रत्येकंगंधादिभिरभ्यर्च्य ॥ ततोमहिषारूढं
धृतदंडपाशदक्षिणवामकरद्वयंकृष्णांजनचयोपमंअग्निसमलोचनंयमंध्यात्वा ॥ॐएह्येहिवैवस्वतधर्मराजसर्वामरैरार्चितधर्ममूर्ते॥शुभाशुभा
नंदशुचामधीशशिवायनःपाहिमखंनमस्ते॥ भोयमइहागच्छ०यमंसांगं०द्वारकलशेआवाहयामि॥ आयंगौ०त्स्व इतिमंत्रेणकृष्णांपताकां
कृष्णंध्वजंचोच्छ्रयेत्॥ ततोयमायसो०तः यमाय०यमंआ०यमाय०गंधाद्युप०महामहिषमारूढंदंडहस्तंमहाबलम्॥आवाहयामियज्ञेऽस्मि
न्पूजेयंप्रतिगृह्यताम् ॥ यमायनमःएतंमाषभक्तबलिंसमर्पयामीतिबलिंदत्त्वाचामेत्॥ततोनैर्ऋत्यांगत्वातत्रपूर्ववत्कलशंसंस्थाप्य । कुमुदाय

नमः कुमुदमा० दुर्जयाय० दुर्जयमा० कुमुददुर्जयाभ्यां० गंधाद्यु० ॥ ततो नरारूढंमहाकायंखड्ग हस्तंमहाबलम् ॥ राक्षसैर्वेष्टितंनीलंपीताभर
णभूषितम् ॥ निर्ऋतिंध्यात्वाॐएह्येहिरक्षोगणनायकस्त्वंविशालवेतालपिशाचसंघैः ॥ ममाध्वरंपाहिपिशाचनाथलोकेश्वरत्वांभगवन्नम
स्ते ॥ भोनिर्ऋतेइहागच्छइहतिष्ठनिर्ऋतिंकलशेआवाहयामि । ॐ मोषुणःसहइतिमंत्रेणनीलांपताकांनीलध्वजंचोच्छ्रयेत् ॥ असुन्वंतम
यजमानमिच्छ० स्तु॥ निर्ऋतये० निर्ऋतिमा० । निर्ऋतये० गंधाद्युप० ॥ निर्ऋतिंखड्गहस्तंचसर्वलोकैकपावनम् ॥ आवाहयामियज्ञेस्मिन्पूजे
यंप्रतिगृह्यतामिइतिनत्वा निर्ऋतयेसांगायएतंमाषभक्तबलिंसमर्पयामीतिबलिंदत्त्वाचामेत् ॥ ततःपश्चिमेगत्वाकलशद्वयंप्रतिद्वारशाखंपूर्व
वत्संस्थाप्य अस्मिन्कलशद्वयेअंजनाख्यदिग्गजाय० गंधाद्युप० तत्रसामवेदिनावृत्विजौ॥ अस्मिन्पश्चिमद्वारेशान्तिसूक्तजपार्थेत्वांवृणे ॥
सामवेदस्तुपिंगाक्षोजाग्रतःशक्रदैवतः ॥ भारद्वाजस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभवेतिप्रत्यैकंवृत्वा ॥ ॐ अग्नआयाहि० षि ॥ इतिमंत्रेणप्रत्येकं
गंधाद्युपचारैःपूजयेत् ॥ ततोमकरस्थंपाशहस्तंशुक्लवर्णंकिरीटधारिणंवरुणंध्यात्वा। एह्येहियादोगणवारिधीनांगणेनपर्जन्यसहाप्सरोभिः॥
विद्यामहेंद्रामरगीयमानपाहित्वमस्मान्भगवन्नमस्ते ॥ भोवरुणइ० वरुणंसांगं० द्वारकलशेआवाहयामि ॥ इमंमेवरुण० राचके ॥ इतिमंत्रेण
श्वेतांपताकांश्वेतंध्वजंचोच्छ्रयेत् ॥ तत्वायामि० षीः॥ वरुणाय० गंधाद्यु० ॥ पाशहस्तंचवरुणमर्णसांपतिमीश्वरम् ॥ आवाहयामियज्ञेस्मि
न्पूजेयंप्रतिगृह्यतामिइतिनत्वा वरुणायसांगाय० एतंमाष० इतिबलिंदत्त्वाचामेत् ॥ वायव्यांगत्वा पूर्ववत्कलशंसंस्थाप्य तत्रपुष्पदंताय०
पुष्पदंतमावा० सिद्धार्थायन० सिद्धार्थमावाहयामि पुष्पदंतसिद्धार्थाभ्यांनं० गंधाद्युपचारान्० ॥ ततोमृगाधिरूढंधूम्रवर्णंचित्रांबरधरंयुवा

नंवरध्वजधरदक्षिणवामहस्तद्वयंवायुंध्यात्वा॥एह्येहियज्ञेममरक्षणायमृगाधिरूढःसहसिद्धसंघैः॥प्राणाधिपः कालकवेः सहायगृहाणपूजांभ
गवन्नमस्ते ॥ भोवायोइ० वायुंसांगं० कलशेआ० ॥ वायोशतं०पायसेतिमंत्रेण धूम्रांपताकांधूम्रध्वजंचोच्छ्रयेत् ॥ ॐ तववायो० हे ॥
वायवेन० गंधाद्यु० । वायुमाकाशगंचैवपवनंवेगवद्गतिम्॥ आवाहयामियज्ञस्मिन्पूजेयंप्रतिगृह्यताम्। अनाकारोमहौजाश्चयश्चादृष्टगतिर्दि
वि ॥ तस्मैपूज्यायजगतोयवेहंनमामिचेतिनत्वा वायवेसांगाय० एतंमाष० मिइतिबलिंदत्त्वाचमेत् ॥ ततःउत्तरद्वारेकलशद्वयंप्रतिद्वा
रशाखंसंस्थाप्य तत्रकलशद्वयेसार्वभौमदिग्गजाय० सार्वभौमदिग्गजमा० सार्वभौमदिग्गजाय० गंधाद्युप०॥तत्रअथर्ववेदिनावृत्विजौ ॥
अस्मिन्नुत्तरद्वारेशांतिसूक्तजपार्थेत्वामहंवृणे ॥ बृहन्नेत्रोथर्ववेदोनुष्टुभोरुद्रदैवतः ॥ वैशंपायनविप्रेंद्रऋत्विक्त्वंमेमखेभवेतिप्रत्येकंवृत्वा
शन्नोदेवी० नः इतिमंत्रेणप्रत्येकंगंधाद्युपचारैःपूजयेत् ॥ ततो नरयुतविमानस्थंकुंडलहारकेयूररुचिरंवरगदाधरदक्षिणवामभुजद्वयंसुकु
टिनंमहोदरंमहाकायंहरितवर्णंकुबेरं ध्यात्वा ॐ एह्येहियज्ञेश्वरयज्ञरक्षांविधत्स्वनक्षत्रगणेनसार्द्धम् ॥ सर्वौषधीभिःपितृभिःसहेवगृहाणपू
जांभगवन्नमस्ते ॥ भोसोमइहा० । द्वारकलशद्वयेआवाह० ॥ ॐआप्याय० थे इतिमंत्रेणहरितांपताकांहरितंध्वजंचोच्छ्रयेत ॥ सोमो
धेनुं० दस्मै ॥ सोमाय० सोमं० ॥ सोमाय० गंधाद्यु० ॥ सर्वनक्षत्रमध्येतुसोमोराजाव्यवस्थितः ॥ तस्मैसोमायदेवायनक्षत्रपतयेनमः ॥
इतिनत्वासोमायसांगाय० एतंमाष० इतिबलिंदत्त्वाचामेत् ॥ ततः ईशान्यांगत्वा तत्रपूर्ववत्कलशंनिधाय तत्रसुप्रतीकाय० सुप्रतीकं० ।
मंगलाय० मंगलमा० सुप्रतीकमंगलाभ्यां० गंधाद्यु० ॥ ततो वृषारूढंदक्षिणवामहस्तयोर्वरत्रिशूलधरंत्रिनेत्रंशुक्लवर्णमीशानंध्यात्वा ॐ

एह्येहि विश्वेश्वरनस्त्रिशूलकपालखट्वांगधरेणसार्द्धम् ॥ लोकेनयज्ञेश्वरयज्ञसिद्ध्यैगृहाणपूजांभगवन्नमस्ते ॥ भोईशानइहागच्छ॰ कलशे आवाह॰ ॥ अभित्वादेव॰ महे इतिमंत्रेणश्वेतांपताकांश्वेतंध्वजंचोच्छ्रयेत् ॥ ततस्तमीशानं॰ स्वस्तये ॥ ईशानाय॰ गंधाद्युप ॰ ॥ वृषस्कंधसमारूढंशूलहस्तंत्रिलोचनम्॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यताम् ॥ सर्वाधिपोमहादेवईशानःशुक्लईश्वरः ॥ शूलपाणिर्विरूपाक्षस्तस्मैनित्यंनमोनमइतिनत्वा ईशानायसां॰ मि इतिबलिंदत्त्वाचामेत् ॥ ततः ईशानपूर्वयोर्मध्ये अधःउद्दिश्य॥ अनंतशयनासीनंफणासप्तकमंडितम्॥ पद्मशंखधरोर्ध्वाधोदक्षिणंवैकरद्वयम् ॥ चक्रगदाधरदक्षिणवामकरद्वयंनीलवर्णमनंतंध्यात्वा॥ ॐ एह्येहिपातालधरामरेन्द्र नागांगनाकिन्नरगीयमान ॥ यक्षोरगेंद्रामरलोकसंघैरनंतरक्षाध्वरमस्मदीयम् ॥ भो अनंतइहा॰ अनंतसांग॰ मावाहयामि ॥ आयंगौः॰ त्स्वः इतिमंत्रेणश्वेतांपताकां श्वेतंध्वजंचोच्छ्रयेत् ॥ ॐ आयंगौः॰ त्स्वः ॥ अनंताय॰ गंधाद्यु॰ योसावनंतरूपेणब्रह्माण्डंसचराचरम् ॥ पुष्पवद्धारयन्मूर्ध्नितस्मैनित्यंनमोनमइतिनत्वा अनंतायसांगायसपरिवाराय॰एतंमाष॰इतिबलिंदत्त्वाचामेत्। ततोनैर्ऋत्यपश्चिमयोर्मध्येऊर्ध्वमुद्दिश्य अक्षसूत्रकुशमुष्टिधरोर्ध्वाधोदक्षिणकरंस्रुवकमंडलुधरोर्ध्वाधोवामकरद्वयंचतुर्मुखंश्मश्रुजटिलंलंबोदरंरक्तवर्णंब्रह्माणंध्यात्वा ॐ एह्येहिसर्वाधिपतेसुरेंद्रलोकेनसार्द्धंपितृदेवताभिः॥सर्वस्यधातास्यमितप्रभावोविशाध्वरंनःसततंशिवाय॥भोब्रह्मन्निहागच्छेइह तिष्ठब्रह्माणंसांगं॰मा॰ । ॐ ब्रह्मजज्ञानंप्र॰ विव इतिमंत्रेणरक्तांपताकांरक्तंध्वजंचोच्छ्रयेत् । ॐ ब्रह्मजज्ञानं॰विवः।ब्रह्मणे॰ब्रह्माणं॰ब्रह्मणे॰ गंधाद्यु॰।पद्मयोनिश्चतुर्मूर्तिर्वेदावासः पितामहः ॥ यज्ञाध्यक्षश्चतुर्वक्रस्तस्मैनित्यंनमोनमइतिनत्वा ब्रह्मणेसांगाय॰इतिबलिंदत्त्वाचामेत्।

ततोमंडपमध्येअत्युच्चदंडोदशहस्तदीर्घोत्रिहस्तविस्तृतोविचित्रवर्णः ॐ इंद्रस्यवृष्णो०मुदस्थात् । इतिमंत्रेणस्थाप्य । ॐ ब्रह्मजज्ञानं०वः
ब्रह्मणे०गंधाद्यु०।ततोमंडपषोडशस्तंभेषुसर्वेभ्योदेवेभ्योन०वंशेषुकिंनरेभ्योन०पृष्ठेपन्नगेभ्योनमइतिपूजयेत्। ततःपूर्वस्यांदिशिमंडपाद्बहिः
किंचिद्भूमिमुपलिप्यतत्रोपविश्य।त्रैलोक्येयानिभूतानिस्थावराणिचराणिच॥ब्रह्मविष्णुशिवैःसार्द्धंरक्षांकुर्वंतुतानिमे॥ देवदानवगंधर्वायक्षरा
क्षसपन्नगाः॥ ऋषयोमानुषागावोदेवमातरएवच॥ सर्वेममाध्वरेरक्षांप्रकुर्वंतुमुदान्विताः॥ ब्रह्माविष्णुश्चरुद्रश्चक्षेत्रपालोगणैः सह॥रक्षंतुमंडपं
सर्वेघ्नंतुरक्षांसिसर्वतः ॥ त्रैलोक्यस्थेभ्यस्स्थावरेभ्योभूतेभ्योनमः॥ त्रैलोक्यस्थानिस्थावराणिभूतान्यावा० । त्रैलोक्यस्थेभ्यश्चरेभ्योभूते
भ्योनमः॥त्रैलोक्यस्थानिचराणिभूतान्या० ॐ ब्रह्मणे०ब्रह्माणं० । ॐविष्णवे०विष्णुं० । ॐशिवाय० शिवं।ॐ देवेभ्योन० देवान्आ०
ॐदानवेभ्योनमः दानवान्० । ॐ गंधर्वेभ्योन०गंधर्वान्० ॐ यक्षेभ्योन०यक्षान्० ॐराक्षसेभ्योन०राक्षसान्० ॐ पन्नगेभ्योन०पन्नगा
ना० । ॐ गोभ्योन० गाः आ० । ॐ ऋषिभ्योन०ऋषीना ० । ॐमनुष्येभ्यो०मनुष्यान्० ॐ देवमातृभ्यो० देवमातॄः० । इत्यावाह्य
प्रत्येकंगंधाद्युपचारैः संपूज्यप्रत्येकंमाषभक्तबलीन्दद्यात्।ततोयजमानः साचार्यऋत्विक्प्रक्षालितपाणिपादआचांतः प्राग्द्वारेणमंडपंप्रवि
शेत्। यजमानोग्न्यायतनाद्दक्षिणतउपविशेत् । आचार्यस्तुकुंडपश्चिमतः उपविश्याचम्यप्राणानायम्यामुककर्मण्यग्निप्रतिष्ठांकरिष्ये तदं
गतयासंमार्जनमेखलायोनिदेवतास्थापनंपूजनंचकरिष्येइतिसंकल्प्याग्न्यायतनंसंमृज्यकुशोदकेनकुंडंप्रोक्ष्यउपरिमेखलायांश्वेतवर्णालंकृ
तायाम् इदंविष्णुरितिविष्णुमावाह्यसंपूज्यमध्यममेखलायांरक्तवर्णालंकृतायांब्रह्मजज्ञानमितिब्रह्माणमधोमेखलायांकृष्णवर्णालंकृतायां

कद्रुद्रायेतिरुद्रंयोन्यांरक्तवर्णालंकृतायांगौरीर्मिमायेतिगौरीमावाह्यसंपूज्यस्वशाखोक्तमार्गेणाग्निंप्रतिष्ठाप्ययग्रहवेद्यांपूर्वोक्तप्रकारेणसर्वतोभद्र
मंडलं कृत्वा तत्तद्देवता आवाहयेत् । प्राणानायम्यदेशकालौस्मृत्वासर्वतोभद्रेमंडलदेवतास्थापनमहंकरिष्यइतिसंकल्प्य ब्रह्मजज्ञानं
गौतमोवामदेवोब्रह्मात्रिष्टुप्ब्रह्मावा० ॐब्रह्मजज्ञानं०वः।मध्येब्रह्मणे०ब्रह्माणमा० । आप्यायस्वगौतमःसोमोगायत्री। ॐ आप्यायस्वसमे०थे
उत्तरेसोमाय०सोममा०।अभित्वाजीगर्तिःशुनःशेपईशानोगायत्री। ॐअभित्वादेव०हेईशान्यांईशानाय०ईशानमा०इंद्रंवोमधुच्छंदाइंद्रोगा
यत्री । ॐ इंद्रंवोवि० लः पूर्वेंद्राय० इंद्रमा० । अग्निंदूतंकाण्वोमेधातिथिरग्निर्गायत्री । ॐ अग्निंदूतं०तु । आग्नेय्यामग्नये ० अग्निमा०।
यमायसोमंयमोयमोनुष्टुप् ॐयमायसोम०तः । दक्षिणेयमाय० यममा० ।मोषुणोघोरः कण्वोनिर्ऋतिर्गायत्री । ॐमोषुणःपरापरा०ह ।
नैर्ऋत्यांनिर्ऋतये०निर्ऋतिमा०। तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप्। ॐतत्त्वायामि०षीः।पश्चिमेवरुणाय०वरुणं०।तववायोव्यश्वांगिरसोवा
युर्गायत्रीॐतववायवृत०हेवायव्यायांवायवेन०वायुं०।ज्मयाअत्रमैत्रावरुणोवसवस्त्रिष्टुप् ॐ ज्मयाअत्र०स्य वायुसोममध्येअष्टौवसुभ्योन०
अष्टौवसून्आ० । आरुद्रासःश्यावाश्वएकादशरुद्राजगती। ॐ आरुद्रासः०वे। सोमेशानयोर्मध्येएकादशरुद्रेभ्यो० । एकादशरुद्रान्०त्या
न्नुसामवेदोमत्स्योद्वादशादित्यागायत्री। ॐ त्यान्नुक्षत्रियां० ये।ईशानेंद्रयोर्मध्येद्वादशादित्येभ्यो०द्वादशादित्यान्आ ०।अश्विनावर्तिराहु
गणोश्विनावुष्णिक्।ॐअश्विनावर्तिर०तम्।इंद्राग्नियममध्येअश्विभ्यांनमःअश्विनौआ०।ओमासश्चर्षणीधृतइतिगृत्समदोविश्वेदेवागायत्री
ॐओमासश्च०तम्।अग्नियममध्येविश्वेभ्योदेवेभ्यो०विश्वान्देवानआ०अभित्यंवामदेवसप्तयक्षाअत्यष्टिः।ॐअभित्यंदेवं०स्वः।यमनिर्ऋति

मध्येसप्तयक्षेभ्यो०सप्तयक्षान्०।आयंगौःसार्पराज्ञीसर्पागायत्री।ॐआयंगौःत्स्वः। निर्ऋतिवरुणमध्येभूतनागेभ्यो०भूतनागान्आवाहया०अ
प्सरसामैतसर्ष्यश्रृंगोगंधर्वाप्सरसोऽनुष्टुप्।ॐअप्सरसांगंधर्वाणां०मः। वरुणवायुमध्येगंधर्वाप्सरोभ्यो०गंधर्वाप्सरसःआ०।कुमारंमातास्कं
त्रिष्टुप् ॐकुमारंमाता०तौ।ब्रह्मसोममध्येस्कंदाय०स्कंदमा०।ऋषभमृषभोवैराजोनुष्टुप् ॐऋषभमा०वाम्। ब्रह्मसोममध्येऋषभाय०ऋषभ
मा०। अदितिर्लोक्योबृहस्पतिःशूलमहाकालोनुष्टुप् ॐअदितिर्द्यज०वः। ब्रह्मेशानयोर्मध्येदक्षादिसप्तगणेभ्यो०दक्षादिसप्तगणान्आ०
जातवेदसेकश्यपोदुर्गात्रिष्टुप्ॐजातवेदसे।ग्निः ब्रह्मेंद्रमध्येदुर्गायैनमःदुर्गामा० इदंविष्णुर्मेधादितिथिर्विष्णुर्गायत्रीॐइदंविष्णु०रे।ब्रह्मेंद्रमध्ये
विष्णवेन०विष्णुमा०। उदीरतांशंखःस्वधात्रिष्टुप्ॐउदीरता०षु।ब्रह्माग्निमध्येस्वधायै०स्वधामा०परंमृत्योःसंकुशिकोमृत्युरोगास्त्रिष्टुप् ॐ
परंत्यो०न्।ब्रह्मयममध्ये मृत्युरोगेभ्यो०मृत्युरोगान्आ०।गणानांत्वागृत्समदोगणपतिर्जगती।ॐगणानांत्वा०नम्।ब्रह्मनिर्ऋतिमध्येगणप
तये०गणपतिमा०।शन्नोदेवीरांबरीषःसिंधुद्वीपआपोगायत्री।ॐशन्नोदेवी०नः।ब्रह्मवरुणमध्येअद्भ्योन०अपःआवा०। मरुतोयस्यराहुगणो
मरुतोगायत्रीॐमरुतोयस्य०नः।ब्रह्मवायुमध्येमरुद्भ्योन०मरुतःआ०।स्योनामेधातिथिर्भूमिर्गायत्रीॐस्योनापृथिवीभवा०थाः।ब्रह्मणःपा
दमूलेकर्णिकाधःपृथिव्यै०पृथिवीमा०। इमंमेगंगेइत्यस्यासिंधुक्षित्प्रैय्यमेधोयमुनासरस्वत्यौजगती। ॐइमंमेगंगेय० या।तत्रैवगंगादिसर्वन
दीभ्यो०गंगादिसर्वनदीःआवा०।धाम्नोधाम्नोगौतमोवामदेवःसप्तसागरानुष्टुप्। ॐधाम्नोधाम्नोराज०च।तत्रैवक्षारादिसप्तसागरेभ्यो०क्षारादि
सप्तसागरान्आ०।तदुपरिमेरवेनमःमेरुमा०।बाह्येपरिधौसोमादिसमीपेक्रमेणायुधानि।ःअष्टदिक्षुगदायै०गदामा०त्रिशूलाय०त्रिशूलमा०

वज्राय०वज्रमा० । शक्तये०शक्तिमा०।दंडाय०दंडमा।खड्गाय० खड्गमा।पाशाय०पाशमा० । अंकुशाय०अंकुशमा० । तद्बाह्येउत्तरादि
क्रमेणगौतमाय०गौतममा०भरद्वाजाय०भरद्वाजमा०।विश्वामित्राय०विश्वामित्रमा०।कश्यपाय०कश्यपमा० । जमदग्नये०जमदग्निमा० ।
वसिष्ठाय०वसिष्ठमा०। अत्रयेन०अत्रिमा।अरुंधत्यै०अरुंधतीमा०।तद्बाह्येपूर्वाद्यष्टदिक्षु ऐंद्र्यैन०ऐंद्रीमा०। कौमार्यैन०कौमारीमा०।ब्राह्म्यै०
ब्राह्मीमा०।वाराह्यै०वाराहीमावा०चामुंडायै०चामुंडामा० । वैष्णव्यै०वैष्णवीमा । माहेश्वर्यैन०माहेश्वरीमा० । वैनायक्यै०वैनायकीमा०
तत्रमध्ये सूर्याय०सूर्यमा०।बाह्येपूर्वाद्यष्टदिक्षु सोमाय० सोममा०।भौमाय० भौममा०बुधाय०।बुधमा०।बृहस्पतये०बृहस्पतिमा०शुक्राय
शुक्रमा० । शनैश्वराय०शनैश्वरमा० । राहवे०राहुमा० । केतवेनमःकेतुमावाहयामि । एतादेवताःप्रतिष्ठाप्यसंपूज्यपूर्वोक्तप्रकारेणाष्टगंधैः
क्षौमवस्त्रोपरिग्रहयंत्रंविलिख्य तदुपरियथाक्रमेणसंस्थाप्य तत्रकुंकुमाक्षतैःग्रहान्साधिप्रत्यधिदेवताःस्थापयेत्।तद्यथा । मंडलेआदित्यादि
देवतास्थापनंकरिष्यइतिसंकल्प्य पद्मासनःपद्मकरःपद्मगर्भ०।आकृष्णेनहिरण्यःस्तूपःसवितात्रिष्टुप्सूर्यावाहनेविनियोगः। ॐभूर्भुवःस्वः
कलिंगदेशोद्भवकाश्यपसगोत्रसूर्यइहागच्छेति । आप्यायस्वगौतमःसोमोगायत्री । ॐभूर्भुवःस्वःयमुनातीरोद्भवआत्रेयसगोत्रसोमइहा० ॥
अग्निर्मूर्द्धाविरूपोंगारकोगायत्री । ॐभू०अवंतीसमुद्भवभारद्वाजसगोत्रभौमइहागच्छेति० । उद्बुध्यध्वंबुधःसौम्योबुधस्त्रिष्टुप्। ॐभू०मगध
देशोद्भवआत्रेयसगोत्रबुध० । बृहस्पतेगृत्समदोबृहस्पतिस्त्रिष्टुप् । ॐभू० सिंधुदेशोद्भवआंगिरसगोत्रबृहस्पतेइ० । शुक्रःपाराशरःशुक्रो
द्विपदाविराट् । ॐभू० भोजकटदेशोद्भवभार्गवसगोत्रशुक्रइ०।शमग्निरिरिंबिठिःशनिरुष्णिक् । ॐभू०सौराष्ट्रदेशोद्भवकाश्यपसगोत्रशनै

श्वरइ०।कयानोवामदेवोराहुर्गायत्री । ॐभू०राठिनापुरोद्भवपैठीनसगोत्रराहोइहागच्छे०। केतुंमधुच्छंदाःकेतुर्गायत्री । ॐभू०अंतर्वेदिस
मुद्भवजैमिनिसगोत्रकेतोइ०।अथाधिदेवताः।त्र्यंबकोवसिष्ठोरुद्रोनुष्टुप्गौरीर्मिमादीर्घतमाउमाजगती । यदक्रंदोदीर्घतमाःस्कंदस्त्रिष्टुप्
विष्णोर्नुकंदीर्घतमानारायणस्त्रिष्टुप्।ब्रह्मजज्ञानंगौतमोवामदेवोब्रह्मात्रिष्टुप् । इंद्रंवोमधुच्छंदाइंद्रोगायत्री । यमायसोमंयमोयमोनुष्टुप्।
सोषुणोघोरःकण्वःकालोगायत्री । उषोवाजंप्रस्कण्वश्चित्रगुप्तोबृहती । अथप्रत्यधिदेवताः । अग्निंदूतंकाण्वोमेधातिथिरग्निर्गायत्री ॥
अप्सुमेधातिथिरापोनुष्टुप्०स्योनामेधातिथिर्भूमिर्गायत्री।इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री । इंद्रश्रेष्ठानिगृत्समदइंद्रस्त्रिष्टुप्। इंद्राणींवृषाक
पिरिंद्राणीपंक्तिः।प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप्।आयंगौःसर्पराज्ञीसर्पागायत्रीब्रह्मजज्ञानंगौतमोवामदेवोब्रह्मात्रिष्टुप्। ततउत्तरतः ॥
गणानांत्वागृत्समदोगणाधिपतिर्जगती। जातवेदसेकश्यपोदुर्गात्रिष्टुप् । तववायोव्यश्वांगिरसोवायुर्गायत्री।आदिद्धत्सआकाशोगायत्री ॥
एषांउषःप्रस्कण्वोश्विनौगायत्री । यद्वाराहोरुत्तरेविनायकंशनेरुत्तरेवायुंराहोर्दक्षिणे आकाशंकेतोर्दक्षिणेश्विनौउत्तरेक्षेत्रस्यपतिनावामदे
वःक्षेत्राधिपतिरनुष्टुप्।वास्तोष्पतेवसिष्ठोवास्तोष्पतिस्त्रिष्टुप्।ततःलक्षकोटिहोमयोः।सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः। विषपापहरोनि
त्यमतःशांतिंप्रयच्छमे इतिमंत्रेणेंद्रंमित्रंवरुणमितिवागरुत्मंतमुत्तरतः आवाह्य दिक्पालानष्टदिक्षुतन्मंत्रैरावाह्य तत्ररवेःपूर्वेशेषंसोमस्या
ग्नेवासुकिं भौमस्याग्रेतक्षकं बुधोत्तरेकर्कोटकं गुरूत्तरेपद्मं शुक्रोत्तरेमहापद्मं शनिपश्चिमेशंखपालं राहोःपुरतःकंबलं केतोःपुरतः ॥ २३ ॥
कुलिशंस्थापयेत्।ततःपूर्वे अश्विन्यादिसप्तनक्षत्राणि विष्कंभादिसप्तयोगान् बवबालवकरणेसप्तद्वीपानृग्वेदंच दक्षिणे पुष्यादिसप्तनक्षत्रा

णिधृत्यादिसप्तयोगान्कौलवतैतिलकरणेसप्तसागरान्यजुर्वेदंचपश्चिमेस्वात्यादिसप्तनक्षत्राणिवज्रादिसप्तयोगान्गरवणिजकरणेसप्तपाताल
निसामवेदंचउत्तरे । अभिजिदादिसप्तनक्षत्राणिसाध्यादिषट्योगान्विष्टिकरणंभूरादीन्सप्तलोकान्अथर्ववेदंचवायव्येध्रुवंसप्तर्षींश्च।ततोयथा
वकाशंगंगादिसप्तसरितःसप्तकुलाचलान्अष्टौवसून्द्वादशादित्यान्एकादशरुद्रान्एकोनपंचाशन्मरुतःषोडशमातृःषडृतून्द्वादशमासान्द्वे
अयने पंचदशतिथीः षष्टिसंवत्सरान् सुपर्णान्नागान्सर्पान्यक्षान्गंधार्वान्विद्याधरानप्सरसःरक्षांसिभूतानिमनुष्यान्इति । कोटिहोमेतुवे
देःपूर्वेब्रह्मा । मध्येजनार्दनः । पश्चिमेरुद्रः । उत्तरेस्कंदः । ततोध्यायेत् । तदस्तुमित्रावरु० गृहावै० इत्यावाह्यपुरुषसूक्तेनषोडशोपचा
रैःसंपूज्यप्रार्थयेत्। आदित्यावसवोरुद्रामरुतोलोकपास्तथा॥ब्रह्माजनार्दनश्चैवशूलपाणिर्भगाक्षहा॥अत्रसन्निहिताःसर्वेभवंतुमखभागिनः॥
पूजांगृह्णंतुसर्वत्रमयाभक्त्योपपादिताम् ॥ कुर्वन्तुचशुभंसर्वेयज्ञकर्तुस्समीहितमिति ॥ ततोवेदीशान्यांकुंभंसंस्थाप्यवरुणंसंपूज्य देवदान
वसंवादेइतिसंप्रार्थ्यान्वाधानंकुर्यात्।चक्षुषीआज्येनेत्यंतमुक्त्वा नवग्रहानष्टशताष्टाविंशत्यष्टान्यतमसंख्याभिः समिच्चर्वाज्याहुतिभिरधि
देवताद्याःप्रधानदशांशेनद्वित्रिभिर्वासमिच्चर्वाज्याहुतिभिः नवग्रहानयुतलक्षकोट्यान्यतरसंख्याभिर्यवव्रीह्यन्यतरघृततिलाहुतिभिः ॥
शेषेणस्विष्टकृतमित्यादि।चर्वाज्याहुतिरेकैवसर्वेषामितिपक्षेतथोल्लेखः । लक्षकोटिहोमयोर्गरुत्मंतमष्टशतादिसंख्ययासमिदादिभिः कोटि
होमेब्रह्मादीनांगरुडवत्।चर्वेकाहुतिपक्षेनवस्थाल्योवहानधर्मश्च।लक्षहोमादेर्बहुदिनसाध्यत्वेचरुस्विष्टकृदाद्यंदिनएवकार्यम्। यावद्धोमसमा
तिप्रतिदिनंग्रहपूजाकार्या।कोटिहोमेप्रतिसहस्रंपूर्णाहुतिरपि।होमसमाप्तावग्निंसंपूज्य स्विष्टकृदादिप्रायश्चित्तहोमांतंकृत्त्वाग्नेःसमंतादिक्पाले

भ्योवेदेः समंतान्नवग्रहेभ्योवेदेरुत्तरतोविनायकादिसप्तभ्योगरुत्मतेचतत्तन्मंत्रैःमाषभक्तबलीन्दत्त्वाक्षेत्रपालबलिंदुर्ब्राह्मणेनशूद्रेणवाचतुष्पथे
क्षेपयेत् । ततःप्रक्षालितपादोद्वादशगृहीतेनचतुर्गृहीतेनवाज्येनवस्त्रनारिकेरादियुतेनपूर्णाहुतिंजुहुयात् । तत्रमंत्राः । समुद्रादूर्मिरित्यस्य
गौतमोवामदेवोग्निस्त्रिष्टुप् । मूर्धानंदिवोबार्हस्पत्योभारद्वाजोवैश्वानरस्त्रिष्टुप् । पुनस्त्वग्निर्वसुरुद्रादित्यास्त्रिष्टुप् । पूर्णादर्विविश्वेदेवाःशतक्र
तुरनुष्टुप् ॥ सप्ततेअग्नेसप्तवाग्निर्जगती । धामंतेगौतमोवामदेवआपोजगती । एतैर्हुत्वाइदमग्नयेवैश्वानरायवसुरुद्रादित्येभ्यः शतक्रतवे
सप्तवतेग्नयेद्भ्यश्चनममेतित्यागः। अथवसोर्धारांपातयेत् । तत्रमंत्राः । अग्निमीळइतिनवानांमधुच्छंदा अग्निर्गायत्री। विष्णोर्नुकमितिषण्णां
दीर्घतमाविष्णुस्त्रिष्टुप् । आतेपितरितिपंचदशानांगृत्समदोरुद्रस्त्रिष्टुप् । स्वादिष्ठयेतिदशानांमधुच्छंदाःपवमानसोमोगायत्री । महावैश्वा
नरज्येष्ठसामनीचपूर्णपात्रविमोकादिकर्मशेषंसमाप्यसर्त्विक्श्रेयस्संपादनंकृत्वाकुंडेशानभागेस्वस्तिकोपरि भद्रासनेस्थितंयजमानंग्रहकल
शोदकेनसमुद्रज्येष्ठाइत्यादिभिःसुरास्त्वेत्यादिभिश्चाभिषिंचेत् ।अत्र पत्नीवामे।ततोयजमानःसर्वौषधीविरनुलिप्यस्नात्वाधेन्वादिदक्षिणांपूर्वो
क्तमंत्रैर्दद्यात् । अयुतहोमेएकैकंलक्षहोमेदशकोटिहोमेशतंन्यूनमूल्यंसुवर्णेनसमंकर्तव्यम् । मुख्याभावेसुवर्णंदद्यात् । ततोद्वारजापकेभ्योऽ
न्येभ्यश्चदक्षिणांदत्त्वापूर्वस्थापितदेवताःसंपूज्याचार्यायदत्त्वाग्निंसंपूज्यविभूतिंधृत्वागच्छगच्छेत्यग्निंविसृज्यब्राह्मणान्संभोज्यकर्मसमाप्तिंवा
चयित्वाकर्मेश्वरार्पणंकृत्वानृत्याद्युत्सवंकारयेत् ॥ इतिदिनकरभट्टकृतेशांतिसारेलक्षहोमादिपद्धतिः ॥(अथकोटिहोमेशतमुखादिभेदाः) ।
हेमाद्रौभविष्योत्तरे । शताननोदशमुखोद्विमुखैकमुखस्तथा ॥ चतुर्विधोमहाराजकोटिहोमोविधीयते ॥ कृत्वाकुंडशतंदिव्यंयथोक्तंहस्त

संमितम् । एकैकस्मिंस्ततःकुंडेदशविप्रान्नियोजयेत् ॥ एकस्थानप्रणीतेऽग्नौसर्वतःपरिभाविते ॥ होमंकुर्युर्द्विजाःसर्वेकुंडकुंडेयथोदितम् ॥ अत्रसर्वेतिकर्तव्यतापूर्ववत् । कुंडानांहस्तमात्रताघृतादिशीघ्रदाहिद्रव्यविषयातिलयवादौतु । अयुतेत्वथहोतव्येकुंडंस्याद्धस्तमात्रकम् । द्विगुणंलक्षहोमेचकोटिहोमेचतुर्गुणमितिवाक्यात् । लक्षार्द्धेत्रिकरंकुंडंलक्षहोमेचतुःकरमितिवाक्याच्च । द्विकरंत्रिकरंवाबोद्धव्यम् अत्रमंडपपरिमाणंश तहस्तत्वाद्यार्थिकम् । अर्थात्परिमाणमितिकात्यायनोक्तेः । अत्रचाचार्योनैर्ऋत्यकुंडेग्निंप्रतिष्ठापयेत् ।ततस्तमग्निमन्येपुरृत्विजःप्रणयेयुःसहस्रब्राह्मणसंख्याचऋत्विग्विषया। तेनसहस्रंऋत्विजःइतिशतमुखाः।यदादशमुखःकार्यःकोटिहोमोमहामते ॥ विप्राणांद्विशतंतत्रसुविभज्यनियोजयेत् ॥ अत्रचैकैकस्मिन्कुंडेदशलक्षहोमऋत्विजांविंशतिश्च ॥ कुंडंपंचकरंप्रोक्तंदशलक्षाहुतौक्रमात् । इतितंत्रांतरोक्तम् । शेषंपूर्ववत् । इतिदशमुखः । अथकुंडद्वयंकृत्वाविभज्यचविभावसुम् । होमंकुर्युर्द्विजाभूयः संस्कृत्यविधिपूर्वकम् । शतंतत्रनियोज्यंस्याद्विप्राणांप्रविभज्यवै ॥ यद्वामासेर्द्धमासेवाकार्यंकालउपस्थिते॥तदातुद्विमुखःकार्यःकोटिहोमोविचक्षणैः अत्रपंचाशदृत्विजः ॥ प्रतिकुडंअन्यत्प्राग्वत् । इतिद्विमुखः ।अत्रमंडपविशेषोभविष्योत्तरे । उत्तमंशतहस्तंतुतदर्द्धेनतुमध्यमम् ॥ जघन्यंतुतदर्द्धेनशक्तिकालाद्यपेक्षया॥शतमुखेशतहस्तः।दशमुखेपंचाशद्धस्तः। द्विमुखेपंचविंशतिहस्तः। शतहस्तमंडपेदशहस्तान् शतकोष्ठकान्कृत्वा तन्मध्येशतंद्विहस्तानिकुंडानिकुर्यात्।एवंशतमुखयोरपीति।अत्रकोटिहोमानुसूतेःकोटिधर्माएवंभवंति।इति श्रीमन्नारायणभट्टसूरिसूनुश्रीमद्रामकृष्णभट्टात्मजदिनकरकृतशांतिसारेशतमुखादिभेदनिरूपणम् ॥ (अथग्रहशांतयः)।तत्रादित्यशांतिः।मदनरत्नेभविष्योत्तरे

आदित्यवारंहस्तेनपूर्वंगृह्यविचक्षणः ॥ मंत्रोक्तविधिनासर्वंकुर्यात्पूजांसमाहितः॥प्रत्यर्कंसप्तनक्तानिकृत्वाभक्तिपरोनरः॥ततस्तुसप्तमेप्राप्ते
कुर्याद्ब्राह्मणभोजनम् ॥ भास्करंशुद्धसौवर्णंकृत्वायत्नेनमानवः॥ताम्रपात्रेस्थापयित्वारक्तपुष्पैःप्रपूजयेत् । रक्तवस्त्रयुगच्छन्नंछत्रोपानद्युगा
न्वितम् ॥ घृतेनस्नापयित्वाचलड्डुकान्विनिवेद्यच ॥ होमंतिलघृतैःकुर्याद्रविनाम्नाचमंत्रवित्॥समिधोष्टोत्तरंशतमष्टाविंशतिरेवच॥होतव्या
मधुसर्पिर्भ्यांदध्नाचैवघृतेनच ॥ समिधोर्कसमिधः ॥ मंत्रेणानेनविदुषेब्राह्मणायप्रदापयेत् । आदिदेवनमस्तुभ्यंसप्तसप्तेदिवाकर॥त्वंमेऽवतार
यस्वास्मानस्मात्संसारसागरात् ॥ सूर्यपीडासुघोरासुकृताशांतिःशुभप्रदा ॥ इत्यादित्यशांतिः ( अथचंद्रशांतिः ) तत्रैव । तद्वच्चित्रासुसंगृ
ह्यसोमवारंविचक्षणः । अनेनैवोक्तविधिनाकुर्यात्पूजादिकंविधोः ॥सप्तमेतुततःप्राप्तेकुर्याद्ब्राह्मणभोजनम् ॥ सप्तमेनक्ते। कांस्यपात्रेथसंस्था
प्यसोमंरजतसंभवम् । श्वेतवस्त्रयुगच्छन्नंश्वेतपुष्पैःप्रपूजितम् । पादुकोपानहच्छत्रंभोजनासनसंयुतम् । होमंघृततिलैःकुर्यात्सोमनाम्नाच
मंत्रवित्॥समिधोऽष्टोत्तरशतमष्टाविंशतिरेववा॥होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच ॥ समिधःपलाशस्य। दध्यन्नशिखरेकृत्वाब्राह्मणा
यनिवेदयेत् । कृत्वासोमंधृत्वेत्यर्थः । मंत्रेणानेनराजेंद्रसम्यग्भक्त्यासमन्वितः॥महादेवजातिवल्लीपुष्पगोक्षीरपांडुर ॥ सोमसौम्योभवास्मा
कंसर्वदातेनमोनमः ॥ एवंकृतेमहासौम्यःसोमस्तुष्टिकरोभवेत् ॥ इतिचंद्रशांतिः ( अथांगारकशांतिस्तत्रैव ) स्वात्यामंगारकंगृह्यक्षमायां
नक्तभोजनम् ॥ क्षमाभूमिः । सप्तमेत्वथसंप्राप्तेहेमंताम्रेनिवेश्यवै ॥ रक्तवस्त्रयुगच्छन्नंकुंकुमेनानुलेपितम् ॥ निवेद्यभक्त्याकंसारंपुष्प
धूपाक्षतादिभिः ॥ होमंघृततिलैःकुर्यात्कुजनाम्ना वमंत्रवित् ॥ सामिधोष्टोत्तरशतमष्टाविंशतिरेववा॥होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच ॥

समिधःखादिर्यः । मंत्रेणानेनतंदद्याद्ब्राह्मणायकुटुंबिने॥कुजकुप्रभवोपित्वंमंगलःपरिगद्यसे ॥ अमंगलंनिहत्याशुसर्वदायच्छमंगलम् ॥ एवं कृतेभौमकृतंदुष्कृतंशांतिमाप्नुयात्॥इत्यंगारकशांतिः (अथबुधशांतिः) विशाखासुबुधंगृह्यसप्तनक्तान्यथाचरेत्। बुधंहेममयंकृत्वास्थापितं कांस्यभाजने ॥ शुक्लवस्त्रयुगच्छन्नंशुक्लमाल्यानुलेपितम् । गुडौदनोपसंहारंब्राह्मणायनिवेदयेत् ॥ बुधत्वंबुद्धिजननोबोधवान्सर्वदानृणाम् ॥ तत्त्वावबोधंकुरुमेसोमपुत्रायतेनमः ॥ होमंघृततिलैःकुर्याद्बुधनाम्नाचमंत्रवित् ॥ समिधोष्टोत्तरशतमष्टाविंशतिरेवच ॥ होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच ॥ समिधोपामार्गस्य । इतिबुधशांतिः ( अथगुरुशांतिः ) तत्रैव । गुरुंचैवानुराधासुपूजयेद्भक्तितोनरः ॥ पूर्वोक्तविधिनायोगेसप्तनक्तान्यथाचरेत्॥हैमंहेममयेपात्रेस्थापयित्वाबृहस्पतिम्॥पीतांबरयुगच्छन्नंपीतयज्ञोपवीतिनम्।पादुकोपानहच्छत्रकमंडलुविभूषितम्।पूजयेत्पीतकुसुमैःकुंकुमेनविलेपितम्॥धूपदीपादिभिर्दिव्यैःफलैश्चंदनतंडुलैः॥खंडखाद्योपहारैश्चगुरोरग्रेनिवेदयेत् ॥ धर्मशास्त्रार्थतत्त्वज्ञज्ञानविज्ञानपारग॥विबुधार्तिहराचिंत्यदेवाचार्यनमोस्तुते ॥ होमंघृततिलैःकुर्याद्गुरुनाम्नाचमंत्रवित् ॥ समिधोष्टोत्तरशतमष्टाविंशतिरेवच ॥ होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच ॥ समिधोश्वत्थस्य । विषमस्थेगुरौकार्यामहाशांतिरियंनृभिः॥इतिगुरुशांतिः ( अथशुक्रशांतिः ) ॥ शुक्रंज्येष्ठासुसंगृह्यक्षमायांनक्तभोजनम् ॥ गुरूक्तक्रममार्गेणद्विजसंतर्पणेनच ॥ सप्तमेत्वथसंप्राप्तेरौप्यंशुक्रंतुकारयेत ॥ वंशपात्रेचसंस्थाप्यपूजयेत्सितपंकजैः ॥ तदभावेसितैःपुष्पैस्तांबूलैश्चंदनेनच ॥ अग्रेतस्यप्रदातव्यंपायसंघृतसंयुतम्।दद्यादनेनमंत्रेणब्राह्मणायकुटुंबिने ॥ भार्गवोभर्गशुक्रश्चश्रुतिस्मृतिविशारदः ॥ हित्वाग्रहकृतान्दोषानायुरारोग्यदोऽस्तुसः॥ होमंघृततिलैःकुर्याच्छुक्रनाम्नाचमंत्रवित् ॥

समिधोष्टोत्तरशतमष्टाविंशतिरेवच ॥ होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच ॥ इतिशुक्रशांतिः ॥ (अथशनैश्चरादिशांतिः) तत्रैव।शनैश्चररा
हुकेतूलोहपात्रेषुविन्यसेत् ॥ कृष्णागरुःस्मृतोधूपोदक्षिणाचस्वशक्तितः॥यथाक्रमंशमीदूर्वाकुशानांसमिधःस्मृताः ॥ सततमेत्त्वथसंप्राप्तेत
द्दर्णानथकारयेत् ॥ कृष्णवस्त्रयुगच्छन्नमेकैकंकारयेद्बुधः ॥ मृगनाभ्यासमालभ्यक्कसरान्विनिवेद्यच ॥ होमावसानेतत्सर्वंब्राह्मणायोपपादये
त् ॥ शनैश्चरनमस्तेस्तुनमस्तेराहवेतथा ॥ केतवेचनमस्तुभ्यंसर्वशांतिंप्रयच्छमे ॥ इतिदिनकरभट्टकृतेशांतिसारेशनैश्चरादिशांतिः ॥
( अथशनैश्चरव्रतम् )तत्रैव।ततोमंदस्यदिवसेस्नानमभ्यंगपूर्वकम्॥कार्यंदेयं चविप्रायतैलमभ्यंगहेतवे॥यस्तुसंवत्सरंयावत्प्राप्तेशनिदिनेनरः॥
तैलंददातिविप्रेभ्यःस्वशक्त्यात्यजतेऽपिवा॥ ततःसंवत्सरस्यान्तेप्राप्तेतस्यदिनेपुनः॥लोहंघंटार्पितंसौरिंतैलकुंभेविनिक्षिपेत् ॥ लोहेताम्रम
येवाथकृष्णवस्त्रयुगान्वितम् ॥ कृष्णगोदक्षिणायुक्तंकृष्णकंबलशायिनम् ॥ स्वयमभ्यंगतःस्नात्वाकृष्णपुष्पैस्तमर्चयेत् ॥ सुगंधिगंधपुष्पैश्च
कृसरान्नैस्तिलोदनैः ॥ पूजयित्वासूर्यपुत्रंक्षमस्वेतिपुनःपुनः ॥ कृष्णायद्विजमुख्यायतदभावेतरायच॥देयःशनैश्चरोभक्त्यामंत्रेणानेनवैद्वि
ज॥कोणंनीलांजनप्रख्यंमंदचेष्टाप्रसारिणम्॥छायामार्तण्डसंभूतंनमस्यामिशनैश्चरम् ॥नमोर्कपुत्रायशनैश्चरायनीहारवर्णांजनमेचकाय ॥
श्रुत्वारहस्यंभवकामदस्त्वंफलप्रदोमेभवसूर्यपुत्र॥नमोस्तुप्रेतराजायकृशदेहायवैनमः।शनैश्चरायक्रूरायशुद्धबुद्धिप्रदायिने ॥ अथशनैश्चरशां
तिः।तत्रैवस्कान्दे।द्वादशाष्टमजन्मस्थेशनौसर्वग्रहेश्वरे॥श्रावणेमासिसंप्राप्तेप्रथमेशनिवासरे।लोहरूपंशनिंकृत्वास्नाप्यपंचामृतैर्नवैः॥ पुष्पैर
ष्टविधैर्धूपैःफलैश्चैवविशेषतः॥नामभिःपूजयेदेतैःक्रमेणग्रहसत्तमम् ॥ कोणस्थःपिंगलोबभ्रुःकृष्णोरौद्रोयमोंतकः॥सौरिःशनैश्चरोमंदःपिप्प

देनसंस्तुतः ॥ शन्नोदेवीतिसर्वत्रवैदिकेनचपूजयेत्॥पूजयित्वाचनैवेद्यंततःकुर्यात्क्रमेणतु॥समाष भक्तंप्रथमेद्वितीयेपायसंशुभम्॥ तृतीयेत्व
बिलीकार्याचतुर्थेपूरिकाशुभा॥अबिलीतक्रतंडुलपिष्टादिनिर्मितोलेह्यविशेषः॥प्रथमादिशब्दावासरपराः। इतिशनैश्चरशान्तिः।अथशनैश्च
रस्तुतिः । मदनरत्ने । नारदउवाच । ततःकृतांजलिर्भूत्वास्तुतिंचक्रेसबालकः॥ पिप्पलादोद्विजश्रेष्ठःप्रणिपत्यमुहुर्मुहुः ॥ नमस्तेकोणसं
स्थायपिंगलायनमोस्तुते ॥ नमस्तेबभ्रुरूपायकृष्णायचनमोस्तुते ॥ नमस्तेरौद्रदेहायनमस्तेचांतकायच॥नमस्तेयमसंज्ञायनमस्तेसौरये
विभो ॥ नमस्तेमंदसंज्ञायशनैश्चरनमोस्तुते ॥ प्रसादंकुरुदेवेशदीनस्यप्रणतस्यच ॥ शनैश्चरउवाच । परितुष्टोऽस्मितेवत्सस्तोत्रेणानेनसां
प्रतम्॥ वरंवरयभोवत्सयेनयच्छामिवाञ्छितम्॥पिप्पलादउवाच । अद्यप्रभृतिनोपीडाबालानांरविनंदन ॥ त्वयाकार्यामहाभागनस्वकी
याकथंचन ॥ यावद्वर्षाष्टकंजातंममवाक्येनसूर्यज ॥ स्तोत्रेणानेनयोऽन्यस्त्वांब्रूयात्प्रातरुपस्थितः ॥तस्यपीडानकर्तव्यात्वयाभास्करनं
दन॥ अर्द्धाष्टमिकयायोगेतावकेसंस्थितेनरे ॥ सार्द्धवर्षसप्तपर्यंतंद्वादशजन्मद्वितीयराशिभिर्यःशनैश्चरयोगःसार्द्धाष्टमिका॥ तववारेतुसंप्रा
तेयस्तिलान्लोहसंयुतान् ॥ भक्त्याददातिनोतस्यपीडाकार्यात्वयाविभो ॥ कृष्णांगांयस्तुविप्रायतवोद्देशेनयच्छति ॥ अर्द्धाष्टमिकयापी
डातस्यकार्यात्वयानच ॥ शमीसमिद्भिर्योहोमंतवोद्देशेननिर्वपेत् ॥ तथाकृष्णतिलैश्चैवकृष्णपुष्पानुलेपनैः ॥ पूजांकरोतियस्तुभ्यंधूपंवैगु
ग्गुलुंदहेत् ॥ कृष्णवस्त्रेणसंवेष्ट्यचत्याज्यातस्यत्वयाव्यथा ॥ सूतउवाच । एवमुक्तःशनिस्तेनबाढमित्येवजल्प्यच ॥ नारदंसमनुज्ञायजगा
मनिजसंश्रयम्।इतिशनैश्चरस्तुतिः॥अथनवग्रहस्नानानि। तत्रैवविष्णुधर्मे।मंजिष्ठामदमातंगंकुंकुमंरक्तचंदनम्॥पूर्णकुंभेगतंताम्रेसूर्यस्नानंवि

धीयते ॥ मदमातंगगजमदः ।उशीरंचशिरीषंचकुंकुमंरक्तचंदनम् ॥शंखंन्यस्तमिदंस्नानंचंद्रदोषविनाशनम् ॥ खदिरंदेवदारुंचतिलान्याम
लकानिच ॥ पूर्णकुंभेकृतेरौप्येभौमपीडाविनाशनम् ॥नदीसंगमतोयानितन्मृदासहितानिच ॥ न्यस्तानिकुंभेमाहेयेबुधपीडाविनाशनम्॥
माहेयेमृन्मये । औदुंबरंतथाबिल्वंवटमामलकंतथा॥न्यस्तंतुकुंभेसौवर्णेजीवपीडाविनाशनम्॥गोरोचनामृगमदःशतपुष्पशतावरी॥विन्य
स्ताराजतेकुंभेशुक्रपीडाविनाशनम् ॥ तिलान्माषान्प्रियंगुंचगंधपुष्पैस्तथैवच ॥ न्यस्तंकार्ष्णायसंकुंभेसौरिपीडाविनाशनम् ॥ गुग्गुलंहिं
गुलंतालंशुभांचैवमनःशिलाम् ॥ शृंगेचमाहिषेन्यस्येद्राहुपीडाविनाशनम् ॥ तालंहरितालम् ॥ वराहविहितांराजन्पर्वताग्रमृदंतथा ॥
छागक्षीरंखड्गपात्रेकेतुपीडाविनाशनम्॥ग्रहस्नानमिदंप्रोक्तंसर्वपीडाविनाशनम्॥इतिग्रहस्नानानि।अथग्रहयोगशान्तिः । मदनरत्नेयामले।
अथातःसंप्रवक्ष्यामिग्रहयोगाख्यशान्तिकम् ॥ एकर्क्षेतिग्मराशौवाएकराश्यर्क्षभेदने॥ शशिसूर्यसमायुक्तेग्रहत्रयसमन्विते ॥ दुर्भिक्षादिभये
चैवचतुर्भयसमन्विते ॥ महारोगभयेराष्ट्रक्षयोवृष्टिविनाशनम्॥ पंचग्रहसमायोगेदुर्भिक्षंसंकरादिकम्॥नृपवैरंगर्भनाशोजायतेजननाशनम्॥
ग्रहषट्कसमायोगेमंत्रिणांमरणंभवेत् ॥ पश्वश्वादिभयंसर्वंसंकरादिजनक्षयः॥पट्टराज्ञोविनाशोवामहाभयमथापिवा॥सप्तग्रहसमायोगेक्षिती
शमरणंध्रुवम्॥जगत्प्रलयमेवापितदानिर्मानुषंजगत्॥सूर्यःस्याद्व्यतिरिक्तश्चेत्तदायोगोमहाद्भुतः॥विनाचंद्रेनयोगोऽपिजगत्प्रलयकारणम्॥
तदृक्षजातजंतूनांमहारोगोमहाभयम् ॥ अर्थनाशःस्थाननाशोमानहानिर्नृपीडनम् ॥ षण्मासाभ्यंतरेवापिआयुर्हानिःश्रियस्तथा॥जन्माष्ट
द्वादशेराशौचतुर्थेपंचमेपिवा॥पूर्वोक्तफलमेवातस्तस्यशांतिंप्रयत्नतः॥कुर्याद्दोषानुसारेणवित्तशाठ्यंनकारयेत् ॥तत्तद्ग्रहाकृतिंकृत्वासौवर्णेन

प्रयत्नतः ॥ सुवर्णस्यतदर्द्धेनपादेनापिकनीयसी ॥ ग्रहस्यैकैककलशंग्रहयोगंप्रमाणतः ॥ कारयेत्कुंभमेकंवानिर्व्रणंसुदृढंनवम् ॥ ग्रहस्यैशानदि
ग्भागेशुद्धदेशेसमस्थले ॥ कुंडेवास्थंडिलेवापिहोमंकुर्याद्विधानतः ॥ तस्यपूर्वोत्तरेदेशेपूर्वस्थानंप्रकल्पयेत् ॥ चतुर्हस्तंहस्तमात्रंस्थंडिलंतंडु
लेनतु ॥ लिखेद्ग्रहाकृतिंतत्रस्थापयेत्प्रतिमांततः ॥ अधिप्रत्यधिदेवादीन्दक्षिणोत्तरतःक्षिपेत् ॥ उक्तगंधैस्तथापुष्पैस्तत्तन्माल्यैःफलैरपि ॥
तत्तद्ग्रहोक्तमंत्रेणपूर्वोक्तेनैवपूजयेत् ॥ ग्रहपूजादिकंकृत्वानैवेद्यांतंसमर्पयेत् ॥ ततोहोमंप्रकुर्वीतस्वगृह्योक्तविधानतः ॥ चतुर्थ्यंतंप्रकुर्वीतक
लशस्थापनंततः ॥ पूर्वोक्तविधिनाऽनेनशुद्धतोयेनपूरयेत् ॥ पंचामृतंपंचगव्यंपंचत्वक्पंचपल्लवम् ॥ तत्तन्मंत्रैर्विनिक्षिप्यऔषधानिविनिक्षि
पेत् ॥ तत्तद्ग्रहोक्तविधिनामूलान्यादायनिक्षिपेत् ॥ मूलानिसर्वौषध्यः । अब्लिंगैर्वारुणैर्वापिकलशंपूरयेद्गुरुः ॥ तत्तद्ग्रहोक्तविधिनातत्तन्मंत्रैर्हुने
दथ ॥ चर्वाज्येजुहुयात्पश्चात्तिलाहुतिमथाचरेत् ॥ अथस्विष्टकृतंहुत्वाहोमशेषंसमापयेत् ॥ भद्रासनोपविष्टस्ययजमानस्यऋत्विजः ॥ क
लशस्थोदकेनैवमभिषेकंसमाचरेत् ॥ योगग्रहोक्तमंत्रैश्चअधिप्रत्यधिमंत्रतः ॥ नवग्रहोक्तमंत्रैश्चजातवेदादिपंचकैः ॥ योगग्रहोक्तमंत्राआकृष्णे
त्यादयः । नवग्रहोक्तमंत्रास्तत्तद्ग्रहशांतिप्रकरणोक्ताः ॥ आदिदेवनमस्तुभ्यमित्यादयः । त्र्यंबकेणेतिमंत्रेणक्षेत्रस्यपतिनाअपि ॥ यतइंद्रभयेनै
वलोकपालाष्टकैरपि ॥ सुरास्त्वामितिमंत्रेणयेनदेवादयः क्रमात् ॥ अन्यैश्चपुण्यसूक्तैश्चअभिषेकंसमाचरेत् ॥ अभिषेकप्लुतंवस्त्रमाचार्यायनि
वेदयेत् ॥ ततःशुक्लांबरधरःकुर्यादाज्यावलोकनम् ॥ ऋत्विग्भ्योदक्षिणांदद्याद्धेनुशंखादिकानपि ॥ तदभावेयथाशक्तिहिरण्यमपिदापयेत् ॥
ब्राह्मणान्भोजयेत्पश्चाद्यथाविभवसारतः ॥ इतिदिनकरभट्टकृतेशांतिसारेग्रहयोगशांतिः ॥ (अथगुरुपूजा) । मदनरत्नेस्कांदे । कन्याविवाहका

लेतुशुद्धिर्यस्यानविद्यते ॥ ब्राह्मणस्योपनयनेयस्यस्याद्दुःस्थितागतः ॥ दुःस्थितंप्राप्तः । एभिःपूजागुरोःकार्याविधिवद्भक्तिभावितैः ॥ मदं
तीकामपुष्पाणिपत्रंपालाशसर्षपाः ॥ मदंतीयूथिका । कामोदमनवृक्षः । गुडूचीचाप्यपामार्गविडंगंशंखिनीवचा ॥ सहदेवीविष्णुक्रांतासर्वौ
षध्यःशतावरी ॥ कुष्ठंमांसीहरिद्रेद्वेसुराशैलेयचंदनम् ॥ वचाकचोरमुक्तंचसर्वौषध्यःप्रकीर्तिताः ॥ तथैवाश्वत्थभंगश्चपंचगव्यंजलंतथा ॥
नूतनंसोदकुंभंचपीतवस्त्रसमन्वितम् ॥ पंचरत्नैःसमायुक्तमीशान्यांस्थाप्यचानलात ॥ याओषधीतिमंत्रेणसर्वास्त्वस्मिन्विनिक्षिपेत् ॥ कुंभ
स्योपरिभागेतुस्थापयित्वाबृहस्पतिम् ॥ सुवर्णपात्रेसौवर्णींप्रतिमांतुयुधिष्ठिर ॥ कारयेत्तुयथाशक्तिवित्तशाठ्यविवर्जितः ॥ पीतवस्त्रयुगच्छ
न्नंपीतयज्ञोपवीतिनम् । पूजयेद्गंधपुष्पाद्यैस्ततोहोमंसमाचरेत । समिधोश्वत्थवृक्षस्यहोम्याअष्टोत्तरंशतम् । तिलव्रीहियवाज्यंचहोतव्यंचयथा
क्रमम् ॥ बृहस्पतेतिमंत्रेणऋषिच्छन्दःसमन्वितम् ॥ ततोहोमावसानेतुपूजयेच्चबृहस्पतिम् ॥ पीतगंधैस्तथापुष्पैर्धूपैर्दीपैश्चभक्तितः ॥ दध्योदनंच
नैवेद्यंफलंतांबूलसंयुतम् ॥ नमस्तेंगिरसानाथवाक्पतेथबृहस्पते । क्रूरग्रहेपीडितानाममृतायनमोनमः । पूजयित्वासुराचार्यंपश्चादर्घ्यंनिवेदयेत ।
गंभीरदृढरूपांगदिव्येज्यसुमतिप्रभो । नमस्तेवाक्पतेशांतगृहाणार्घ्यंबृहस्पते ॥ अर्घ्यंदत्वासुरेशायजपहोमंसमर्चयेत् । भक्त्याथतेसुराचार्य
होमपूजादिसत्कृतम् । तत्त्वंगृहाणशांत्यर्थंबृहस्पतेनमोनमः । मंत्रेणानेनसंकल्प्यपश्चात्संप्रार्थयेन्नृप । जीवोबृहस्पतिःसूरिराचार्योगुरुरंगिराः ॥
वाचस्पतिर्देवमंत्रीशुभंकुर्यात्सदामम ॥ सर्वोपचारसंयुक्तांप्रतिमांतांयुधिष्ठिर ॥ प्रणम्यचगवायुक्तामाचार्यायनिवेदयेत ॥ अथाचार्यस्तुनिय
तोवेदवेदांगपारगः ॥ यजमानंसपत्नीकंशांतचित्तंजितेंद्रियम् ॥ कुंभोदकंगृहीत्वातुमंत्रैरेतैःप्रसिंचयेत् ॥ इदमापोथमंत्रेणतामग्निमित्यृचातथा

याओषधीरश्वावतीकूष्मांडैश्चाभिषेचयेत्॥पश्चात्संभोजयेद्विप्रान्यथाशक्तियुधिष्ठिर ॥ संक्रांतावपिकौंतेयतथास्वाभ्युदयेषुच॥कुर्वन्बृहस्पतेःपूजामभीष्टंफलमाप्नुयात् ॥ संक्रांतौगुरुसंक्रांतौ । इतिगुरुपूजाविधिः । अथप्रतिकूलादिशांतिः । स्मृतिचंद्रिकायांभृगुः । वाग्दानानंतरं यत्रकुलयोःकस्यचिन्मृतिः॥ तदोद्वाहोनैवकार्यःकृतोवैधव्यमाप्नुयात्॥कुलयोर्वधूवरकुलयोरित्यर्थः॥ शौनकः॥पितापितामहश्चैवमाताचैव पितामही ॥ पितृव्यस्त्रीसुताभ्राताभगिनीचविवाहिता॥एभिरत्रविपन्नैश्चप्रतिकूलंबुधैःस्मृतम्॥अन्यैरपिविपन्नैस्तुकेचिदूचुर्नतद्भवेत् ॥ एतच्च त्रिपुरुषोपलक्षणम् । पुरुषत्रयपर्यन्तंप्रतिकूलंस्वगोत्रिणाम् । प्रवेशनिर्गमैस्तद्वत्तथामंडनमंडने॥प्रेतकर्माण्यनिर्वर्त्यचरेन्नाभ्युदयक्रियाम्॥ आचतुर्थंततःपुंसिपंचमेशुभदंभवेदिति । मेधातिथिवाक्येनोपसंहारात् ॥ वधूवरयोःपितरमादायपुरुषत्रयपर्यंतमित्यर्थः॥ अन्यथा ।आचतुर्थादित्यस्यपंचमइत्यस्यचासंगत्यापत्तेः । प्रतिकूलकृतश्चदोषोवर्षावधिरेव । तथाचमेधातिथिः ॥ वाग्दानानंतरंयत्रकुलयोःकस्यचिन्मृतिः ॥ तदासंवत्सरादूर्ध्वंविवाहःशुभदोभवेत् । संकटेतुमासोत्तरंशांतिंकृत्वाविवाहःकार्यः । प्रतिकूलेपिकर्तव्योविवाहोमासतःपरः ॥ शांतिंविधायगांदत्त्वावाग्दानादिचरेत्पुनरितिज्योतिःप्रकाशवचनात् । वाग्दानादीत्यतद्गुणसंविज्ञानोबहुव्रीहिः वाग्दानस्यपूर्वंकृतत्वेनावृत्त्यायोगादितिकेचित्। पुनः पदेनावृत्त्युक्तेरदृष्टार्थंपुनर्वाग्दानमितिगागाभट्टीयःपंथाः॥शांतिंविनायकशांतिम्।संकटेसमनुप्राप्ते याज्ञवल्क्येनयोगिना ॥ शांतिरुक्तागणेशस्यकृत्वातांशुभमाचरेदितिमेधातिथ्युक्तेः ॥ अथनांदीश्राद्धोत्तरंसंस्कार्यमातूरजोदर्शनेशांतिः॥ माधवीये । प्रारंभात्प्राग्विवाहस्यमातायदिरजस्वला ॥निवृत्तिस्तेनकर्तव्यासहत्वंश्रुतिचोदनात्॥प्रारंभोत्तरंरजोदर्शनेनकर्मनिषेधइत्यर्थः।

प्रारम्भश्चनांदीश्राद्धम् ॥ प्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः ॥ नांदीश्राद्धंविवाहादौश्राद्धेपाकपरिक्रियेतिवचनात् ॥ मेधातिथिः॥चौले
चव्रतबन्धेचविवाहेयज्ञकर्मणि॥भार्यारजस्वलायस्यप्रायस्तस्यनशोभनम्॥वधूवरान्यतमयोर्जननीचेद्रजस्वला ॥ तस्याःशुद्धेःपरंकार्यंमां
गल्यंमनुरब्रवीत्। संकटेतुशुद्धेःपूर्वमपिश्रियंसंपूज्यमंगलंकार्यम्॥अलाभेसुमुहूर्तस्यरजोदर्शेह्युपस्थिते॥श्रियंसंपूज्यविधिवत्ततोमंगलमाच
रेत् ॥ हैमींपद्मांमाषमितांश्रीसूक्तविधिनार्चयेत् ॥ प्रत्यृचंपायसंहुत्वागांचदद्यात्पयस्विनीम्॥चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेदितिवा
क्यसारवचनात् ॥ संग्रहेतुप्रकारांतरमुक्तम् ॥ संकटेसमनुप्राप्तेसूतकेसमुपागते ॥ कुष्मांडीभिर्घृतंहुत्वागांचदद्यात्पयस्विनीम् ॥ चौलोपन
यनोद्वाहप्रतिष्ठादिकमाचरेत् ॥ संकटेसूतकेइत्यर्थः ॥ इतिशांतिसारेप्रतिकूलादिशांतिः॥अथप्रतिशुक्रादिशांतिः ॥ तत्रैवमात्स्ये। अथात
श्शृणुभूपालप्रतिशुक्रप्रशांतये॥यात्रारंभेवसानेचतथाशुक्रोदयेप्रति॥ शुक्रपूजाप्रकर्तव्यातांनिशामयभारत।राजतेवाथसौवर्णेकांस्यपात्रेथवा
पुनः॥शुक्लपुष्पांबरयुतेश्वेततंडुलपूरिते॥निधायराजतंशुक्रंशुचिमुक्ताफलान्वितम्।महाश्वेतंगवायुक्तंसामगायनिवेदयेत्।नमस्तेसर्वलोकेशन
मस्तेभृगुनंदन ॥ कवेसर्वार्थसिद्ध्यर्थंगृहाणार्घ्यंनमोस्तुते॥ दत्त्वैवमर्घ्यंकौंतेयप्रणिपत्यविसर्जयेत् ॥ एवंशुक्रोदयेकुर्याद्यात्रादिषुचभारत॥
तद्वद्वाचस्पतेःपूजांप्रवक्ष्यामियुधिष्ठिर ॥ सौवर्णपात्रेसौवर्णममरेशपुरोहितम् ॥ पीतपुष्पांबरधरंकृत्वास्नात्वाथसर्षपैः॥पालाशाश्वत्थभंगे
नपंचगव्यतिलेनतु ॥ भंगःपल्लवः । पीतांगरागवसनोघृतहोमंतुकारयेत् ॥ प्रणम्यचगवासार्द्धंब्राह्मणायनिवेदयेत् ॥ नमस्तेंगिरसांनाथवा
क्पतेथबृहस्पते ॥ क्रूरग्रहैःपीडितानाममृतायनमोनमः ॥ संक्रांतावपिकौंतेययात्रास्वभ्युदयेषुच॥कुर्वन्बृहस्पतेःपूजांसर्वान्कामान्समश्नुते

अथवामौक्तिकान्येवसुवृत्तानिवृहंतिच ॥ भार्गवांगिरसोश्चैवदानानिप्रतिपादयेत् ॥ इतिशांतिसारेप्रतिशुक्रादिशांतिः ॥ अथग्रहणशांति
र्मात्स्ये।यस्यराशिंसमासाद्यभवेद्ग्रहणसंभवः॥ स्नानंतस्यप्रवक्ष्यामिमंत्रौषधिसमन्वितम्॥ चंद्रोपरागंसंप्राप्यकृत्वापुण्याहवाचनम्॥संपूज्य
चतुरोविप्रान्शुक्लमाल्यानुलेपनैः ॥ पूर्वमेवोपरागस्यसमानीयौषधादिकम् ॥ स्थापयेच्चतुरःकुंभानग्रतःसागरानिति॥ गजाश्वरथ्यावल्मी
कसंगमाद्धृदगोकुलात् ॥ राजद्वारप्रदेशाच्चमृदमानीयनिक्षिपेत् ॥ पंचगव्यंपंचरत्नंपंचत्वक्पंचपल्लवम्॥ रोचनंपद्मकंशंखंकुंकुमंरक्तचन्दन
म् ॥ शुद्धस्फटिकतीर्थांबुसितसर्षपगुग्गुलान् ॥ मधुकंदेवदारुंचविष्णुक्रांतांशतावरीम् ॥ बालांचसहदेवींचनिशाद्वितयमेवच ॥ एतत्सर्वं
विनिक्षिप्यकुंभेष्वावाहयेत्सुरान् ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः।आयांतुयजमानस्यदुरितक्षयकारकाः॥ योसौवज्रधरोदेवआदि
त्यानांप्रभुर्मतः ॥ सहस्रनयनश्चेन्द्रोग्रहपीडांव्यपोहतु ॥ यःकर्मसाक्षीलोकानांधर्मोमहिषवाहनः ॥ ममचंद्रोपरागोत्थांग्रहपीडांव्यपोहतु॥
मुखंयःसर्वदेवानांसप्तार्चिरमितद्युतिः ॥ चन्द्रोपरागसंभूतामग्निःपीडांव्यपोहतु ॥ रक्षोगणाधिपःसाक्षान्नीलांजनसमप्रभः ॥ खड्गहस्तोऽति
भीमश्चग्रहपीडां० ॥ नागपाशधरोदेवःसदामकरवाहनः ॥ सजलाधिपतिर्देवोग्रह० ॥ प्राणरूपोहिलोकानांसदाकृष्णमृगप्रियः ॥ वायुश्च
न्द्रोपरागोत्थांग्रह०॥ योसौनिधिपतिर्देवःखड्गशूलगदाधरः॥चंद्रोपरागकलुषंधनदोत्रव्यपोहतु ॥ योसाविन्दुधरोदेवःपिनाकीवृषवाहनः॥
चंद्रोपरागपापानिसनाशयतुशंकरः ॥ त्रैलोक्येयानिभूतानिस्थावराणिचराणिच ॥ ब्रह्मविष्ण्वर्करुद्राश्चदहंतुममपातकम् ॥ एवमावाहयेदे
वान्मंत्रैरेभिश्चवारुणैः॥ एतानेवतथामंत्रान्स्वर्णपट्टेविलेखयेत ॥ ताम्रपट्टेथवालिख्यनववस्त्रेतथैवच ॥ मस्तकेयजमानस्यनिदध्युस्तेद्विजो

त्तमाः ॥ कलशान्द्रव्यसंयुक्तान्नानारूपसमन्वितान् ॥ गृहीत्वास्थापयेद्गूढंभद्रपीठोपरिस्थितम्॥पूर्वैरेवतुमंत्रैश्चयजमानंद्विजोत्तमाः॥ अ
भिषेकंततःकुर्युर्मन्त्रैर्वारुणसूक्तकैः॥ आचार्यंवरयेत्पश्चात्स्वर्णपट्टंनिवेदयेत् ॥ आचार्येदक्षिणांदद्याद्गोदानंचस्वशक्तितः॥ होमंचापिप्रकु
र्वीततिलैर्व्याहृतिभिस्तथा॥ दानंचशक्तितोदद्याद्यदीच्छेदात्मनोहितम्॥सूर्यग्रहेसूर्यनामयुक्तान्मंत्रांश्चकीर्तयेत् ॥ अनेनविधिनायस्तुग्रहण
स्नानमाचरेत्॥ नतस्यग्रहणेदोषःकदाचिदपिजायते॥ भार्गवार्चनदीपिकायांज्योतिस्सागरे॥सौवर्णंकारयेन्नागंपलेनाथपलार्द्धतः॥ तदर्द्धे
नतदर्द्धेनफणायांमौक्तिकंन्यसेत्॥ताम्रपात्रेनिधायाथघृतपूर्णेविशेषतः। कांस्येवाकांतलोहेवान्यस्यदद्यात्सदक्षिणम्॥चन्द्रग्रहेतुरूप्यस्यबि
म्बंदद्यात्सदक्षिणम् ॥ नागंरुक्ममयंसूर्यग्रहेबिम्बंचहेमजम् ॥ तुरंगरथगोभूमितिलसर्पिश्चकांचनम् ॥ कालविवेकेऽपि ॥ सुवर्णनिर्मि
तंनागंसतिलंकांस्यभाजनम् ॥ सदक्षिणंसवस्त्रंचब्राह्मणायनिवेदयेत् ॥ सौवर्णराजतंवापिबिंबंकृत्वास्वशक्तितः ॥ उपरागभव
क्लेशच्छिदेविप्रायकल्पयेत् ॥ मंत्रस्तु। तमोमयमहाभीमसोमसूर्यविमर्दन ॥ हेमताराप्रदानेनममशांतिप्रदोभव ॥ विधुंतुदनमस्तुभ्यं
सिंहिकानंदनाच्युत ॥ दानेनानेननागस्यरक्षमांवेधजाद्भयात् ॥ मदनरत्नेतुस्नानमात्रमुक्तम् । दूर्वांकुरोशीरशमीशिलाजित्सर्वार्थ
सर्वौषधिपंचमृद्भिः ॥ स्नानंविदध्याद्ग्रहणेरवीन्द्वोःपीडाकरेशांतिवहंहियस्य ॥ अद्भुतसागरेभार्गवः । यस्यराज्यस्यनक्षत्रेस्वर्भा
नुरुपरज्यते ॥ राज्यभंगंसुहृन्नाशंमरणंचात्रनिर्दिशेत् ॥ इति दिनकरभट्टकृतेशांतिसारेग्रहणशांतिः ॥ अथविनायकशांतिः ॥
अत्र। ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैर्वासिद्धिकामुकैः॥कर्मनिर्विघ्नसिद्ध्यर्थंसपूज्यस्तुगजाननः॥ इतिलैंगात्। यजमानस्तुशूद्रश्चेद्दत्विग्भिस्तांनि

योजयेत्॥इतिमहार्णवाच्चशूद्रस्याप्यधिकारः ।याज्ञवल्क्यः।विनायकः कर्मविघ्नसिद्ध्यर्थंविनियोजितः॥गणानामाधिपत्येचरुद्रेणब्रह्मणा तथा ॥ कर्मणामविघ्नार्थंसिध्यर्थंचेत्यर्थः॥ तेनोपसृष्टोयस्तस्यलक्षणानिनिबोधत॥स्वप्नेऽवगाहतेत्यर्थंजलंमुंडांश्चपश्यति॥काषायवाससश्चै वक्रव्यादांश्चाधिरोहति ॥ अंत्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥ व्रजन्नपितथात्मानंमन्यतेनुगतंपरैः ॥ स्वप्नइतिसर्वत्रसंबध्यते । भविष्ये । तैलार्द्रगात्रंविधुरंकरवीरविभूषितम् ॥ एवंस्वप्नानुक्त्वाप्रत्यक्षदर्शनान्याह ॥ याज्ञवल्क्यः । विमनाविफलारंभः संसीदत्यनिमित्ततः ॥ तेनो पसृष्टोलभतेनराजराज्यनंदनः ॥ कुमारीनचभर्तारमपत्यंगर्भमंगना ॥ आचार्यत्वंश्रोत्रियश्चनशिष्योऽध्ययनंतथा ॥ वणिग्लाभंन चाप्नोतिकृषिंचापिकृषीवलः ॥ स्नपनंतस्यकर्तव्यंपुण्येह्निविधिपूर्वकम् ॥ तस्यविनायकोपसृष्टस्यपुण्येह्नियस्मिन्कस्मिंश्चित् ॥ यत्तु । शुक्लपक्षेचतुर्थ्यांचवारेणधिषणस्यच ॥ तिष्येचवीरनक्षत्रेतस्यैवपुरतोनृपेत्यपरार्केभविष्ये। तच्छ्रीकामस्नपनपरम् ॥ धिषणस्यगुरोः । तस्यविनायकस्य । तत्रादौदेवतापूजोक्तापरार्केभविष्ये । व्योमकेशंतुसंपूज्यपार्वतींभीमजंतथा ॥ कृष्णस्यपितरंतातह्यर्कमारंसितंतथा ॥ धिषणंक्लेदपुत्रंचकोणंलक्ष्मचभारत॥ विधुंतुदंबाहुलेयंनंदकस्यचधारणम्॥व्योमकेशःशिवः । भीमजोगणेशः । आरोभौमः । सितःशुक्रः । क्लेदपुत्रोबुधः । कोणःशनैश्चरः । लक्ष्मतद्वांश्चंद्रः । बाहुलेयःस्कंदः ।याज्ञवल्क्यः । गौरसर्षपकल्केनसाज्येनोत्सादितस्यच ॥ सर्वौषधैःसर्व गंधैर्विलिप्तशिरसस्तथा ॥ भद्रासनोपविष्टस्यस्वस्तिवाच्याद्विजैःशुभैः ॥ उत्सादितस्यउद्वर्तितांगस्य ॥ सर्वौषधानिमात्स्ये ॥ सहदेवीव चाव्याघ्रीबलाचातिबलातथा॥ शंखपुष्पीतथासिंहीचाष्टमीतुसुवर्तुला॥महौषध्यष्टकंह्येतन्महास्नानेषुयोजयेत्॥महार्णवेत्वन्यान्युक्तानि ।

सुरामांसीवचाकुष्ठंशैलेयंरजनीद्वयम् ॥ शठचंपकमुस्ताचसर्वौषधिगणःस्मृतः ॥ याज्ञवल्क्यः । अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्र
दात् ॥ मृत्तिकांरोचनंगंधंगुग्गुलुंचविनिक्षिपेत् ॥ याआहृताएकवर्णैश्चतुर्भिःकलशैर्ह्रदात् ॥ कलशैराहृतास्वप्सुक्षिपेदित्यर्थः । अत्रविशे
षोबैजवापगृह्ये । चतुःप्रस्रवणेभ्यश्चकुंभानाहृत्यतेषुसर्वौषधीःसर्वगंधान्हिरण्यव्रीहियवगुग्गुलून् । मृदमाखूत्करमितिप्रक्षिपेदितिशेषः ।
याज्ञवल्क्यः । चर्मण्यानडुहेरक्तेस्थाप्यभद्रासनंततः ॥ सहस्राक्षंशतधारमृषिभिःपावनंकृतम् ॥ तेनत्वामभिषिंचामिपावमान्यः
पुनंतुते ॥ भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः ॥ भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः ॥ यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्द्धनि ॥
ललाटेकेशयोरक्ष्णोरापस्तद्घ्नंतुसर्वदा ॥ पूर्वादिकलशत्रयेएकैकोमंत्रश्चतुर्थेमंत्रत्रयमितिविज्ञानेश्वरः । सर्वकलशेषुमंत्रत्रयमित्यप
रार्कः । युक्तंचैतदेवविनिगमकाभावात् । स्नातस्यसार्षपंतैलंस्रुवेणौदुंबरेणतु ॥ जुहुयान्मूर्द्धनिकुशान्सव्येनपरिगृह्यच ॥ मितश्चसंमितश्चैव
तथाशालकटंकटौ ॥ कूष्मांडोराजपुत्रश्चेत्यंतेस्वाहासमन्वितैः ॥ अपरार्केतुशालकटंकटः । कूष्मांडोराजपुत्रश्चेतिपाठः । मूर्द्धनिहोमः । नामभिर्ब
लिमंत्रैश्चनमस्कारसमन्वितैः ॥ पूर्वोक्तषण्णामभिस्तैलंहुत्वाचशेषेणेंद्रादिनामभिर्बलिंदद्यात्इतिविज्ञानेश्वरः । अपरार्केतुपूर्वोक्तचतुर्नामभि
स्तैलंहुत्वातैरेवनामभिः कृताकृतादिर्बलिर्देयःचरुहोमस्तुनास्त्येवेत्युक्तम् ॥ दद्याच्चतुष्पथेशूर्पेकुशानास्तीर्यसर्वतः ॥ कृताकृतांस्तंडु
लांश्चपललौदनमेवच ॥ मत्स्यान्पक्वांस्तथाचामान्मांसमेतावदेवतु ॥ मांसंमत्स्यभिन्नम् । एतावदितिपक्वमपक्वंचेत्यर्थः । तिलपिष्टमिश्र
ओदनः । पललौदनः । पुष्पंचित्रंसुगंधंचसुरांचत्रिविधामपि ॥ मूलकंपूरिकापूपांस्तथैवोंडेरकस्रजः ॥ दध्यन्नंपायसंचैवगुडमिश्रंसमोद

कम् ॥ ब्राह्मणैःकापिसुरानग्राह्या ॥ क्षत्रियवैश्याभ्यांतुपैष्टीनग्राह्येत्यन्नमूलंमृग्यम् । मूलकंप्रसिद्धंग्राह्यमितिमहार्णवे । तदाकारःपिष्टविका
रइतिविज्ञानेश्वरः । उंडेरकस्स्रजःक्षुद्रापूपाइत्यपरार्कः । महार्णवेतु । वर्तुलैश्चतुरस्रैश्चदीर्घैःपिष्टविकारकैः ॥ निर्मिताःस्रजउच्यंतेउंडेरकस
माख्ययेत्युक्तम् ॥ गुडमिश्रंपिष्टमित्यर्थः । मोदकालड्डुकाःबृहत्पराशरेणकुल्माषाःफलानिचेत्यधिकमुक्तम् ॥ एतत्सर्वमेकस्मिन्शूर्पेनिधा
यसकृन्निवेदयेदित्यर्थः ॥ एतान्सर्वानुपाहृत्यभूमौकृत्वाततःशिरः ॥ विनायकस्यजननीमुपतिष्ठेत्ततोंबिकाम् ॥ दूर्वासर्षपपुष्पाणांदत्त्वा
र्घ्यंपूर्णमंजलिम् ॥ दूर्वादिपूर्णमंजलिंसजलंविनायकायांबिकायैचार्घ्यंदत्त्वोपतिष्ठेदित्यर्थः॥रूपंदेहियशोदेहिभगंभगवतिदेहिमे ॥ पुत्रान्दे
हिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ विनायकोपस्थानेभगवन्नित्यूहइतिविज्ञानेश्वरः । ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः ॥ ब्राह्मणान्भोज
येत्पश्चाद्वस्त्रयुग्मंगुरोरपि॥एवंविनायकःपूज्योग्रहाश्चैवविधानतः॥ कर्मणांफलमाप्नोतिश्रियंप्राप्नोत्यनुत्तमाम्॥आगमेतुविनायकांबिकयोः
पीठेविशेषउक्तः ॥ आदौषट्कोणकंकृत्वापद्ममष्टदलंततः॥ केसरैःशोभितंतच्चचतुरस्रंततोभवेत ॥ आसनंकल्पयित्वातुप्रणवेनयथाविधि॥
कर्णिकायांन्यसेद्देवंगणेशंचांबिकांतथा ॥ आदित्यंचतथान्यस्यब्रह्मविष्णुमहेश्वरान् ॥ न्यसेत्तत्पीठमध्येचषट्पत्रेषुमिताद्विकान् ॥ मातॄश्च
केसराग्रेषुपूर्वादिषुसुपूजयेत् ॥ ततश्चाष्टदलेपद्मेपूजयेद्देवतास्तथा ॥ कौमारंपूर्वदिग्भागेचाग्नेय्यांचकुमारकम् ॥ दक्षिणेश्वेतमित्युक्तंनैर्ऋ
त्येकौशिकंतथा ॥ अपस्मारंवारुणेचविशाखंवायुगोचरे॥ कौबेर्यांविन्यसेत्स्कन्दमीशपत्रेप्रमेयकम् ॥ पूर्वादिपद्मपत्रेचसोमादींश्चग्रहान्न्य
सेत् ॥ ततः । इंद्राग्नीपूर्वपत्रेचत्वाग्नेय्यांचकुमारिका ॥ ब्रह्माणीदक्षिणेचैववाराहीनैर्ऋतेतथा॥वैष्णवीपश्चिमेपूज्याचामुंडावायवेतथा॥मातर

श्चोत्तरे पूज्याईशकोणेमहेश्वरी ॥ इंद्रादीनष्टदिक्पालान्पूर्वादिक्रमशोन्यसेत् ॥ शचीस्वाहाचवाराहीखङ्गिनीवारुणीतथा॥मृगारूढाचकौ
मारीशूलिनीचतथाष्टमी ॥ वज्रंशक्तिंदंडखङ्गपाशांकुशगदाअपि ॥ त्रिशूलंलोकपालानामायुधानिक्रमाल्लिखेत् ॥ ऐरावतंतथामेषं
महिषंप्रेतसंज्ञकम् ॥ मकरंचमृगंचैवनरंचवृषभंतथा ॥ ऐरावतःपुंडरीकोवामनःकुमुदोंजनः ॥ पुष्पदन्तःसार्वभौमःसुप्रतीकश्च
दिग्गजाः ॥ ओंकारादिनमोन्तैश्चपूजनीयाःप्रयत्नतः ॥ पीतवस्त्रयुगच्छन्नंकलशंजलपूरितम् ॥ मण्डलात्पूर्वभागेतुसहिरण्यंफला
न्वितम् ॥ गणानांत्वेतिमंत्रेणसहस्रंचाष्टसंयुतमिति ॥ भद्रासनस्थाष्टदलेदेवतावाहनमप्युक्तम् ॥ तत्रैव ॥ मध्येकूष्मांडनामानंपूर्वपत्रे
प्रमेयकम् ॥ दक्षिणस्यांविशाखंचपश्चिमेयक्षभैरवम् ॥ उत्तरेराजपुत्रंतुचेशानेजृंभकंतथा ॥ आग्नेय्यांयज्ञविक्षेपंविरूपाक्षंचनैर्ऋते ॥
वायव्येषुचसंस्थाप्यसूर्यकोटरमेवचेति ॥ बलिदानेविशेषस्तत्रैव । चतुष्पथंगत्वा । चतुर्विंशतिदेवेभ्योबलिंदद्याद्यथाविधि ॥ वि
मुख्यश्चतथाश्येनस्त्र्यंबकोयक्षएवच॥कूष्मांडोभैरवश्चेतिपूर्वस्यांदिशिसंस्थिताः॥बलिंगृह्णंतुतेसर्वेमयादत्तंयथाविधि॥विनायकश्चकूष्मांडो
राजपुत्रस्तथैवच ॥ यज्ञविक्षेपकश्चैवकुलंगायैनमोनमः॥अपामारीदक्षिणस्यांपूजनीयाप्रयत्नतः ॥ शूर्पकेशीशूर्पकोडीहैप्रपेतश्चकुंभकः ॥
विरूपाक्षोलोहिताक्षःपश्चिमस्यांदिशिस्थिताः॥उत्तरस्यांप्रवक्ष्यामिदेवतामुनिसत्तम ॥ विनायकःक्षेत्रपालोवैश्रवणस्ततःपरम् ॥ महासेनो
महादेवोमहाराजःसुकीर्तिताः ॥ एतेषांपूजनंकृत्वाबलिदानंततः परमिति ॥ अथमिताक्षरानुसारेणप्रयोगः । शुभेदिनेविनायकोपसर्गनि
वृत्त्यर्थंकर्मफलसिद्ध्यर्थंवालक्ष्मीप्राप्त्यर्थंविनायकशांतिंकरिष्यइतिसंकल्पयेत्॥केचिद्वृद्धिश्राद्धमिच्छंति । ततःआचार्यंचतुरोऋत्विजश्चवृ

णीत । पराशरमतेऽष्टौ । ततआचार्योगोमयोपलिप्तदेशेपंचवर्णैर्भद्रासनार्थमेकंस्वस्तिकंकृत्वा ॥ तस्यपूर्वादिदिक्षुचतुरःस्वस्तिकान्ऋत्वि
ग्भिःकारयित्वा मध्यस्वस्तिकेरक्तमानडुहंचर्मोत्तरलोमप्राचीनग्रीवंसंस्थाप्यतस्योपरिश्रीपर्णीपीठंसंस्थाप्यश्वेतवस्त्रेणाच्छादयेत् ॥ तत
ऋत्विजश्चतुर्दिक्षुस्वस्तिकेषुचतुरः कलशांश्चंदनचर्चितान्स्रक्दामवेष्टितकंठानवाहतवस्त्रभूषितान् धान्यराशौनिधायह्रदोदकेननदी
संगमोदकेनवापूर्य ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतम् ॥ इतिकुंभेषुपंचमृदःप्रक्षिप्यगंधद्वा
रामितिचंदनागरुकस्तूरीकर्पूरादीन्गंधान्गोरोचनांगुग्गुलुंचाक्षिप्याश्वत्थेवइतिपंचसहकारादिपल्लवान्निक्षिप्यपूर्णपात्रनिधानांतेकलशस्य
मुखेदेवदानवइत्यादिपठित्वा कुंभेषु त्वन्नोअग्नेवरुणस्येतिवरुणमावाह्यषोडशोपचारपूजां पंचोपचारपूजां वानिर्वर्त्यशंनोभद्राइत्यादिकां
शन्नोवातःपवतामित्यादिकांवाअन्यांवास्वशाखापठितांशांतिंपठेयुः ॥ केचित्तु ऐशान्येपंचमोरुद्रकलशः । पूर्वकुंभेश्रीसूक्तंदक्षिणेमहि
त्रीणामितिसूक्तंपश्चिमेनहितेक्षत्रमितिवारुणसूक्तमुत्तरेवामदेव्यंपश्चिमेरुद्रसूक्तानीतिजपमाहुः । आचार्योभद्रासनस्योत्तरभागेऐशान्यांवाविना
यकंतज्जननीमंबिकांचपीठादिस्थापितप्रतिमयोःपूजयेत् । तत्रमंत्रौ।एकदंतायविद्महेवक्रतुंडायधीमहि।।तन्नोदन्तिःप्रचोदयात्॥सुभगायैवि
द्महेकाममालिन्यधीमहि । तन्नोगौरीप्रचोदयात् । ततस्तत्रैव । व्योमकेशम् । पार्वतीम् । भीमजम् । वसुदेवम् । अर्कम् । मंगलम् ।
शुक्रम् । बृहस्पतिम् । बुधम् । शनैश्चरम् । चंद्रम् । राहुम् ॥ स्कंदम् । विष्णुम् । एतान्संपूज्य । गृह्योक्तविधिनाग्निंप्रतिष्ठाप्यान्वा
दध्यात् । अत्र । प्रधानम । मितम् । संमितम् । शालं । कटंकटम् । कूष्मांडम् । राजपुत्रं चैकैकयाचर्वाहुत्येत्यादिचरुंश्रपयेत् । यज

मानोगवाज्यलोलीकृतेनगौरसर्षपकल्केनोद्वर्तितांगः ॥ सर्वौषधचूर्णैश्चंदनागरुकस्तूरिकादिभिश्चलिप्तशिराभद्रासनउपविश्यस्वगृह्योक्तमा
र्गेणस्वस्तिवाचनंकुर्वीत । ततआचार्योजीवत्पतिपुत्राभिःस्त्रीभिःकृतमंगलंयजमानमभिषिंचेत् । पूर्वकलशमादाय॥सहस्राक्षंशतधारमृषि
भिःपावनंकृतम् । तेनत्वामभिषिंचामिपावमान्यःपुनंतुतते ॥ इत्यभिषिंचेत् । ततोदक्षिणंकलशमादायभगंतेवरुणोराजाभगंसूर्यो
बृहस्पतिः॥भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुरित्यनेन।ततःपश्चिमंकलशमादाय-यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्द्धनि॥ललाटेकर्णयोरक्ष्णो
रापस्तद्घ्नन्तुसर्वदेत्यनेन । ततउत्तरकलशमादाय-पूर्वोक्तैस्त्रिभिर्मंत्रैरभिषिच्यबृहत्पाराशरोक्त रभिषिंचेत् । एतद्वैपावमानंस्नानंसहस्राक्षरं
स्मृतम्॥तेनत्वांशतधारेणपावमान्यःपुनंत्विमाः ॥ शक्रादिदशदिक्पालाब्रह्मेशाःकेशवादयः ॥ आपस्तेघ्नंतुदौर्भाग्यंशांतिंददतुसर्वदा॥सु
मित्रियानआपओषधयःसंतुदुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयं द्विष्मः।समुद्रागिरयोनद्योमुनयश्चपतिव्रताः॥दौर्भाग्यंघ्नन्तुतेसर्वेशां
तिंयच्छन्तुसर्वदा॥पादगुल्फोरुजंघासुनितंबोदरनाभिषु।स्तनोरुबाहुहस्ताग्रग्रीवास्वंसांगसंधिषु ॥ नासाललाटकर्णभ्रूकेशांतेषुचयत्स्थितम्
तदापोघ्नंतुदौर्भाग्यंशांतिंचकुर्यात्सुसर्वदा ॥ वमभिषिच्ययजमानस्यपश्चात्तिष्ठन्सव्यपाणिगृहीतकुशांतरितेयजमानमूर्द्धनिसार्षपतैलमौदुंब
रेणस्रुवेणजुहुयात् । ॐ मितायस्वाहा । ॐ संमितायस्वाहा । ॐ शालायस्वाहा । ॐ कटंकटायस्वाहा । ॐ कूष्मांडायस्वाहा । ॐ राजपुत्रा
यस्वाहा ॥ इतियजमानस्त्यागंकुर्यात् । इध्माधानादिकृत्वापूर्वोक्तैःषड्भिर्मंत्रैश्चरुंहुत्वाप्रणीताविमोकांतंकृत्वाचरुशेषेणाग्नेरभिषेकशालायांचै
न्द्यादिदिक्षुलोकपालेभ्योबलीन्दद्यात्॥इंद्रायनमः।अग्नये०।यमाय०।निर्ऋतये०।वरुणाय०।वायवे०।सोमाय०।ईशानाय०।ब्रह्मणे०।अनं

ताय०।अथयजमानः स्नात्वा।शुक्लमाल्यांबरधरोगुरुणासहितोविनायकमंबिकांचपूर्वोक्तद्गायत्रीभ्यांषोडशोपचारैःसंपूज्यकृताकृततंडुलति
लयुक्तौदनंपक्वापक्वमत्स्यपक्वापक्वमांसत्रिविधसुरामूलकापूपपूरिकोंडेरकदध्यन्नपायसगुडमिश्रपिष्टलड्डुककुल्माषफलानि पूर्वोक्तमंत्राभ्यां
विनायकायांबिकायैचतमुपहारंददामीतिदत्त्वाशिरसाभूमिंनत्वासुकुसुमसहितेनोदकेनपूर्वोक्तमंत्राभ्यामर्घ्यंदूर्वासर्षपपुष्पांजलिंचदत्त्वावि
नायकमंबिकांचोपतिष्ठेत्। रूपंदेहियशोदेहिभगंभगवन्देहिमे। पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे-इतिविनायकम्। रूपंदेहियशोदेहि
भगंभगवतिदेहिमे। पुत्रान्देहिधनंदेहिसर्वानकामांश्चदेहिमे-इत्यंबिकाम्। ततःशूर्पेकुशानास्तीर्योपहारशेषंतत्रनिधायचतुष्पथंगत्वातत्रमंत्रै
र्बलिंदद्यात्-बलिंगृह्णंत्विमेदेवाआदित्यावसवस्तथा॥मरुतोथाश्विनौरुद्राःसुपर्णाःपन्नगाग्रहाः॥असुरायातुधानाश्चपिशाचामातरस्तथा। शा
किन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः॥ जृंभकाःसिद्धगंधर्वानागाविद्याधरानगाः॥ दिक्पालालोकपालाश्चयेचविघ्नविनायकाः॥जगतां
शांतिकर्तारोब्रह्माद्याश्चमहर्षयः॥माविघ्नंमाचमेपापंमासंतुपारिपंथिनः।सौम्याभवंतुतृप्ताश्चभूतप्रेताःसुखावहाः। ततःआचम्यगृहंगत्वाऽचार्या
यवस्त्रद्वयंऋत्विग्भ्योऽन्येभ्यश्चयथाशक्तिदक्षिणांदत्त्वा विनायकांबिकयोरुत्तरपूजांकृत्वाविसृज्याचार्यायप्रतिपाद्यविभूतिंधृत्वाऽग्निंविसृज्य
ब्राह्मणान्भोजयेत्। कर्मेश्वरार्पणंकुर्यात्। । इतिदिनकरभट्टकृतेशांतिसारेविनायकशांतिः॥ (अथरुद्रविधिः)। तत्रपुरश्चरणविधिर्हे
माद्रौ। कृच्छ्रमादौस्वयंकर्तापराकंचतथापुनः॥ स्नातईशंसमभ्यर्च्यउषित्वासत्तशर्वरीः॥ जपेद्रुद्रांस्तथाजप्त्वातदंतेप्राशयेद्घृतम्॥
अपरेहनिसंजातेसमाप्यैवंव्रतंपुनः। भास्कराभिमुखोभूत्वातद्दिनेताञ्जपेद्बहून्॥ भूयश्चाह्निपरेरुद्रंसंपूज्यविधिवत्ततः। घृताक्तैर्बिल्व

पत्रैश्चरुद्रहोमंप्रकल्पयेत् ॥ एवंसम्यक्कृतेनूनंकृतोसौजायतेद्विजः ॥ साक्षाद्रुद्रोमह । तेजास्ततःकामाँश्चसाधयेत् । रुद्रविनियोगस्त्रेधा । जपेहोमेऽभिषेकेचरुद्राणांजपहोमार्चनविधिंव्याख्यास्यामइतिमहार्णवेबौधायनोक्तेः । किंजप्येनामृतत्वंनोब्रूहिशतरुद्रियेणेतिजाबाल श्रुतेश्च । जपशब्देनकेवलोजपउच्यतेइतिकेचित् । अन्येतुमंत्रजपमात्रेदशांशहोमस्यांगत्वाद्दशांशादिहोमविशिष्टोजपोविधीयतइत्याहुः । एतेनहोमरुद्रतर्पणादिअभिषेकरुद्रेचब्राह्मणभोजनंसिद्धम् । जपादिरुद्रश्चपंचधारूपंरुद्रोरुद्रीमहारुद्रोतिरुद्रश्चेतिएकादशगुणवृद्ध्या । तत्ररूपंनामनमकचमकरूपम् । अन्येषांलक्षणमाहमहार्णवेशातातपः । षडंगैकादशींरुद्रोरुद्रचैकादशरुद्रतः । एकादशभिरेताभिर्महारुद्रश्चकथ्यते ॥ एकादशमहारुद्रैरतिरुद्रईतीरितः ॥ अस्यार्थः । षडंगाषडंगन्याससहिताएकादशरुद्राणांसमाहारःएकादशीरुद्रइत्युच्यते । षडंगेत्युपलक्षणम् ।पंचांगरुद्राणामितिबौधायनोक्तेः । तत्पाठेचप्रकारोबौधायनोक्तेः। नमस्तेरुद्रमन्यवइत्येकादशानामनुवाकानामेकंजपेदिति । अस्यार्थः । सर्वंनमकानुवाकान्पठित्वाद्यंचमकानुवाकंपठेत् । पुनःसर्वंनमकानुवाकान्पठित्वाद्वितीयंचमकानुवाकंएवमेकादशवारमिति । तथाचहेमाद्रौ । कौशिकः । सद्यादिपंचवक्त्रांश्चचमकादिततोजपेत् ॥ पुनरेवजपेत्सर्वंद्वितीयंचमकंतथा ॥ एवमेकादशगुणंक्रमेणचमकांस्तथा ॥ रुद्रैकादशिनीत्येषासर्वकामफलप्रदा ॥ एकादशगुणासैवरुद्रइत्यभिधीयते रुद्रएकादशगुणोमहानित्यभिधीयते ॥ महानेकादशगुणस्त्वतिरुद्रइहोच्यते ॥ अत्रचमकभेदात्संज्ञाविरोधोनदोषाय॥ अथरुद्रजपादिविधिः ।हेमाद्रौबौधायनः। अथातः पंचांगरुद्राणांन्यासपूर्वकंजपहोमार्चनविधिंव्याख्यास्यामः ।यातेरुद्रेतिशिखायाम्।अस्मिन्महत्यर्णवेइतिशिरसि । सहस्राणीतिललाटे। हं

सः शुचिषदितिभ्रुवोर्मध्ये।त्र्यंबकंयजामहइतिनेत्रयोः।नमःश्रुत्यायेतिकर्णयोः। मानस्तोकइतिनासिकायाम्।अवतत्येतिमुखे।नीलग्रीवौद्वौ
कंठे।नमस्तेअस्त्वायुधायेतिबाह्वोः।यातेहेतिरित्युपबाह्वोः।येतीर्थानीतिहस्तयोः।सद्योजातमितिपंचानुवाकान्पंचस्वंगुलिषु।नमोवःकिरिके
भ्यइतिहृदये । नमोगणेभ्यइतिपृष्ठे । नमोहिरण्यबाहवइतिपार्श्वयोः।विज्यंधनुःकपर्दिनइतिजठरे। हिरण्यगर्भइतिनाभौ । मीढुष्टमइतिक
ट्याम्।येभूतानामधिपतयइतिगुह्ये ।सशिराजातवेदाइतिअपाने। मानोमहांतमित्यूर्वोः।एषतइतिजान्वोः । संसृष्टजिदितिजंघयोः।विश्वंभूत
मितिगुल्फयोः ॥ येपथामितिपादयोः॥ अध्यवोचदितिकवचम्। नमोबिल्मिनइत्युपकवचम्।नमोअस्तुनीलग्रीवायेतितृतीयनेत्रम्।प्रमुंचध
न्वनइत्यस्त्रम् । यएतावंतश्चेतिदिग्बंधः । ॐ नमोभगवतेरुद्रायेतिनमस्कारंन्यसेत् । ओंकारंमूर्ध्नि विन्यस्यनकारंनासिकाग्रतः॥मोकारंतु
ललाटेवैभकारंमुखमध्यतः ॥ गकारंकंठदेशेतुवगारंहृदिविन्यसेत् ॥ तेकारंदक्षिणेहस्तेरुकारंवामतोन्यसेत् ॥ द्राकारंनाभिदेशेतुयकारंपा
दयोर्न्यसेत् ॥सद्यंचपादयोर्न्यस्यवामंन्यस्योरुमध्यतः ॥ अघोरंहृदिविन्यस्यमुखेतत्पुरुषंन्यसेत् ॥ ईशानंमूर्ध्निविन्यस्यहंसोनामसदाशि
वः ॥ हंसहंसेतियोब्रूयाद्धंसोनामसदाशिवः ॥ एवंन्यासविधिंकृत्वाततःसंपुटमारभेत् ॥ त्रातारमिंद्रत्वन्नोअग्नेसुगन्नःपंथामसुन्वंततत्वायामि
आनोनियुद्भिर्वयंसोमतमीशानंनमस्तेरुद्रस्योनापृथिवीत्येतत्संपुटमुद्रादीन्दिक्षुविन्यस्यैवमेवात्मात्मनिरौद्रीकरणंकृत्वा । त्वगस्थिगतैः
पापैःप्रमुच्यतेसर्वभूतेष्वपराजितोभवति । यक्षगंधर्वभूतप्रेतपिशाचब्रह्मराक्षसयमदूतशाकिनीडाकनीसर्पश्वापदतस्कराद्युपघाताद्युपद्रवाः।स
र्वेज्वलंतंपश्यंतुमांरक्षंतुमनोज्योतिरितिबोध्यअग्निर्मूर्धानंमर्माणितेजातवेदाइतिगुह्योनाभिहृदयमुखशिरःस्वभिमंत्र्यात्मरक्षाकर्तव्याशिवसं

 कंल्पंहृदयंपुरुषसूक्तंशिरउत्तरनारायणंशिखाअप्रतिरथंकवचंशतरुद्रियामस्त्रंपंचांगंसकृज्जपेदष्टांगंप्रणम्यहिरण्यगर्भोयःप्राणतोब्रह्मजज्ञानं
 महीद्यौरुपश्वासयाग्नेनययातेअग्नेयथावस्वाहेत्यष्टऋचोजपेदथात्मानंरुद्ररूपंध्यायेत् । शुद्धस्फटिकसंकाशंत्रिनेत्रंपंचवक्रकम् ॥ गंगा 
धरंदशभुजंसर्वाभरणभूषितम् ॥ नीलग्रीवंशशांकांकंनागयज्ञोपवीतिनम् ॥ व्याघ्रचर्मोत्तरीयंचवरेण्यमभयप्रदम् ॥ कमंडल्व
क्षसूत्राभ्यामन्वितंशूलपाणिनम् ॥ ज्वलंतंपिंगलजटाशिखामुद्योतकारिणम् ॥ अमृतेनाप्लुतंहृष्टमुमादेहार्द्धधारिणम् दिव्यसिं
हासनासीनंदिव्यभोगसमन्वितम् ॥ दिग्देवतासमायुक्तंसुरासुरनमस्कृतम् ॥ नित्यंचशाश्वतंशुद्धंध्रुवमक्षरमव्ययम् । सर्वव्यापि
नमीशानंरुद्रंवैविश्वरूपिणम् ॥ एवंध्यात्वाद्विजःसम्यक्ततोयजनमारभेत् ॥ हंसइतिईशानंमूर्ध्निविन्यस्यहंसहंसेतिब्रूयात् । एवमुक्तो
हंसोनामसदाशिवोभवतीत्यर्थः । अत्रपंचांगन्यासउक्तः ॥ शिखाद्यस्त्रांतमेकोत्रिंशदंगन्यासःप्रथमः॥मूर्धादिपादांतदशांगन्यासोद्वितीयः ।
पादादिमूर्धांतपंचांगन्यासस्तृतीयः ॥ मस्तकादिगुह्यांतपंचांगन्यासश्चतुर्थः ॥ गुह्यादिमस्तकांतपंचांगन्यासःपंचमइति । पंचांगरुद्राणा
मित्युपक्रमाद्बौधायनमतेपंचैवन्यासाः । शातातपेनतुषष्ठोपिन्यासउक्तः । षडंगैकादशींरुद्रइत्युक्तेः । सचप्रजननादिसर्वांगपर्यंतंषोड
शांगेषुकर्तव्यः । बौधायनेनाभिषेकप्रकरणेतदुक्तेरितिमहार्णवः । हेमाद्रौकौशिकेनसंकल्प्यजपहोमावित्युपक्रम्यन्यासद्वयंप्रकारांतरेणो
क्तम् । न्यासंभवादिभिःकुर्यान्नमोंतैःप्रणवान्वितैः ॥ भवंचपादयोर्न्यस्यशर्वंन्यस्योरुमध्यतः ईशानंगुह्यदेशेतुनाभौपशुपतिंन्यसेत ॥ रुद्रं 
चहृदयेन्यस्यमुखेचोग्रंतुविन्यसेत् ॥ भीमंललाटपट्टेचमहांतंशीर्षिणविन्यसेत् ॥ तथैवांत्यानुवाकस्यमंत्रैर्द्वादशभिःशुचिः ॥ न्यासंकृत्वा

नुलोम्येनवर्जयित्वाभिचारकम्।आद्यंतुपादयोर्न्यस्यद्वितीयंजानुदेशतः॥ ऊर्वोस्तृतीयंविन्यस्यचतुर्थंगुह्यदेशतः॥पंचमंनाभिदेशेतुषष्ठंतुहृ
दयेन्यसेत्॥सप्तमंकंठदेशेतुमुखेचाष्टममुत्तमम्।नवमंनासिकायांतुदशमंनेत्रयोर्द्वयोः॥एकादशंललाटेतुद्वादशंशीर्षिणविन्यसेत् ॥ त्रयोदशंच
कवचंहुंकृत्वाअस्त्रेतुफट्ततइति ॥ अथरुद्रहोमविधिः।हेमाद्रौबौधायनः। रुद्रैकादशिनीजाप्येत्रयस्त्रिंशदथाहुतीः ॥ रुद्रेशतत्रयंप्रोक्तंषष्ट्या
त्र्यधिकयायुतम् ॥ रुद्रेलघुरुद्रइत्यर्थः ॥ चत्वारश्चमहारुद्रेसहस्राःसप्तवर्जिताः॥चत्वारिंशत्सहस्राश्चकर्तव्याश्चतुरुत्तराः॥ऊनाश्चसप्तसप्तत्या
ह्यतिरुद्रेविनिश्चयः ॥ होमश्चनमःशंभवेतिमंत्रेणेतिहेमाद्रिः । तथाचतन्मतेमंत्रविभागोहोमेनास्ति । महार्णवस्तुश्रुतिषुनानाविधमंत्रविभा
गाम्नातंचयेनप्रकरणस्थमप्यपेक्षितत्वाद्ग्राह्यमित्याह । तत्रहोमस्त्रेधा । समग्रहोमोदशांशहोमः शतांशहोमश्चेति ॥ तत्राद्यःप्रधानभूतोज
पांगभूतश्च।उत्तरौत्वंगभूतावेवेतिमहार्णवः ॥ त्रिष्वपिपक्षेषुमंत्रविभागःषोढा।एकधात्रेधाषोढाषोडशधाअष्टचत्वारिंशद्धाएकोनसप्तत्युत्तरश
तधाचेति।तत्रत्रेधाविभागस्त्रेधाविभक्तंजुहोति। तत्रद्वयेलोकाइतिश्रुत्योक्तः।षोढाविभागेपितिस्रउत्तराआहुतीर्जुहोति।षट्संपद्यंतेषड्वाऋतवः
श्रुत्योक्तः।षोडशधाविभागोपि । अपिवाप्रथमादुपक्रम्यनमस्तक्षभ्यइति । जानुदघ्नेधारयमाणोजुहोतिरथकारेभ्यश्चवइत्युपक्रम्यनमःस्वा
युधायेतिनाभिदघ्नेशेषेणाप्रागवतानेभ्यआस्यदघ्नेहुत्वासहस्राणिसहस्रशइतिदशावदानान्हुत्वाअन्वारोहान्जुहोति।नमोरुद्रेभ्योयेपृथिव्या
मिति।जानुदघ्नेधारयमाणोनमोरुद्रेभ्योयेन्तरिक्षइतिनाभिदघ्नेनमोरुद्रेभ्योयेदिवीत्यास्यदघ्नेहुत्वेतिबौधायनः।एकोनसप्तत्युत्तरशतविभाग
स्तुअथैकत्वादेकंवाक्यमितिन्यायेन शाकपूण्याद्युक्तोभयतोनमस्कारत्वादिनावसिद्धः॥तत्रप्रथमानुवाकः । पंचदशर्चइतिपंचदशमंत्राःद्वि

तीयेत्रयोदशयजूंषीतितावंतस्तृतीयचतुर्थयोः।प्रत्येकंसप्तदशयजूंषिपंचमषष्ठयोः।प्रत्येकंपंचदशपंचदशचयजूंषिसप्तमेषोडशअष्टमेसप्तदश। नवमेएकोनविंशतिः।दशमेद्वादशर्चः।एकादशेषडृचः त्रीणिचयजूंषीति।एकोनसप्तत्युत्तरशतमंत्राः। अस्मिंश्चपक्षेद्वितीयानुवाकमारभ्यनवमा नुवाकपर्यन्तंनमस्कारादिनमस्कारांतंयजुरितिशाकपूणिः । नमस्काराद्येकंयजुरितियास्कः।महार्णवस्तुशाकपूणिविहितमुभयतोनमस्कार त्वंद्वितीयतृतीयचतुर्थानुवाकविषयम्।यास्कोक्तंच।नमस्कारादित्वंपंचमादिनवमांतंयथाशिष्टाचारादित्याह।अस्मिंश्चपक्षेदेवानांहृदयेभ्यइ तिमंत्रशेषतदुत्तरमंत्रचतुष्टयेनुषज्यते।जपादौतुविभागाभावान्नानुषंगः अष्टचत्वारिंशद्विभागस्तुअष्टानुवाकाः। अष्टौयजूंषीतिकाशकृत्स्नोक्ते द्वितीयानुवाकप्रभृतिनवान्तैरनुवाकैरष्टौमंत्राः । इतरानुवाकेषुत्वनंतरपक्षोक्तोमंत्रविभागइति।तत्ररूपजपेदशांशहोमोदशवारंजपाभावात् । एवमेकादशिनीजपेशतांशहोमोनास्ति । एकादशिनीदशांशहोमेएकेनैवरूपेणहोमः । अवशिष्टैकरूपस्यदशांशहोमोनास्ति । एवंलघुरुद्र महारुद्रादावप्यवशिष्टरूपस्यनास्तीतिमहार्णवः । पितृचरणास्तुरूपाहुतीनांदशांशसंभवादष्टचत्वारिंशत्पक्षेपंचाहुतयः ।एकोनसप्तत्युत्त रशतपक्षेसप्तदशांताश्चाद्यैर्मंत्रैस्सद्यांतैर्वाएवमेकादशिन्यादिजपेपि । अवशिष्टरूपेदशांशःसंभवतीत्याहुः । अत्रमूलंनलब्धम् । केचित्त्ववशि ष्टरूपेपूर्वोक्तवचनान्नमःशंभवइतिमंत्रेणहोमइत्याहुः।एवंमहारुद्रादावपिद्रष्टव्यम्। अयंचषोढाविभागोनमकेष्वेव ।चमकेषुतुविभागमाह । बौ धायनः ।महार्णवे।अग्नाविष्णूसजोषसेइतिचतुर्गृहीतंहुत्वा। वाजश्चमेप्रसवश्चमइतिसप्ततांवसोर्धारांजुहोत्यामंत्रसमापनादिति ।आमंत्रसमा पनादितिसर्वचमकानुवाकैरेकाहुतिरित्यर्थः । तथाचसर्वनमकानुवाकहोमांतेअग्नाविमृयैकाहुतिः ।अवशिष्टचमकाध्यायेनापरेत्याहुर्द्वित

यमितिकेचित्। अन्येत्वनुवाकभेदादेवद्वितीयाद्यनुवाकेषुभेदसिद्धेः प्रथमानुवाकसमाप्तिरेवात्रोच्यते। तथा चाद्यचमकानुवाकेद्वेआहुतीद्वितीयादिचमकानुवाकैर्दशेत्याहुः। तथाचद्वेआहुतीद्वादशवाआहुतयइतिपक्षद्वयंसिद्धम्। तृतीयोपिपक्षोर्थसिद्धोमहार्णवउक्तः।तथाहि। नमस्तेरुद्रमन्यवइत्येकादशानामनुवाकानामेकमेवंजपेदितिबोधायनेनद्वितीयादिवदाद्यस्यापिचमकानुवाकस्यसमस्तस्यजपेएकमंत्रत्वंबोधितम्। जपानुसारीचहोमः।अतःसर्वंनमकानुवाकहोमांतेसमस्ताद्यचमकानुवाकेनहोमः। एवमुत्तरेष्वप्यनुवाकेष्वित्येकादशाहुतयइतिअयमेवचपक्षोमुख्यः। आहुतिगणनायामस्यैवलैंगोक्तेः। इदानींतुशिष्टाद्वादशाहुतिपक्षमाश्रित्यदशाहुतिपक्षमेवकुर्वन्ति। अथैकादशिन्यादिहोमेकुंडनिर्णयार्थंचमकद्वादशाहुतिपक्षमाश्रित्यदशांशहोमेचावशिष्टरूपाहुतित्यागमाश्रित्याहुतिसंख्योच्यते। एकादशिन्यांसमग्रहोमेप्रतिमंत्रपक्षेआहुतयः एकसप्तत्यधिकाष्टादशशती। द्विहस्तंकुंडम्। तत्रैवाष्टाचत्वारिंशत्पक्षेचत्वारिंशदधिकापंचशती। एकहस्तंकुंडम्। लघुरुद्रेसमग्रहोमेप्रतिमंत्रपक्षेविंशत्साहस्रीपंचशतानिएकाशीतिश्च। त्रिहस्तंकुंडम्। तत्रैवाष्टाचत्वारिंशत्पक्षेपंचसहस्राणिनवशतानिचत्वारिंशच्च। द्विहस्तंकुंडम्। महारुद्रेसमग्रहोमेप्रतिमंत्रपक्षेलक्षद्वयंषड्विंशतिसहस्राणित्रिशतीएकनवतिश्च। षड्ढस्तंकुंडम्। तत्रैवाष्टाचत्वारिंशत्पक्षेपंचषष्टिसहस्राणिशतत्रयंचत्वारिंशत्।चतुर्हस्तंकुंडम्। अतिरुद्रेसमग्रहोमेप्रतिमंत्रपक्षेचतुर्विंशतिलक्षाणिनवतिसहस्राणिएकाधिकशतत्रयंच।अष्टहस्तंकुंडम्।तत्रैवाष्टाचत्वारिंशत्पक्षेसप्तलक्षाणिअष्टादशसहस्राणिसप्तशतीचत्वारिंशच्चषड्ढस्तंकुंडम्। एकादशिनीजपदशांशहोमेप्रतिमंत्रपक्षेएकाशीतिद्व्यधिकशतम्।एकहस्तंकुंडम्।तत्रैवाष्टाचत्वारिंशत्पक्षेषष्टिः। अरत्निमात्रंकुंडम्।लघुरुद्रेजपदशांशहोमेप्रतिमं

त्रपक्षेद्वेसहस्रेद्विपंचाशच्च। द्विहस्तंकुंडम्। तत्रैवाष्टाचत्वारिंशत्पक्षेषट्शती।एकहस्तंकुंडम्। तत्रैवाष्टाचत्वारिंशत्पक्षेपट्सहस्राणिपंचशता
निचचत्वारिंशच्च।द्विहस्तंकुंडम्।अतिरुद्रजपेदशांशहोमेप्रतिमंत्रपक्षेलक्षद्वयंएकोनपंचाशत्सहस्राणिचतुर्विंशतिश्च।षड्ढस्तंकुंडम्। तत्रैवाष्टाच
त्वारिंशत्पक्षेएकसप्ततिसहस्राण्यष्टशतीअशीतिश्च॥ चतुर्हस्तंकुंडम्॥ त्रिधाविभागादिपक्षास्तुनप्रचरंतीतितद्गणनानोक्ता।एतेषांकरणरज्जु
र्वाजपेय्याम्।विस्तारांगुलमानमेककरतोयावद्दशस्युर्जिना वेदत्रीणिकुसागरःशरयवोपेताभुजंगांबुधिः॥निष्पादांबुधिसायकावियवमंकेष्व
र्धयुग्रामषट्नागांगान्ययवानिदङ्मुनियवेनोनाश्वषट्पर्वताः ॥ रुद्रेमंडपपरिमाणमाहसएव परशुरामः ॥ मंडपोष्टगुणात्कुंडात्कुंडहोमानु
सारतः ॥ अथरुद्रवेदिः ॥ तत्ररुद्रहोमस्यग्रहमखविकृतित्वादीशानकोणेवेदिः ॥ ग्रहवेदिरपितत्रैवेतिकेचित्। कुंडस्यप्रागुदीच्यांवाप्राच्या
मुत्तरतोपिवा। चतुरस्रंचतुर्द्वारंकर्तव्यंग्रहपीठकमितिगोभिलोक्तेः। प्राच्यामुदीच्यांवेत्यन्ये।अपरेतुग्रहवेदिरेवरुद्रवेदिः। अतिरिक्ततद्भावेप्र
माणाभावादितिवदंति।वयंतुरुद्रहोमेमंत्रहोमत्वात्तांत्रिकीवेदिः। तथाचमंडपमध्यनवांशेतुलापुरुषवद्वेदिःकार्या। कुंडंचतदीशानेतुलापुरुष
वत्। ग्रहवेदिस्तुकुंडादीशानादौमंडपांतर्बहिर्वाग्रहमखेतथाविधानात्।नचरुद्रहोमस्यनियतंशांतिरूपत्वंयेनग्रहमखविकृतित्वंस्यात। का
म्यस्यापितस्यसत्त्वादितिवदामः। गुर्जरपरशुरामोपि तत्रैकावेदिकाकार्यायज्ञमण्डपमध्यतः। मध्यस्तंभांतरंयावत्तावन्मानकरोच्छ्रयेत्या
ह। महार्णवस्तुकुंडमंडपकरस्त्विक्संख्यावसोर्धाराचायुतहोमवत्कार्यमित्याह। अथरुद्रयंत्रंवेद्युपरिवस्त्रेशिष्टाःकुर्वन्तीतितदुच्यते।स्कान्दे।
प्रणम्यजगतामीशमुमादेहार्द्धधारिणम्॥ यंत्रोद्धारमहंवक्ष्येरुद्रकल्पानुसारतः। मध्येवृत्तंसमालिख्यतन्मध्येचदशाक्षरम्॥ बहिरष्टदलंपद्मं

ततःषोडशपत्रकम् ॥ चतुर्विंशतिपत्राक्षंद्वात्रिंशत्पत्रकंतथा ॥ चत्वारिंशत्पत्रकंतुवृत्तंसूर्यसमप्रभम् ॥ पंचपद्मात्मकंवृत्तंचतुरस्रंचभूगृहम् ॥ सत्त्वंरजस्तमश्चेतित्रिगुणैःपरितोवृतम् ॥ चतुर्द्वारंद्वारदेशेबहिर्नागसमावृतम् ॥ रुद्रपीठमितिख्यातंदेवतास्तत्रविन्यसेत् ॥ चत्वारिंशच्छतंचैकं देवतानामुदाहृतम् ॥ कर्णिकामध्यदेशेतुरुद्रंपंचास्यमालिखेत् ॥ नमोभगवतेरुद्रायेतितारादिकंन्यसेत ॥ सोयंदशाक्षरोमंत्रःसर्वकामार्थसिद्धिदः ॥ प्रणवादिनमोंतानिपंचास्यानिततःपरम् ॥ सद्योजातंवामदेवमघोरंतदनंतरम् ॥ ततस्तत्पुरुषंप्रोक्तमीशानंपंचकंक्रमात् । प्रधानमिदमाख्यातंप्रथमावरणेततः ॥ दलेष्वष्टसुनंद्यादीन्पूर्वादिक्रमतोन्यसेत् ॥ पूज्यपूजकयोर्मध्येप्राचीस्याद्यंत्रलेखने ॥ आदौनंदिमहाकालौगणेशवृषभौक्रमात् । अनंतरंभृंगिरिटिस्कंदोमाचंडसंज्ञकाः ॥ षोडशारेततःपद्मेद्वितीयावरणेयजेत् ॥ अनंतंचतथासूक्ष्मंशिवंचैकपदंतथा ॥ एकरुद्रंत्रिमूर्तिंचश्रीकंठंवामदेवकम् । ज्येष्ठंश्रेष्ठंतथारुद्रंकालंकलविकरणम् ॥ बलंबलविकरणंबलप्रमथनंतथा ॥ तृतीयावरणेपद्मेचतुर्विंशद्दलेतथा ॥ अणिमामहिमाचैवलघिमागरिमातथा ॥ प्राप्तिःप्राकाम्यमीशित्वंवशित्वचाष्टभूतयः ॥ ततःपरंक्रमेणैवन्यसेद्ब्राह्म्यादिदेवताः ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा । वाराह्यैंद्रीचचामुंडाचंडिकाचेतिताःक्रमात् । ततोष्टस्वसितांगादीन्भैरवान्विन्यसेत्पुनः । असितांगोरुरुश्चंडःक्रोधउन्मत्तभैरवः ॥ कालभीषणसंहाराभैरवाश्चाष्टकीर्तिताः ॥ द्वात्रिंशत्पत्रकेपूर्वंभवाष्टकमुदाहृतम् ॥ भवःशर्वेशानपशुपतिरुद्रोग्रभीमकाः ॥ महांश्चैवेतिव्याख्याताभवाद्यष्टौप्रकीर्तिताः ॥ ततोनंतोवासुकिश्चतक्षकश्चकुलीरकः ॥ कर्कोटकःशंखपालःकंबलोऽश्वतरस्तथा । ततोष्टसुन्यसेद्वैन्यंपृथुंहैहयमर्जुनम् ॥ शांकुंतलेयंभरतंनलंराममितिक्रमात् । ततःकुलाचलानष्टौदलेष्वष्टसुविन्यसेत् । हिमवान्निरिधोविन्ध्योमाल्यवान्पाषया

त्रकः। मलयोहेमकूटश्चगंधमादनसंज्ञकः। चत्वार्यावरणान्येवंपंचमावरणेततः॥ चत्वारिंशद्दलेपद्मेपंचमावरणेन्यसेत्। इंद्राद्यष्टौलोकपालान
ष्टसुक्रमशोलिखेत्॥ इंद्रमग्निंयमंचैवनिर्ऋतिंवरुणंतथा॥ वायुंकुबेरमीशानंदलेष्वष्टसुविन्यसेत्॥ इंद्रादिलोकपालानामष्टौशक्तीस्ततोलिखेत्
शचीस्वाहाचवाराहीखड्गिनीवारुणीतथा। मृगारूढाचकौबेरीशूलिनीचतथाष्टमी। सतोष्टानामायुधानिवज्रादीन्यष्टसुन्यसेत्। वज्रशक्तीदंडख
ड्गपाशांकुशगदाअपि। त्रिशूलंलोकपालानामायुधानिक्रमाल्लिखेत्॥ ततोष्टौवाहनान्येषामष्टसुक्रमशोलिखेत्। ऐरावतंतथामेषंमहिषंश्वेतसं
ज्ञितम्॥ मकरंचमृगंचै नरंचवृषभंतथा॥ ऐरावतादयोथाष्टदिग्गजास्तदनंतरम्॥ ऐरावतःपुंडरीकोवामनःकुमुदोंजनः॥ पुष्पदंतःसार्वभौमः
सुप्रतीकश्चदिग्गजाः॥ भूगृहांतःपुनर्लेख्याःपंचपद्मात्मकाद्बहिः॥ इंद्रंविन्यस्यपूर्वस्यामाग्नेय्यामग्निमेव च॥ दक्षिणस्यांयमंचैवनैर्ऋत्यांनिर्ऋ
तिंतथा॥ प्रतीच्यांवरुणंवायुंवायव्यांविन्यसेत्ततः॥ कुबेरंचैवकौबेर्यामीशान्यामीशमालिखेत्॥ विरूपाक्षंतुविन्यस्यआग्नेय्यामग्नियोगतः॥
नैर्ऋत्यांनैर्ऋते ोगेविश्वरूपंचविन्यसेत्॥ वायव्यांवायुयोगेचलिखेत्पशुपतिंतथा॥ ईशान्यामूर्ध्वलिंगंचन्यसेदीशानयोगतः॥ प्रागादिक्रम
तोलेख्याःशेषाद्याभूगृहाद्बहिः॥ विप्रवर्णंश्वेतरूपंसहस्रफणमंडितम्॥ शेषंविन्यस्यपूर्वस्यांपूजयेदुपचारकैः॥ तक्षकंवैश्यवर्णंचनीलंपंच
शतैःफणैः॥ युक्तमुत्तुंगकायंचआग्नेय्यांदिशिविन्यसेत्॥ अनंतविप्रवर्णंचतथाकुंकुमवर्णकम्॥ सहस्रफणसंयुक्तंदक्षिणस्यांप्रपूजयेत्॥
वासुकिंक्षत्रियंपीतवर्णंसप्तशतैःफणैः॥ युक्तमुत्तुंगकायंचनैर्ऋत्यांदिशिविन्यसेत्॥ शंखपालंक्षत्रियंचपीतंसप्तशतैःफणैः॥ युक्तमावाह्यवा
रुण्यांपूजयेद्गंधधूपकैः॥ महापद्मंवैश्यवर्णंयुक्तंपञ्चशतैःफणैः॥ युक्तमुत्तुंगकायंचवायव्यांदिशिपूजयेत्॥ कंबलंशूद्रवर्णंचकृष्णंत्रिंशत्फणै

र्युतम् । कौबेर्यां दिशि विन्यस्य पूजयेच्च विधानतः ॥ कर्कोटकं शूद्रवर्णं श्वेतं त्रिंशत्फणैर्युतम् । ईशान्यां दिशि विन्यस्य पूजयेद्विधिवत्ततः ॥ रुद्रपीठमिदं सर्वं रुद्रकृत्येषु विश्रुतम् । शंभुना स्वयमाख्यातं भक्तानुग्रहकाम्यया ॥ कुंकुमागरुकर्पूरैर्भूर्जपत्रेथवा पटे । लिखितं पूजितं भक्त्या सर्वकामार्थसिद्धिदम् । यंत्रं मंत्रमयं प्रोक्तमाख्याता देवतेति च । पूजनीयं प्रयत्नेन न तेनेदं देवतामयम् ॥ नाग्निचोरभयं तत्र न च राजभयं क्वचित् । यत्रेदं लिखितं यंत्रं पूज्यते विधितः सदा ॥ अथ रुद्रप्रयोगः ॥ देशकालौ संकीर्त्य अमुकफलावाप्त्या श्रीपरमेश्वरप्रीत्यर्थं स्वयं ब्राह्मणद्वारा वा अमुकरुद्रजपं करिष्ये इति संकल्प्य तदंगतया गणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यब्रह्मर्त्विग्वरणानि कृत्वा देवालयादौ जपं समाप्य भद्रकर्णेभिरिति मंडपं प्रविश्य कृतस्यामुकजपस्य दशांशेन प्रतिमंत्रपक्षेणाष्टचत्वारिंशत्पक्षेण वा तिलद्रव्येण होमं करिष्ये इति संकल्प्य गणेशं संपूज्य सर्षपविकिरणादि मंडपप्रतिष्ठांतं ग्रहमखवत्कृत्वाग्निं प्रतिष्ठाप्य ग्रहवेद्यां ग्रहान्प्रतिष्ठाप्य रुद्रवेदिस्थवस्त्रलिखितरुद्रपीठे देवताः स्थापयेत् । तन्मध्ये । ॐ नमो भगवते रुद्राय । तत्रैव दिक्षु । सद्योजातः । वामदेवः । अघोरः । तत्पुरुषः । ईशानः । ततः पूर्वादि । नंदी महाकालः । गणेश्वरः । वृषभः । भृंगिरिटिः । स्कंदः । उमाचंडीश्वरः । इति प्रथमावरणम् । अनंतः । सूक्ष्मः । शिवः । एकपात् । एकरुद्रः । त्रिमूर्तिः । श्रीकंठः । वामदेवः । ज्येष्ठः । रुद्रः । कलः । कलविकरणः । बलः । बलविकरणः । बलप्रमथनः । इति द्वितीयावरणम् । अणिमा । महिमा । लघिमा । गरिमा । प्राप्तिः । प्राकाम्यम् । ईशिता । वशिता । ब्राह्मी । माहेश्वरी । कौमारी । वैष्णवी । वाराही । इंद्राणी । चामुंडा । चंडिका । असितांगभैरवः । चंडभैरवः । क्रोधभैरवः । रुरुभैरवः । उन्मत्तभैरवः । कालभैरवः । भीषणभैरवः । संहारभैरवः । इति तृतीयम् । भवः । शर्वः । ईशानः । पशुपतिः । रुद्रः । उग्रः । भीमः । महान् । अनंतः । वासुकिः । तक्षकः ।

कुलीरः । कर्कोटकः । शंखपालः ।कंबलः । अश्वतरः । वैन्यः।पृथुः । हैहयः । अर्जुनः । शाकुंतलेयः भरतः । नलः । रामः । हिमवान् ।
निषधः । विंध्यः । माल्यवान् । पारियात्रः । मलयः । हेमकूटः । गंधमादनः ।इतिचतुर्थावरणम् ॥ इंद्रः । अग्निः । यमः । निर्ऋतिः ।
वरुणः । वायुः । कुबेरः । ईशानः । शची । स्वाहा । वाराही । खड्गिनी । वारुणी । वायवी । कौबेरी । ईशानी । वज्रः। शक्तिः । दंडः ।
खड्गः । पाशः । अंकुशः । गदा । त्रिशूलम् । ऐरावतः । मेषः । महिषः । प्रेतः । मकरः । हरिणः । नरः । वृषभः । ऐरावतः । पुंडरीकः ।
वामनः । कुमुदः । अंजनः । पुष्पदंतः । सार्वभौमः । सुप्रतीकः । इतिपंचमावरणम् ॥ पूर्वेइंद्रः । आग्नेय्यामग्निर्विरूपाक्षश्च । दक्षिणेयमः ।
नैर्ऋत्यांनिर्ऋतिर्विश्वरूपश्च । पश्चिमेवरुणः ।वायव्यांवायुःपशुपतिश्च । उत्तरेकुबेरः । ईशान्यामीशानऊर्ध्वालिंगंच । पूर्वेशेषः । तक्षकः ।
अनंतः । वासुकिः। शंखपालः । महापद्मः । कंबलः । कर्कोटकः ।इत्येतान् । नमोंतैर्नाममंत्रैस्तत्स्थानेआवाह्य तदस्तु ०गृहावे ०प्रतिष्ठाप्य
संपूज्य तदीशान्यांकुंभेवरुणंसंपूज्यरुद्रपूजार्थविप्रंवृणुयात् । ततोग्रहमखवद्ग्रहादिभ्योहोमंकृत्वाघृताक्ततिलैरुद्रहोमंकृत्वारुद्रपीठदेवता
भ्यएकैकामाज्याहुतिंहुत्वा दिक्पालादिभ्योरुद्रायक्षेत्रपालायचग्रहमखवद्बलिंदत्त्वा पूर्णाहुतिंवसोर्धारांचकृत्वापूर्णपात्रविमोकादिकर्मशे
षंसमाप्याचार्यादिभ्योजपहोमश्रेयोगृहीत्वाऽचार्यादिभ्योदक्षिणांदद्यात । ततआचार्यादयोरुद्रग्रहकलशोदकेनयजमानस्याभिषेकंकुर्युः ।
ततोयजमानोग्रहाणांरुद्रस्यचोत्तरपूजांकृत्वास्वशाखोक्तमंत्रेणविसृज्याचार्यायदत्त्वाग्निंसंपूज्य गच्छगच्छेतिविसृज्यमंडपमाचार्यायदत्त्वा 
ब्राह्मणान्भोजयित्वा यस्यस्मृ ०प्रमादा ०दितिश्रुतिरितिजपित्वा कर्मसंपूर्णतांवाचयित्वाकर्मेश्वरार्पणंकृत्वासुहृद्युक्तोभुंजीत।इतिरुद्रपद्धतिः

अथरुद्राभिषेकविधिः।हेमाद्रौमहार्णवेच।अथातोरुद्रस्नानार्चनविधिंव्याख्यास्यामः।आदितएवतीर्थेस्नात्वोपेत्यशुचिःप्रयतोब्रह्मचारीशुक्लवा
सास्तस्यदक्षिणप्रत्यक्देशेतन्मुखः स्थित्वात्मनिदेवताः स्थापयेत्। प्रजननेब्रह्मातिष्ठतु।पादयोर्विष्णुस्तिष्ठतु । हस्तयोर्हरस्तिष्ठतु । बा
ह्वोरिंद्रस्तिष्ठतु । जठरेअग्निस्तिष्ठतु । हृदयेशिवस्तिष्ठतु । कंठेवसवस्तिष्ठंतु । वक्त्रेसरस्वतीतिष्ठतु । नासिकयोर्वायुस्तिष्ठतु । नयनयोः
सूर्याचन्द्रमसौतिष्ठेताम् । कर्णयोरश्विनौदेवौतिष्ठेताम्।ललाटेरुद्रास्तिष्ठन्तु।मूर्ध्न्यादित्यास्तिष्ठंतु।पृष्ठेपिनाकीतिष्ठतु । पुरतः शूलीतिष्ठतु ।
पार्श्वयोःशिवाशंकरौतिष्ठेताम्। सर्वतोवायुस्तिष्ठतु। ततोबहिः सर्वतोग्निर्ज्वालामालापरिवृतस्तिष्ठतु ।सर्वेष्वंगेषुसर्वादेवतास्तिष्ठंतु। मां
रक्षंतु। अग्निर्वायुः सूर्यश्चंद्रमादिशआपःपृथिव्यौषधिवनस्पतयइन्द्रः पर्जन्यईशान आत्मापुनर्नमअग्निर्मेवाचिश्रितइति।यथालिंगमंगा
निसंमृज्याथैनंगंधाक्षतधूपदीपैरात्मानंप्रत्याराधयेत्।आराधितोमनुष्यैस्त्वंसिद्धैर्देवासुरादिभिः॥आवाहयामिभक्त्यात्वांमांगृहाणमहेश्वर॥
त्र्यंबकंयजामहइत्यथैनमाराधयेत्॥आत्वावहंतुहरयः।सचेतसः। श्वेतैरश्वैः सहकेतुमद्भिः॥ वाताजवैर्बलवद्भिर्मनोजवैरायाहिशीघ्रंममहव्या
यशर्वोमित्यावाह्य॥संस्थापितेत्वावाहनम्।सद्योजातंप्रपद्यामीत्यावाहनंददाति।भवेभवेनातिभवेभवस्वमामितिपाद्यम्। भवोद्भवायनमइति
अब्लिंगाभिश्चस्नानम् । अब्लिंगाआपोहिष्ठेत्याद्याः । अथाद्भिस्तर्पयति। भवंदेवंतर्पयामि। शर्वंदेवंतर्प०।ईशानंदेवंतर्प०।पशुपतिंदेवंत०।
रुद्रंदेवंत०।उग्रंदेवंत०।भीमंदेवंत०महन्तंदेवंतर्पयामीतितर्पयित्वाज्येष्ठायनमइत्याचमनीयम्।श्रेष्ठायनमइतिमधुपर्कम्।कलविकरणायइतिपु
ष्पाणिसर्वभूतदमनायइतिधूपम्।मनोन्मनायनमइतिदीपम्।मनोन्मनायनमइतिकालेनैवेद्यम्।अथाष्टभिर्मंत्रैरष्टौपुष्पाणि।भवायदेवायनमः

पुष्पंसमर्पयामि । शर्वायदेवाय० ।ईशानाय०पशुपतये॥रुद्रायदेवाय०॥भीमायदेवाय० ।महतेदेवाय० ।अथास्याघोरतनूरुपतिष्ठते।अथतैर
स्यमूर्ध्निहिरण्यकलशेनसंततांधारांनिषिंचेन्मधुनासर्पिषापयसावेक्षुरसेननारिकेलोदकेनचाम्ररसेनवातदलाभेउदकेनवा। नमस्तेरुद्रमन्यव
इत्येकादशानामनुवाकानामेकंजपेत्सर्वेषांपारेपुनराराधयेत् ॥ उत्तमाराधनेनतदेतद्विधानमुत्तमम् । तेनाभिषिक्तेनोदकेनाक्षीभ्यामित्यनुवा
केनाब्लिंगामिश्चापःदात्संमृज्य पापक्षयार्थी।व्याधिविमोचनार्थी।जीवनार्थीश्रीकामः।शांतिकामः।पुष्टिकामस्तुष्टिकामो।मोक्षार्थी।चकुर्या
देवंकुर्वन्नूसिद्धिमाप्नोति । आचार्यायदक्षिणांददाति । दशगाःसवत्साः सुवर्णभूषितावृषभैकादशास्तदलाभेएकांगांदद्यादित्याह भगवान्बौ
धायनः। यद्यप्यत्रैकएवन्यासउक्तस्तथापिपूर्वोक्तन्यासपंचकमपिकार्यम्। रुद्राणांजपहोमार्चनविधिंव्याख्यास्यामइत्युक्त्वापंचन्यासोक्तेः।
अर्चनमभिषेकइतिमहार्णवः । आत्मानंप्रतीतिस्वशरीरेणमनसापूजयेदित्यर्थः । आराधितइतिमंत्रोमनसावाहनेगंधादौतुत्र्यंबकमं
त्रः । यद्यपिमानसपूजायांनैवेद्यंनोक्तंतथापिशिष्टाःकुर्वंति । संस्थापितइत्यावाह्यपूजायामात्वावहंत्वितिसद्योजातमितिपुनरावाहयेदि
त्यर्थः । अघोरतनूःअघोरेभ्यइत्यादिसदाशिवोमित्यंताःसर्वेषांपंचविधरुद्राणांउत्तमेति । अभिषेकोत्तरंबाह्यपूजैवेत्यर्थः । यत्रतदेतदतिरु
द्राभिषेकोविहितस्तत्रैषविधिरित्यर्थस्तेनापिपापक्षयव्याधिविमोकाद्यर्थाभिषेकांगसंमार्जनमधिकंकुर्यादित्यर्थः । त्र्यंबकमंत्रविधिस्तुमत्कृ
तकर्मविपाकसारेउक्तः । । इतिदिनकरभट्टकृतशांतिसारेरुद्राभिषेचनविधिः । । अथप्रसंगात्पंचामृताद्यभिषेचनविधिः । हेमाद्रौस्कांदे
सौनव्रते । देवैस्तुवंदिताधेनुःसर्वपापप्रणाशिनी॥तत्क्षीरस्नानतोदेवनित्यंमेवरदो भव॥कामतोऽकामतोवापियन्मयादुष्कृतंकृतम् ॥ तत्स

र्वविलयंयातुदधिस्नानेनभोशिव ॥ रसानामुत्तमंत्वाज्यंदेवानांचसदाप्रियम् ॥ तेनत्वंस्नापितोदेवनिधिकांतिप्रदोभव ॥ यस्यधारणमात्रेण तृप्तिंयातिपितामहः ॥ मधुनास्नापितोदेवनित्यंशोकहरोभव ॥ यमलोकभयत्रस्तःशरणंत्वांगतःशिवः ॥ खंडस्नानेनदेवेशमांकुरुष्वसुखा न्वितम् ॥ यस्यदर्शनमात्रेणशुद्धिःप्राणाश्चजीवनम् ॥ तेनचोत्तमतोयेनस्नातोदेहिप्रियंध्रुवम् ॥ सुगंधंचंदनंदेवंकुंकुमेनसमन्वितम् ॥अर्चितोऽ सिमयाभक्त्याशिवलोकप्रदोभव ॥ अक्षय्यान्बंधुपुत्रार्थान्कायंचैवाक्षिवाङ्मनः ॥ अंतचैवाक्षयंलोकमक्षतैरर्चितःकुरु ॥ संतानःपारिजात श्चयेचान्येसुरपादपाः ॥ तेषांपुष्पैर्मयादेवपूजितःसुखदोभव ॥ धूपोऽयंगृह्यतांदेवसुंदरोगंधवाञ्छुचिः ॥ ईप्सितंमेवरंदेहिपरत्रचशुभांगति म् ॥ शुद्धाशुक्लांबरावर्तिंगव्येनचसमन्विता ॥ दीपवर्तिप्रदानेनप्रीतःस्यादीश्वरोभव ॥ सर्वमन्नप्रदानंचदेवानांतुसदाप्रियम् ॥ तेनचान्नप्रदा नेनसुप्रीतोवरदोभव ॥ इतिश्रीमन्मीमांसकभट्टदिनकरकृतेशान्तिसारेपंचामृताभिषेकविधिः ॥ अथसहस्रघटस्नानम् ॥हेमाद्रौलैंगेतुलादा ने ॥ सहस्रकलशैनैवस्नापयेत्परमेश्वरम् ॥ घृतेनकेवलेनापिदेवदेवमुमापतिम् ॥ पयसावाथदध्नावासवैर्द्रव्यैरथापिवा ॥ ब्रह्मकूर्चेनवादेवंप ञ्चगव्येनवापुनः ॥गायत्र्याचैवगोमूत्रंगोमयंप्रणवेनवा ॥ आप्यायस्वेतिवाक्षीरंदधिक्राव्णेतिवैदधि ॥ तेजोसीत्याज्यमीशानंमंत्रेणैवाभिषि चयेत् ॥ देवस्यत्वेतिदेवेशंकुशांबुकलशैर्नवैः ॥ रुद्राध्यायेनदेवेशंस्नापयेत्परमेश्वरम् ॥ सहस्रकलशैःशंभोर्नाम्नांचैवसहस्रकैः ॥ विष्णुनाकथितैर्वाथनंदिनाकथितैस्तुवा ॥ दक्षेणमखमुख्येनकीर्तितेनापिवापुनः ॥ महापूजाप्रकर्तव्यामहादेवस्यभक्तितः ॥ तद्विधिर्वक्ष्य ते ॥ शिवार्चकायदातव्यादक्षिणाद्वौगुरोस्तथा ॥ बहिःप्रयोगेपीयम् ॥ प्रयोगांगत्वाद्दक्षिणायाः । अवेष्टेरिवबहिःप्रयोगेगुरोर्दक्षिणाशतादि

निष्कांता ॥ दक्षिणांचशतंचार्द्धंतदर्धंवाप्रदापयेदितितत्रैवोक्तेः । क्षीराद्यैःस्नानंसहस्रघटभिन्नम् ॥ तदुक्तंकामिके ॥ सहस्रकलशाद्यैस्तुसंस्ना
प्यपरमेश्वरम् ॥ महापूजाप्रकर्तव्याप्रभूतहविषान्विता ॥ पंचामृतैःपंचगव्यैःक्षीराद्यैःस्नपनंतथा॥ लक्षघटस्नानेत्विदंशतगुणम् ॥ कर्मविपा
केज्वरघ्नसहस्रकलशस्थानेप्येवमेवविधिर्ज्ञेयः॥इतिदिनकरभट्टकृतेशांतिसारेसहस्रघटस्नानम् ॥ अथमहास्नानम् ॥ हेमाद्रौ शिवधर्मे ॥
यःपुमान्तिलतैलेनकरयंत्रोद्भवेनच॥शिवाभिषेकंकुरुतेसशैवंपदमाप्नुयात् ॥ मानंतत्रैवोक्तम्॥स्नानंपलशतंज्ञेयमभ्यंगःपंचविंशतिः ॥ पला
नांद्विसहस्रेतुमहास्नानंप्रकीर्तितम् ॥ इदंतैलपरम् । लैंगे । महास्नानंचयःकुर्याद्घृतेनमधुनाततः ॥ सयातिममसायुज्यंस्नानेष्वेतेषुसुव्रत ॥
स्नाप्यलिंगंमदीयंचगव्यैनैवघृतेनवा ॥ विशोध्यसर्वद्रव्यैस्तुतोयेनाप्यभिषेचयेत् ॥ महास्नानेप्रसक्तेतुस्नानमष्टगुणंस्मृतम् ॥ जलेनकेवलेनै
वगंधतोयेनभक्तितः ॥ अनुलिंपेच्चतत्सर्वंपंचविंशत्पलेनवै॥शमीपात्रंचविधिनाबिल्वपत्रंचचंपकम् ॥ त्याज्यानिचापवित्राणिबिल्वपत्रंतु
नत्यजेत् ॥ दशद्रोणैस्तुनैवेद्यमष्टद्रोणैरथापिवा ॥ शतद्रोणसमंपुण्यमाढकेनविधीयते ॥ वित्तहीनस्यमर्त्यस्यनात्रकार्याविचारणा ॥ भेरी
मृदंगमुरजवादित्रैःपटहादिभिः॥ वादित्रैर्विविधैश्चान्यैर्मंगलैर्विविधैस्तथा ॥ जागरंकारयेत्तत्रप्रार्थयेच्चयथाक्रमम् ॥ स्वभृत्यैःपुत्रदारैश्चतथा
संबंधिबान्धवैः ॥ सार्द्धंप्रदक्षिणंकृत्वाप्रार्थयेल्लिंगमीश्वरम् ॥ इत्युक्त्वाचैवरुद्रंचत्वारितंशांतिमेवच ॥ मंत्रयित्वामहाबीजंतथापंचाक्षरस्यवै ॥
इतिदिनकरभट्टकृतेशांतिसारेमहास्नानम्॥ अथमहापूजा ॥ कालिकापुराणे ॥ कार्तिक्यामथवैशाख्यामयनादिषुपर्वसु ॥ दत्त्वादीपान्समु
द्बोध्यदेवस्याग्रेबलिंततः ॥ भूतानांदेवदेवस्यबाह्याद्यादिषुभवेत्सुधीः ॥ सद्धतीदेवमामंत्र्यस्वपेद्धमौहरिंस्मरेत् ॥ उपलिप्यगृहंगत्वानिराहारो

निशिस्वपेत् ॥अपरेह्निमहास्नानंहरायविधिनाश्रृणु ॥ पंचविंशत्पलेनैवअभ्यंगंकारयेदथ ॥ अभ्यंगस्तैलेन ॥ शिवस्यसर्पिषास्नानंप्रोक्तं पलशतेनवै ॥ पलानांद्विसहस्रेणमहास्नानंविधीयते ॥ तावतामधुनाचैवदध्नाचैवततःपुनः ॥ तावतैवहिक्षीरेणगव्येनैवभवेत्ततः ॥ भूयःसार्द्धं सहस्रेणपलानामैक्षवेणतु॥रसेनकारयेत्स्नानंभक्त्याचोष्णांबुनाततः ॥स्नापयेद्भक्तितोलिंगमापीठांतंचतच्छुभम्॥नीलोत्पलसहस्रेणमालांब द्धाप्रपूजयेत् ॥ अलाभेतुसहस्राणामर्द्धार्द्धावापिकारयेत् ॥ अलाभेबिल्बपत्रैर्वाश्वेतमंदारजैरपि ॥ दमनैर्गुरुपुष्पैर्वाशमीशुक्लार्कनागरैः ॥ प्रपूज्यकारयेद्भक्त्यासुगंधंपुष्पमंडपम् ॥ गुग्गुलुंचाज्यसंयुक्तमगुरुंवासितंदहेत् ॥ ततोनीराजनंदीपैःषड्विंशत्यातुकारयेत् ॥ सर्ष पैर्दधियुक्तैश्चदूर्वागोरोचनाक्षतैः ॥ गंधपुष्पोदकंदद्याद्रूपार्थंचंद्रशेखरम् ॥ शतपत्रंततःपद्ममष्टयंत्रसकर्णिकम् ॥ कृत्वानिवेदयन्मू र्ध्निलिंगस्यकुसुमैःसह ॥ चामरंदर्पणंचैवदीपवर्तिम्प्रदापयेत् ॥ धूपंसर्जरसंचैवसंघट्टंपूर्वमेवच ॥ वितानकध्वजौदद्यात्किंकिणीरवना दितौ ॥ अथाष्टभिःक्षितिःपीड्याअंगैर्भक्त्यातुदंडवत् ॥ ततउच्चैःपठेत्स्तोत्रंशंकरंचशिवाप्रियम् ॥ प्रदक्षिणांततोगच्छेच्छनैर्निर्मा ल्यवर्जितः ॥ प्रणम्यचपुनःपश्चान्नैवेद्यंचनिवेदयेत् ॥ कुर्यादेतन्महास्नानंविधिनानेनधर्मवित् ॥ समुद्धृत्यशतंसाग्रंवसेत्कल्पायुतंदि वि ॥ भुवनंब्रह्मलोकांतंभुक्त्वाभोगानशेषतः ॥ ततःक्रीडायतेतस्मिन्विमानस्थोऽमरैर्युतः ॥ भोगान्यथेप्सितान्भुक्त्वाशिवसायु ज्यतांव्रजेत् ॥ केवलेनाथवाज्येनदध्नागव्येनवैतथा ॥ पयसापंचगव्येनपयसेक्षुरसेनवा ॥ यःकारयेन्महास्नानंविधिनानेनमंत्रतः ॥ सोऽपितेनैवमार्गेणगमिष्यतिपरंपदम्॥एवमेवहिशूद्रस्यस्पर्शमंत्रविवर्जितः ॥ अन्येशूद्रस्यविशेषा अस्मत्पुत्रकृतशूद्रोद्योतेनुसंधेयाः । वा

स्तुसंहितायाम् । पद्ममष्टदलंहैमंनवरत्नैरलंकृतम् ॥ कर्णिकाकेसरोपेतमासनंपरिकल्पयेत् ॥ राजतंतदभावेतुरक्तंसितमथापिवा ॥ तत्प
द्मकर्णिकामध्येकृत्वालिंगंकनीयसम् ॥अथवास्फटिकोपेतंपूजयेद्विस्तृतंक्रमात्॥ ततःपंचवक्त्रपूजाहेरंबादिपूजादीन्युक्तानितानिविस्तरान्नो
च्यंते । इतिदिनकरभट्टकृतेशांतिसारेमहापूजासमाप्ता ॥ अथत्वरितरुद्रविधानम् । यस्यकुक्षौजगत्सर्वंस्थावरंजंगमंतथा ॥ दुःखच्छिदेनम
स्तस्मैब्रह्मविष्णुशिवात्मने ॥ अस्यत्वरितरुद्रस्यन्यासरुद्राःक्रमेणतु ॥ जपहोमादिकंसर्वंकथ्यतेसर्वसिद्धये ॥ छंदोनुष्टुबथर्वाथऋषिस्त्व
रितसंज्ञकः॥देवतात्वरितोरुद्रोबीजशक्तिर्नमोस्त्विति।देवागारेनदीतीरेशुचावन्यत्रवाशुचिः ॥उपविश्यनियम्यासून्संकल्प्यहृदिसंस्थितम
करयोस्तलयोश्चैवमूलमंत्रंचविन्यसेत्॥न्यासंमंत्रपदैःकुर्यात्पंचभिर्हृदयादिकम्॥अथषण्न्यासाः।यःशिरसि। रुद्रःललाटे। अग्नौनेत्रयोः।
यःकर्णाभ्याम् ॥ अप्सुनासिकायाम् । यःमुखे । औषधीषुबाह्वोः । यःहृदये । रुद्रःनाभौ । विश्वागुह्ये । भुवनाअपाने । विवेशऊर्वोः । तस्मै
जान्वोः । रुद्रायजंघयोः । नमःगुल्फाभ्याम् । अस्तुचरणयोः । योरुद्रोअग्नौहृदिविन्यस्यशीर्षयोस्त्विति विन्यसेत्।यऔषधीषुशिखायाम
योरुद्रःकवचंन्यसेत् ॥ विश्वाभुवनाविवेशेतिनेत्रत्रयायवौषट्॥तस्मैरुद्रायनमोस्त्वितिअस्त्रमेवच॥अनेनैवतुपंचांगन्यासएवमुदाहृतः। अं
गुल्यग्राणिमूलेतुकृत्वांगुष्ठेनपीडयेत्॥सामुद्राशुभदाप्रोक्तासैवशान्तिप्रदायिनी।एषतेरुद्रभागःसहस्वस्रांबिकयातंजुषस्वस्वाहा ॥ एषतेरुद्र
भागमितिमुद्राप्रदर्शनम् । श्रीकामःशीर्ष्णिकुर्वीततेजस्कामस्तुनेत्रयोः ॥ मुखेत्वन्नत्वकामस्तुग्रीवायांरोगनाशनम् ॥हृदयेसर्वकामस्तुनाभौ
ज्ञानंप्रदर्शयेत्॥प्रजाकामस्तुगुह्येस्यात्पशुकामस्तुजंघयोः ॥ जान्वोर्वैग्रामकामस्तुराष्ट्रकामस्तुपादयोः ॥ वशीकरणकामस्तुवामहस्तेनदर्श ॥ ४२ ॥

येत् ॥पापक्षयेभिचारेचव्याधेरुपगतावपि॥बहिःशरीरात्कुर्वीतशिवस्याज्ञेतिवैस्मरन्॥एवंमुद्रादर्शयित्वाततोध्यानंसमाचरेत्॥ चतुर्बाहुंत्रि
नेत्रंचशुद्धस्फटिकसन्निभम्॥उग्रेकर्मणिचैवोग्रमूर्तिंध्यायेदुमापतिम् ॥ द्विभुजंनागपाशंचशूलपाणिंजटाधरम्॥ध्यात्वैवंशंकरंपापान्मुच्यते
मानसोद्भवात्॥अधःशाय्येकभक्ताशीब्रह्मचारीहविष्यभुक् ॥ अयुतेद्वेजपेत्सर्वंप्रत्यहंपूजयेच्छिवम् ॥ जुहुयात्तद्दशांशेनतद्दशांशेनतर्पणम्॥
मार्जनंतद्दशांशेनदशांशेनतुभोजयेत् ॥ एवंकृतेतुसिद्धिःस्यात्फलार्थंतुततोजपेत् ॥ पुरश्चरणमेवंतुकृत्वासंपूज्यशंकरम् ॥ जपेत्त्वरि
तरुद्रंतुसर्वकामसमृद्धये॥श्रीकामःशांतिकामोवाजपेल्लक्षमतंद्रितः॥बिल्वसमिद्भिःश्रीकामश्शांतिकामःशमीमयैः ॥ जुहुयादाज्यसंमिश्रैस्त
र्पणंमार्जनंततः॥जस्वालक्षंतुपुत्रार्थीपायसंजुहुयात्ततः॥ वित्तार्थीश्रीफलैर्होममायुष्कामस्तुदूर्वया॥तिलैराज्येनसंमिश्रैस्तेजस्कामोघृतेनवै ॥
व्रीहिभिःपशुकामस्तुराष्ट्रकामस्तुवैयवैः॥पायसंसर्वकामेनहोतव्यंशर्करान्वितम्॥मध्वक्तान्याम्रपत्राणितीव्रज्वरविनाशिने॥हिमभूतज्वरेणैव
गुडूचीभिर्हुनेद्ध्रुवम्॥सर्वरोगविनाशायसूर्यस्याभिमुखोजपेत्॥अयुतेद्वेजपेहोमःकार्योर्कसमिधाशुभः॥ औदुंबरैरन्नकामस्तेजस्कामस्तुखा
दिरैः॥अपामार्गसमिद्धोमाद्भूतबाधाविनश्यति॥ग्रहबाधाविनाशायजपेदश्वत्थसन्निधौ॥लवणान्वितदध्यक्तास्तीक्ष्णाश्चाश्वत्थसंभवाः॥हूयंते
समिधःशुष्काःस्वाहांतंमंत्रमुच्चरेत्॥दशपंचाहुतीर्हुत्वागच्छगच्छेत्युदीरयेत् ॥ यावद्धोमोबलिर्देयःपुरुषाहारसंमितः॥एवंकृतेप्रमुच्येतपुमान्
स्त्रीवामहाग्रहात्॥जुहुयाच्छतपत्राणिसहस्रष्टोजयमाप्नुयात्॥लाजाहोमेनकन्यार्थीकन्यामाप्नोतिरूपिणीम्॥ लाजाश्चमधुसंमिश्राःश्वेतपुष्पा
णिवापुनः॥हूयंतेहरितेदेशेतस्यविश्वंवशंभवेत् ॥ वामांगमुत्तमंकायंस्त्रीवाशित्वेविचक्षणैः॥हस्त्यश्वामात्यशांत्यर्थंतिलैश्चाज्येनसंयुतैः॥होम

स्थानेतुसंस्थाप्यकुंभमेकंजलान्वितम्॥मंत्रंजप्त्वाष्टसाहस्रंकुंभंस्पृश्यप्रयत्नतः॥अभिषेकस्तुतेषांवैशालांप्रोक्ष्यप्रदक्षिणम्॥ ग्रहग्रामादिशांति
स्तुसर्वैःकार्यातुपूर्ववत् ॥वास्तुपूजाप्रकर्तव्याप्राच्यांदिशिपदेशुभे।ईशानायबलिःकार्यःपशूनांपतयेतथा॥एवंकृतेपशूनांतुप्रजानांशांतिमाप्नु
यात्। अद्भुतेषुचसर्वेषुपशूनांग्रामबाह्यतः॥उपविश्यजपेद्रुद्रंत्वरितंबहुभिःसह॥होमःपलाशसमिधैःकर्तव्योघृतसंयुतैः। ईशानायबलिःकार्यो
यस्यांदिशितदद्भुतम्॥तदाशापतयेचैवपशूनांपतयेतथा॥वृष्टिकामोजपेल्लक्षंतिलैर्होमोघृतान्वितैः॥बलिपूजाप्रकर्तव्याशिवस्यवरुणस्यच॥
सर्वस्मिन्नपिचैवार्थेत्वरितस्यजपोभवेत् ॥ अयुतद्वयजाप्यंतुयावल्लक्षंततोधिकम् ॥ एवंकृतेतुसिद्धिःस्यान्निष्कामःप्राप्नुयाच्छिवम् ॥ ऐहिका
मुष्मिकान्भोगान्भुक्त्वासायुज्यमाप्नुयात्॥इतिदिनकरभट्टकृतेशांतिसारेत्वरितरुद्रविधानम्॥ अथपार्थिवपूजा॥तिथितत्त्वेभविष्ये॥मृद्भस्म
गोशकृत्पिंडताम्रकांस्यमयंतथा॥ कृत्वालिंगंसकृत्पूज्यवसेत्कल्पायुतंदिवि ॥ वार्क्षंवित्तप्रदंलिंगंस्फाटिकंसर्वकामदम्॥नर्मदागिरिजंश्रेष्ठम
न्यद्वापिहिलिंगवत्।लिंगवल्लिंगाकारम्।तेननार्मदादेरपिलिंगस्यनाकारस्यनपूज्यतेतिहेमाद्रौमात्स्ये। रत्नजंहेमजंलिंगंपारदंस्फाटिकंतथा॥
पार्थिवंपिष्टपौष्पंवासर्वाभीष्टप्रदायकम्॥ पौष्पंलिंगंसहायभूतंमृदापिकेवलपुष्पैस्तदसंभवात्। तत्रैवनंदिपुराणे। आयुष्मान्धनवान्श्रीमा
न्पुत्रवान्धान्यवान्सुखी ॥ वरमिष्टंलभेल्लिंगंपार्थिवंयःसमर्चयेत् ॥ तस्मात्तुपार्थिवंलिंगंज्ञेयंसर्वार्थसाधकम् ॥ तत्रैवशिवधर्मे॥वालुकानिच
लिंगानिकारयेत्पार्थिवानिच॥सहस्रपूजनात्सोऽपिलभतेवाञ्छितम्फलम्॥युगपद्बहुपूजनेविशेषोरुद्रयामले।एवमंतंविधायाथपूर्वंमृत्पिंडशेष
तः॥अवशिष्टानिरचयेत्प्रतिष्ठांतंचपूर्ववत् ॥कृत्वाथवापृथक्पिंडान्प्रथमंलिंगसंख्यया॥ मंत्रैस्तदीयनिर्माणप्रमुखंतुततश्चरेत्॥मृदाहरणादि

प्राणप्रतिष्ठांतमेकैकस्यकुर्यात्।अथवामृदाहरणंसकृत्कृत्वापूजनीयलिंगसमसंख्यया।पिंडान्कृत्वासंघट्टनादिपूजांतंप्रत्येकंकुर्यादित्यर्थः।तत्रैव
कालकौमुद्याम्।अक्षादल्पपरीमाणंनलिंगंकुत्रचिन्नरः॥कुर्वीतांगुष्ठतोह्रस्वंनकदाचित्समाचरेत्॥अक्षोशीतिरक्तिकाःतेषोडशाक्षइत्यमरात्॥
इदंचपरिमाणंप्रधानलिंगस्यनवेदिकायाः।अंगुष्ठशब्देनांगुष्ठबृहत्पर्वग्रंथिरुच्यते।अंगुष्ठांगुलिमानंतुयत्रयत्रोपदिश्यते॥तत्रतत्रबृहत्पर्वग्रंथिभि
र्मानयेत्सदेतिछन्दोगपरिशिष्टात्।अंगुष्ठमानमंगुलिमानंचेत्यर्थः।तत्रैवगौतमः।रात्रावुदङ्मुखंकुर्याद्देवकार्यंसदैवहि।शिवार्चनंसदाप्येवंशुचिः
कुर्यादुदङ्मुखः।सदादिवारात्रौचलैंगे॥विनाभस्मत्रिपुंड्रेणविनारुद्राक्षमालया।पूजितोपिमहादेवोनस्यात्तस्यफलप्रदः॥तस्मान्मृदाऽपिकर्त
व्यंललाटेवैत्रिपुंड्रकम्॥ॐहुंनमइतिरुद्राक्षान्प्रत्यभिमन्त्र्यमालांधारयेदित्युक्तम्।तत्रैवपूजाधिकारार्थंपंचाक्षरजपउक्तस्तत्रैवभविष्ये।अपवि
त्रःपवित्रोवासर्वावस्थांगतोपिवा॥महापातकयुक्तोवामंत्रस्यास्यजपेयथा॥ अधिकारीभवेत्सर्वइतिदेवोब्रवीच्छिवः॥ इति तथार्थोयथापदा
त्।तत्रैवब्राह्मे।यावन्नदीयतेचार्घ्यंभास्करायनिवेदितम्॥ तावन्नपूजयेद्विष्णुंशंकरंवासुरेश्वरम्॥तत्रैवदेवीपुराणे॥मृदाहरणसंघट्टप्रतिष्ठाह्वानमे
वच॥स्नपनंपूजनंचैवविसर्जनमतःपरम्॥हरोमहेश्वरश्चैवशूलपाणिःपिनाकधृक्॥पशुपतिःशिवश्चैवमहादेवइतिस्मृतः॥ नामक्रमेणपूर्वोक्तक
र्माणिकार्याणीत्यर्थः। पूजनमर्घ्यादिप्रतिष्ठाह्वानयोरदृष्टार्थत्वात्पाठक्रमएव।यद्यप्यत्रनामान्येवविनियुक्तानितथापि॥ध्यात्वाप्रणवपूर्वंतुत
न्नाम्नासमाहितः॥ नमस्कारेणपुष्पादिविन्यसेच्चपृथक्पृथक्॥ इतिसामान्यवाक्यान्नमोंततांज्ञेया।पूजनेचयद्यपिशिवनामोक्तं। तथातद्यु
क्तंपंचाक्षरोग्राह्यइत्युक्तम्। तत्रैवनंदिपुराणे। गोभूहिरण्यवस्त्रादिबालिपुष्पानिवेदने॥ ज्ञेयोनमःशिवायेतिमंत्रःसर्वार्थसाधकः॥पंचाक्षरस्य

नमोन्तत्वाभावात्पुनर्नमःशब्दोवाच्यइत्युक्तंतत्रैवनमःशब्दस्यदानार्थत्वात्पूर्वस्थितनमःशब्देनतत्सिद्धेःविसर्जनात्पूर्ववामावर्तेनाष्टमूर्तिपू
जोक्ता । तत्रैवभविष्ये । शर्वायक्षितिमूर्तयेनमः । भवायजलमूर्तये० । रुद्रायाग्निमूर्तये० । उग्रायवायुमूर्तये० भीमायाकाशमूर्तये० । पशु
पतयेयजमानमूर्तये० । महादेवायसोममूर्तये० । ईशानायसूर्यमूर्तयेनमः । मूर्तयोऽष्टौहरस्यैताःपूर्वादिक्रमयोगतः ॥ आग्नेयान्ताःप्रयोज्या
स्तुवेद्यांलिंगेशिवंयजेत् ॥ एतावेद्यांपूज्याइत्यर्थः ॥ अत्रप्रसिद्धप्रागादिग्रहणमित्युक्तम् । तत्रैवयुक्तंतुपूज्यपूजकांतरालस्येति । अत्रशूद्रस्या
प्यधिकारः । शूद्रःकर्माणियोनित्यंस्वीयानिकुरुतेप्रिये ॥ तस्याहमर्चांगृह्णामिचंद्रखंडविभूषिते ॥ नमोन्तेनशिवेनैवस्त्रीणांपूजाविधीयते॥
स्वाहाप्रणवसंयुक्तंशूद्रेमंत्रंददेद्द्विजः ॥ शूद्रोनिरयमाप्नोतिब्राह्मणःशूद्रतामियात् ॥ इतिस्कांदात् । एवंप्रकारेणप्रणवनिवृत्तिः । अथप्रयोगः ।
अमुककामःपार्थिवलिंगपूजांकरिष्यइतिसंकल्प्य विभूतिरुद्राक्षधारणंकृत्वायथाशक्तिपंचाक्षरंजप्त्वापुष्पदूर्वायुतमर्घ्यंसूर्यायेदमर्घ्यंनममे
तिदत्त्वाहरायनमइतिमृदाहरणम् । महेश्वरायनमइतिसंघट्टनम् । शूलपाणयेनमइतिप्रतिष्ठापनम् । पिनाकधृषेनमइत्यावाहनम् । अथशारदो
क्तध्यानम् । ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसंरत्नाकल्पोज्ज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नम् ॥ पद्मासीनंसमंतात्स्तुतमम
रगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रम् ॥ नमःशिवायेतिपाद्यार्घ्याचमनीयानि । पशुपतयेनमइतिस्नानम् ।
नमःशिवायेतिवस्त्रयज्ञोपवीतगंधालंकारपुष्पधूपदीपनैवेद्यफलतांबूलानिदत्त्वा वेद्यामष्टमूर्तीरक्षतादिनापूजयेत् । शर्वायक्षितिमूर्तयेनमःप्रा
च्याम् । भवायजलमूर्तयेनमईशान्याम् । रुद्रायाग्निमूर्तयेनमउदीच्याम् । उग्रायवायुमूर्तयेनमोवायव्याम् । भीमायाकाशमूर्तयेनमःप्रती

च्याम् । पशुपतयेयजमानमूर्तयेनमः नैर्ऋत्याम् । महादेवायसोममूर्तयेनमः दक्षिणस्याम् ईशानायसोममूर्तयेनम आग्नेय्याम् । महादेवायक्ष
मस्वेतिसंहारमुद्रयाविसर्जनम् । इतिदिनकरभट्टकृतेशांतिसारेपार्थिवपूजाप्रयोगः । अथकाम्यप्रयोगः । कार्तिकेमार्गशीर्षेवामाघेवैशाखसं
ज्ञके ॥ श्रावणेबहुलेपक्षेव्रतस्याचरणंकुरु ॥ तद्यथाकृतनित्यक्रियःपूजोपकरणानिसंपाद्यशुच्यवकाशेप्रागुदगुपविश्याचम्यप्राणानायम्यति
थ्यादिस्मृत्वामुकका मोऽमुकसंख्ययाएतावंतंकालंपार्थिवलिंगानिपूजयिष्येतदंगभूतशुद्धिप्राणप्रतिष्ठामातृकान्यासान्विधास्ये । इतिसंक
ल्प्यपृथ्वित्वयेतिमंत्रस्यमेरुपृष्ठऋषिःकूर्मोदेवतासुतलंछंदःआसनोपवेशनेविनियोगः।पृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥त्वंचधार
यमांदेविपवित्रंकुरुचासनमितिकुशाजिनचैलनिर्मितेआसनेउपविश्यपृथिव्यैनमः।आधारशक्त्यै०।विश्वशक्त्यै०।चिच्छक्त्यै०।मायाशक्त्यै
नमइत्यासनंसंपूज्य।मूलेनशिखांबद्ध्वात्मदृष्ट्यावलोकनेनदिव्यंरूपंअस्त्रायफडितिजलप्रक्षेपेणांतरिक्षात् । अपसर्पंतुतेभूताभूतायेभुवि
संस्थिताः॥येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया॥अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशम्॥सर्वेषामविरोधेनब्रह्मकर्मसमारभेत्। इतिमंत्रा
भ्यांवामपार्ष्णिघातत्रयेणभौमांतरिक्षविघ्नानुत्सार्यसर्वभूतनिवारायशार्ङ्गायसशरायास्त्रराजायसुदर्शनायहुंफडितिछोटिकाभिस्तालत्रयेणच
दिग्बंधंविधायास्त्रेणकरशुद्धिंकृत्वागुरुभ्योनमः।परमगुरुभ्योनमः।परात्परगुरुभ्योनमः।परमेष्ठिगुरुभ्योनमः।आचार्यगुरवेनमः।नमोमहद्भ्यइ
तिनत्वाभूतशुद्धिमारभेत् । यथाहृदये । अदीपकलिकारंजीवकलाहंसमंत्रेणांकुशमुद्रयाब्रह्मांडस्थितसहस्रदलपद्मांतर्गतशिवेनसंयोज्य । ॐ
हांसद्योजातायनिवृत्तिकालात्मनेहुंफडितिपादादिजान्वोर्वामदेवायप्रतिष्ठाकलात्मनेफडितिहृदयादिवदने ॥ हुंहईशानायशांत्यतीतकला

त्मनेहुंफडितिवदनादिमूर्ध्निन्यसेत् । एवंभूतान्युपसंहृत्यजन्मांतेदुःखप्रदंपापपुरुषंदक्षिणकुक्षौविचिंतयेत् ॥ ब्रह्महत्याशिरस्कंचवर्णकस्ते
यकद्वयम् । सुरापानहृदायुक्तंगुरुतल्पकटिद्वयम् ॥ तत्संयोगिपदद्वंद्वमंगप्रत्यंगपातकम्॥उपपातकरोमाणंरक्तश्मश्रुविलोचनम् ॥ खड्गच
र्मधरंपापमंगुष्टपरिमाणकम् ॥ अधोमुखंकृष्णवर्णंदक्षकुक्षौविचिंतयेत्॥ततोयमितिवायुबीजेपूरकेषोडशवारंजप्त्वापापंविशोध्यरमितिबहि
बीजेकुंभकेचतुःषष्टिवारंजप्त्वातद्देहंनपुनर्वायुबीजेरेचकेद्वात्रिंशद्वारंजप्त्वानित्यशुद्धबुद्धस्वभावंब्रह्मैवाहमितिध्यात्वापुनः सिसृक्षएवमिति ।
ततोथबीजेनस्वावयवानाप्यवहीनविंशतिवारमहमित्याकाशबीजेनदेवाहारात्स्वावयवान्भावयित्वा।ॐह्रौंईशानायनमःमूर्ध्नि । ॐ ह्रौंतत्पु
रुषायनमःमुखे । ह्रंअघोरायनमःहृदि । ह्रींवामदेवायनमःगुह्ये । सद्योजातायनमःपादयोः । एवमुत्पन्नेदेवात्मकेदेहेब्रह्माण्डस्थितपरमा
त्मनःसकाशात्स्त्रीवंरुंहंसोहमतिहृदयमानीयप्राणप्रतिष्टांकुर्यात् । अस्यश्रीप्राणपतिष्टामंत्रस्यब्रह्मविष्णुरुद्राऋषयः । ऋग्यजुःसामानिच्छ
न्दांसि।प्राणशक्तिर्देवता । आंबीजं । ह्रींशक्तिः । क्रौंकीलकं । स्वशरीरेप्राणप्रतिष्टापनेविनियोगः । ॐह्रांआंअंकंखंगंघंङंआंआकाशवा
युतेजोजलपृथिव्यात्मने आंअंगुष्ठाभ्यांनमः । ॐह्रींईचंछंजंझंञंईंशब्दस्पर्शरूपरसगंधात्मनेईंतर्जनीभ्यांनमः । ॐह्रूंऊंटंठंडंढंणंऊंश्रो
त्रत्वक्चक्षुर्जिह्वाघ्राणात्मनेऊंमध्यमाभ्यांनमः । ॐह्रैंऐंतंदंथंधंनंऐंवाक्पाणिपादपायूपस्थात्मनेऐंअनामिकाभ्यां० । ॐह्रौंऔंपंफंबंभं
मंऔंखमादानगतिविसर्गानंदात्मनेऔंकनिष्ठिकाभ्यांनमः । ॐह्रः अंयंरंलंवंशंषंसंहंळंक्षंअंमनोबुद्ध्यहंकारात्मनेअःअस्त्रायफट् ।
एवंहृदयादौ । अथध्यानम् । रक्तांबोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशंकोदंडमिक्षूद्भवगुणमथचाप्यंकुशंपंचबाणान् ॥

बिभ्राणासृक्कपालंत्रिनयनलसितापीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः ॥ ओंआंह्रींक्रौंयंरंलंवंशंषंसंसोहंहंसः
क्रौंह्रींआंअमुंप्राणइहप्राणः । ॐआँह्रींक्रौंयंरं०क्रोंह्रींआंअमुंजीवइहस्थितः । ॐआंह्रींक्रौंयंरं०क्रौंह्रींआंअमुंसर्वेन्द्रियाणिॐह्रींक्रौंयं
रं० क्रौंह्रींआंअमुंवाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थप्राणाइहागत्यसुखंचिरंतिष्ठंतुस्वाहेतिमंत्रंहृदिकरंनिधायत्रिवारंज
पेत्तथैवपंचदशप्रणवावृत्तीःकृत्वाक्रमेणममसंस्काराजाताइतिभावयेत् । इतिप्राणप्रतिष्ठा।अथान्तर्मातृकाःबहिर्मातृकाश्रीकंगदिमानश्चान्य
त्रोक्तप्रकारेणन्यसेत् । ततःपूजांकुर्यात् । तत्रादौसूर्यायदेवताभ्यश्चार्घ्यंनिवेदयेत् । तदुक्तंब्रह्मांडपुराणे । यावन्नदीयतेचार्घ्यंभास्करायनि
वेदितम् ॥ तावन्नपूजयेद्विष्णुंशंकरंवासुरेश्वरमिति ॥ निवेदनप्रकारस्तु ॥ भगवन्सूर्यभगवत्योदेवताअद्याऽहंपार्थिवलिंगपूजामाचरिष्यामी
त्येकाहपूजनपक्षे । दशाहपूजनपक्षे ॥ अद्येत्यस्यस्थानेदशाहमित्यूहनीयम् ॥ एवंचाविंशतिरात्रमासत्रिमासषण्मासनवमासवर्षयावज्जीवप
क्षेषूहनीयम् ॥ उपरितनामाष्टांगुलीमृदमुपाकृष्यपृथिव्यैनमःइतिपृथ्वीमंत्रेणपृथ्वीमभिमंत्र्यगंधाद्यैरभ्यर्च्य ॥ उद्धृतासिवराहेणकृष्णेनशत
बाहुना ॥मृत्तिकेत्वांप्रगृह्णामिपूजयाचधनेनचेतित्रिःसमृद्धृत्यतांमृदंपुनरभिमंत्र्यसंशोध्यशुद्धभांडेस्थापयेत् ॥ अतएवान्वहंमृदंशुद्धपात्रेनि
क्षिप्याभिमंत्रितेनजलेनाप्लाव्यापिंडयेत ॥ततोमूलमंत्रस्यन्यासंसंविधायशंखेतरपात्रेजलमापूर्यमूलेनाभिमंत्र्यतेनात्मानंपूजोपहाराणिचप्रो
क्ष्यगंधाद्युपकल्प्यद्वारपूजांविदध्यात्॥यथा।देहल्यैनमः।गणेशायनमः।दक्षिणे।चामुंडायै०।वामे।भैरवाय०।पूर्वे।भैरव्यै०।पश्चिमे । अथार्घ्य
स्थापनम् । प्रासादमंत्रस्यवामदेवऋषिःशिरसि । पंक्तिच्छंदोमुखे । सदाशिवोदेवताहृदि । हंबीजं । ऊशक्तिः । सकारःकीलकं।ह्रांहृद

यायनम इतिषडंगः । स्वरक्रमेणफडित्यर्घ्यपात्रंप्रक्षाल्यभूमौचंदनांबुनाकल्पितेमंडलेमत्स्यमुद्रांप्रदर्श्यदेशकलाव्यातायसूर्यमंडलायन
मइतिजलेचंदनंनिक्षिपेत्॥वषडित्यक्षताः । नमइतिपुष्पं । वौषडितिनिरीक्ष्यअंकुशमुद्रयागंगेचयमुनेचैवेतितीर्थान्यावाह्य फडितिसंरक्ष्य
हुमित्यवगुंठ्यकराभ्यामाच्छाद्यमूलेनदशवारमभिमंत्र्यतेनात्मानंपूजोपकरणानिसंप्रोक्ष्यास्त्रेणद्वारदेशंप्रोक्ष्य।गुरुभ्योनमः।चिच्छक्त्यैनमः
नागायै०। यमुनायै०।धात्रेनमः।विधात्रेन०। शंखनिधये०।पद्मनिधये०।द्वारश्रियै०।देहल्यै०।इतिशिवद्वारेदेवताःसंपूज्यान्यपूजांविदध्यात्।
आधारशक्त्यैनमः।कूर्माय०।स्कंदाय०।नीलाय०।पद्माय०।ततःपूर्वाद्यष्टदलेषुकर्णिकायांच।वातायै०।ज्येष्ठायै०। रौद्रै०।काल्यै०।कलविक
रिण्यै०। बलायै०।बलप्रमथिन्यै०।सर्वभूतदमन्यै०। मनोन्मनायैनमइति।ॐनमोभगवतेसकलगुणात्मशक्तियुक्तायानंताययोगपीठात्मनेत्रि
नेत्रायनमइतिपीठेपुष्पांजलिंदत्त्वादेशकालौसंकीर्त्यमहेशानुग्रहद्वारामनोवांछितसिद्धयेपूजयिष्ये।पार्थिवानिलिंगान्यमुकसंख्यायाविनि
योगंविधाय। ततःपृथ्वीतलान्मृदमादाय।ततोगंग्लौंगणपतयेनमः।ग्लौंगंह्रींमृदमभिमंत्र्यवराभयपाणियुगंगणपतिंनिर्मायपुनर्मंत्रंपठित्वा
पीठेस्थापयामीतिप्रतिष्ठाप्यॐहूंहरायनमइतितोलकान्मृदंगृहीत्वा। ॐमहेश्वरायनमइतिसंघट्टनंविधाय। ॐहंशूलपाणयेनमःस्थापयामी
तिताम्रपात्रेनिधायचसाक्षतलिंगंस्थापनमुद्रयास्थापयेत् । ततःशिवपंचाक्षरमंत्रस्यवामदेवऋषिःशिरसि। पंक्तिच्छंदःमुखे।सदाशिवोदेवता
हृदये। अभीष्टसिद्धयेविनियोगः। मूलेनव्यापकंन्यासंकृत्वाकरकपिच्छिकांपुष्पगर्भांहृदिस्थांबद्ध्वाध्यायेत्। तथा। ध्यायेन्नित्यंमहेशंरजत
गिरिनिभंचारुचंद्रावतंसंरत्नाकल्पोज्ज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नम् ॥ पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंवि

श्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रम् । इतिध्यात्वावहन्नासापुटेक्रमेणहृदयाद्देवस्यतेजःपुष्पेसमानीयतत्पुष्पंमूर्तौसमर्प्य॥ॐह्रुंपिनाकपाण
येनमइत्यावाहनादिपंचमुद्राः प्रदर्श्यहुमित्यवगुंठ्यवमितिधेनुमुद्रयामृतीकृत्यपरमीकृत्यषडंगेन्यस्यमुकुलीकृत्यशिवेप्राणप्रतिष्ठांकुर्यात् ॥
अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुमहेश्वराऋषयः । ऋग्यजुःसामानिछंदांसि । चैतन्यदेवता । देवेप्राणप्रतिष्ठापनेविनियोगः । ॐ
आंह्रींक्रौंयं रं लं वं शं षं सं हं सः सोहंशिवस्यप्राणइहप्राणः । ॐ आंह्रींक्रौं यं रं० शिवस्यजीवइहस्थितः ॐ आंह्रींक्रौं यं रं०
शिवस्यसर्वेन्द्रियाणि ॐ आंह्रींक्रौं यं रं०शिवस्यवाङ्मनस्त्वक्चक्षुःश्रोत्रघ्राणजिह्वापाणिपादपायूपस्थाइहैवागत्यसुखंचिरंतिष्ठंतुस्वाहा
इति चत्वारिवागितिमंत्रेणवागुत्पत्तिंविभाव्यपूर्ववत्करकपिच्छिकांकृत्वाध्यायेत् ॥ बिभ्रद्दोर्भिःकुठारंमृगमभयवरौसुप्रसन्नोमहेशः सर्वा
लंकारदीप्तः सरसिजनिलयोव्याघ्रचर्मात्तवासाः ॥ ध्येयोमुक्तांगरागामृतरसकणिकादिप्रभःपंचवक्त्रस्त्र्यक्षःकोटीरकोटच्युच्चटितहिमरुचिः
सर्वदाचंद्रमौलिः ॥ इतिध्यात्वानमस्कारंकुर्यान्मंत्रमुदीरयन् । नमोस्तुस्थाणुरूपायज्योतिर्लिंगामृतात्मने॥ चतुर्मूर्तेश्वपुंच्छायाभासितां
गायशंभवे ॥ सर्वज्ञज्ञानविज्ञानप्रदानैकमहात्मने ॥ नमस्तेदेवदेवेशसर्वभूतहितेरत ॥ अनंतकांतिसंपन्नअनंतासनसंस्थित ॥ अनंत
कांतिसंभोगपरकांतनमोस्तुते ॥ वज्ररूपमहारूपसर्वरूपोत्तमोत्तम ॥ पशुपाशार्णवासीनदृढव्रतनमोस्तुते॥ स्वभावनिर्मलाकारसर्वोपाधि
विनाशन॥योगियोगिन्महायोगयोगीश्वरनमोऽस्तुते॥ प्राणप्रतिष्ठांकृत्वातुइदंस्तोत्रमुदीरयेत् ॥ लिंगस्तवंमहापुण्यंयःशृणोतिसदानरः ॥
नोत्पद्यतेससंसारेस्थानंप्राप्नोतिशाश्वतम् ॥ एवमेतंविधायाथपूर्वमूर्त्तिंपिडशेषतः ॥ अवशिष्टानिरचयेत्प्रतिष्ठांतंचपूर्ववत् ॥ कृत्वाथवा

पृथक्पिंडान्प्रथमंलिंगसंख्यया ॥ मंत्रैरादायनिर्माणप्रमुखंतुततश्चरेत् ॥ अवशिष्टमृदाशक्तिनिर्माणंप्रमुखंमनुः ॥ ॐ नमोभगवत्यैउमा
देव्यैशिवायैशिवप्रियायैनमइतिमंत्रः ॥ स्कांदेनमनुनातस्यनिर्माणप्रमुखंचरेत् ॥ ॐ ऐं हुं क्षं क्लीं कुमारायनमइतिमंत्रः ॥ विधायषण्मु
खंशक्तिवराभाकृतिमत्करम् ॥ मयूरवाहनंलिंगंपंक्त्यंतेचप्रतिष्ठितम् ॥ ततोगणेशप्रमुखान्स्वस्वमंत्रेणपूजयेत् ॥ तत्रपूर्वस्थापित
मध्येउंहुंशिवायनमः । मध्येसमर्पयामीतिनिवेद्य। ॐहुंपशुपतयेनमः स्नापयामीतिप्रतिलिंगंस्नानंसमर्प्यपुनःशिवायनमइतिदीपदानांतं
कृत्वावरपूजांपूर्वाद्यष्टदिक्षुभवायनमइत्यष्टमूर्तीःसंपूज्यनैवेद्यचमानीयवह्निवायुचंद्रबीजैर्विभाव्यमंत्रेणापोशनंकृत्वावामेनग्रासमुद्रांप्रदर्श्यद
क्षिणेनपंचप्राहुतीःप्रदर्शयेत् ॥ मुद्रालक्षणंगुरुमुखादवगंतव्यम् ॥ मध्येसुगंधजलमुत्तरापोशनंस्वटिकांचदत्त्वाकरोद्वर्तनमुत्तरापोशनंफ
लतांबूलदक्षिणादानादिसमर्प्यनिर्माल्येनचंडीगणेशकुमारशक्तीनांतत्तन्मंत्रैःपंचोपचारैःसंपूज्यमहादेवायनमइतिसंहारमुद्रया तत्तेजःस्व
हृदयमानीयनिर्माल्यंशिरसिचंदनंललाटेधृत्वायथासुखंविहरेदिति॥यस्तुपूजयतेभक्त्यालिंगंत्रिभुवनेश्वरम्॥ सस्वर्गराज्यमोक्षाणांक्षिप्रंभव
तिभाजनमिति॥इतिदिनकरभट्टकृतेशांतिसारेकाम्यप्रयोगेविशेषानुष्ठाननिरूपणम्॥( अथकामनाभेदेनसंख्याभेदः)दैशिकात्सकलंज्ञात्वा
कुर्याल्लिंगंफलप्रदं॥विद्यार्थीलिंगसाहस्रंधनार्थीचतदर्द्धकम्॥पुत्रार्थीसप्तसाहस्रंकन्यार्थीतुशतत्रयम्॥वंध्यालिंगायुतंकुर्यात्सर्वपापहरंशुभम्।
राज्यार्थीशतसाहस्रंकांतार्थीशतपंचकम् ॥ मोक्षार्थीकोटिगुणितंभूकामश्चसहस्रकम्॥रूपार्थीतुत्रिसहस्रंतीर्थार्थीद्विसहस्रकम्॥सुहृत्कामेसह
स्रंस्याद्वस्त्रार्थीशतमष्टकम् ॥ मारणार्थीसप्तशतंमोहनार्थीशताष्टकम् ॥ उच्चाटनपरश्चैवसहस्रंतुयथोक्तवत् ॥ स्तंभनंतुसहस्रेणजारणांचतदर्द्ध

वत्॥ निगडान्मुक्तिकामस्तुसहस्त्रंसार्द्धमीरितम् ॥ महाराजभयेपंचशतचोरादिसंकटे ॥ शतद्वयंचडाकिन्याभयेपंचशतंपरम् ॥ दरिद्रःपंच
साहस्रमयुतंसर्वकामदम् ॥ अथनित्यपूजनेसंख्या ॥ एकंपापहरंप्रोक्तंद्विलिंगंवाथसिद्धिदम् ॥ त्रिलिंगंसर्वकामानांकारणंपरमाद्भुतम् ॥ उत्त
रोत्तरमेवंस्यात्पूर्वोक्तगणनावधि ॥ कृत्वायथोक्तविधिनापापंनश्यतितत्क्षणात् ॥अथापरम्॥ लिंगानामयुतंकृत्वानराजभयमावहेत् ॥ सह
स्राणितथापंचनिगडान्मुच्यतेध्रुवम् ॥ कारागृहविमुक्त्यर्थमयुतंकारयेद्बुधः ॥ डाकिन्यास्तुभयेप्राप्तेसहस्रंकारयेत्तदा॥ सहस्राणांपंचशतंपु
त्रार्थीकारयेत्पुमान् ॥ कृत्वानित्यविधानेनसगुणंसुतमाप्नुयात॥लिंगानामयुतेनैवकन्यकासंततिंमुने॥एकलिंगार्चनान्नित्यमतुलांश्रियमाप्नु
यात् ॥ लक्षमेकंतुलिंगानांयःकरोतिनरोभुवि ॥ शिवःस्वयंभवेत्क्षिप्रंनात्रकार्याविचारणा ॥ कोटिरेकातुलिंगानांमोक्षदासर्वकामदा ॥
अर्चापार्थिवलिंगानांकोटियज्ञफलप्रदा ॥ अथकाम्यभेदेनफलभेदः ॥ मृद्भस्मगोमयैर्देवितथावालुकयापिवा ॥ कृत्वालिंगंसकृत्पू
ज्यवसेत्कल्पायुतंदिवि ॥ सर्वेषामेववर्णानांस्फाटिकंसर्वकामदम् ॥ सर्वदोषविमुक्त्यर्थमन्यथादोषमावहेत् ॥यत्फलंपाकयज्ञेषुहविर्यज्ञेषु
यत्फलम् ॥ एकाहात्तदवाप्नोतिलिंगार्चनरतःसदा । गवांशतसहस्रस्यसम्यग्दत्तस्ययत्फलम् ॥ दशाहात्तदवाप्नोतिसम्यक्लिंगार्चनेरतः ॥
वाजपेयशतैरिष्ट्वायल्लभंतेद्विजोत्तमाः ॥ विप्रोविंशतिरात्रेणरुद्रभक्त्यातदाप्नुयात् ॥ अश्वमेधसहस्रस्यसम्यगिष्टस्ययत्फलम् ॥
मासेनतदवाप्नोतिरुद्रलिंगार्चनेरतः ॥राजसूयसहस्रस्यसम्यगिष्टस्ययत्फलम्॥मासेनतदवाप्नोतिशिवलिंगार्चनेरतः ॥ सर्वतीर्थाभिषेकस्य
सर्वदानफलानिच॥सर्वयज्ञफलंचैवउपवासफलानिच॥सम्यगिष्टफलःसर्वक्षेमाचारःसमाधिना॥नवमासात्समासाद्यब्राह्मणोविजितेंद्रियः॥

सर्वमेतदवाप्नोतिलिंगेयोऽर्चयतेशिवम् ॥ यस्तुसंवत्सरंपूर्णंपूजयेदेकलिंगकम् ॥ तस्यतुष्टःप्रयच्छामिगाणपत्यंनसंशयः ॥ माघेमासिस
मुद्युक्तस्त्रिसंध्यंयोऽर्चयेच्छिवम् ॥ लभेत्षण्मासिकंपुण्यंमासेनैवनसंशयः ॥ यथामाघेतथाऽऽषाढेकार्तिकेतुविशेषतः ॥ त्रिषुपुण्यंसमंज्ञे
यंमासेष्वेतेषुयत्फलम् ॥ यस्तुपूजयतेनित्यंलिंगेत्रिभुवनेश्वरम् ॥ सस्वर्गराज्यमोक्षाणांक्षिप्रंभवतिभाजनम् ॥ अथोद्यापनंलैंगे ॥
अथातःसंप्रवक्ष्यामिप्रतिष्ठांलैंगकस्यच ॥ येनयस्यविधानेनव्रतंसंपूर्णतामियात् ॥ सहस्रंवाथलक्षंवापूजयित्वायथाविधि ॥ कोटिंवाथवि
धानेनकामनांतेथवानरः ॥ समाप्तेतुव्रतेराजन्विनिर्मायमहेश्वरम् ॥ स्थापयित्वाशुभेस्थानेसंपूज्यार्घ्यादिभिःक्रमात् ॥ गंधमाल्यैस्तथाधूपै
र्नैवेद्यैर्विविधैस्तथा ॥ हिरण्यंगांचवासांसिशिवायविनिवेदयेत् ॥ दण्डवत्प्रणतोभूत्वास्तुत्वाचैवविशेषतः ॥ एकाग्रःप्रणतोभूत्वातावन्मंत्रमु
दीरयेत् ॥ कंटकोपहतैःपुष्पैरशस्तैर्भावदूषितैः ॥ केशकीटापविद्धैश्चपूजितोऽसिमयाप्रभो ॥ अन्यथासक्तचित्तेनक्रियाहीनेनवाप्रभो ॥ मनो
वाक्कायदुष्टेनपूजितोऽसित्रिलोचन ॥ पादोपहतपात्रेणकृतमर्घ्यादिकंमया ॥ तामसेनचभावेनतत्क्षमस्वममप्रभो ॥ मंत्रेणाक्षरहीनेनपुष्पेणवि
कलेनच ॥ पूजितोसिमयादेवतत्सर्वंक्षम्यतांमम ॥ व्रतसम्पूर्णतांयातुफलंचाक्षय्यमस्तुमे ॥ एवंस्तुत्वामहादेवंनमस्कृत्यविसृज्यच ॥ नैवेद्यादित
थावस्त्रंभस्मांगायनिवेदयेत् ॥ ब्राह्मणान्भोजयित्वाथदद्यात्तेभ्यश्चदक्षिणाम् ॥ यथाशक्त्यनुवित्तेनहिरण्यंव्रतदक्षिणा ॥ प्रतिष्ठाउद्यापनमि
त्यर्थः ॥ विनिर्मायसुवर्णादिनाफलादिपरिमाणेनेत्यर्थः ॥ शुभइतिकलशस्थापनमर्थसिद्धम् ॥ दक्षिणांयथाशक्तिधेनुवित्तेनहिरण्यंव्रतदक्षि
णा ॥ अथापरप्रकारोभविष्ये ॥ नारदउवाच ॥ कथमुद्यापनंचास्यकिंप्रकारंमहाफलम् ॥ कथयाशुमहादेवलोकानामुपकारक ॥ ईश्वरउवाच ॥

येशिवंसमुपासाद्यपूज्यप्राप्तमनोरथाः ॥ तत्प्रमाणंतुसौवर्णंयथाशक्त्यथवापुनः ॥ रौप्यंताम्रमयंचस्यादष्टम्यांचयथोक्ततः ॥ चतुर्द
श्यामभद्रायांसोमेनाथंप्रपूजयेत् ॥ उपोष्यप्रथमेह्नेवसंपूज्यपरमेश्वरम् ॥ चतुर्दश्यष्टमीयुक्ताअमाचनवमीयुता ॥ पारणंतत्रकर्तव्यंरौद्रयुक्ते
पुनर्वसौ ॥ पंचैकादशवाद्वाभ्यामधिकाविंशतिःपरा॥ चत्वारिंशच्चतुर्भिश्चब्राह्मणान्भोजयेत्ततः ॥ आचार्यंप्रथमंचार्च्यब्रह्माणंचततःपरम् ॥
गणेशमृत्विजादींश्चपूजयेद्विधिनाततः ॥ वस्त्रैश्चदक्षिणाभिश्चपूजयेच्छिवतत्परान् ॥ मृत्युंजयेनमंत्रेणअग्निंहुत्वास्वशक्तितः ॥रुद्रेणात्यथवा
हुत्वानमोमंत्रेणवापुनः ॥ नमोमंत्रोनमोभवायचेति । संख्याचयदारुद्रेणतदाऽतिरुद्रःप्रतिमंत्रपक्षेणयदामृत्युंजयमंत्रोनमोमंत्रोवाकृतलिंगद
शांशेनतत्पूजयायुक्तम्॥ नैवेद्यंदक्षिणास्तोत्रगीतवाद्यसमन्वितम्॥मंत्रेणानेनविधिवदाचार्यायनिवेदयेत् ॥यथासुराणांत्रिपुरंचदग्धमेकेषुणा
लोकहितार्थमीश ॥ तद्रूपदानादहमप्यशेषैर्दोषैर्विमुक्तोहितथाभवेयम् ॥ तथाकुरुत्वंशरणंप्रपन्नेमयिप्रभोदेववरप्रसादम् ॥ प्रणिपत्यमहा
देवंनमस्कुर्यात्पुनःपुनः ॥ सोद्यापनंव्रतंकृत्वाप्राप्नुयात्परमंपदम् ॥अथपंचाक्षरस्यऋषिन्यासध्यानानि ॥अस्यशिवपंचाक्षरमंत्रस्य । वाम
देवऋषिः । पंक्तिच्छंदःसदाशिवःपरमात्मादेवताइष्टसिद्ध्यर्थंजपेविनियोगः।मूलेनकरशुद्धिंकृत्वा । तत्पुरुषाघोरसद्योजातवामदेवेशानान्यं
चब्रह्ममंत्रान्तर्जन्यादिषुअंगुष्ठांतासुपंचस्वंगुलीषुन्यसेत्, । एवंहृदयादौ । ॐसर्वज्ञशक्तिधाम्नेअंगुष्ठाभ्यांनमः । ॐनंतृप्तिशक्तिधाम्नेतर्जनी
भ्यांनमः । ॐमंअनादिबोधशक्तिधाम्नेमध्यमाभ्यां० । ॐशिंस्वतंत्रशक्तिधाम्नेअनामिकाभ्यांन०. । ॐवांनित्यमलुप्तशक्तिधाम्नेकानिष्ठिका
भ्यांन०॥ ॐयंअनंतशक्तिधाम्नेकरतलकरपृष्ठाभ्यांनमः । एवंहृदयादौ । ॐनंतत्पुरुषतर्जनीभ्यां० । ॐमंअघोरमध्यमाभ्यां० ।ॐशिंस

द्योजातानामिकाभ्यां०। ॐवांवामदेवकनिष्ठिकाभ्यां०॥ ॐयंईशानांगुष्ठाभ्यां०। एवंहृदयादौ। ॐनंतत्पुरुषायनमः पूर्वमुखे। ॐमंअघो
राय०दक्षिणमुखे। ॐशिंसद्योजाताय० पश्चिममुखे। ॐवांवामनाय०उत्तरमुखे। ॐयंईशानायनमः ऊर्ध्वमुखे। (अथध्यानम्।) बिभ्रद्दो
र्भिः कुठारंमृगमभयवरौसुप्रसन्नोमहेशः सर्वालंकारदीप्तः सरसिजनिलयोव्याघ्रचर्मोत्तरीयः॥ ध्येयोमुक्तांगरागामृतरसकणिकाद्रिप्रभः पंचव
क्त्रस्त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिःकलोत्तुंगमौलिः॥ एवंध्यात्वायथाशक्तिजपेत्।इतिदिनकरभट्टकृतेशांतिसारेलिंगोद्यापनविधिः॥
(अथप्रयोगः)। अष्टम्यांचचतुर्दश्यांवाभद्रारहितायांपूर्वविद्धायांपुनर्वसुयुक्तार्द्रायांसोमेवा॥ कर्तादेशकालौसंकीर्त्यकृतस्यलक्षादि
लिंगपूजाकर्मणः संपूर्णतासिद्ध्यर्थंलिंगोद्यापनंकरिष्ये। इतिसंकल्प्यगणेशपूजनादिनांदीश्राद्धांतेआचार्यब्रह्मसदस्यान्पंचवाएकादशवा
द्वाविंशतिवाचतुश्चत्वारिंशद्वाऋत्विजोवृणुयात्। ततः आचार्यः कुंडमंडपपक्षेमंडपेतदभावेन्यत्रवासर्षपविकिरणभूमिप्रोक्षणेकृत्वामं
डपपक्षेमंडपपूजांकृत्वामध्यवेद्यांतदभावेन्यत्रवालिंगतोभद्रेमंडलदेवताआवाह्य। तत्ररौप्यंताम्रंमृन्मयंवाकलशंसंस्थाप्यतत्रपलतदर्द्धतद
र्द्धेनशक्त्यावासुवर्णरौप्यताम्रान्यतमनिर्मितांउमामहेश्वरप्रतिमामग्न्युत्तारणपूर्वकंसंपूज्यपूजांतेहिरण्यगोवस्त्रत्रयंचशिवायनिवेद्यप्रदक्षिणान
मस्कारौकृत्वाप्रार्थयेत्। कंटकोपहतैःपुष्पैरशस्तैर्भावदूषितैः॥ केशकीटापविद्धैश्चपूजितोसिमयाप्रभो॥ अन्यथासक्तचित्तेनक्रियाहीने
नवाप्रभो॥ मनोवाक्कायदुष्टेनपूजितोसित्रिलोचन॥पादोपहतपात्रेणकृतमर्घ्यादिकंमया॥तामसेनचभावेनतत्क्षमस्वममप्रभो॥ मंत्रेणाक्षरही
नेनपुष्पेणविकलेनच॥ पूजितोसिमयादेवतत्सर्वंक्षम्यतांमम॥ व्रतसपूर्णतांयातुफलंचाक्षय्यमस्तुमे॥ मंडपपक्षेग्रहवेद्यांग्रहान्संस्थाप्यम

ध्यवेदीस्थापितकलशोपरिपूर्णपात्रेवस्त्रलिखितरुद्रयंत्रंसंस्थाप्यतत्रमध्येउमामहेश्वरप्रतिमांसद्योजातादियंत्रदेवताश्चावाह्यपूजयेत् ॥ ततो
गीतवाद्यादिभिर्जागरणेननिशामतिवाह्यप्रातःशुचिर्देशकालौस्मृत्वाउद्यापनहोमंकर्तुंस्थंडिलोल्लेखनादिकरिष्यइतिसंकल्प्य॥उल्लेखनाद्य
ग्निस्थापनांतेसमिद्द्वयमादायचक्षुषीआज्येनेत्यंतेऽत्रप्रधानं रुद्रंमृत्युंजयमंत्रेणनमोभवायेतिमंत्रेणवाअयुतसहस्राष्टशतान्यतमसंख्याभिस्ति
लाज्याहुतिभिः ।रुद्रपक्षे। अतिरुद्रेणमहारुद्रेणवाग्रहादीन्यथाशक्तिसंख्याकाभिः समिच्चर्वाज्याहुतिभिः । शेषेणस्विष्टकृतमित्यादिबलिपू
र्णाहुत्यंतेकलशोदकेनाभिषिक्तोयजमानउमामहेश्वरप्रतिमांसंपूज्यपूर्वोक्तमंत्रैःप्रार्थयित्वा । इमांउमामहेश्वरप्रतिमांआचार्याय । यथासु
राणांत्रिपुरंचदग्धमेकेषुणालोकहितार्थमीश ॥ त्वद्रूपदानादहमप्यशेषैर्दोषैर्विमुक्तोहितथाभवेयम् ॥ तथाकुरुत्वंशरणंप्रपन्नेमयिप्रभो
देववरप्रसादमितिमंत्रेणदद्यात् ॥ ततोयथाशक्तिदक्षिणांदद्यात् । शिवायनिवेदितंवस्त्रंभस्मांगायदद्यात् । ततोधेनुंहिरण्यंआचार्यायअ
न्येभ्यश्चयथाशक्तिदक्षिणांदद्यात्ततोग्रहादीन्विसृज्यभूयसींसंकल्प्याग्निंविसृज्ययथाशक्तिब्राह्मणभोजनंसंकल्प्यकर्मेश्वरार्पणंकुर्यादिति ।
इतिश्रीमन्मीमांसकदिनकरभट्टकृतेशांतिसारेसोद्यापनालिंगपूजाप्रयोगः ।( अथनवचंडीशतचंडीसहस्रचंडीविधिः)। मार्कण्डेयपुराणेडा
मरतंत्रेच । शृणुराजन्प्रवक्ष्यामिचंडिकाक्रममुत्तमम् ॥ आश्विनस्यसितेपक्षेप्रतिपत्सुयथाक्रमम् ॥ बहुवचनेननवम्यंतंतिलतैलेनस्नानम
सुस्नातस्तिलतैलेनपूर्वाह्णेचनृपोत्तम् ॥ पुण्याहवाचनंकृत्वाद्विजांश्चैवप्रपूजयेत् ॥ ततश्चकारयेद्वेदिंसप्तधान्ययुतांनृप ॥ स्थापयेत्पूर्णकल
शंपंचरत्नसमन्वितम् ॥ वस्त्रेचारक्तकेचैवसंलिखेद्यंत्रमुत्तमम् ॥ गर्भेसंस्थापयेद्देवींचंडिकांहेमरूपिणीम् ॥ पंचामृतैश्चसुस्नातांचर्चितांगंध

कुंकुमैः॥ तथारक्तेनवस्त्रेणप्रसन्नांभक्तवत्सलाम् ॥ गुरूपदिष्टविधिनापूजयित्वाप्रयत्नतः ॥ यंत्रोद्धारःप्रयत्नेनज्ञातव्योस्यनृपोत्तम ॥ चतुरस्रा
ष्टपत्रंचत्रिकोणंसंलिखेत्ततः ॥कुंकुमागरुकर्पूरैश्चंदनैश्चसितासितैः॥पंचकैःकालिकाभिश्चतथाकस्तूरिकादिभिः ॥ चतुरस्रेपूर्वदिशिन्यसेदुड्डा
णपीठकम् । नाथमुंडेश्वरंचैवमुंडाख्यांपादुकांतथा ॥ न्यसेन्मातृकोपपीठमाग्नेय्यांपृथिवीपते ॥ मातृकेश्वरोपनाथंचमातृकाख्योपपादुकां
पीठंजालंधररंचैवदक्षिणेतुतथैवच ॥ नाभंज्वालामुखंचापिज्वालाख्यांपादुकांतथा॥कोल्हापुरोपपीठंचनैर्ऋत्यांविन्यसेन्नृप॥ कोल्हारेश्वरोप
नाथंकोल्हाराख्योपपादुकाम्॥पूर्णगिरीशपीठंचपश्चिमेस्थापयेन्नृप॥नाथंपूर्णेश्वरंवापिपूर्णाख्यांपादुकांतथा ।संहाराख्योपपीठंचवायव्यांचप्र
पूजयेत्॥संहाराख्योपनाथंचसंहाराख्योपपादुकाम्॥उत्तरायांतथादेशेओणपीठंप्रपूजयेत्।ओणकेश्वरनाथंचओणाख्यांपादुकांतथा। कामरू
पोपपीठंचईशान्यांपूजयेत्ततः॥कामेश्वरोपनाथंचकामाख्यांचोपपादुकाम् ॥ आग्नेय्यामग्निसुमुखंनैर्ऋत्यांप्रेतवाहनम्॥ज्वालामुखंतुवाया
व्यांधूम्राक्षंत्वीशतस्तथा ॥ कोणेचतुष्टयेवापिवेतालानांचतुष्टयम्॥चक्रेअष्टदलेचैवशक्त्यष्टकमुदाहृतम्॥भैरवाष्टकंचततोलोकपालाष्टकंत
था॥ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥वाराहीचैवमाहेंद्रीचामुंडाचंडिकातथा॥असितांगोरुरुश्चैवचंडःक्रोधस्तथैवच॥उन्मत्तभैरवश्चै
वकपालीभीषणस्तथा॥संहारभैरवश्चेतिभैरवाष्टकमीरितम्।इंद्रोग्निश्चयमश्चैवनिर्ऋतिर्वरुणस्तथा ॥ वायुःसोमस्तथेशानोलोकपालाःप्रकी
र्तिताः॥गुरुंपरमगुरुंचपरमेष्ठिगुरुंतथा॥गणेशहरिहरंचैवषड्दलेचैवपूजयेत्॥बाह्येत्रिकोणकेचक्रेप्रधानस्यचपृष्ठतः॥ पूजयेच्चमहाकालींरुद्रो
गौर्यातथासह ॥ महालक्ष्मींहृषीकेशोलक्ष्म्याचसहितस्तथा ॥ सरस्वत्यापृष्ठदेशेविरिंचिस्त्वनयासह ॥ कालश्चदक्षिणेपूज्योरुद्रश्चापिनृ

पात्मज ॥ सिंहश्चापितथाभक्त्यापूजनीयःप्रयत्नतः ॥ मृत्युर्वामेचविजयोगणेशोमहिषस्तथा ॥ मातृनामततश्चापित्रिकोणेबाह्यतस्तथा ॥ मध्येत्रिकोणकेचक्रेप्रधानंचंडिकांनृप ॥ अधिदेवींमहाकालींदक्षिणेचैवपूजयेत् ॥ प्रत्यधिदेवतांचैववामभागेसरस्वतीम् ॥ पूजयेच्चनृपश्रेष्ठवेदगर्भांमानिंदिताम् ॥ इतियंत्रोद्धारक्रमः ॥ जयाचविजयाचैवजयंतीअपराजिता ॥ दिव्ययोगीमहायोगीसिद्धयोगीगणेश्वरी ॥ प्रेताशीडाकिनीकालीकालरात्रिस्तथैवच ॥ टंकाक्षीरौद्रवेतालीहुंकारीऊर्ध्वकेशिनी ॥ विरूपाक्षीचशुष्कांगीनरभोजिनिकातथा ॥ फट्कारीवीरभद्राचधूम्रांगीकलहप्रिया ॥ राक्षसीघोररक्ताक्षीविश्वरूपीभयंकरी ॥ चंडमारीचचंडीचवाराहीमुंडधारिणी ॥ भैरवीचतथोर्ध्वाक्षीदुर्मुखीप्रेतवाहिनी ॥ खट्वांगीचैवलंबोष्ठीमालिनीमत्तयोगिनी ॥ कालीरक्ताचकंकालीतथाचभुवनेश्वरी ॥ त्रोटिकीचमहामारीयमदूतीकरालिनी केशिनीमेदिनीचैवरोमगंगाप्रवाहिनी ॥ बिडालीकार्मुकालाक्षीजयाचाधोमुखीतथा ॥ मुंडाग्रधारिणीव्याघ्रीकांक्षिणीप्रेतभक्षिणी ॥ धूर्जटीविकटीघोरीकपालीविषलंबिनी ॥ चतुःषष्टिस्तुयोगिन्यःपूजनीयाःप्रयत्नतः ॥ इतियंत्रोद्धारः ॥ (अथमंत्रोद्धारः) तत्रैव ॥ राजोवाच ॥ पुनस्त्वांपरिपृच्छामिचंडिकापूजनंशुभम् ॥ नित्यंचंडयादिजाप्यस्यविधानंचद्विजोत्तम ॥ ऋषिरुवाच ॥ परिपृच्छसिभोराजन्चंडिकापूजनादियत् ॥ तदहंसंप्रवक्ष्यामियथावदनुपूर्वशः ॥ आदौपूज्यामहालक्ष्मीःकर्तृकर्त्रीसदोदिता ॥ यन्नमस्कारतोयज्ञाभवंतिसुकृताःसकृत् ॥ त्रैलोक्यत्रामरंमंत्रंशृणुभूपनवाक्षरम् ॥ यस्यविज्ञानमात्रेणपरमैश्वर्यवान्नृप ॥ ऐंबीजमादींदुसमानदीप्तिंह्रींसूर्यतेजोद्युमतिंद्वितीयम् ॥ क्लींमूर्तिवैश्वानरतुल्यरूपंतृतीयमानंत्यसुखायचिंत्यम् ॥ चांशुद्धजांबूनदकांतिहृद्यंपुंपंचमंरक्ततरंप्रकल्प्यम् ॥ डांषष्ठमूर्ध्वार्त्तिहरंसुनीलंयैंसप्तमंकृष्णतरंरिपुघ्न

म्॥ विंपाडुरंचाष्टमनादिसिद्धयैचेंधूम्रवर्णंनवमंविशालम्॥ एतानिबीजानिनवाक्षरस्यजंतुःप्रदद्युःसकलार्थसिद्धिम् ॥ नवबीजनिबद्धोयंमंत्र
स्त्रैलोक्यपावनः ॥एतंजपतियोमंत्रीफलंतस्यवदाम्यहम् ॥ वश्याभवंतिकामिन्योराजानोऽनुचराइव ॥ नहस्तिसर्पदावाग्निचौरशत्रुभयंभ
वेत्॥ सर्वाःसमृद्धयस्तस्यजायंतेचंडिकाज्ञया ॥ नश्यंतिदारुणारोगाःसत्यंसत्यंनसंशयः ॥ सहस्रमस्यमंत्रस्यनवबीजस्ययोजले ॥ नाभि
मात्रेजपेत्सम्यक्कवित्वंलभतेध्रुवम् ॥ अयुतंनवतत्त्वस्यराजबंधनसंकटे ॥जपेत्तदातुमुच्येतयोमंत्रीचंडिकाज्ञया॥ अस्मिन्नवाक्षरेमंत्रेमहाल
क्ष्मीर्व्यवस्थिता ॥ तस्मात्सुसिद्धःसर्वेषांसर्वदिक्षुप्रदीपकः ॥ मंत्राणांपल्लवोन्यासोमंत्राणांप्रणवःशिरः ॥ शिरःपल्लवसंयुक्तोमंत्रः
कामदुघःफलः।न्यासंविनाभवेन्मूकःसुप्तःस्यादासनंविना।पल्लवेनविनामंत्रोनग्नःसंपरिकीर्तितः ॥शिरोहीनोमृतःप्रोक्तोवृथामंत्रोगुरुंविना॥
हस्तोदुष्टायदत्तोयोनिर्वीर्यश्चाधिकाक्षरः ॥ अनंतरंयेनबीजेनव्याप्तंकीलिलउच्यते ॥ यस्यजाप्यंशृणोत्यन्यःसमंत्रःकूटउच्यते ॥ ऋषिदैव
तच्छंदोभिःपरित्यक्तोभुजंगमः ॥ मूकःसुप्तोऽथनग्नोयःशिरोहीनोवृथाहतः ॥ भुजंगःकीलिलःशून्योहतमंत्रोवृथाफलः ॥ पत्नींविसर्जयेन्मं
त्रीयदितत्सिद्धिमिच्छति ॥ नमोंतःशांतिकेपुष्टौप्रणिधानेनकीर्तितः॥वश्यकर्षणहोमेषुस्वाहांतःसिद्धिदायकः ॥ वौषट्पल्लवसंयुक्तोमंत्रः
पुष्ट्यादिसाधकः ॥ हुंकारपल्लवोपेतोमारणेब्राह्मणंविना ॥यंत्रंभंजनकार्येषुसुघोरभयनाशने ॥ वषडंतोमहाकल्पोग्रहलाभादिनाशनः ॥
खंडनोच्चाटनेबंधेमंत्रःफट्पल्लवान्वितः॥ॐकारमुखरौमंत्रौवेदागमसमुद्भवौ ॥पल्लवोस्त्वागमेमंत्रेवैदिकेनास्तिपल्लवः॥ पल्लवेनविनाजाप्यो
मंत्रोवेदसमुद्भवः ॥ ननग्नःकीर्त्यतेयस्मान्नैश्वर्यंपरिधानवत् ॥नद्यादौविधिवत्स्नात्वानाभिमात्रेंऽभसिस्थितः ॥ दशांजलिभिरात्मानंनवबी

जनपावयेत् ॥ कृत्वामाध्याह्निकंसर्वमुदकांतेसमाहितः ॥ तर्पणायमहालक्ष्म्याःषडंगंन्यासमारभेत्॥मायाबीजंचंडिकायैहृदयादिनमोन्त
कम् ॥ एवंन्यासक्रियांकृत्वाध्यात्वामहिषमर्दिनीम् ॥ चंडिकांत्रिजगद्धात्रींब्रह्माद्यमरवंदिताम् ॥ नवबीजस्यमंत्रांतेचंडिकातृप्यतामिति ॥
अंजलीनामष्टशतंसुगन्धकुंकुमान्वितम्॥सेक्तव्यंचतदर्द्धेनतदर्द्धेनाथवान्वहम्॥प्रविश्यदेवतागारंवितानोपरिशोभितम्॥पुष्पप्राकारशोभा
ढ्यंपूजाद्रव्यैःप्रपूजितम् ॥ बहुदीपप्रकाशाढ्यंदिव्यैर्धूपैःसुधूपितम् ॥ तत्रोक्तविधिनाराजन्पूजयित्वाहरीश्वरौ ॥ चतुरस्रेसमेशुद्धेसर्वदोष
विवर्जिते ॥ लिखेदष्टदलंपद्मंचन्दनागरुकुंकुमैः ॥ पद्ममध्येलिखेच्चक्रंषट्कोणंचण्डिकामयम् ॥ षट्कोणचक्रमध्यस्थमाद्यबीजत्रयंन्यसे
त् ॥ गुदमेढ्रांतरस्थानेपदमूलेनपीडनम् ॥ वामपादोपरिस्थाप्यदक्षिणंचरणंदृढम् ॥ एतत्पद्मासनंनामजरामरणवार्जितम् ॥ मौनीबद्धासनो
मंत्रीज्ञानीनिश्चलविग्रहः ॥ अनाहताविशुद्धाज्ञेभेदयित्वायथाक्रमम् ॥ स्वशरीराद्विनिर्गत्यसूक्ष्मरूप्यूर्ध्वमागतः ॥ नमोनंदीसमुत्तीर्यस्थि
त्वास्वकरसंपुटे ॥ शोधयेत्पंचभूतानिज्ञात्वावर्णक्रमंपृथक् ॥ पृथिव्यापोनलोवायुःखंभूतानामयंक्रमः ॥ पृथ्वीपितासितंवारिरक्तवर्णोहुता
शनः ॥ तेषांकृष्णतरोवायुराकाशंनिर्मलंसदा ॥ मनसारोधयेद्बुद्धिंबुद्ध्यासंशोधयेन्मनः ॥ तद्द्वयंपरमंशुद्धमात्मानंसम्यगीरितम् ॥
स्वदेहंब्रह्ममार्गेणयोगयुक्त्यासमाविशेत् ॥ सुषुम्णायांसमाश्रित्यतिष्ठमानमनाहते ॥ आदौसंशोधयेत्पृथ्वींशोषदाहनवामृतैः ॥ पुन
र्वारिपुनस्तेजःपुनर्वायुंसुपावयेत् ॥ बीजैश्चतुर्विधैर्वायोरग्नेर्वरुणशक्रयोः ॥ यमिदंशोषकंबीजंरमिदंदाहनंमहत् ॥ लमाप्लवनबीजंच
वमैंद्रममृतात्मकम् ॥ एवंशुद्धानिभूतानिभवंतिनृपनंदन ॥ व्योम्न्येतच्छोधकंनास्तियतस्तंन्निर्मलंशिवम् ॥ करालयेत्स्वकं

देहंप्रविश्यात्मविशोधनम् ॥ कर्तव्यंयोगमाश्रित्यसर्वकामविवर्जितम् ॥ भूतशुद्धिमिमांकृत्वायःकुर्याच्चंडिकार्चनम् ॥ तस्याचिरे
णकालेनमहालक्ष्मीःप्रसीदति ॥ निकुंबनादधःशक्तेरूर्ध्वंशक्तेर्निपातनात् ॥ मध्यशक्तेःप्रबोधाच्चप्राणायामपरोभवेत् ॥ इति
मंत्रोद्धारः । ( अथपूजाजपहोमविधिस्तत्रैव ) । ऋषिरुवाच ॥ पूजानांजपहोमानांसर्वमंगलकर्मणाम् ॥ न्यासंब्रवीमिभूपालसर्वै
श्वर्यसुसिद्धये ॥ स्थिरासनेस्थिरोभूत्वानिरहंकारनिर्ममः ॥ स्वगुरोश्चरणौनत्वामहालक्ष्मींचपूर्ववत् ॥ ध्यात्वापूर्णंमनःकृत्वाततोन्यासं
समाचरेत् ॥ मातृकान्यासविज्ञानीशिरःप्रथमपल्लवे ॥ प्रथमंविन्यसेन्मूर्ध्निललाटेतत्परंन्यसेत् ॥ नेत्रयोर्द्वितयेभूपद्वयमन्यत्कपोलयोः ॥
श्रुत्यांस्वरद्वयंन्यस्यद्वयंनासापुटद्वये ॥ ओष्ठयोर्विन्यसेद्द्वंद्वंद्वंद्वंदशनलेखयोः ॥ जिह्वायांविन्यसेदेकंतालुस्थानेचतत्परम् ॥ विन्यसे
त्प्रथमंवर्गंभूपतेदक्षिणेकरे ॥ वामेपरंन्यसेद्वर्गंतृतीयंदक्षिणेन्यसेत् ॥ चतुर्थंवामपादेचपंचमंहृदयेन्यसेत् ॥ शेषाक्षराणांनवकंविन्य
सेत्सर्वधातुषु ॥ त्वचिरक्तेचमांसेचस्नायुबस्तिषुपंचमम् ॥ मज्जामेदःसुपुष्टेषुद्वितीयंतत्परेन्यसेत ॥अयंतुमातृकान्यासःप्रथमःपरिकीर्तितः॥
सांगवेदसमोभातिभूषितोयेनमांत्रिकः ॥ अथसारस्वतोन्यासोद्वितीयस्तेप्रकथ्यते ॥ उक्तमंत्रस्यसर्वस्यबीजानांदेवतार्चने ॥ आद्यबीजत्रये
कृत्वाप्रणवादिनमोन्तकम् ॥ कनिष्ठिकादिसर्वासुपंचस्वंगुलिषुन्यसेत् ॥ करमध्येचपृष्ठेचस्फारेचमणिबंधने॥ हृदिमूर्ध्निशिखायांचकवचेच
क्षुरस्त्रयोः॥बंधेषुसंप्रयोक्तव्यंसर्वदिक्षुपृथक्पृथक्॥भृशंसारस्वतोन्यासोमरुन्यस्मिन्कृतेसकृत्॥ त्वरितंविलयंयातिजाड्येप्राक्पापसंभवः॥
तृतीयंतेप्रवक्ष्यामिन्यासंमातृगणान्वितम् ॥ मायाबीजेनसंयुक्ताब्रह्माणीपातुपूर्वतः ॥ एवमीशानपर्यंतमष्टौमातृःप्रयोजयेत् ॥ ब्राह्मीमाहेश्व

रीचैवकौमारीवैष्णवीतथा ॥वाराहीनारासिंह्यैंद्रीचामुंडाचाष्टमातृकाः ॥ ऊर्ध्वंव्योमेश्वरीपातुसप्तदीपेश्वरीभुवि ॥ नागेश्वरीचपातालेन्य
सेत्कर्तासुनिर्भयः ॥ जायतेत्रिषुलोकेषुसर्वदेवप्रियोयतः ॥ षड्देवीनांपुनर्न्यासंचतुर्थंत्वेवभूमिप ॥ पूर्वांगेनंदजायातुकमलांकुशमंडिता॥
खड्गपात्रकरापातुदक्षिणेरक्तदंतिका॥पुष्पपल्लवमूलादिहस्ताशाकंभरीपरम्॥ धनुर्बाणधरादुर्गावामंदुर्गार्तिहारिणी ॥ शिरःपात्रकराभीमाम
स्तकाच्चरणावधि ॥ चरणाच्चशिरोयावद्भ्रामरीचित्रकांतिभृत्॥अनेनन्यासयोगेनजरामरणवर्जितः॥निर्भयश्चाग्निवारिभ्योमांत्रिकस्तत्क्षणा
द्भवेत्॥पादाभ्यांनाभिपर्यन्तंब्रह्मापातुसमंततः।नाभेर्विशुद्धिपर्यन्तंपातुनित्यंजनार्दनः॥विशुद्धेस्तुशिरोयावत्पातुरुद्रस्त्रिलोकगः॥हंसःपाद
द्वयंपातुवैनतेयःकरद्वयम्॥चक्षुषीवृषभःपातुसर्वांगानिगजाननः॥परावरंपरेपातुसर्वानन्दमयोहृदि ॥ अभेद्यःपंचमोन्यासःकर्तुःकामदुघः
स्मृतः ॥मध्यंपातुमहालक्ष्मीरष्टादशभुजासती ॥ऊर्ध्वंसरस्वतीपातुभुजैरष्टभिरूर्जिता ॥ अधःपातुमहाकालीत्रिंशल्लोचनमंडिता ॥ सिंहो
हस्तद्वयंपातुपरहंसोक्षिमंडलम् ॥ महिषेणसमायुक्तःप्रेतःपातुपदद्वयम्॥ सर्वांगानिमहेशानश्चंडिकाचपरस्परम् ॥ वैकुंठःसुखकृन्न्यासःषष्ठ
स्त्वांप्रवदाम्यहम् ॥ ब्रह्मतःपायुपर्यन्तंनवद्वारेषुविन्यसेत्॥उक्तमन्त्रस्यबीजानिप्रणवाद्यंपृथक्पृथक्॥पायुतोब्रह्मपर्यंतंविन्यसेत्तानिपूर्ववतः॥
न्यासद्वयमिदंप्रोक्तंसुगोतंसप्तमाष्टकम् ॥ महाभयमहाव्याधिशत्रुचौरविघातकम् ॥ महारक्षोगणानांचकल्पांतेनियमोभवेत् ॥पूर्वांगंविन्य
सेन्मंत्रंमस्तकाच्चरणावधि ॥ दक्षिणेपृष्ठतोवामेतथालोमविलोमयोः ॥ अस्मिन्न्यासेकृतेराजन्नवमेदेववद्भवेत्॥हृन्मस्तकशिखास्त्रेनंकवचे
लोचनद्वये ॥ अत्रेसर्वासुकाष्ठासुपृथङ्मंत्रंविनिक्षिपेत्॥ नमोंतंप्रथमेप्रोक्तंस्वाहांतेतदनंतरम् ॥ वौषडंतंचहूंमंतंवषडंतंफडंतकम्॥ पूजयेत्त्रै

लोक्यदेवानांदशमेस्मिन्कृतेकृती ॥ दशन्यासप्रविष्टोवैयद्वदेतत्तदाभवेत् ॥ यत्पश्यतियथादृष्टचातद्वदेत्ताहृशंकिल ॥ तेनसार्द्धंमहा
लक्ष्मीःस्वयंवदतियत्फलम् ॥ भविष्यमभविष्यंवातंपालयतिपूर्ववत् ॥ ब्रह्मविष्णुशिवास्त्वेनंपालयन्त्यात्मवत्सदा ॥ त्रिषुलोके
षुपश्यंतिनतस्मादधिकंक्वचित् ॥ दशन्यासैःकृतैःपापंदशजन्मार्जितंक्षणात् ॥ सुतीव्रंविलयंयातितामिस्रंरविभिर्यथा ॥ सन्नद्धो
दशभिन्यासैश्चंडीसप्तशतींजपेत् ॥ असाध्यंसाधयत्याशुकायलोकत्रयेपियत् ॥ माधवेमासिमध्याह्नेतपतेनिर्मलंरविः ॥ दिवांधा
स्तंनपश्यंतिसर्वदासर्वथायथा ॥ चंडीसप्तशतीजाप्येदशन्यासैःसमुज्ज्वलम् ॥ त्रैलोक्येसर्वदुष्टास्तंनपश्यंतिसदायथा ॥ चंडीसप्तशती
जाप्येसरहस्येनृपोत्तम ॥ तत्सर्वंतेप्रवक्ष्यामिब्रह्मविष्णुशिवैःकृतम् ॥ अंगेषुसर्वसिद्ध्यर्थंवज्रामृतमनःसुखम् ॥ अस्मिन्न्यासेदशश्लोका
ब्रह्मविष्णुशिवोदिताः ॥ खड्गिनीशूलिनीश्लोकमाद्यंकृष्णतरंन्यसेत् ॥ नाभ्यादिचरणांतंतुन्यासंशत्रुविनाशनम् ॥ शूलेनपाहिनोदेविपुनः
श्लोकचतुष्टयम् ॥ बालार्कसदृशंन्यासेचिंतनीयंमहत्तरम् ॥ तद्विशुद्धादिपर्यन्तंन्यासंतिमिरनाशनम्॥ सर्वस्वरूपइत्यादिश्लोकानांपंचकं
पुनः ॥ शुद्धस्फटिकसंकाशंन्यासंत्रैलोक्यकामदम् ॥ मौलिर्मुखंतथानेत्रेश्रोत्रेनासाद्वयेतथा ॥ लिंगंचैवगुदंचैवदशस्थानंप्रकीर्तितम् ॥
मूर्ध्निविशुद्धिपर्यंतंश्लोकानांपंचकंन्यसेत् ॥ अयमेकादशोन्यासोदशन्यासस्समोजपेत्॥ दशन्यासैःकृतंयद्यन्न्यासकर्ताफलंलभेत् ॥तत्फलं
लभतेसर्वमस्मिन्नेकादशेकृते ॥ नवाक्षरस्यमंत्रस्यजाप्येसर्वफलप्रदे ॥ एतेन्यासाःप्रकर्तव्याश्चंडीसप्तशतीजपे ॥ एवंन्यासविधिंकृत्वा
सृष्टिमुद्रांविलोकयेत् ॥ तस्याविलोकनेराजन्कृतन्यासःस्थिरोभवेत् ॥ परिषिंचतिपूजार्थंद्रव्याणिनवबीजतः ॥ तलपृष्ठोद्भवांमुद्रांकृत्वा

स्त्रेणावगुंठयेत् ॥ अर्घ्यपात्रं प्रतिष्ठाप्यपूरयेच्छुभवारिणा ॥ गंधपुष्पाक्षतांस्तत्रविन्यसेन्नृपनंदन ॥ ध्यात्वासर्वाणितीर्थानिहस्तौदत्त्वा
भिमंत्रयेत् ॥ रक्षार्थंतस्यकर्तव्याचक्रमुद्रास्त्रसंयुता ॥ अर्घ्योदकेनसंस्कारंपूजाद्रव्यस्यपूर्ववत् ॥ कृत्वालोमविलोमाभ्यामात्मानंसम्य
गर्चयेत् ॥ प्रत्यर्थंसंप्रतिष्ठाप्यमध्यपीठार्घपात्रयोः ॥ षट्कोणेचैवमध्यस्थेमध्यबीजव्यवस्थितम् ॥ महाकाल्याःसरस्वत्यालक्ष्म्याश्चदक्षि
णान्ययोः ॥ संयुक्तांदक्षिणेवामेसिंहेनमहिषेणच॥अष्टादशभुजांध्यात्वामहालक्ष्मींप्रणम्यच ॥ पीठादिपूजनंकुर्यात्स्वबीजेनपृथक्पृथक् ॥
ॐकारबिंदुमध्यस्थंनामधेयाद्यमक्षरम् ॥ देवतानांस्वबीजंचपूजायामृद्धिसिद्धिदम् ॥ ओंकारंप्रथमंपीठंपूर्णपीठंततःपरम् ॥ तृतीयंकाम
पीठंचपूजयेत्संप्रदायतः ॥ पूर्वादिदिक्षुपीठस्यगणेशादिचतुष्टयम् ॥ गणेशक्षेत्रपालौचपादुकेबटुकस्तथा ॥ अग्नेयादिचतुर्दिक्षुपूज्यंदेवी
चतुष्टयम् ॥ आद्यातत्रजयाप्रोक्ताद्वितीयाविजयास्मृता ॥ जयंतीतत्पराभूपचतुर्थीचापराजिता ॥ पूज्यानामपदैर्देव्यःपीठेपंकजमध्यगाः॥
प्रागादिक्रमयोगेनपंचषट्षट्षडादिकाः ॥ प्रथमाविष्णुनामाचद्वितीयाचेतनास्मृता ॥ बुद्धिनिद्राक्षुधाछायाशक्तिस्तृष्णाष्टमीभवेत् ॥
क्षांतिजातिस्ततोलज्जांशांतिःसहत्रयोदशी ॥ कीर्तिर्लक्ष्मीधृतिर्मेधास्मृतिरेवदयातथा॥तुष्टिःपुष्टिश्चमाताचभ्रांतिरेवंपदक्रमात् ॥ त्रयोविंश
तिसंख्ययंत्रब्रह्मणापूजितातततः॥नालमूलेचसंपूज्यमाधारादिचतुष्टयम्॥आधारकर्मशेषौचचतुर्थीपृथिवीनृप॥ ततोनालंसमभ्यर्च्यपद्मंसंपूज्य
यत्नतः ॥ ज्ञानामृतसुतृप्तात्मामंडलार्चनमारभेत् ॥ अर्घोदकादिरासिच्यमंडलंसौम्यदृष्टिमान्॥ पूर्वयंत्रादितःपूज्यंमातृणांमंडलंशिवम् ॥
रहस्यकथितैर्बीजैःस्वबीजेनाथवानृप ॥ आद्येपत्रेसमभ्यर्च्याब्रह्माणीहंसवाहिनी ॥ माहेश्वरीवृषारूढापूज्यास्याद्धुतभुग्दले ॥ मयूरवाहना

पूज्याकौमारीदक्षिणेदले ॥ नैर्ऋत्ये वैष्णवीपूज्यागरुडोपरिसंस्थिता ॥ पश्चिमेयज्ञवाराहीदंष्ट्रोद्धृतवसुंधरा ॥ समीरणदलेपूज्यानारसिंही महास्वना ॥ गजराजसमारूढापूज्यैंद्रीसौम्यदिग्दले ॥ गणानाथपरीवारासदारुद्रेणसंयुता ॥ ईशपात्रेसमभ्यर्च्याचामुंडामंडितासदा ॥ ब्रह्माणीकर्णिकामध्येक्रमातृषट्कोणपूजनम् ॥ नन्दजाहेमगर्भासासुरक्तारक्तदंतिका ॥ नीलीशाकंभरीदुर्गासतीदुर्गार्तिहारिणी ॥ हृष्टार्चितमुखीभीमानीलपत्रशिरोधरा ॥ ततोमंडलदुर्धर्षाभ्रामरीवरदार्चिता ॥ आद्येबीजेमहाकालींध्यानपूर्वांसमर्चयेत् ॥ द्वितीयेऽष्टादशभुजांमहालक्ष्मींसमर्चयेत् ॥ तृतीयेऽष्टभुजाध्यानंसमभ्यर्च्यसरस्वतीम् ॥ ततःपृथक्पृथग्रूपूजांकृत्वामहिषसिंहयोः ॥ मध्यबीजेचिरंध्यात्वामहालक्ष्मींसमर्चयेत् ॥ आह्वानंपूजनेदद्यादासनंमणिभूषितम् ॥ मंडलस्थातुयादेवीपीठस्थासर्वतस्तदा॥महालक्ष्म्यासहैक्येनचिंतयेद्योगमुद्रया ॥ एकाहारंमहालक्ष्म्यारूपंकृत्वापरावरम् ॥ मुद्रायुधाभुजाकाराचंडिकायांप्रदर्शयेत्॥अष्टादशाक्षमालाढयंतथापद्मंप्रकल्पयेत ॥ वारिपुष्पाक्षतैर्युक्तंचंदनेनप्रमोदितम् ॥ अर्घ्यंदत्त्वामहालक्ष्म्यैधेनुमुद्रांप्रदर्शयेत् ॥ संकल्पाचमनेभूपस्नानंपुण्याभिषेचनम् ॥ विदध्याच्छ्रेयसींमुद्रांयथामाताप्रतुष्यति ॥ महार्हेचिचित्रेतेवस्त्रेचित्राण्याभरणानिच ॥ कस्तूरीकुंकुमोपेतकर्पूरागरुचंदनम् ॥ सुरभीणिचपुष्पाणिबिल्वपत्राक्षतांस्तथा॥॥निवेद्यचंडिकांभूपदिव्यधूपैःसुधूपयेत्॥ज्वलन्मणिशिखाकारैर्दीपैर्नीराजयेच्छुचिः॥ यथावर्णत्रयोपेतैर्नैवेद्यैःपायसादिभिः॥अनेकरसपक्वान्नैर्महालक्ष्मींप्रतोषयेत्॥प्रणम्याचमनंदत्त्वाचन्दनंमुखवासने॥सकर्पूरंचतांबूलंभक्तिभावसमन्वितम्॥ प्राणानायम्यपूर्वोक्तन्यासंसंस्मृत्यचात्मवान्॥प्रथमंचरितंप्रोक्तंमधुकैटभघातनम्॥महिषासुरनिर्णाशंचरितंविद्धिमध्यमम्॥चरितंचोत्तरंवि

द्विनिशुंभादिवधाश्रितम् ॥ चरितानिजपेत्त्रीणिसरहस्यान्यतंद्रितः॥चरितंमध्यमंचैषांजपेद्वाचंडिकामयम्॥जपेन्नवाक्षरंमंत्रमथवाष्टोतरंश तम् ॥ हुनेज्जपदशांशेनपायसंतिलसर्पिषा ॥ नवाक्षरेणमंत्रेणस्मार्ताग्नौनृपनंदन ॥ नमोदेव्यैमहादेव्यैशिवायैसततंनमः ॥ नमःप्रकृत्यैभद्रा यैनियताःप्रणताःस्मताम् ॥ अनेनश्लोकपाठेनजुहुयाद्वाशुभंहविः॥ ऊर्ध्वतःप्रोक्षितोमंत्रैःपात्रानीतःसमुज्ज्वलः ॥ संस्कृतायांभुविस्थाप्यः स्मार्ताग्निःसंप्रकीर्तितः ॥ देवतार्चनजाप्यस्यभूमेःसंस्करणंतथा ॥ कृत्वासंस्थापयेदग्निंनान्यदासादनंमतम्॥ शृतंहिपायसंहोमेहुनेत्स्मार्त हुताशने ॥ तदभावेसमित्सर्पिस्तिलानांहवनंभवेत् ॥ जुहुयाच्चमहालक्ष्म्यैऋतुकालसमुद्भवैः ॥ सजपंहोममावेद्यमहालक्ष्मींप्रणम्यच॥शूले नपाहिनोदेवीत्येतैःश्लोकैःप्रदक्षिणाम् ॥ कृत्वावैसुस्थितोभूत्वाचंडिकाध्यानतत्परः ॥ नमोदेव्यैइतिश्लोकैःपंचभिःपंचवारतः॥ कृत्वापंचन मस्कारानुपविश्यासनेशुभे ॥ सर्वस्वरूपइत्यादिषड्भिःश्लोकैःकृतांजलिः ॥ प्रार्थयेज्जगतांधात्रींप्रणतात्मामनेप्सितम्॥स्वशरीरेसमारोप्यद द्यादस्यैविसर्जनम्॥अनेनविधिनाभूपयःकुर्याच्चण्डिकार्चनम्॥तस्यतुष्टामहालक्ष्मीर्यद्ददातिशृणुष्वतत्॥एतद्धोप्यतरंसर्वंवेदागमसमुद्भवम् ॥ ब्रह्मणागुरवेदत्तंगुरुणाचशिवेर्पितम्॥धर्मार्थकाममोक्षाणांत्रिषुलोकेषुसाधनम्॥ अनेनसदृशंनास्तिसत्यंसत्यंनसंशयः॥ इतिपूजाजपहोमवि धिः॥अथकाम्यप्रयोगः॥ऋषिरुवाच॥ नित्यचंड्यादिजाप्यस्यविधानंतेवदाम्यहम्॥क्रमेणसर्वकार्याणांसिद्धयेसर्वपुण्यदम्॥पूर्वोक्तविधिना स्नात्वाचंडिकातर्पणादिकम्॥शुक्लभूतामथाष्टम्यांमासंप्रतिदिनंजपेत्॥सकृद्रहस्यसंयुक्तंचंडिकाचरितत्रयम् ॥ दशांशहोमसहितंयोऽर्चतेनि त्यचंडिकाम्॥धनपुत्रयशोदात्रीमहाव्याधिविनाशिनी॥महाभयमहादुःखहंत्रीसौख्यप्रदायिनी॥शुक्लाष्टमीमथारभ्ययावच्छुक्लचतुर्दशी॥न

वदुर्गाविधातव्यासर्वकार्यफलार्थिना॥संपूज्यविधिवद्देवींचंडिकांकृततर्पणैः॥कलशंपंचरत्नाढ्यंसहकारदलान्वितम् ॥ सवस्त्रंसंप्रतिष्ठाप्य
चंडिकाग्रेम्भसाभृतम्॥समंतात्पूजयेद्दिक्षुदिशापालान्यथाक्रमम्॥चंदनेनविलिप्तांगःस्रग्वीन्यासपरायणः॥नवाहंभूपएकैकंमौनीबद्धासनी
जपेत्॥प्रणवादिरहस्यांतंचंडिकाचरितत्रयम्॥चतुरस्रेसमेकुंडेसमंतान्यस्तमातृके॥एकावरणसंयुक्तेयोनिमंडलमंडिते॥ दशांशविधिनाहोम
मुक्तहव्येनसाधयेत्॥ नवदुर्गामखेकुंडमेवंजानीहिभूपते॥नित्यचंडीविधानस्थेकुंडमीदृक्प्रकीर्तितम्॥नवचंडीमखेकुंडमीदृग्लक्षणमुच्यते॥
एतद्द्विगुणितंकुंडंशतचंडचांप्रकीर्तितम् ॥ कृष्णाष्टमीमवष्टभ्यनवदुर्गाविधानवित् ॥ यद्ययंक्रियतेजाप्यंकालरात्रिर्दुरत्यया ॥ महाकालो
द्भवंदुःखंकालरात्रिर्व्यपोहति ॥ संस्कारैरष्टभिःकुंडेःसंस्कृत्याग्निंप्रतिष्ठयेत् ॥मायाबीजसमायोगंकुर्यात्तन्मंत्रसाधकः॥ कुंडमध्येभुवंदर्भैः
परिमृज्योपलेपयेत् ॥ प्रागग्रस्रुवमुलेनरेखास्तिस्रःसमुल्लिखेत् ॥ पांशुमुद्धृत्यरेखाणामभ्युक्षणमतःपरम् ॥ कुंडस्यपूजनंपष्ठंसप्तमंचक्रमुद्र
या ॥ अस्त्रावगुंठनंकुंडेसंस्कारश्चाष्टमःस्मृतः ॥ शतमंगलनामानंकुंडेग्निंसम्प्रतिष्ठयेत्॥चंडिकापीठसंपूर्णेब्रह्माणंदक्षिणेद्विज॥ ततस्तत्सा
ग्निकंकुंडंनवसूत्रेणवेष्टयेत् ॥ कुंडस्यांतरतःस्थाप्याप्रणीतावारिपूरिता ॥ प्रणीतापात्रयोर्मध्येउत्तरेवैश्वदेवतः ॥ स्थापयेत्प्रोक्षणीपात्रंप्रणी
तोदकपूरितम् ॥ प्रणीतापात्रतःपूर्वेस्थाप्यःपात्रगणःक्रमात् ॥ आज्यस्थालींचरुस्थालींगव्यक्षीरसमन्विताम् ॥ स्रुक्स्रुवौचघृतंद्रव्यंतंडु
लाःकुशशूलकाः ॥ पलाशसमिधस्तिस्रःपूर्णपात्रमतःपरम् ॥ सप्तद्वीपेश्वरींध्यात्वागृहीत्वाकुशशूलकान्॥ निक्षिपेत्प्रोक्षणीपात्रेवारुणंबीज
मुच्चरन् ॥ तेनदर्भसमूहेनशतसंख्येनसंस्थितम्॥क्रमात्पात्रगणंप्रोक्ष्यप्रोक्षणीपात्रवारिणा॥ आज्यपात्रेचरुस्थाल्यांनिक्षिपेद्घृततंडुलान्॥

यथाक्रमेणकर्तव्यंततोद्विश्रपणंतयोः ॥ अभ्युक्ष्यपायसंकायपयग्निकरणंतयोः ॥ सव्यंपलाशकाष्ठेनत्रित्रिदर्भैश्चसोज्ज्वले ॥ स्रुवयोःस्नपनं कार्यंप्रणीतोदकसिंचनैः ॥ पुनःप्रतपनंकृत्वादक्षिणेस्थापनंस्मृतम् ॥ उद्वास्यप्रथमंपूर्वादानीयाग्नेःप्रदक्षिणम् ॥ कुंडाचार्यांतरेस्थाप्यंस्व बीजंजपगौरवम् ॥ अभिघार्याज्यमार्गेणवायव्येस्थापयेच्चरुम्॥स्वबीजजपसंस्कारोधेनुमुद्रांतयोर्भवेत् ॥ तिष्ठन्पलाशसमिधोमौनीवैश्वान रेक्षिपेत् । कुशशूलकयुक्तानिप्रोक्षण्यद्भिःप्रदक्षिणम् ॥ पर्युक्ष्याग्निप्रणीतायांनिक्षिपेत्कुशशूलकम् ॥ निधायदक्षिणंजानुभूमावग्निमुखे हुनेत्॥अन्वारब्धःस्रुवेणाज्यंनिर्धूमेहव्यवाहने ॥ प्रजापतिंमहाकालींमहालक्ष्मींसरस्वतीम् ॥ एतदग्निमुखंप्रोक्तंमायाबीजपुरःसरम् ॥ संस्रावंप्रोक्षणीपात्रेनिक्षिपेद्यज्ञसाधनात् ॥ विदध्यात्कल्पितंहोमंमुक्तेनहविषाशनैः॥तेनस्विष्टकृतंदद्याद्धविषासोज्ज्वलेनले॥मायाबीजंच ब्रह्माणीमाहेश्वरीकौमारीवैष्णवीवाराहीनारासिंह्यैऐन्द्र्यैचामुंडायैविच्चेस्विष्टकृतेस्वाहा ॥मंत्रः॥ स्विष्टकृदाहुतेः। आज्यस्यनवकंदद्यान्माया बीजादिनामभिः॥ तत्रनंदाभगवतीद्वितीयारक्तदंतिका॥शाकंभरीतृतीयाचदुर्गाभीमाचतत्परम्॥भ्रामरीकालिकाचैवशिवदूतीप्रजापतिः ॥ गंधपुष्पफलोपेतांकृत्वायज्ञात्मकांस्रुचम् ॥ ततःपूर्णाहुतिंदद्याद्घृतस्याच्छिन्नधारया ॥ नवाक्षरेणमंत्रेणमहालक्ष्मीपरायणः ॥ ध्यात्वावन पुरोडाशमनन्तंदेवदुर्लभम्॥प्रोक्षणीपात्रमध्यस्थंमंत्रेणाश्नंतिसंस्रवान् ॥ यस्माद्यज्ञरसात्पूतोयज्ञानांब्रह्मरूपिणम् ॥ संस्रावतत्पुरोडाशं प्राश्नातिसुखपुण्यदम् ॥ सलिलेनप्रणीतायास्तीर्थध्यानपरायणः॥करोतिमार्जनंदर्भैःशतेनश्लोकपाठकः ॥ याःशिवासक्तयोगाश्चयाभिश्चै वविनासह ॥ याआपःस्संदधानास्तामेवैकृण्वंतुभेषजम् ॥ अभिषिंचेद्यदात्मानंचतुर्भिश्चंडिकास्तवैः ॥ दानंदद्याद्विधानेनहेमधेन्वंबर।

णिच ॥ नवदुर्गातवाख्यातापापतापप्रणाशिनी॥सर्वैश्वर्यप्रदाभूपकुर्वेनामविलंबितम् ॥ नवदुर्गाविधानेऽस्मिन्यत्फलंपरिकीर्तितम्॥काल
रात्रिविधानेऽपितत्फलंलभतेध्रुवम् ॥ एतत्त्रिगुणितंसर्वंनवदुर्गाजपेफलम् ॥ कथितंतदवाप्नोतिनित्यंचंडीजपेकृते ॥ ःऋषिरुवाच।शरद्दता
विषेमासिशुक्लपक्षेनृपोत्तम॥प्रतिपत्तिथिमारभ्यनवचंडींसमारभेत्॥तोरणाढ्येशुभेस्थानेसुवितानेस्वलंकृते॥पूर्वादिक्रमयोगेनदिग्देवेभ्योब
लिंहरेत्॥गंधपुष्पाक्षतैर्धूपदीपैश्चसुमनोहरैः॥कादंबरीगजारूढापुनरुक्ताचदृष्टगा ॥ करालीमहिषारूढारक्ताक्षीप्रेतसंस्थिता॥श्वेतकौभीरगा
श्वेताहरितामृगवाहना॥यक्षिणीसिंहपृष्ठस्थाकंकालीवृषवाहना॥हंसपृष्ठासुरज्येष्ठासर्पराजाहिवाहना।अनेनविधिनादत्त्वादिग्देवेभ्योबलिंज
पी॥नवग्रहेलोकपालान्दिशापालांश्चपूजयेत्॥कलशंसर्वरत्नाढ्यंहेमवस्त्रोदकान्वितम्॥ संप्रतिष्ठाप्यसंपूज्यचंडिकार्चनमारभेत्॥ पूर्वोक्तेन
विधानेनगंधपुष्पैरनुत्तमैः॥वस्त्रालंकारकस्तूरीहरिद्राभिश्चकुंकुमैः॥ धूपैर्बहुविधैर्दीपैर्नैवेद्यैर्बहुसंस्थया ॥ कृत्वान्यत्पूर्ववत्सर्वंजपेदेकाग्रमान
सः॥सकृद्रहस्यसंयुक्तंचंडिकाचरितत्रयम्॥कुमारीविप्रमुख्यांश्चभोजयेद्विधिपूर्वकम्॥ यदाद्येदिवसेकुर्याच्चंडिकापूजनादिकम् ॥ द्विगुणंतद्द्वि
तीयेह्नित्रिगुणंतत्परेऽहनि ॥ नवमीतिथिपर्यंतंवृद्ध्यापूजाजपादिकम्॥एकाहारंव्रतीकुर्यादहिंसादियमैर्युतः॥कृत्वाहोमादिकंसर्वंनवदुर्गावि
धानवत् ॥ वित्तशाठ्यंपरित्यज्यकुर्यादाचार्यतोषणम् ॥ वस्त्रांगुलीयभूधेनुवाजिहेमप्रदानतः॥ विदधातिविधानंचयएनांनवचंडिकाम् ॥
ऐंद्रब्रह्मादयोभोगास्तमायांतिप्रसेवितुम् ॥ अपुत्रोलभतेपुत्रमधनःसधनीभवेत् ॥ व्याधयश्चक्षयंयान्तिशत्रवश्चसुदारुणाः ॥नतस्यास्तिभ
यंकिंचिन्नचौराग्निजवारिजम् ॥ ऋषिरुवाच । शतचंडीविधानंतेयथावत्कथयाम्यहम् ॥ सुघोरायामनावृष्ट्यांभूकंपेचसुदारुणे॥परचक्रा

गमेगात्रेक्षयेविंशतियोजने ॥ देशेसर्वत्रशान्त्यर्थंशतचंडीमखंजपेत् ॥ शिवाभ्यासेसमेदेशेचतुर्द्वारंसतोरणम् ॥ पताकासंस्कृतंकुर्यान्मं
डपंवेदिभूषितम् ॥ तत्रकुंडंप्रकर्तव्यसुक्तलक्षणसंयुतम्॥सदाचाराःकुलीनायेश्रीमंतःसत्यवादिनः॥चंडिकापाठसंपूर्णादयावंतोजितेंद्रियाः॥
ईदृग्लक्षणसंपन्नादंभमोहविवर्जिताः ॥ दशविप्रान्समभ्यर्च्यमहालक्ष्मीस्वरूपिणः॥मधुपर्कविधानेनयथावत्तद्वदाम्यहम्॥श्रीपर्णीवृक्षपी
ठानिहस्तमानानिमानतः ॥ अष्टांगुलसमुच्छ्रायसहितानिसमानिच ॥ स्रुवःस्रुचासमायुक्तःखादिरोलक्षणान्वितः ॥ सप्तविंशतिदर्भाणांवे
ण्यग्रेग्रंथिभूषितः ॥ विष्टरःसर्वयज्ञेषुलक्षणंपरिकीर्तितम् ॥ शुद्धोदकेनसंपूर्णाःपाद्यार्घ्यार्थंसमाहृताः॥शंखाअर्घ्यप्रदानायगंधपुष्पयवान्वि
ताः॥ दूर्वोदकसमायुक्ताःस्थापनीयाःपृथक्पृथक् ॥ महान्त्यर्हाणिवस्त्राणिमुद्रिकाद्यंसुभूषणम् ॥ मयूरपत्रच्छत्राणिसोष्णीषाणिसमाहरेत्॥
पादुकाश्चहरेत्तत्रताम्रभूषणभूषिताः ॥ अन्यत्सर्वंयदस्त्युक्तंमधुपर्कस्यपूजनम् ॥ शतचंडीमखेकर्ताप्रयत्नेनतथाहरेत ॥ स्मार्तोक्तविधिना
सर्वंमधुपर्कस्यपूजनम् ॥ कृत्वाफलमवाप्नोतिमहायज्ञार्णवोपमी॥ अन्येभ्योमधुपर्कस्यविप्रेभ्यःपूजनंसमम्॥ विद्यात्तद्द्विगुणंदद्यादाचार्या
यसुभक्तिमान् ॥ अन्यैर्द्विजैःस्वयंमंत्रदेशिकस्यप्रपूजनम् ॥ तस्मिन्यज्ञेफलंसत्यमनावृष्टिविनाशनम् ॥ अर्चितास्तेद्विजश्रेष्ठाःसन्तुष्टापूर्ण
मानसाः॥यजमानंसपत्नीकंसुतबंधुसमन्वितम्॥उपविश्यासनेकुंडकलशाग्रविभूषितम्॥वेदमंत्राक्षतैः पूर्णंकुर्वंतिस्वस्तिवाचनैः।कृततत्स्ना
पनोविप्रैर्वेदवादित्रनिस्वनैः॥ चंडिकामंडलंचापिपरिवारविभूषितम् ॥ पश्चिमद्वारमार्गेणप्रविश्यक्रतुमंडपम् ॥ ददातिपूजनेनुज्ञांदेशिकाय
कृतांजलिः ॥ देशिकःसर्वमंत्रज्ञोनवभिर्ब्राह्मणैःसह ॥दिग्देवताग्रहांश्चैवलोकपालसमन्वितान्॥ दिशापालांश्चसंपूज्यकलशंस्थाप्यपूज्यच॥

मंडपस्यचतुर्दिक्षुदत्त्वाभूतबलिंबहिः ॥ मंडपेकलशौद्वौद्वौद्वारेद्वारेनिवेशयेत् ॥ मालिनोदकसंपूर्णावाम्रपल्लवशोभितौ ॥ उपस्पृश्योदकंधृ
त्वाचंडिकांदेवंवंदिताम् ॥ उपविश्यासनेवेद्यांबद्धापद्मासनंदृढम् ॥ प्राणायामविशुद्धात्मादशैकन्यासभूषितः ॥ चण्डिकापूजनंकुर्याद्विशे
षेणसमन्वितम् ॥ कस्तूरीकुंकुमंजाप्यंसकर्पूरंचचंदनम् ॥ फलद्वयसुसंपूर्णमनुलेपनमाहरेत् ॥ दिव्यवस्त्रमलंकारंहेमगद्याणकत्रयम् ॥ च
क्षुपुष्पचतुर्थांशंगुग्गुलस्यपलत्रयम् ॥ दीपानांद्विशतंश्रेष्ठंमंडपेजपसाधनम् ॥ कुटपौद्वौहविष्यान्नंनैवेद्यंसरसंशुचि ॥ तांबूलानांसकर्पूरंशतद्वय
मनुत्तमम् ॥ नवचंडीविधानोक्तंमहालक्ष्मीप्रपूजनम् ॥ नवभिर्ब्राह्मणैःसार्द्धंकृत्वाचार्योद्विजोत्तमः ॥ ददातिनवविप्रेभ्योआचार्यश्चण्डिका
मयः ॥ कार्यंजाप्यप्रसिद्ध्यर्थमतुलंमानपूर्वकम् ॥ ततोनुज्ञामनुप्राप्यवेद्यामाचार्यसन्निधौ ॥ मृद्वासनेषुसन्तुष्टाउपविष्टाःसुनिश्चलाः ॥ न्यास
ध्यानसमायुक्तानासाग्रमवलोकिनः ॥ सुगन्धपुष्पमालाभ्यांचंडिकाचरितत्रयम् ॥ सरहस्यमृषिच्छंदोदेवताशक्तिसंयुतम् ॥ जपेयुःपूर्णमे
कंवामौनिनस्त्यक्तमत्सराः ॥ समुत्थायततःकुर्युरेकांसर्वेप्रदक्षिणाम् ॥ चण्डिकांसुनमस्कारैःपारितोष्यपुनःपुनः ॥ उपविश्यासनेषूक्तश्लो
कैःसर्वार्थसाधकैः ॥ प्रार्थयेयुःप्रार्थ्यफलंमहालक्ष्मींदृढव्रताः ॥ कुमार्योदशसंभोज्याभोज्याविप्रादशोत्तमाः ॥ महाकालींमहालक्ष्मींसरस्व
तींजपश्चपन् ॥ भोजयेत्परयाभक्त्यादेशिकादिदशद्विजान् ॥ ततोभक्तिसमायुक्तोभुञ्जीयाद्यज्ञकृत्पुमान् ॥ सत्कथाभिःसुगीतैश्चसर्ववादि
त्रनिस्वनैः ॥ पूजनैःप्रोक्षणीयैश्चवेदपाठैर्निशांनयेत् ॥ द्वितीयेदिवसेस्नात्वाविधिवत्तेद्विजादश ॥ चंडिकातर्पणंकुर्युःसंपूर्णंध्यानतत्पराः ॥
सर्वंपृथक्पृथक्कृत्वादिग्देवीपूजनादिकम् ॥ बहिर्भूतबलिंदत्त्वाकृत्वावेदिंप्रदक्षिणाम् ॥ पुष्पागारेमहारम्येस्वेस्वेचआसनेस्थिताम् ॥ जपंति

जयचंडीतियावद्दुर्गाप्रपूजनम् ॥ पूर्वस्मात्पूजनात्कुर्याद्द्विगुणंपूजनंक्रमात्॥आचार्यःसुस्थिरःशांतश्चंडिकायाःप्रतोषणम् ॥ सुकृतेपूजनेवि
प्राजपेयुर्द्विगुणंजपम् ॥ द्विगुणंचप्रकर्तव्यंकुमारीद्विजतोषणम्॥कार्यंजागरणंरात्रावुक्तैःसर्वैर्महोत्सवैः ॥ चंडिकापूजनंजाप्यंकुमारीद्विज
पूजनम् ॥ तृतीयेऽहनिकर्तव्यंत्रिगुणंचसजागरम् ॥चतुर्थेदिवसेसर्वंसम्यक्कुर्युश्चतुर्गुणम्॥महाजागरणोपेतंहोमःस्यात्पंचमेहनि॥पायसंसर्पि
षायुक्तंतिलैःशुक्लैर्विमिश्रितम् ॥ जुहोत्युक्तविधिंकृत्वादशांशेननृपोत्तम ॥ रुद्राध्यायेयथाहोमंमंत्रेणैकेनसाधयेत् ॥ तथास्तोत्रजपेहोमंमं
त्रेणैकेनसाधयेत्॥ चंडीसप्तशतीजाप्येहोममंत्रोनवाक्षरः ॥ कथितःपूजनाध्यायेतस्माद्धोमेभवेदसौ॥नमोदेव्यैमहादेव्यैशिवायैसततंनमः॥
नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मताम् ॥ अथवाचभवेद्धोमेश्लोकस्तत्रनिरूपितः ॥ जपहोमेसुसंपूर्णेदिग्देवीनांशतंशतम् ॥ होतव्यंना
ममंत्रैश्चहविष्यान्नेनसादरम् ॥ शतंशतंक्रमाद्देयंसमिदाज्यचरूंस्तिलान्॥ग्रहेभ्योवैदिकैर्मन्त्रैःफलपुष्पशतंशतम् ॥ लोकपालदिशापाल
होमेसर्पिश्चरुस्तिलाः ॥ आचार्याश्चद्विजाःसर्वेजुहुयुश्चशतंशतम् ॥ होमेसम्पूर्णतांप्राप्तेनमस्कृत्वेष्टदेवताम् ॥ चंडिकांदेवदेवानामृषी
णांवंदिताम्पराम् ॥ स्तंभद्वयेसुचंकृत्वायजमानस्स्वलंकृतः ॥ घृतकुंभदशांशेनदद्यात्पूर्णाहुतिंस्वयम् ॥ मूर्द्धानमन्त्रपाठेननवाक्षरज
पेनवा ॥ प्राशनंमार्जनाद्यंचनवदुर्गाविधानवित् ॥ जपंहुतंसमावेद्यचण्डिकायैमनोरथम् ॥ ब्राह्मणेनिष्कषट्काद्यंदद्याद्गोमिथुनद्व
यम् ॥ यस्याःप्रभावमतुलंश्लोकमुक्त्वाकृताञ्जलिः ॥ दद्याद्गोमिथुनान्यष्टावाचार्यायसुभक्तिमान् ॥ चतुर्विंशतिसंख्याकैर्हैमगद्या
णकैःसह ॥ एकैकमष्टविप्रेभ्योदद्याद्गोमिथुनंस्वयम् ॥ निष्कत्रयसमायुक्तंवस्त्रालंकारभूषितम् ॥ सुस्थितंस्वासनेशांतंयजमानंमहो

त्सवम् ॥ कुंकुमोक्ताकृतादूर्वासुगन्धिचन्दनंदधि ॥ आदायदीयतेविप्रआचार्यादिःसुपूजितः ॥ स्तोत्राणांचचतुर्णांचमहालक्ष्मीपरायणः ॥
एकैकश्लोकमुच्चार्यदद्युराशिषमुत्तमाः ॥ धनाढ्यःससुतःपूर्णोलब्धाशीःकृतमंगलः ॥रक्तपुष्पांजलिंदद्याच्चंडिकायैविसर्जनम् ॥ भूरिदानंत
तःकुर्यात्पुण्यवादित्रनिःस्वनैः ॥ प्रविशन्शांतिपाठैश्चतोरणाढ्यंस्वमालयम्॥शतचंडीविधानस्यकृतेनसुकृतेनहि ॥महालक्ष्मीर्ददात्यस्मै
त्रैलोक्यसुखमुत्तमम् ॥ यद्यत्कार्यंसमुद्दिश्यक्रियतेशतचंडिकाम् ॥ तत्तत्तस्यमहालक्ष्मीःसत्यमाशुप्रयच्छति ॥ चरितत्रयजाप्यस्यचं
डिकायानरोत्तम ॥ सरहस्यस्यनामानित्रलोक्तानिवदाम्यहम् ॥ महाविद्यामहामंत्रश्चंडीसप्तशतीतिच ॥ मृतसंजिविनीनामचतुर्थम्परिकी
र्तितम् ॥ पंचमंचमहाचंडीचतुःषष्टिपदीपरम् ॥ एतानियोविजानातिनामानिनृपनन्दन ॥ जपंविनाभवेच्चंडीवरदास्यात्तुसर्वदा ॥ शत
मादौशतंचान्तेजपेन्मंत्रंनवाक्षरम् ॥ चंडीसप्तशतीमध्येसम्पुटोयमुदाहृतः ॥ सकामःसम्पुटेजाप्योनिष्कामःसंपुटंविना ॥ एतद्रोप्यतरंत
त्वंचंडिकाजपसिद्धिदम् ॥ ऋषिरुवाच ॥ सर्वयज्ञोत्तमंभूपकुमारीपूजनंशृणु ॥ कृतेयस्मिन्महालक्ष्मीरचिरेणप्रसिद्ध्यति ॥ आमंत्रयेद्दि
नेपूर्वेकुमारींभक्तिपूर्वकम् ॥ पूजादिनेसमाहूयकुमारीमाद्यदेवताम् ॥ मंडलेचरणौतस्याःक्षालयेदुक्तावारिणा ॥ अर्चयेद्धेमपात्रेणवारिपुष्पा
क्षतैःसमम् ॥ सुवितानेशुभेस्थानेपंकजोपरिपीठके॥उपवेश्यकुमारींतांस्वांगन्यासंसमाचरेत् ॥ आत्मानंविधिवत्पूज्यक्रोधदर्पविवर्जितम्॥
अथध्यात्वाकुमारींतांमहालक्ष्मीस्वरूपिणीम्॥मातुलिंगंगदांखेटंपात्रंपीयूषपूरितम् ॥ दक्षिणादौक्रमाद्धस्तेबिभ्रतींसर्वमंगलाम्॥सुतप्तहेमसवां
गींमाधवोमेशपूजिताम्॥ नवाक्षरेणमंत्रेणसुसिद्धेनसमर्चयेत् ॥ दद्यादाचमनंतस्यैदद्याद्वस्त्रंसकंचुकीम् ॥ सुकंकणांगुलीयानिकर्णालंकरणे

शुभे ॥ ग्रैवेयकंप्रदर्शंचचन्दनेनविलेपयेत् ॥ पूजयेत्पुष्पमालाभिर्दिव्यैर्धूपैःसुधूपयेत् ॥ कुर्यादारार्तिकंराजन्नुदुत्यंवाच्यतांमुहुः ॥ भोज
येद्भक्तिभावेनपायसंशर्कराघृतम् ॥ सुपक्कान्नानिचान्नानिभगवल्लँलोभवर्जितः ॥ फलैःसुस्वादुचान्नंयदद्यादस्यैपुनःपुनः ॥ यावत्साभोजनं
कुर्यात्तावत्स्तोत्रंजपेत्सुधीः ॥ दद्यादाचमनंतस्यैताम्बूलंचसमर्पयेत् ॥ तोषयेद्धेमदानेनकुमारींप्रणतोऽसकृत् ॥ प्रदक्षिणांनमस्कारान्
कृत्वामूर्ध्निकृताञ्जलिः ॥ विसर्जयेत्कुमारींतांस्वगृहंसत्त्वनिर्भरः ॥ अनेनविधिनाभक्त्याकुमारींयोऽभिपूजयेत् ॥ सपृथ्वीराज्यमासाद्यशिव
सायुज्यतांव्रजेत् ॥ यंयंप्रार्थयतेकामंदेवानामपिदुर्लभम् ॥ कुमारीपूजनंकृत्वाततंप्राप्नोत्यसंशयम् ॥ ब्रह्मविष्णुमहेशानांकुमारीपर
मामता ॥ तत्पूजनेनराजेन्द्रत्रैलोक्यंस्यात्सुपूजितम् ॥ सम्यक्क्रतुफलंतस्यचतुष्पदफलंभवेत् ॥ सर्वतीर्थफलंतस्ययःकुमारीम्प्रपूज
येत् ॥ तस्मात्पूजयभूपालकुमारींपूतमानसः ॥ स्वंराज्यंप्राप्स्यसेवश्यंमातेभूदत्रसंशयः ॥ रुद्रयामलेविशेषः ॥ शतचंडीविधानंचप्रो
च्यमानंशृणुष्वतत् ॥ सर्वोपद्रवनाशार्थेशतचडींसमारभेत् ॥ षोडशस्तंभसंयुक्तंमण्डपंपल्लवोज्ज्वलम् ॥ वसुकोणयुतांवेदिंमध्येकुर्या
त्रिभागतः ॥ पक्केष्टरचितांरम्यामुच्छ्रायहस्तसंमिताम् ॥ पंचवर्णरजोभिश्चकुर्यान्मंडलकंशुभम् ॥ पंचवर्णवितानंचकिंकिणीजालमं
डितम् ॥ आचार्येणसमंविप्रान्वरयेद्दशसुव्रतान् ॥ ईशान्यांस्थापयेत्कुंभंपूर्वोक्तविधिनाहरेत् ॥ वारुण्यांचप्रकर्तव्यंकुंडंलक्षणल
क्षितम् ॥ मूर्तिंदेव्याःप्रकुर्वीतसुवर्णस्यपलेनवै ॥ तदर्द्धेनतदर्द्धेनतदर्द्धेनमहामते ॥ अष्टादशभुजांदेवींकुर्याद्वाष्टकरामपि ॥ पट्टकूलयुग
च्छन्नांवेदिमध्येनिधापयेत् ॥ देवींसंपूज्यविधिवज्जपंकुर्युर्दशद्विजाः ॥ शतमादौशतंचांतेजपेन्मंत्रंनवार्णवम् ॥ चंडीसप्तशतीमध्येसं

पुटोयमुदाहृतः ॥ एकंद्वेत्रीणिचत्वारिजपेद्दिनचतुष्टयम् ॥ रूपाणिक्रमशस्तद्वत्पूजनादिकमाचरेत् ॥ पंचमेदिवसेप्रातर्होमंकुर्याद्वि
धानतः॥ गुडूचीपायसंदूर्वातिलाञ्छुक्लान्यवानपि॥ चंडीपाठस्यहोमेतुप्रतिश्लोकंदशांशतः॥होमंकुर्याद्ग्रहादिभ्यश्चवाज्यसमिद्भिःक्रमात्॥
हुत्वापूर्णाहुतिंदद्याद्विप्रेभ्योदक्षिणांक्रमात् ॥ कपिलांगांनीलमणिंश्वेताश्वंछत्रचामरम् ॥ अभिषेकंततःकुर्युर्यजमानस्यऋत्विजः ॥ एवंकृते
मरेशानसर्वसिद्धिःप्रजायतइति ॥ (अथसहस्रचण्डीविधिः)। तत्रैव ।सहस्रचंडींविधिवच्छृणुविष्णोमहामते॥राज्यभ्रंशोह्यकस्माच्चेज्जनमारी
महाभये ॥ गजमारेश्वमारेचपरचक्रभयेतथा ॥ इत्यादिविविधेदुःखेक्षयरोगादिजेभये ॥ सहस्रचंडिकापाठंकुर्याद्वाकारयेत्तथा ॥ जापकास्तु
शतंप्रोक्ताविंशहस्तश्चमंडपः ॥ भोज्याःसहस्रंविप्रेंद्रागोशतंदक्षिणादिशेत् ॥ गुरवेद्विगुणंदेयंशय्यादानंतथैवच ॥ सप्तधान्यंचभूदानंश्वेताश्वंच
मनोहरम् ॥ पंचनिष्कमितामूर्तिः कर्तव्यावर्धमानतः ॥ अष्टादशभुजांदेवींसर्वायुधविभूषिताम् ॥ अन्नंवारिचदातव्यंसहस्रंप्रत्यहंविभो ॥
शतंवानियताहारःप्रायोमानेनवर्तयेत् ॥एवंयश्चंडिकापाठंसहस्रंतुसमाचरेत् ॥तस्यस्यात्कार्यसिद्धिस्तुनात्रकार्याविचारणेति ॥ अन्येपिवि
शेषाः ॥ योगिनीभैरवीवाराहीतंत्रेषुदेवीकालिकापुराणयोश्चानुसन्धेयाः ॥ तेचप्रयोगेस्पष्टाः । वयंतुयामलाद्युक्तंनानुष्ठेयम् यामलस्यमोह
नशास्त्रत्वेनाप्रामाण्यत्वात् ॥ तथाचस्मार्तनिबंधेकौर्मेदेवीवाक्यम्॥यानिशास्त्राणिदृश्यंतेलोकेस्मिन्विविधानिच॥ श्रुतिस्मृतिविरुद्धानि
तेषांनिष्ठाहितामसी॥ कापालंभैरवंवापियामलंवाममव्रतम्॥एवंविधानिचान्यानिमोहनाख्यानियानितु॥मयासृष्टान्यनेकानिमोहायेषांभ ॥ ५९
वार्णवे ॥ तत्रैवपाद्मे ॥चकारमोहशास्त्राणिकेशवोपिशिवेरितः । अर्हतंयामलंवामंपंचरात्रंतथाव्रतम् ॥ इतिश्रीमद्रामकृष्णभट्टात्मजदिनकर

भट्टकृते शांतिसारेनवचंडीशतचंडीवर्धापनचंडीसहस्रचंडीप्रयोगः ॥ (अथवैदिकंदुर्गाराधनम्) ॥ शौनकः ॥ जातवेदसइत्येतत्सूक्तंसर्वार्थ साधकम् ॥ आयुरारोग्यसुखदंभूमिदंशत्रुनाशनम् ॥ यद्यद्वाञ्छतिवाविप्रस्तत्तदाप्नोत्यसंशयम् ॥ सूक्तेनानेनजुहुयाच्छुक्लांबरधरःशुचिः ॥ जपेद्वानियतोमंत्रंहविष्याशीजितेन्द्रियः ॥ पशुपुत्रधनार्थीचप्रत्येकंलक्षमभ्यसेत् ॥ सर्वेषामेवदेवानांविशिष्टंदेवतालयम् ॥ तस्माद्देवालयेकुर्व न्विशिष्टंफलमश्नुते ॥ ततःप्राचीप्रशस्तादिगाग्नेयीचविशेषतः ॥ प्रतीचीवायवीयाचश्रेष्ठासौम्यादिशाऽथवा ॥ पैशाचिताऽभिचारेचविजयेपि विशिष्यते ॥ कुंडेवास्थंडिलेवापिहोमंकुर्यादतंद्रितः ॥ चतुरस्रंभवेत्कुंडंमेखलाद्वयसंयुतम् ॥ स्थंडिलाद्याज्यभागांतंयज्ञतंत्रंप्रकल्पयेत् ॥ महाद्वि जःशुचिर्दांतः सर्वभूतहितेरतः ॥ दुर्गामावाहयेत्कुंभेसायुधाष्टमहाभुजाम् ॥ नीलोत्पलदलश्यामांकिरीटाद्यैर्विभूषिताम् ॥ ततश्चाराध्यतांदेवींत स्मिँस्तीर्थोदकान्विते ॥ आवाहनेनहविषासमिद्भिश्चपृथक्पृथक् ॥ मंत्रेणानेनजुहुयादष्टोत्तरशताहुतीः ॥ ततःस्विष्टकृतंचैवहोमशेषंसमापयेत् ॥ उत्थाप्याथजपेन्मंत्रमेतंश्रद्धासमन्वितः । यदादुर्गांचवरदात्वत्प्रसादाच्चपार्वती ॥ इतिदुर्गाकल्पः (अथसर्पविधिः) शौनकः । अथवक्ष्यामिसर्पस्य संस्कारविधिमुत्तमम् ॥ सिनीवाल्यांपूर्णमास्यांपंचम्यांकारयेच्चतम् ॥ कृतसर्पवधोविप्रःपूर्वजन्मनिवायदि ॥ स्नात्वागत्यततोब्रह्मदंडंदद्या द्विजातये ॥ वधंप्रख्यापयेत्पापीचरेत्कृच्छ्रांश्चतुर्दश ॥ वधेहंजन्मनिकृतेलोहदंडंद्विजातये ॥ दद्यात्पापविशुद्ध्यर्थंश्रोत्रियायकुटुंबिने ॥ विप्रायदंडमूल्यंवाह्यभावेसतिदापयेत् ॥ साक्षाद्वधेकर्मकर्तुमेतदेवप्रदापयेत ॥ निष्कद्वयंत्रिनिष्कंवानिष्कमेककनीयसम् ॥ अनुमत्यादि कर्तॄणांनिष्कमर्धंतदर्द्धकम् ॥ वित्तशाठ्यंनकुर्वीतदद्याद्विप्रानुसारतः ॥ अनुज्ञांचगुरोर्लब्ध्वासंस्कुर्यात्तदनंतरम् ॥ प्रियंगुव्रीहिगोधूमतिल

पिष्टेनवापुनः॥कृत्वासर्पाकृतिंतेनसर्पभोगसमन्वितम् ॥ अनेनवक्ष्यमाणेनप्रार्थयेद्दक्षिणेत्वहिम्॥एहिपूर्वंमृतःसर्पअस्मिन्पिष्टेसमाविश॥सं
स्कारार्थमहंभक्त्याप्रार्थयामिसमाहितः॥वस्त्रोपवीतगंधाद्यैरक्षतैःकुसुमादिभिः॥कर्तापुष्पाञ्जलिंदत्त्वाप्रणिपत्यहरेद्बहिः ॥ प्रक्षालितांघ्रिपा
णिस्तुह्याचम्योपविशेद्भुवि ॥ कुर्यात्संस्कारसंकल्पंप्राणायामपुरःसरम् ॥ यज्ञोपवीतिनाकार्यंसर्पसंस्कारकर्मतु॥लौकिकाग्निंप्रतिष्ठाप्यस
मिदाधानमाचरेत् ॥ ततोग्नेरग्निदिग्भागेभूमिंसंप्रोक्ष्यवारिभिः ॥ चितिंकृत्वाथसंस्तीर्यकुशैराग्नेयकाग्रकैः॥पर्युक्ष्याग्निंपरिस्तीर्यपरिषिच्य
समर्पयेत् ॥ कृत्वेध्माधानपर्यन्तंसत्पात्रासादनादिकम्॥आघारौचक्षुषीहुत्वासर्पिषातुयथाविधि॥सर्पंगृहीत्वायत्नेनचितिमारोपयेत्सुधीः॥
अपः स्पृष्ट्वास्पृशेच्छ्रोत्रंगत्वाचाग्निसमीपतः ॥ स्रुवेणजुहुयादाज्यमग्नौव्याहृतिभिस्त्रिभिः ॥ सर्पास्येजुहुयादाज्यंव्याहृत्याचसमग्रया ॥
आज्यशेषंस्रुवेणैवसर्पदेहेनिषिंचयेत् ॥ चमसस्थैर्जलैःसर्पंव्याहृत्याभ्युक्ष्यपाणिना ॥ अग्नेरक्षाणोइत्यनयासर्पायाग्निंप्रदापयेत् ॥ उपति
ष्ठेद्दह्यमानंनमोस्तुसर्पमंत्रतः ॥ ज्ञानतोज्ञानतोवापिकृतःसर्पवधोमया ॥ पूर्वजन्मनिवासर्पतत्सर्वंक्षमयस्वमे ॥ इतिसंप्रार्थ्यनागेंद्रं
स्नात्वागत्यततःपुनः ॥ क्षीराज्येनततश्चाग्निंप्रोक्ष्यव्याहृतिभिस्त्रिभिः ॥ हुतेसर्पजलेनाग्निमभिषिंचेत्ततःपरम् ॥ नास्थिसंचयनं
कुर्यात्स्नात्वाचम्यगृहंव्रजेत् ॥ ब्रह्मचर्यादिकंकार्यंत्रिरात्राशौचमिष्यते ॥ चतुर्थेहनिसंप्राप्तेसचैलंस्नानमाचरेत् ॥ घृतपायसभुक्तैस्तु
द्विजानष्टौतुभोजयेत् ॥ कर्तानामपदैर्विप्रानर्चयेद्वक्ष्यमाणकैः ॥ सर्पोनंतस्तथाशेषःकपिलोनागएवच॥कालिकःशंखपालश्चभूधरश्चप्रकी
र्तितः ॥ पादप्रक्षालनंकुर्यादेभिर्नामपदैःपृथक् ॥ गंधपुष्पाक्षतैर्धूपदीपाद्यैरर्चयेद्द्विजान् ॥ एवंकृतेविधानेवैसर्पसंस्कारकर्मणि ॥

सर्पहिंसाकृतात्पापान्मुच्यतेनात्रसंशयः ॥ कुष्ठव्याध्यभिसंयुक्तेसर्वथाभेषजंत्विदम् ॥ आयुरारोग्यमैश्वर्यंप्राप्यकामानवाप्नुयात् ॥
इतिसर्पसंस्कारः । ( अथवास्तुशांतिः ) मात्स्ये । चैत्रेव्याधिमवाप्नोतियोगृहंकारयेन्नृप ॥ वैशाखेधेनुरत्नानिज्येष्ठेमृत्युंतथैवच ॥
आषाढेभृत्यरत्नानिपशुवर्गमवाप्नुयात् ॥ श्रावणेभृत्यलाभंचहानिंभाद्रपदेतथा ॥ पत्नीनाशोऽश्विनेविंद्यात्कार्तिकेधनधान्यकम् ॥
मार्गशीर्षेतथाधान्यंपौषेतस्करतोभयम् ॥ लाभंचबहुशोविंद्यादग्निंमाघेविनिर्दिशेत् ॥ फाल्गुनेकांचनंपुत्रानितिकालवतांस्मृतम् ॥रत्नमा
लायाम् ॥ कर्कनक्रहरिकुंभगतेऽर्केपूर्वपश्चिममुखानिगृहाणि॥तौलिमेषवृषवृश्चिकयातेदक्षिणोत्तरमुखानिवदंति॥ अश्विनीरोहिणीमूलउत्तरा
त्रयमैंदवम्॥ स्वातीहस्तोनुराधाचगृहारंभेप्रशस्यते॥आदित्यभौमवर्ज्यास्तुसर्वेवाराःशुभावहाः॥वज्रव्याघातशूलेषुव्यतीपातातिगंडयोः॥
विष्कंभगंडपरिघवज्रयोगेनकारयेत् ॥ यथामैत्रेयमाहेंद्रेगंधर्वाभिजिद्रोहिणे ॥ तथावैराजसावित्रेमुहूर्तेगृहमारभेत्॥ चन्द्रादित्यबलंलब्ध्वा
लग्नेशुभनिरीक्षिते ॥ स्तंभोच्छ्रायादिकर्तव्यमन्यत्तुपरिवर्जयेत् ॥ प्रासादेचैवमेवंस्यात्कूपवापीषुचैवहि ॥ पूर्वंभूमिंपरीक्षेतपश्चाद्वास्तुंप्रक
ल्पयेत् ॥ श्वेतारक्तातथापीताकृष्णाचैवानुपूर्वशः ॥ विप्रादेःशस्यतेभूमिरतःकार्यंपरीक्षणम् ॥ विप्राणांमधुरास्वादकषायाक्षत्रियस्यतु ॥
कषायाकटुकातद्वद्वैश्यशूद्रेषुशस्यते ॥ अरत्निमात्रेवैगर्तेस्वनुलितेतुसर्वतः ॥ घृतमामशरावस्थंकृत्वावर्तिचतुष्टयम् ॥ज्वालयेद्भूपरीक्षा
र्थंपूर्णंतत्सर्वदिङ्मुखम् ॥ दीप्तौपूर्वादिगृह्णीयाद्वर्णनामानुपूर्वशः ॥ वास्तुःसामूहिकोनामदीप्यतेसर्वतस्तुसः ॥ शुभदःसर्ववर्णानांप्रासादेषु
गृहेषुच ॥ अरत्निमात्रंगर्तंतुपरीक्ष्यंखातपूरणे॥ अधिकेश्रियमाप्नोतिन्यूनेहानिःसमेसमम् ॥ फलकृष्टेऽथवादेशेसर्वबीजानिवापयेत् ॥ त्रिपं

चसप्तरात्रेणयन्नरोहंतितान्यपि॥ज्येष्ठोत्तमकनिष्ठाभूर्वर्जनीयेतरामता ॥ पंचगव्यौषधिजलैः परिक्षिप्वाचसेचयेत्॥दानहेमाद्रौमात्स्ये॥एका
शीतिपदंकृत्वारेणुभिः कनकेनतु ॥ पश्चात्पिष्टेनानुलिंपेत्सूत्रेणालोडचसर्वतः ॥ दशपूर्वायतारेखादशचैवोत्तरायताः ॥ सर्ववास्तुविभागेषु
विज्ञेयानवकानव ॥ पदस्थान्पूजयेद्देवांस्त्रिंशत्पंचदशैवतु ॥ द्वात्रिंशद्बाह्यतः पूज्याः पूज्याश्चांतस्त्रयोदश ॥ मध्येनवपदास्त्वेकश्चत्वारस्त्रिप
दाःस्मृताः ॥ विंशतिस्त्वेकपदकास्तावंतोद्विपदाःस्मृताः॥नामतस्तान्प्रवक्ष्यामिस्थानानिचनिबोधत ॥ ईशानकोणादिसुरान्पूजयेत्क्र
मशोनव ॥ शिखीचैवाथपर्जन्योजयंतःकुलिशायुधः ॥ सूर्यसत्यौभृशश्चैवआकाशोवायुरेवच ॥ पूषाचवितथश्चैवग्रहक्षतयमावुभौ ॥ गंध
र्वोभृंगराजश्चमृगः पितृगणस्तथा ॥ दौवारिकोऽथसुग्रीवः पुष्पदंतोजलाधिपः ॥ असुरःशेषपापौचरोगोहिर्मुख्यएवच॥भल्लाटसोमसर्पौचअ
दितिश्चदितिस्तथा ॥ बहिर्द्वात्रिंशदेतेतुतदंतश्चतुरःशृणु ॥ ईशानादिचतुष्कोणसंस्थितान्पूजयेद्बुधः ॥ आपश्चैवाथसावित्रोजयोरुद्रस्तथै
वच ॥मध्येनवपदोब्रह्मातस्यचाष्टौसमीपगाः॥अर्यमासविताचैवविवस्वान्विबुधाधिपः॥मित्रोथराजयक्ष्माचतथापृथ्वीधरःस्मृतः ॥ अष्ट
मश्चापवत्सस्तुपरितोब्रह्मणःस्मृताः॥ आपश्चैवापवत्सश्चपर्जन्योग्निदितिस्तथा ॥ पदिकानांतुवर्गोयमेवंकोणेष्वशेषतः ॥ तन्मध्येतुबहिर्वि
शद्विपदास्तेतुसर्वतः॥ अर्यमाचविवस्वांश्चमित्रंपृथ्वीधरस्तथा ॥ब्रह्मणःपरितोदिक्षुत्रिपदास्तेतुसर्वतः॥मूर्धन्याग्निःसमादिष्टोमुखेचापःसमा
श्रिताः॥ पृथ्वीधरोर्यमाचैवस्तनस्थानमधिष्ठितौ॥ वक्षःस्थलेचापवत्सःपूजनीयःसदाबुधैः॥नेत्रयोर्दितिपर्जन्यौश्रोत्रेदितिजयंतकौ॥ सर्पे
द्रौवंशसंस्थौतुपूजनीयौप्रयत्नतः । सत्यरोगादयस्तद्वद्बाह्वोःपंचपंचच ॥ रुद्राश्चराजयक्ष्माचवामहस्तसमास्थितौ ॥ सावित्रःसवितातद्व

द्धस्तंदक्षिणमाश्रितौ ॥ विवस्वानथमित्रश्चजठरेसंव्यवस्थितौ ॥ पूषाचपापयक्ष्माणौहस्तयोर्मणिबंधने॥तथैवासुरशेषौचवामपार्श्वेसमा
स्थितौ ॥ पार्श्वेतुदक्षिणेतद्वद्वितीयःसगृहक्षतः ॥ऊर्वोर्यमांबुपौज्ञेयौजान्वोर्गंधर्वपुष्पकौ ॥ जंघयोर्भृशसुग्रीवौस्फिक्स्थोदौवारिकोमृगः॥
जयशक्रौतथामेढ्रेपायोस्तुपितरस्तथा ॥ मध्येनवपदेब्रह्माहृदयेसतुपूज्यते ॥ चतुःषष्टिपदोवास्तुप्रासादेब्रह्मणःस्मृतः॥ ब्रह्माचतुष्पदस्तत्र
कोणेष्वेकपदस्तथा ॥ बहिःकोणेषुचाष्टौतुसार्द्धाश्चोभयसंस्थिताः ॥ विंशतिर्द्विपदाश्चैवचतुःषष्टिपदेस्मृताः ॥ होमस्त्रिमेखलेकार्यः
कुंडेहस्तप्रमाणके ॥ यवैःकृष्णतिलैश्चैवसमिद्भिःक्षीरवृक्षजैः ॥ पालाशैःखादिरैश्चापामार्गोडुंबरसंभवैः ॥ कुशदूर्वाभवैर्वापिमधुसर्पिःसम
न्वितैः ॥ कार्यस्तुपंचभिर्बिल्वैर्बिल्वबीजैरथापिवा ॥ होमांतेभक्ष्यभोज्यैस्तुवास्तुदेशेबलिंहरेत्॥तद्वद्दिशेषंनैवेद्यमिदंदद्यात्क्रमेणतु ॥ ईश
कोणेघृताक्तान्नंशिखिनेविनिवेदयेत् ॥ ओदनंसोत्पलंदद्यात्पर्जन्यायघृतान्वितम् ॥ जयंतायध्वजंपीतंपैष्टंकूर्मंचसंत्यजेत् ॥ इंद्रायपंचरत्ना
निपैष्टंचकुलिशंतथा ॥ वितानकंचसूर्यायापूपंसक्तुंतथैवच ॥ सत्यायघृतगोधूमंमत्स्यान्दद्याद्भृशायच ॥ शष्कुलीश्चांतरिक्षायदद्यात्सक्तूं
श्चवायवे ॥ लाजाःपूष्णेतुदातव्यावितथेचणकौदनम् ॥ गृहक्षतायमध्वन्नंयमायपिशितौदनम् ॥ गंधौदनंचगंधर्वेभृंगेमेषस्यजिह्विकाम् ॥
मृगाययावकंदद्यात्पितृभ्यःकृसरंतथा ॥ दौवारिकेदंतकाष्ठंपैष्टंगृहबलिंतथा ॥ सुग्रीवेपूपकान्दद्यात्पुष्पदंतायपायसम् ॥ कुशस्तंबे
नसंयुक्तंतथापद्मंचवारुणे ॥ पिष्टंहिरण्मयंदद्यादसुरायसुरामता ॥ घृतौदनंचशेषायगोधांवैपापयक्ष्मणे ॥ घृतलड्डुकांस्तुरोगायना
गेपुष्पंफलान्वितम्॥भक्ष्यंमुख्यायदातव्यंमुद्गौदनमतःपरम् ॥ भल्लाटस्थानकेदद्यात्सोमायमधुपायसम् । नागायशालिजंपिष्टमदित्यैपो

लिकास्तथा ॥ दितेस्तुपूरिकांदद्यादित्येवंबाह्यतोबलिः ॥ क्षीरमापायदातव्यमापवत्सायवैदधि॥सवित्रेलड्डुकान्दद्यात्समरीचंकुशोदकम् ।
 सवित्रेगुडपूपांश्चजयायघृतचंदनम् ॥ विवस्वतेपुनर्दद्याद्रक्तचंदनपायसम् ॥ हरितालौदनंदद्यादिंद्रायघृतसंयुतम् ॥ गुडौदनंतुमित्रायरुद्राय
घृतपायसम् ॥ आमंपक्वंतथामांसंदेयंस्याद्राजयक्ष्मणे ॥ पृथ्वीधरायमांसानिकूष्मांडानिचदापयेत् ॥ शर्करापायसंदद्यादर्यम्णेपानमेवच
पंचगव्यंयवांश्चैवतिलाक्षतहविश्चरुम् ॥ भक्ष्यंभोज्यंचविविधंब्रह्मणेविनिवेदयेत् ॥ एवंसंपूजितादेवाःशांतिंकुर्वंतितेसदा॥सर्वेषांकांचनंदद्या
द्ब्रह्मणेगांपयस्विनीम् । राक्षसानांबलिर्देयोमांसौदनसमन्वितः॥ मांसौदनंघृतंपद्मंकेसरंहविषान्वितम्॥ईशानभागमाश्रित्यचरक्यैविनिवे
दयेत् ॥ मांसौदनंसरुधिरंहरिद्रौदनमेवच ॥ आग्नेयींदिशमाश्रित्यविदार्यैविनिवेदयेत्॥ दध्योदनंसरुधिरंमत्स्यखंडैश्चसंयुतम् ॥ पीतरक्त
बलिंदद्यात्पूतनायातुराक्षसी ॥ वायव्येपापराक्षस्यैमत्स्यमांसैः सुरासवम्॥पायसंवापिदातव्यंस्वनाम्नासर्वतःक्रमात् ॥ नमस्कारानुयुक्तेन
प्रणवाद्येनसर्वतः ॥ ततःसर्वौषधिस्नानंयजमानस्यकारयेत् ॥ द्विजांस्तुपूजयेद्भक्त्यायेचान्येगृहमागताः॥ एतद्वास्तूपशमनंकृत्वाकर्मसमा
चरेत् ॥ प्रासादभवनोद्यानप्रारंभेपरिवर्तने ॥ जीर्णोद्धारेतथोत्थानेतथागृहनिवेशने ॥ द्वाराभिवर्तनेतद्वत्प्रासादपरिवर्तने ॥ पुरवेशमप्रवे
शेचसर्वदोषप्रशांतये ॥ वास्तूपशमनंकृत्वाततःसूत्रेणवेष्टयेत् ॥ राक्षोघ्नपावमानेनसूक्तेनभवनादिकम् ॥ नृत्यमंगलवाद्यंचकुर्याद्ब्राह्मण
वाचनम् ॥ अनेनविधिनायस्तुप्रतिसंवत्सरंबुधः ॥ गृहेवायतनेकुर्यान्नसदुःखमवाप्नुयात् ॥ गृह्योक्तहोमविधिनाबलिकर्मकुर्यात्प्रासा 
दवास्तुशमनेचविधिर्यउक्तः ॥ अत्रपौराणवास्तुशांतेःस्वगृह्योक्तवास्तुशांत्याःसमुच्चयोविधीयते ॥ संतर्पयेद्द्विजवरानथभक्ष्यभोज्यैःशुक्लां

बरःस्वभवनंप्रविशेत्सुरूपम् । कृत्वाग्रतोद्विजवरानथपूर्णकुंभंदध्यक्षताम्रदलपुष्पफलोपशोभम् । दत्त्वाहिरण्यवसनानितथाद्विजेभ्यो
मांगलयशांतिनिलयंस्वगृहंविशेच्च ॥ नारदसंहितायाम् । अकपाटमनाच्छन्नमदत्तबलिभोजनम् ॥ गृहंनप्रविशेद्धीमानापदामाकरो
हितत् ॥ वसिष्ठः ॥ कृत्वाशुक्रंपृष्ठतोवामतोर्कंविप्रान्पूज्यानग्रतःपूर्णकुंभम् ॥ हर्म्यंरम्यंतोरणस्रग्वितानैःस्त्रीभिःस्रग्वीगीतवाद्यैर्वि
शेच्च ॥ नारदसंहितायाम् ॥ मृत्पेटिकांस्वर्णरत्नधान्यशैवालसंयुताम् ॥ गृहमध्येहस्तमात्रगर्तेन्यासायविन्यसेत् ॥ वसिष्ठसंहितायाम् ॥
निर्माणेमंदिराणांचप्रवेशेत्रिविधेपिवा ॥ वास्तुपूजाचकर्तव्यातस्मात्तांकथयाम्यतः ॥ गृहमध्येहस्तमात्रंसमंतात्तंडुलोपरि ॥ एका
शीतिपदंकार्यंतिलैस्तुल्यंसुशोभनम् ॥ एकद्वित्रिपदाःपंचचत्वारिंशत्सुरार्चिताः ॥ द्वात्रिंशद्वाह्यतोवक्ष्यमाणांश्चांतस्त्रयोदश ॥ तेषांस्था
नानिनामानिवक्ष्यामीश्वरकोणतः ॥ तत्राग्निश्शंभुकोणस्थस्त्वसौचैकपदेश्वरः ॥ तस्माद्द्वितीयःपर्जन्यश्चासावेकपदेश्वरः ॥ जयंतेंद्रा
र्कसत्याख्यभृशाश्चद्विपदेश्वराः ॥ आकाशवायूपरतःक्रमादेकपदेश्वरौ ॥ एवंप्राच्यांनवज्ञात्वात्वेवमेवान्यदिक्षुच ॥ आद्यावंत्यावेकपदौद्वि
पदाःपंचमध्यगाः ॥ पूषाद्यष्टौयमांताःस्युरमरायाम्यभागगाः ॥ आद्यौचांत्यावेकपदौद्विपदाःपंचमध्यगाः॥ अष्टौपितृगणाधीशाःपापांताः
पश्चिमेसुराः ॥ आद्यंतौद्वारेकपदौद्विपदाःपंचमध्यगाः ॥ रोगादिदित्यंतसुराःसप्तसौम्यादिशिक्रमात्॥तत्राधस्ताच्चतुष्कोणेष्वीशानादिषु
चक्रमात् ॥आपःसावित्रीविजयरुद्राश्चैकपदेश्वराः॥मध्येनवपदोब्रह्मातस्येशानादिकोणगाः॥आपवत्सौपसविताविबुधाधिपसंज्ञकाः॥राज
यक्ष्माचचत्वारःसुराश्चैकपदेश्वराः ॥ब्रह्मणःपूर्वतोदिक्षुत्रिपदाश्चामराअमी ॥ अर्यमाचविवस्वांश्चमित्रःपृथ्वीधरःक्रमात्॥स्वस्वस्थानेषुदे

वेषुस्थापितेष्वीदृशंभवेत् ॥ कोणेषुपंचपंचैवचतुर्ष्वेकपदाःसुराः ॥ प्रागादिदिक्षुद्विपदाःपंचपंचयथाक्रमम् ॥ ब्रह्मणःपूर्वतोवायुःपूषाचवि
तथस्तथा ॥ गृहक्षतःपितृपतिर्गन्धर्वोभृंगराजकः ॥ मृगपितृगणाधीशस्तथादौवारिकाह्वयः ॥ सुग्रीवः पुष्पदन्तश्चजलाधीशोनिशाचरः॥
शेषःपापश्चरोगोहिर्मुख्योभल्लाटएवच ॥ सोमसर्पौदित्यदितिद्वात्रिंशदमराःस्मृताः ॥ आपश्चैवापवत्सश्चजयोरुद्रस्तथैवच ॥ मध्येनवपदो
ब्रह्मातस्यौचाष्टौसमीपगाः ॥ प्रागाद्यंतरितादेवाः परितोब्रह्मणःस्मृताः ॥ अर्यमासविताचैवविवस्वान्विबुधाधिपः॥मित्रोथराजयक्ष्माचत
थापृथ्वीधरःक्रमात् ॥ आपवत्सोष्टमःपंचचत्वारिंशत्सुरोत्तमाः ॥ ज्ञात्वैवंस्थाननामादिब्रह्मणासहिताघ्यसेत् ॥ वास्तुज्ञोवास्तुमंत्रेणगंध
पुष्पाक्षतादिभिः ॥आदिपदेनपूर्वादि ॥ वास्तुमंत्रेणवास्तुज्ञोदूर्वादध्यक्षतादिभिरितिनारदसंहितोक्तेः ॥ प्रणवेनार्चयेद्वापिअथवास्वस्वना
मभिः ॥ शुक्लवस्त्रयुगंदद्याद्धूपदीपफलैःसह ॥ अपूपैर्भूरिनैवेद्यैर्वाद्यैःसहसमर्पयेत् ॥ तांबूलंचततोदद्याद्देवेभ्यश्चपृथक्पृथक् ॥ दत्त्वापुष्पां
जलिंकर्ताप्रार्थयेद्वास्तुपूरुषम् ॥ वास्तुपुरुषनमस्तेस्तुभूशय्याभिरतप्रभो ॥ मद्गृहेधनधान्यादिसमृद्धंकुरुसर्वदा ॥ इतिप्रार्थ्य
ततोदद्याद्दक्षिणामर्चकायच ॥ विप्रेभ्योभोजनंदत्त्वास्वयंभुञ्जीतबंधुभिः ॥ एवंयःकुरुतेसम्यग्वास्तुपूजांप्रयत्नतः ॥ आरोग्यं
पुत्रपौत्रादिधनंधान्यंलभेन्नरः ॥ वास्तुपूजामकृत्वायःप्रविशेन्नवमंदिरम् ॥ रोगान्नानाविधान्क्लेशानश्नुतेसर्वसंकटान् ॥ बौधायनः ॥
अथातोगृहशान्तिकर्मगृहवृद्धिमिच्छन्मासिमास्यृतावृतौसंवत्सरेसंवत्सरेआपूर्यमाणपक्षेपुण्येनक्षत्रेगृहशान्तिमारभेदपामार्गपलाशशमी
शिरीषोदुम्बरसदाभद्रमुस्तातृणमिन्द्रवल्ल्याचगृहंसंमार्ष्टिमानोमहान्तमानस्तोकइतिपञ्चगव्येनदर्भमुष्टिनासंप्रोक्ष्ययतइंद्रभयामहेस्वस्ति

दाविशस्पतिरिति द्वाभ्यांकृणुष्वपाजः प्रसितिंनपृथ्वीमित्यैतेनानुवाकेनसिद्धार्थान्प्रकीर्यवास्तुमध्येऽथदेवयजमानोल्लेखनप्रभृत्यग्निमुखा
न्कृत्वापक्वान्जुहोतिवास्तोष्पतइतिद्वाभ्यामथाज्याहुतीरुपजुहोतिवास्तोष्पतेध्रुवास्थूणेतिषड्भिरनुच्छदसंसावित्र्यासहस्रंजुहुयात्स्विष्टकृत्प्र
भृतिसिद्धमाधेनुरवप्रदानाद्ब्राह्मणाननेनपरिविष्यपुण्याहंस्वस्तिसमृद्धिमितिवाचयीतैवंप्रयुंजानस्यबहवः पुत्राभवंतिबाधाः प्रहीयंतेग्रहाव्या
धयश्चतंनगृह्णंतिनदंष्ट्रिणोनतस्करसर्पराक्षसपिशाचाबाधंतइतिहस्माहबौधायनः ॥ नारदसंहितायाम् ॥ स्नानागारंदिशिप्राच्यामाग्नेय्यां
पावकालयम् ॥ याम्यायांशयनंगेहंनैर्ऋत्यांशस्त्रमंदिरम् ॥ प्रतीच्यांभोजनगृहंवायव्यांपशुमंदिरम् ॥ भांडागारंतूत्तरस्यामीशान्यां
देवमंदिरम् ॥ वसिष्ठसंहितायाम्॥स्वगृहात्पश्चिमेभागेपितृस्वाग्रजमंदिरम् ॥ गृहपादागृहस्तंभाःसमाःकार्याश्चनासमाः॥नात्युच्छ्रितंनाति
नीचंकुडयोत्सेधंयथारुचि ॥भित्तिःपक्वेष्टकाकार्यादारुणाप्यथवामृदा॥कार्याचित्रपटैर्वापितृणैःपत्रैश्चनक्वचित्॥गर्गः॥द्वारंप्रयत्नात्कर्तव्यं
सर्वद्वारप्रतिष्ठितम् ॥ परकोणैःपरद्वारैःपरस्तंभैःपरद्रुमैः॥कूपवृक्षादिभिश्चैवहतंद्वारंनिरर्थकम्॥राजतोभयमत्युच्चैरतिनीचेतुचोरतः॥विनाश
श्चातिविस्तीर्णेसंवृतेचातिचक्षुधा ॥ अतिप्रमाणेदारिद्र्यमत्यल्पेव्याधितोभयम् ॥ जिह्मेत्वर्थाविनश्यंतिकुटिलेऋणवद्भवेत् ॥ कुक्षिलेकुक्षि
रोगःस्यात्क्षुद्रंयंकुक्षिपीडिते ॥ कूपस्थानंवसिष्ठसंहितायाम्॥ऐश्वर्यंपुत्रहानिश्चस्त्रीनाशोनिधनंभवेत्॥संपच्छत्रुभयंसौख्यंपुष्टिःप्रागादितः
क्रमात् ॥ कूपेकृतेमध्यमेतुधनहानिश्चवास्तुतः ॥ तस्मात्सम्यग्विचार्याथकूपंकुर्याच्चबुद्धिमान् ॥ तत्रैवद्वारे ॥पुन्नागशोकतिलकशमीबकु
लचंपकाः ॥ दाडिमीपिप्पलीद्राक्षापिचुमंदजपामराः ॥ बंधूकपूगपनससरोजगृहमल्लिकाः॥मल्लिकापाटलीजातिनारिकेलस्तृणद्रुमः॥एते

गृहांगणेवृक्षास्सर्वदामंगलप्रदाः॥ प्लक्षकर्कंधुवृक्षौद्वौगृहस्योत्तरतःशुभौ॥न्यग्रोधोदुंबराश्वत्थाःप्रागादिषुशुभप्रदाः ॥ अगस्तिमातुलिंगाख्यं
हरिद्राकदलीस्तुषा॥स्वयंप्रजाताअप्येतेदुःखशोकभयप्रदाः॥(अथास्मत्पितृकृतोमात्स्यानुसारीवास्तुशांतिप्रयोगः ) गृहप्रवेशेपूर्वेह्निशुभेपू
र्वाह्णेगृहारंभादौसद्यःसस्त्रीकःशुचिःप्राङ्मुखःयजमानोदेशकालौस्मृत्वा। अस्यवास्तोःशुभतासिद्धिचर्थंसनवग्रहमखांवास्तुशांतिंकरिष्यइ
तिसंकल्प्यतदंगत्वेनगणेशपूजापुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वरणानिकरिष्येइतिसंकल्प्यतानिकृत्वाचार्यादीन्वृत्वाल
कारवस्त्रादिभिःपूजयेत् ॥ ऋत्विजश्चत्वारःततःआचार्यःआचार्यकर्मकरिष्यइतिसंकल्प्यसर्षपान्विकिरेदेभिर्मंत्रैः । यदत्रसंस्थितमितिमंत्रा
भ्यांभूतप्रेतपिशाचाद्याअपक्रामंतुराक्षसाः । स्थानादस्माद्व्रजंत्वन्यत्स्वीकरोमिभुवंत्विमामितिचसर्षपान्विकीर्यपंचगव्येनसर्वगृहंप्रोक्ष्य
हस्तमितकुंडंस्थंडिलंवाकृत्वातत्पूर्वतस्तदीशान्यांचहस्तमितवेदिद्वयंकृत्वाईशानवेदिरीशानादिचतुष्कोणेषु ॥ विशंतुभूतलेनागालोकपा
लाश्चसर्वतः । अस्मिन्गृहेऽवतिष्ठंतुआयुर्बलकराःसदेतिमंत्रेणचतुरःशंकून्रोपयेत् । प्रासादादौगृहपदस्थानेतन्निर्देशः।ततःशंकुपार्श्वेईशादि ।
अग्निभ्योप्यथसर्पेभ्योयेचान्येतत्समाश्रिताः । तेभ्योबलिंप्रयच्छामिपुण्यमोदनमुत्तममितिमाषभक्तबलीन्दत्त्वावेद्युपरिवस्त्रेकुंकुमादिना
सुवर्णरजतादिशलाकया। शांतायै०। यशोवत्यै०। कांतायै०। विशालायै०। प्राणवाहिन्यै०। सत्यै०। सुमत्यै०। नंदायै०।
सुभद्रायै०। सुरथायै०। एतैर्नामभिःपश्चादारंभाःप्रागंतःउदक्संस्थाङ्गुलद्वयांतरालादशरेखाः कृत्वा। हिरण्यायै०। सुव्रतायै०।
लक्ष्म्यै०। विभूत्यै०। विमलायै०। प्रियायै०। जयायै०। ज्वालायै०। विशोकायै०। इडायै०। एतैर्दक्षिणारंभाउदगन्ताः

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| शिखि | पर्ज. | जयं | कुलि | सूर्य | सत्या | भृशा | आका | वायु |
| दित्यै | आप | | अर्य | मृणे | नमः | सवि | सा. | पूष्णे |
| अदि | [illegible] | | | | | | | वित |
| सर्पा | [illegible] | | ब्र | ह्म | णे | | [illegible] | गृह |
| सोमा | [illegible] | | न | मः | ब्र. | | [illegible] | यमा |
| भल्ला | [illegible] | | ह्मा | ण | मा. | | [illegible] | गंध |
| मुख्या | | | | | | | [illegible] | भृंग |
| अह | रुद्रा | [illegible] | [illegible] | [illegible] | [illegible] | | जया | मृगाः |
| रोगा | पापा | शोषं | असु | वरु | पुष्प | सुग्री | दौवा | पितृ |

प्राक्संस्थादशरेखाः कृत्वा । कुण्डेस्थंडिलेवाग्निंप्रतिष्ठाप्यदक्षिणवेद्यांसांगग्रहान्संस्थाप्य । तदीशान्यांकलशंचसंस्थाप्यवास्तुमंडलेप्रतिमादौदेवताआवाहयेत् ।ईशानकोणपदेवास्तोः शिरसिशिखिनेन०शिखिनमावाहयामि । तद्दक्षिणैकपदेदक्षिणनेत्रेपर्जन्यम् ॥ तद्दक्षिणपदे तत्पश्चिमेचदक्षिणश्रोत्रेजयंतं तद्दक्षिणपदद्वयेदक्षिणांसेकुलिशायुधम् ॥ तद्दक्षिणपदद्वये दक्षिणबाहौसूर्यम् ॥ तद्दक्षिणपदद्वयेदक्षिणबाहौसत्यम्॥तद्दक्षिणपदद्वयेदक्षिणकूर्परेभृशम्॥ तद्दक्षिणोपरिस्थितैकपदेदक्षिणप्रबाहावाकाशम् । तद्दक्षिणाग्नेयकोणपदेदक्षिणप्राबहौ वायुम् । तत्पश्चिमैकपदेदक्षिणमणिबंधेपूषाणम् । तत्पश्चिमपदेतदुत्तरपदेचदक्षिणपार्श्वे वितथम् । तत्पश्चिमपदद्वयेदक्षिणपार्श्वेएवगृहक्षतम् । तत्पश्चिमपदद्वयेदक्षिणोरौयमम् । तत्पश्चिमपदद्वयेदक्षिणजानौगंधर्वम् । तत्पश्चिमपदद्वयेदक्षिणजंघायांभृंगराजम् । तत्प श्चिमोपरिस्थैकपदेदक्षिणस्फिचिमृगम् । तत्पश्चिमेनैर्ऋत्यकोणपदेपादयोःपितॄन् । तदुत्तरै कपदेवामस्फिचिदौवारिकम् । तदुत्तरपदेतत्प्राक्पदेच वामजंघायांसुग्रीवम् । तदुत्तरपदद्व येवामजानौपुष्पदंतम् । तदुत्तरपदद्वयेवामोरौवरुणम् । तदुत्तरपदद्वयेवामपार्श्वेअसुरम् । तदु

तरपदद्वयेवामपार्श्वेएवशोषम् ॥ तदुत्तरोपरिस्थैकपदेवाममणिबन्धेपापम् । तदुत्तरवायव्यकोणपदेवामप्रबाहौरोगम् ॥ तत्प्रागेकप
देवामप्रबाहावेवअहिम् । तत्प्राक्पदेतद्दक्षिणपदेचवामकूर्परेमुख्यम् । तत्प्राक्पदेवामबाहौभल्लाटम् । तत्प्राक्पदद्वयेवामबाहौसोमम् ।
तत्प्राक्पदद्वयेवामांसेसर्पम् । तत्प्राक्पदद्वयेवामश्रोत्रेअदितिम् । तत्प्रागुपरिस्थैकपदेवामनेत्रेदितिम् । तद्दक्षिणेशिखिपदाधःकोणपदेमुखे
अपः । आग्नेयेवायुपदाधःकोणपदेदक्षिणहस्तेसावित्रम् । नैर्ऋत्येपितृपदाधःकोणपदेमेढ्रेजयम् । वायव्येरोगपदाधःकोणपदेवामहस्तेरुद्रम् ।
मध्यपदेष्वीशानकोणपदाद्दक्षिणपदत्रयेदक्षिणस्तनेअर्यमणम् । तद्दक्षिणाग्नेयैककोणपदेदक्षिणस्तनेसवितारम् । तत्पश्चिमपदत्रयेजठरदक्षिण
भागेविवस्वंतम् । तत्पश्चिमनैर्ऋत्यकोणपदेवृषणयोर्विबुधाधिपम् । तदुत्तरपदद्वयेजठरवामभागेमित्रम् । तदुत्तरवायव्यकोणपदेवामहस्ते
राजयक्ष्माणम् । तत्प्राक्पदत्रयेवामहस्तेपृथ्वीधरम् । तत्प्रागीशानकोणपदेउरसिआपवत्सम् । मध्यनवपदेषुहृन्नाभ्योर्ब्रह्माणम् । ततःउत्तरे
वृषवास्तुम् । वास्तोष्पतेवसिष्ठोवास्तोष्पतिस्त्रिष्टुप्वास्तोष्पत्यावाहनेविनियोगः । ॐ वास्तोष्पतेप्रतिजानीह्यस्मानितिमंत्रेणस्थापयेत् ।
सचसुवर्णस्यरूप्यस्यवा । ततोमंडलाद्बहिरीशानादिचतुष्कोणेषुचरकींविदारींपूतनांपापराक्षसींपूर्वादिदिक्षुस्कंदमर्यमणंजृंभकंपिलिपिच्छं
चप्राग्वन्नाममंत्रैःसंस्थाप्य । प्रागाद्यष्टदिक्षुइंद्रादींस्तत्तन्मंत्रैर्नामभिर्वासंस्थाप्यतदस्त्वित्यावाह्यासनाद्युपचारैःप्रत्येकंएकत्रवापदार्थानु
समयेनवाभ्यर्च्यमंडलादीशान्यांकलशंसंस्थाप्यतत्रगंधौषधियवदूर्वापंचपल्लवसप्तमृत्पंचरत्नानिप्रक्षिप्यवस्त्रेणाभिवेष्टयचयवपूर्णंपूर्णपात्रंनि
धायवरुणमावाह्यतीर्थान्यावाहयेत् । केचित्तुब्रह्मादिदेवतास्थापनंवदंति । ततोऽन्वाधानंकुर्यात् । तत्रचक्षुषीआज्येनेत्यंतमुक्त्वानवग्र

हानष्टशताष्टाविंशत्यष्टान्यतमसंख्याभिः समिद्भिस्तिलाज्याहुतिभिश्च अधिदेवताः प्रत्यधिदेवताविनायकादीन् चतुःसंख्याभिः समिद्भिस्ति
लाज्याहुतिभिश्च शिखादिपंचचत्वारिंशद्देवता अष्टसहस्राष्टशताष्टाविंशत्यष्टान्यतरसंख्याभिः उदुंबरसमित्तिलपायसाज्याहुतिभिर्वास्तो
ष्पतइति चतसृभिर्ऋग्भिः क्रमेण अनंतरोक्तसंख्याभिः समित्तिलपायसाज्याहुतिभिर्वास्तोष्पतिंवास्तोष्पतइति चतसृभिर्वास्तोष्पतेध्रुवास्थू
णामित्यनया चक्रमेण पंचैकान्यतरसंख्याभिर्बिल्वाहुतिभिस्तद्वीजाहुतिभिर्वा चरक्यादीन ष्टचतुरन्यतरसंख्याभिः समित्तिलपायसाज्याहु
तिभिः शेषेण स्विष्टकृतमित्यादि निर्वापपूर्वकमाज्यभागांतं कुर्यात्। यजमानो द्रव्यत्यागं कुयात्। होमांते आचार्यः स्विष्टकृदादि प्रायश्चित्त होमांतं
कृत्वा दिक्पालनवग्रहक्षेत्रपालेभ्यः सदीपमाषभक्तबलीन् दत्त्वा मूर्द्धानमिति पूर्णाहुतिं जुहुयात्। वैश्वानरायेदं प्रणीतानयनादि कर्मशेषं समाप्य वा
स्तुमंडलपश्चिमदेशे शिखिने एष पायसबलिर्नममेत्येवं शिख्यादिभ्यो बलीन्दद्यात्। तान्विप्रे घृतयुतपायसेन क्षत्रियादौ वक्ष्यमाणैस्तदलाभे पाय
सेनेति ततश्चरक्यादिभ्यस्तथैव माषभक्तबलीन्दद्यात्। ततः आचार्यादयः समुद्रज्येष्ठा इत्यादि वैदिकैः सुरास्त्वेत्यादि पौराणैश्च मंत्रैर्यजमानं सप
त्नीकं शांतिकलशोदकेनाभिषिच्य सर्वौषधिभिरनुलिप्य स्नापयेयुः। ततः आचार्यो ब्रह्मस्थाने सुरूपां भूषितां पृथ्वीं ध्यात्वा ॐ धरायै नम इति मंत्रे
णप्रपूजयेत्। सर्वदेवमयं वास्तु वास्तुदेवमयं परमिति। ततो गृहं प्रागादितस्त्रिसूत्र्या पावमानेन सूक्तेन राक्षोघ्नेन च वेष्टयेत्। छिन्ने सूत्रेऽशुभम्। ततो
दुग्धपूर्णया चस्तनकुंभ्या तथैव सूक्तद्वयेन धारामविच्छिन्नां कुर्यात्। अथ यजमानो गृहस्याग्नेये आकाशपदे जानुदघ्नमवटं खात्वा तं गोमयेनोपलि
प्य शुक्लचंदनपुष्पाक्षतादिभिरलंकृत्य शाल्यादि सप्तबीजानि दध्योदनं च प्रक्षिप्य नवकुंभं जलपूर्णं शुक्लैकपुष्पयुतं गंधादिभिरर्चितं हस्तद्वये

नादायजानुभ्यामवनिंगत्वा ॐनमोवरुणायेतितज्जलेनगर्तंपूरयेत् । तत्रावर्तेप्रदक्षिणेपुष्पेचोर्ध्वमुखेशुभम् । वैपरीत्येत्वशुभम् । ततोमृन्निर्मितपे
टिकायांसप्तबीजदध्योदनशैवालपुष्पाणिप्रक्षिप्यपूर्वस्थापितंवृषवास्तुंतूर्यमंगलघोषेणानीयतस्यांसंस्थाप्यगन्धादिभिःसंपूज्यप्रार्थयेद्वाभ्या
म् । पूजितोसिमयावास्तोहोमाद्यैरर्चनैःशुभैः ॥ प्रसीदपाहिविश्वेशदेहिमेगृहजंसुखम् ॥ वास्तुपुरुषनमस्तेस्तुभूशय्याभिरतप्रभो ॥ मद्गृहं
धनधान्यादिसमृद्धंकुरुसर्वदेति ॥ ततःपेटिकामाच्छाद्यतस्मिन्गर्तेशनैर्निक्षिपेदनेनमंत्रेण । सशैलसागरांपृथ्वींयथावहसिमूर्द्धनि ॥ तथामां
वहकल्याणसंपत्संततिभिःसहेति ॥ गर्तेचतथैवमृदापूरितेमृदाधिक्यउत्तमंसाम्येमध्यमंन्यूनत्वेत्वधमंफलंविंद्यात् ॥ गर्तोपरिभूमिंगोमयेनोप
लिप्यशुक्लगंधपुष्पाक्षतैःपूजयेत् ॥ ततोग्नेःपश्चिमतआचार्यंसंपूज्यालंकृतांसवत्सांगांवासोयुगंचदक्षिणांदत्त्वा । ब्रह्मर्त्विग्भ्योयथाशक्तिदक्षि
णांदत्त्वाग्रहाणांशिख्यादिवास्तुदेवतानांचपूजांकृत्वाक्षमाप्य । उत्तिष्ठ० यांतुदेवेतिविसृज्याचार्यहस्तेप्रतिपाद्याग्निंसंपूज्यगच्छेतिविसृज्यब्रा
ह्मणैः शांतिंपाठयित्वाग्रहादीनां शिख्यादीनांचप्रीत्यर्थंप्रत्येकंत्रींस्त्रीनेकैकंयथाशक्तिब्राह्मणान्संभोज्याशिषोगृहीत्वासुहृद्युतोभुंजीत ।
एवंप्रथमेह्निवास्तुशांतिंविधायद्वितीयेह्निगृहप्रवेशंकुर्यात् । सचेत्थम् । नवजलपूर्णंपल्लवोपेतंदूर्वायुतंसुगंधादिलिप्तंवस्त्रवेष्टितंसंपूर्णपात्रं
सफलंकलशमंजलिनागृहीत्वायजमानोब्राह्मणान्वितःसदारपुत्रस्तूर्यघोषेणगृहंप्रविश्यप्रधानगृहमध्येधान्योपरितंकलशंस्थापयेत् । ततो
गृहस्थैर्यार्थंपुण्याहंवाचयित्वाब्राह्मणान्संपूज्यभोजयित्वाशिषो गृहीत्वासुहृद्युतोभुंजीत । इतिदिनकरभट्टकृतेशांतिसारेवास्तुशां
तिप्रयोगः । ( अथदुष्टरजोदर्शनशांतिः ) प्रथमरजोदर्शनेचैत्रज्येष्ठाषाढभाद्रपदकार्तिकपौषप्रतिपत्षष्ठ्यष्टमी द्वादश्यमारि

क्तापापवारभरण्यार्द्रापुष्याश्लेषापूर्वाज्येष्ठामूलपूर्वाषाढापूर्वाभाद्रपदाव्याघातगंडातिगंडशूलवैधृतिव्यतीपातपरिघपूर्वार्द्धभद्रात्रिधा ॥ वि
भक्तदिनांत्यभागरात्रिसंध्यापापलग्नसंक्रांतिदग्धदिनरविचंद्रोपरागाशौचजीर्णारुणनीलवस्त्रपितृपरगृहाअशुभाः । अत्रदोषबहुत्वेएवशां
तिकंकार्यम् । प्रभूतदोषेयदिदृश्यतेतत्पुष्पंततःशांतिककर्मकार्यमितिवसिष्ठसंहितोक्तेः ॥ प्रभूतदोषेवैधव्यनिःसंततित्वापादकेइति
केचिदर्थमाहुः । ग्रहणेतुरजोदर्शनदोषैकत्वेपिशांतिः। ग्रहणेचंद्रसूर्यस्यप्रसूतिर्यदिजायते॥व्याधिःपीडातदास्त्रीणामादौतुऋतुदर्शनादिति
शौनकेननिरपेक्षस्यनिमित्तत्वोक्तेः ॥ तत्रशांतिर्वक्ष्यते । कृतेपिशांतिकेशुद्धकालीनरजोदर्शनावधिसंगोनकार्यः । विवर्जयेदेवतदेकशय्यां
यावद्रजोदर्शनमुत्तमेह्नीतिवसिष्ठोक्तेः । शांतिरुक्तातेनैव । चेद्दुष्टेह्निनवोदकुंभसलिलैःसन्मंत्रितैरौषधैः स्नानंपापनुदंसपंचकलशैःकार्यंसमृ
द्धीजकैः ॥ ऐशानतोगोमयमंडलेचपरिस्तृतेऽग्नौजुहुयाच्चदूर्वाम् ॥ युग्मांघृताक्तांचसमित्प्रमाणांगायत्रिसंज्ञाष्टसहस्रसंख्या ॥शतप्रमाणाम
थवाघहंत्रीशुभायवैव्याहृतिभिस्तिलैश्च ॥ ततःसुरान्भूमिसुरान्पितॄंश्चसंतर्पयेदन्नसुवर्णवस्त्रैः ॥ प्रयोगपारिजातेशौनकः ॥ सार्तवानांतुना
रीणांशांतिंवक्ष्यामिशौनक ॥पंचमेह्निचतुर्थेवागृहातिथ्यपुरःसराम्॥ द्रोणप्रमाणधान्येनव्रीहिराशित्रयंभवेत् ॥ कुंभत्रयंन्यसेद्राशौतंतुवस्त्रा
दिवेष्टितम् ॥ पूरयेत्तीर्थसलिलैःप्रतिकुंभंपृथक्पृथक् ॥ सूक्तेनाथनवर्चेनप्रसुवआपइत्यथ ॥ ऋचायाःप्रवचस्तद्वद्वायत्र्याचततःक्रमात् ॥
मध्यकुंभेक्षिपेद्धान्यमौषधानिचहेमच ॥ उदुंबरःकुशादूर्वासजीवंवटबिल्वकाः ॥ विष्णुक्रांताचतुलसीबर्हिषंशंखपुष्पिका॥शतावर्यश्वगंधा
चनिर्गुंडीसर्षपद्वयम् ॥ अपामार्गःपलाशश्चपनसोजीवकस्तथा ॥ प्रियंगवश्चगोधूमाव्रीहयोश्वत्थएवच ॥क्षीरंदधिचसर्पिश्चपद्मपत्रंतथोत्पल

म् ॥ कुरंटकत्रयंगुंजावचाभद्रकमुस्तकाः ॥ द्वात्रिंशदौषधानीहयथासंभवमाहरेत्॥मृत्तिकाश्चौषधादीनितन्मंत्रेणक्षिपेत्क्रमात् ॥ कुंभोपरि
न्यसेत्पात्रंकांस्यंमृद्भेणुताम्रजम् ॥ भुवनेश्वरींन्यसेत्तत्रइंद्राणींचपुरंदरम्॥ आचार्यःपूजयेद्धान्योगायत्र्यामंत्रसारया॥इंद्राणींपूजयेद्देवीमिंद्रा
णीमासुनारिषु ॥ क्रमेणपूजयेदिंद्रमिंद्रत्वावृषभंवयम् ॥ आवाहनादिसकलैरुपचारैःप्रपूजयेत् ॥ तन्मध्येसंस्पृशन्कुंभंमंत्रेणभुवनेश्वरीम् ॥
जपेद्गायत्रीमाहोमाच्छ्रीसूक्तंचजपेत्ततः ॥ स्पृशन्वैदक्षिणंकुंभंमृत्विगेकोजपेत्तथा ॥ चत्वारिरुद्रसूक्तानिचतुर्मंत्रोत्तराणिच ॥ संस्पृशन्नुत्तरं
कुंभंश्रीरुद्रंरुद्रसंख्यया ॥ शन्नइंद्राग्निसूक्तंचतत्रैवसंस्पृशन्जपेत् ॥ कुंभस्यपश्चिमेदेशेशांतिहोमंसमाचरेत् ॥ दूर्वाभिस्तिलगोधूमैःपायसे
नघृतेनच ॥ तिसृभिश्चैवदूर्वाभिरेकैकाचाहुतिर्भवेत् ॥ अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतुवा ॥ गायत्र्यैवतुहोतव्यंहविरत्रचतुष्टयम् ॥ एवका
रादिंद्राणींद्रयोर्होमोनास्तीतिकेचित् ॥ ततःस्विष्टकृतंहुत्वासमुद्रादूर्मिसूक्ततः ॥ संततामाज्यधारांतांपूर्णहुतिमथाचरेत् ॥ अथाभिषेकंकु
र्वीतप्रतिकुंभस्थितोदकैः ॥ आपोहिष्ठेतिनवभिःसूक्तेनचततःपरम् ॥ इंद्रोअंगत्र्यृचेनैवपावमानैःक्रमेणतु॥उभयंशृणवच्चनस्वस्तिदाविशए
कया ॥ त्र्यंबकेनचमंत्रेणजातवेदसइत्र्यृचा ॥ समुद्रज्येष्ठाइत्यादित्रायंतांचत्रिभिःक्रमात् ॥ इमाआपत्र्यृचेनैवदेवस्यैवेतिमंत्रतः ॥
मंत्रेणाथतमीशानंत्वमग्नेरुद्रइत्यथ ॥ तमुष्टुहीतिमंत्रेणभुवनस्यपितरंतथा ॥ यातेरुद्रेतिमंत्रेणशिवसंकल्पमंत्रतः ॥ इंद्रत्वावृषभं
पंचमंत्रैश्चैवाभिषिंचयेत् ॥ धेनुंपयस्विनींदद्यादाचार्यायचभूषणैः ॥ सदक्षिणमनड्वाहंप्रदद्याद्रुद्रजापिने ॥ महाशांतिंप्रजप्याथब्राह्मणा
न्भोजयेत्ततः ॥ अथास्मत्पितृकृतप्रयोगः । देशकालौसंकीर्त्यममपत्न्याःप्रथमरजोदर्शनेऽमुकदुष्टमासादिसूचितसकलारिष्टनिरसनद्वा

राश्री परमेश्वरप्रीत्यर्थंसनवग्रहमखांशौनकोक्तांशांतिंकरिष्यइतिसंकल्प्य । गणेशपूजनमातृकापूजननांदीश्राद्धाचार्यब्रह्मर्त्विग्वरणानिकु र्यात । ऋत्विजश्चाष्टौषट्चत्वारोवा । ततः । आचार्योगृहेशानदेशेतद्दक्षिणोत्तरयोश्चमहीद्यौरितिभूमिंस्पृष्ट्वा । ओषधयःसंवदंतइतिद्रो णप्रमाणव्रीहीणांराशित्रयंकृत्वातत्रकुंभत्रयमाकलशेष्वितिस्थापयेत् । सर्वत्रमंत्रावृत्तिः । ततः । प्रसुवआपइतिनवर्चस्यसूक्तस्यसिंधुक्षि त्प्रैय्यमेधोनद्योजगती कलशेषूदकपूरणेविनियोगः । प्रसुवआपइत्यादियाःप्रवतइत्यस्यवसिष्ठोनद्यःशक्करीविनियोगःप्राग्वत् ।गंधद्वारामि तित्रिष्वपिगंधम् । याओषधीरितिसर्वौषधीः ।ओषधयःसमितियवान् । ततोमध्यकुंभेव्रीहियवमाषतिलकंगुश्यामाकमुद्गान्क्षिप्त्वा । गाय त्र्याउदुंबरकुशदूर्वारक्तोत्पलचंपकबिल्वविष्णुक्रांतातुलसीबर्हिषशंखपुष्पिणीशतावर्यश्वगंधानिर्गुंडीरक्तपीतसर्षपापामार्गपलाशपनसजी वकप्रियंगुगोधूमव्रीह्यश्वत्थदधिदुग्धमधुघृतपद्मपत्रनीलोत्पलसितरक्तपीतकुरंटकत्रयगुंजावचाभद्रकमुस्तारव्यानिद्वात्रिंशदौषधानिसर्वा णियथासंभववंवाक्षिपेत् । ततस्त्रिषुकांडात्कांडादितिदूर्वाः । अश्वत्थेवइतिपंचपल्लवान् । स्योनापृथिवीतिसप्तमृदः । याःफलिनीरितिफला नि । सहिरत्नानीतिपंचरत्नानि।हिरण्यरूपइतिहिरण्यंचक्षिपेत् ।युवासुवासाइतिसूत्रेणवाससावाकलशकंठान्वेष्टयित्वा । गंधाक्षतादिभिः कलशान्भूषयेत् । ततःकलशत्रयोपरितेनैवक्रमेणसौवर्णराजतंकांस्यमयंताम्रमयंमृन्मयंवायवादिपूरितंपात्रत्रयंपूर्णादर्वीतिमंत्रेणनिधाय तदुपरिश्वेतवस्त्रत्रयंन्यस्यतत्रचंदनादिनाष्टदलानिकुर्यात् ।तत्रमध्येगायत्र्याविश्वामित्रोभुवनेश्वरीगायत्री भुवनेश्वर्यावाहनेविनियोगः । ॐ तत्सवितु० भुवनेश्वरीमावाहयामीतियथाशक्तिसुवर्णनिर्मितांभुवनेश्वरीप्रतिमामग्न्युत्तारणपूर्वकंस्थापयेत् । तद्दक्षिणकुंभोपरिवस्त्रेइंद्राणी

वृषाकपिरिंद्राणीपंक्तिः इंद्राण्यावाहनेविनियोगः। उत्तरकलशोपरिइंद्रत्वाविश्वामित्रइंद्रोगायत्रीइंद्रावाहनेविनियोगः । ततः सूक्तमंत्रैः पूजांकुर्यात्। ततोमध्यकुंभे । आचर्योष्टसहस्रमष्टशतंवागायत्रींजप्त्वाश्रीसूक्तंजपेत् । ततः। एकऋत्विग्दक्षिणकुंभेरुद्रसूक्तानिजपेत् । तानिच । कद्रुद्रायेतिइमारुद्रायतवसइत्येकादशातेपितारितिपंचदशइमारुद्रायस्थिरधन्वनइतिचतस्रः आवोराजानमित्येकातमुष्टुहीत्येकाभुवनस्यपितरंत्र्यंबकमिति । अथान्यऋत्विगुत्तरकुंभेएकादशावृत्तिभीरुद्रंशंनइंद्राग्नीइतिसूक्तंजपेत् । ततः । आचार्यःकुंभपश्चिमेग्निंसंस्थाप्यतदीशान्यांनवग्रहादींस्तत्तन्मंत्रैरावाह्यषोडशोपचारैः संपूज्य । तदीशान्यांप्राग्वत्कुंभंसंस्थाप्यतत्रवरुणमावाह्यान्वाधानंकुर्यात् । चक्षुषीआज्येनेत्यंतमुक्त्वानवग्रहान्प्रत्येकंप्रतिद्रव्यमष्टसंख्याभिः समित्तिलाज्याहुतिभिः। अधिदेवताः प्रत्यधिदेवताश्चप्रत्येकंप्रतिद्रव्यंचतुःसंख्याभिः। समित्तिलाज्याहुतिभिः । भुवनेश्वरीमष्टसहस्राष्टशताष्टोत्तरशतान्यतरसंख्याभिर्दूर्वातिलमिश्रगोधूमपायसाज्याहुतिभिः । इंद्राणीमिंद्रंचप्रतिद्रव्यमष्टाविंशतिसंख्याभिर्दूर्वातिलमिश्रगोधूमपायसाज्याहुतिभिः । शेषेणस्विष्टकृतपूर्णपात्रनिधानांतंकृत्वागोदुग्धपायसंश्रपयित्वाज्यभागांतंकुर्यात्ततोयजमानोदक्षिणतउपविश्यत्यागंकुर्यात् । आचार्योहोमानंतरंस्विष्टकृदादिप्रायश्चित्तहोमांतंकृत्वादिक्पालनवग्रहभुवनेश्वरींद्राणींद्रक्षेत्रपालेभ्योमाषभक्तबलींस्तत्तन्मंत्रैर्दत्त्वासमुद्रादूर्मिरित्यृचेनपूर्णाहुतिंहुत्वाप्रणीताविमोकादिकर्मशेषंसमाप्यसर्वकलशोदकेनधृतनववस्त्रंयजमानंतादृशींचभार्यांसर्त्विगभिषिंचेदेतैर्मंत्रैः । आपोहिष्ठेतिनवयएकइद्धिदयतइत्येकात्रिभिष्ट्वंदेवेतिसप्तउभयंशृणवच्चनः । स्वस्तिदाविशस्त्र्यंबकंजातवेदसेसमुद्रज्येष्ठाइतिचतस्रः । त्रायंतामितितिस्र । इमाआपइतितिस्रः । देवस्यत्वेत्यापस्तंबशाखागता

ह्वयः । तमीशानंत्वमग्नेरुद्रः । तमुष्टुहिभुवनस्यपितरंयातेरुद्रयज्जाग्रतोदूरमुदैतीतिषट्इंद्रस्त्वावृषभंवयमितिपंचसुरास्त्वामभिषिंचं
त्वित्यादयश्चपौराणाः । यजमानोग्निमाचार्यादींश्चसंपूज्याचार्यायधेनुं रुद्रजापिनेसदक्षिणमनड्वाहंयथाशक्तिभूयसींदक्षिणांदद्यात् ।
ततोभुवनेश्वर्यादीनांग्रहाणांचोत्तरपूजांकृत्वोत्तिष्ठब्रह्मणस्पते०। यांतुदेवेतिविसृज्याचार्यायप्रतिपाद्याग्निंसंपूज्यगच्छगच्छेतिविसृज्यशांतीः
पाठयित्वा । भुवनेश्वर्यादीनांग्रहाणांचप्रीतयेत्रींस्त्रीन्ब्राह्मणान्भोजयित्वासुहृद्युतोभुंजीत । इतिदुष्टरजोदर्शनशांतिः । बौधायनसूत्रे
ऋतुशांतिंव्याख्यास्यामस्तिथिवारनक्षत्रलग्नदोषशांत्यर्थंचतुर्थेह्निपंचमेह्निवाशांतिस्नानंप्रकुर्वीत । देवालयेगृहेवाप्रस्थाष्टाभिर्धान्यैस्तद
र्द्धैस्तंदुलैस्तदर्द्धैस्तिलैश्चारत्निमात्रंचतुरस्रंकृत्वा । मध्येनलिनमुल्लिख्यकुशैर्दूर्वाभिःप्रच्छाद्यतस्मिन्तन्तुवेष्टितंकुंभंनिधायापोवाइद ३ सर्व
मित्येतेनानुवाकेनाब्लिंगाभिश्चकुंभमुदकैःपूरयित्वा । कूर्चमंतर्धायपंचपल्लवान्पंचत्वचोनिक्षिप्यकपित्थाश्वत्थपालाशबिल्वोदुंबरंचनवर
त्नंचनिक्षिप्य । नववस्त्रयुग्मेनाच्छाद्यनारिकेरफलेनापिधायबिल्वपल्लवैश्चूतपल्लवैश्चावकीर्यपुरुषंपुंडरीकाक्षंध्यात्वा । गंधपुष्पधूपदीपैःकुं
भमभ्यर्च्याथश्रोत्रियांश्चबहुश्रुतानष्टचतुरोवाऋत्विजोवरणपूर्वमभ्यर्च्याचार्यंचतंकुंभमन्वारभ्यवैष्णवींगायत्रींसहस्राष्टकंवावदतोगायत्रीं च
वेदादीनापोहिष्ठामयोभुवइतितिसृभिर्हिरण्यवर्णाःशुचयःपावकाइत्येतमनुवाकंपवमानःसुवर्जनइत्येतमनुवाकंपुरुषसूक्तंऋचांप्राचीमित्यने
नानुवाकेनाथालंकृतांपत्नीमुरुविष्टरेतृणआसीनामापोहिष्ठामयोभुवइतितिसृभिर्हिण्यवर्णाःशुचयःपावकाइति चतसृभिःपवमानःसुवर्जन
इत्येतेनानुवाकेनऋत्विजःप्रत्येकमाशीर्वादपुरःसरंस्नापयेयुस्ततोनारींपंचगव्यंप्राशयित्वायत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके । प्राशनात्पं

चगव्यस्यदहत्वग्निरिंधनमितिशुचौदेशेस्थंडिलंकल्पयित्वालौकिकाग्निंप्रतिष्ठाप्यस्वगृह्योक्तविधिनाग्निमुखांतंकृत्वाविष्णुसूक्तेनशताष्टक
संख्ययापलाशसमिधोहुत्वैवंब्रह्मसूक्तेनान्नंरुद्रसूक्तेनाज्यंतेषामष्टादशकृत्वोथायुष्यहोमंघृतसूक्तेनहुत्वाततोनक्षत्रहोमंतत्तन्मंत्रेणतस्यचतुर्द
शकृत्वः पूर्ववत्समिदन्नाज्यैस्त्र्यंबकंयजामहइतितिलहोमंशताष्टकाहुतीरुपजुहुयात्स्विष्टकृत्प्रभृतीसिद्धमाधेनुवरप्रदानाद्दक्षिणांदद्यादाचार्या
यविशेषतस्ततः पुण्याहवाचनंकृत्वाततोनारीपापात्प्रमुच्यतेत्याहभगवान्बौधायनः (अथकन्यायाबालवैधव्यहेतुलक्षणग्रहयोगशान्तिः )मा
र्कण्डेयः।बालवैधव्ययोगेतुकुंभद्रुप्रतिमादिभिः ॥कृत्वालग्नंततःपश्चात्कन्योद्वाह्येतिचापरे।तत्रपुनर्भूदोषाभावउक्तोविधानखंडे।स्वर्णद्रुपिप्प
लानांचप्रतिमाविष्णुरूपिणी॥तयासहविवाहेतुपुनर्भूत्वंनजायते॥सूर्याऽरुणसंवादे।विवाहात्पूर्वकालेचचंद्रताराबलान्विते॥ विवाहोक्तेनमंत्रे
णकुंभेनसहचोद्वहेत्।सूत्रेणवेष्टयेत्पश्चाद्दशतंतुविधानतः।कुंकुमालकृतदेहंतयोरेकांतमंदिरे।ततःकुंभंचनिःसार्यप्रभज्यसलिलाशये।ततोभिषे
चनंकुर्यात्पंचपल्लववारिभिः॥कुंभप्रार्थनातत्रैव।वरुणांगस्वरूपायजीवनानांसमाश्रय।पतिंजीवयकन्यायाश्चिरंपुत्रसुखंकुरु॥ देहिविष्णोवरं
देवकन्यांपालयदुःखतः॥ततोलंकारवस्त्राढ्यांवरायप्रतिपादयेत्॥इतिकुंभविवाहः॥मूर्तिदानमपितत्रैवोक्तम् ॥ ब्राह्मणंसाधुमामंत्र्यसंपूज्यवि
धार्हणैः।तस्मैदद्याद्विधानेनविष्णोर्मूर्तिंचतुर्भुजाम्॥शुद्धवर्णसुवर्णेनवित्तशक्त्याथवापुनः। निर्मितांरुचिरांशंखगदाचक्राब्जसंयुताम्।दधा
नांवाससीपीतेकुमुदोत्पलमालिनीम्॥सदक्षिणांचतांदद्यान्मंत्रमेतमुदीरयेत्॥यन्मयाप्राचिजनुषिघ्नंत्यापतिसमागमम्।विषोपविषशस्त्राद्यैर्ह
तोवातिविरक्तया॥प्राप्यमानंमहाघोरंयशःसौख्यधनापहम्॥वैधव्यद्यतिदुःखौघनाशायसुखलब्धये।बहुसौभाग्यलब्ध्यैचमहाविष्णोरिमां

तनुम्॥सौवर्णीं निर्मितां शक्त्या तुभ्यं संप्रददे द्विज॥अनघा अहमस्मीति त्रिवारं प्रजपेदिति॥ एवमस्त्विति तस्योक्तं गृहीत्वा स्वगृहं विशेत्। ततो वै
वाहिकं कुर्याद्विधिं दाता मृगीदृशः।(अथार्कविवाहः)अथ तृतीयमानुषीविवाहनिषेधात्तदर्थमर्कविवाह उच्यते।मात्स्ये कश्यपः।उद्वहेद्वति सिद्ध्य
र्थं तृतीयां न कदाचन॥मोहादज्ञानतो वापि यदि गच्छेत्तु मानुषीम्। नश्यत्येव न संदेहो गर्गस्य वचनं यथा।संग्रहे।तृतीया यदि चोद्वाहेन्नहि सा विधवा
भवेत्॥चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत्॥आदित्यदिवसे वापि हस्तर्क्षे वा शनैश्चरे॥शुभे दिने वा पूर्वाह्णे कुर्यादर्कविवाहकम्॥ब्राह्मे॥ग्रामात्प्रा
च्यामुदीच्यां वा सपुष्पफलसंयुतम्॥परीक्ष्य यत्नतो हस्तात्स्थंडिलादि यथाविधि।कृत्वार्कं पुरतस्तिष्ठन्प्रार्थयेत्तद्विजोत्तमाः। त्रिलोकवासिसप्ता
श्वच्छायया सहितो रवे।तृतीयोद्वाहजं दोषं निवारय सुखं कुरु।तत्राध्यारोप्य देवेशं छायया सहितं रविम्।वस्त्रैर्माल्यैस्तथा गंधैस्तन्मंत्रेणैव पूजयेत्।
तन्मंत्र आकृष्णेनेति ॥ चतुर्थे दिवसेऽतीते पूर्ववत्तां प्रपूजयेत् ॥ विसृज्य होममग्निं च उद्वहेन्मानुषीं पराम् ॥व्यासः॥सपुष्पफलशाखैकमर्कगुल्मं
समाश्रयेत्॥अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत्पुरा।अर्कसंनिधिमागत्य तत्र स्वस्त्यादि वाचरेत्॥नांदीश्राद्धे हिरण्येन अष्टवर्गान्प्रपूजयेत्॥पू
जयेन्मधुपर्केण वरं विप्रस्य हस्ततः॥यज्ञोपवीतं वस्त्रं च हस्तकर्णादिभूषणम् । उष्णीषगंधमाल्यादि वरायास्मै प्रदापयेत्॥अर्कं प्रदक्षिणं कुर्वन् जपे
न्मंत्रमिमं बुधः।मम प्रीतिकरा येयं मया सृष्टा पुरातनी॥अर्कजा ब्रह्मणा सृष्टा अस्माकं प्रतिरक्षतु।पुनः प्रदक्षिणी कुर्यान्मंत्रेणानेन मंत्रवित् । नमस्ते
मंगले देवि नमः सवितुरात्मने॥त्राहि मां कृपया देवि पत्नी त्वं मे इहागता।अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च।वृक्षाणामादिभूतस्त्वं देवानां प्रीति
वर्द्धनः।तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशय।ततश्च कन्यावरणं त्रिपुरुषं कुलमुच्चरेत् ॥ आदित्यः सविताचार्यः पुत्री पौत्री च नप्त्रिका।गोत्रं का

श्यपमित्युक्तंलोकेलौकिकमाचरेत्॥मुहूर्तेर्केनिरीक्षेतस्वस्तिसूक्तमुदीरयेत् ॥ आशीर्भिः सहितः कुर्यादाचार्यप्रमुखैर्द्विजैः ॥ अथाचार्यंस
माहूयविधिनातन्मुखाच्चताम् ॥ प्रतिगृह्यततोहोमेगृह्योक्तविधिनाचरेत् ॥ अर्ककन्यामिमांविप्रयथाशक्तिविभूषिताम् ॥ गोत्रायश
र्मणेतुभ्यंदत्तांविप्रसमाश्रय॥इतिदानमंत्रः ॥अंजल्यक्षतकर्माणिकृत्वाकंकणपूर्वकम्॥यावत्पंचावृतंसूत्रंतावदर्कंप्रवेष्टयेत् ॥ स्वशाखोक्तेनमं
त्रेणगायत्र्यावाऽथवाजपेत् ॥ पंचीकृत्यपुनः सूत्रंस्कंदेबध्नातिमंत्रतः ॥ बृहत्सामेतिमंत्रेणसूत्ररक्षांप्रकल्पयेत्॥अर्कस्यपुरतःपश्चाद्दक्षिणोत्तरत
स्तथा॥कुंभांश्चनिक्षिपेत्पश्चादाग्नेयादिचतुष्टये ॥ सवस्त्रंप्रतिकुंभंचत्रिःसूत्रेणैववेष्टयेत् ॥ हरिद्रागंधसंयुक्तंपूजयेच्छीतलंजलम्॥प्रतिकुंभंमहा
विष्णुंसंपूज्यपरमेश्वरम्॥पाद्यार्घ्यादिनिवेद्यांतंकुर्यान्नाम्नैवमंत्रवित्॥ पुनःप्रदक्षिणंकृत्वामंत्रमेतमुदीरयेत् ॥ मयाकृतमिदंकर्मस्थावरेषुजरा
युणा ॥ अर्कापत्यानिनोदेहितत्सर्वंक्षंतुमर्हसि ॥ इत्युक्त्वाशांतिसूक्तानिजप्त्वातंविसृजेत्पुनः ॥ गोयुग्मंदक्षिणांदद्यादाचार्यायचभक्तितः।इतरे
भ्योपिविप्रेभ्योदक्षिणांचापिशक्तितः ॥ तत्सर्वंगुरवेदद्यादंतेपुण्याहमाचरेत् ॥ शौनकः ॥ तृतीयस्त्रीविवाहेतुसंप्राप्तेपुरुषस्यतु॥आर्कंविवाहं
वक्ष्यामिशौनकोहंविधानतः ॥ अर्कसन्निधिमागत्यतत्रस्वस्त्यादिवाचयेत्॥नांदिश्राद्धंप्रकुर्वीतस्थंडिलंचप्रकल्पयेत्॥अर्कमभ्यर्च्यसौर्याच
गंधपुष्पाक्षतादिभिः।सौरीआकृष्णेनेति ॥ स्वयंचालंकृतस्तद्वद्वस्त्रमाल्यादिभिःशुभैः ॥ अर्कस्योत्तरदेशेतुसमन्वारब्धएतया ॥ एतयाऽर्क
कन्यया ॥ उल्लेखनादिकंकुर्यादाघारांतमतःपरम्॥ आज्याहुतिंचजुहुयात्संगोभिरनयैकया ॥ यस्मैत्वाकामकामायेत्येतयर्चाततःपरम् ॥
व्यस्ताभिश्चसमस्ताभिस्ततश्चस्विष्टकृद्भवेत् ॥ परिषेचनपर्यंतमयाश्चेत्यादिकंक्रमात् ॥ अथप्रयोगः ॥ शुभदिनेग्रामात्प्राच्यामुदीच्यां

र्वार्कसमीपंगत्वादेशकालौसंकीर्त्यममभावितृतीयमानुषीपरिणयनस्यशुभतासिद्ध्यर्थमर्कविवाहंकरिष्यइतिसंकल्प्यगणपतिपूजनपुण्या
हवाचनमातृकापूजननांदीश्राद्धाचार्यवरणानिकुर्यात्॥ततोवरोर्कपुरतस्तिष्ठन्सूर्यंप्रार्थयेत्॥त्रिलोकवासिन्सप्ताश्वच्छाययासहितोरवे॥तृती
योद्वाहजंदोषंनिवारयसुखंकुरु ॥ ततोर्कवृक्षच्छायासहितंसूर्यआकृष्णेनेतिमंत्रेणषोडशोपचारैःपूजयेत् ॥ तत्रवस्त्रदानकालेवस्त्रेणतंतुभिश्वा
र्कमावेष्टयेत् ॥ अभिषेकेआपोहिष्ठेत्यादयोमंत्राः ॥ ततआचार्योवरंमधुपर्कयज्ञोपवीतवस्त्रभूषणोष्णीषगंधमाल्यैःपूजयेत् ॥ ततोवरोर्कंप्रद
क्षिणीकुर्वन् ॥ ममप्रीतिकरायेयंमयासृष्टापुरातनी ॥ अर्कजांब्रह्मणासृष्टाअस्माकंप्रतिरक्षतुइतिजपेत् ॥ पुनःप्रदक्षिणीकुर्वन् ॥ नमस्तेमंग
लेदेविनमःसवितुरात्मजे ॥ त्राहिमांकृपयादेविपत्नीत्वंमेइहागता ॥ अर्कत्वंब्रह्मणासृष्टःसर्वप्राणिहितायच ॥ वृक्षाणामादिभूतस्त्वंदेवानां
प्रीतिवर्द्धनः ॥ तृतीयोद्वाहजंदोषंमृत्युंचाशुविनाशयेतिजपेत्॥ततःकन्यांप्रयच्छेदाचार्यंप्रार्थयेत्॥ ततआचार्यःकाश्यपावत्सारनैध्रुवेतित्रि
प्रवरान्वितकाश्यपगोत्रोत्पन्नांआदित्यस्यप्रपौत्रींसवितुःपौत्रींममाऽमुकशर्मणःपुत्रींअर्कनाम्नींकन्यां अमुकप्रवरान्वितामुकगोत्रायामुकप्र
पौत्रायामुकपौत्रायामुकपुत्रायामुकनाम्नेवरायदास्येइतिवाग्दानंकुर्यात् ॥ ततोवरःसुमुहूर्तेर्ककन्यांनिरीक्ष्यस्वस्तिनोमिमीतेतिसूक्तंपठे
त् ॥ ततःआचार्योवाग्दानवद्गोत्राद्युच्चार्यइमामर्ककन्यांतुभ्यमहंसंप्रददेनममेतिवरहस्तेजलंदत्त्वा ॥ अर्ककन्यामिमांविप्रयथाशक्तिविभू
षिताम् ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रयेतिमंत्रंपठेत ॥ ततआचार्योवरस्यकंकणबंधंसूत्रेणकृत्वार्ककन्याप्रतिनिधित्वेनाक्षतारो
पणंतदुक्तमंत्रैःकुर्यात ॥ वरोप्यर्केतदुक्तमंत्रैरक्षतारोपणंकुर्यात् ॥ ततोवरोगायत्र्यार्कंसूत्रेणपंचकृत्वआवेष्टयेतेनसूत्रेणबृहत्सामेतिमं

त्रेणस्कंधेबध्नीयात् ॥ ततोवरआचार्योवार्कस्याष्टदिक्षुअष्टौकलशान्संस्थाप्यकलशकंठान्वस्त्रेणसूत्रेणवावेष्ट्यहरिद्रांनिक्षिप्यसर्वत्रेदं
विष्णुरितिविष्णुंसंपूज्यार्कोत्तरेग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानंबृहस्पतिमग्निंवायुंसूर्यंप्रजापतिंचाज्येनेत्युक्त्वाशेषेणस्विष्टकृत
मित्याद्युक्त्वाज्यभागांतेसंगोभिरांगिरसइतिबृहस्पतयेहुत्वा ॥ यस्मैत्वाकामकामायवयंसम्राडयजामहे ॥ तमस्मभ्यंकामंदत्त्वात्थेदंत्वंघृतं
पिबेत्यग्नयेव्यस्तसमस्तव्याहृतिभिर्हुत्वाकर्मशेषंसमापयेत् ॥ ततोवरोममप्रीतिकरेतिमंत्रेणार्कंत्रिःप्रदक्षिणीकृत्य ॥ मयाकृतमिदं
कर्मस्थावरेषुजरायुणा ॥ अर्कापत्यानिनोदेहितत्सर्वंक्षंतुमर्हसीतिप्रार्थयेत् ॥ ततःशांतिसूक्तानिपठित्वाऽर्कस्थसूर्यंविसृज्याचार्यायगोयुग्मं
यथाशक्तिभूयसींचदत्त्वाविष्णुप्रतिमामाचार्यायप्रतिपाद्यपुण्याहवाचनंकुर्यात् ॥ ततःपंचमेऽह्निपुनरर्केसूर्यंपूर्ववत्संपूज्यविसृज्यमानुषींपरि
णयेत् ॥ इतिदिनकरभट्टकृतेशांतिसारेर्केविवाहप्रयोगः ॥ इदानींजन्मनक्षत्रतिथिदोषादिशांतिकम् ॥ मूलव्याख्याप्रयोगाभ्यांब्रूतेदिनकरः
सुधीः ॥ तत्रादौबहुशांत्यंगत्वाद्गोमुखप्रसवोभिधीयते ॥ प्रयोगपारिजातेगर्गः ॥ प्रणिपत्यरविंवक्ष्येप्रायश्चित्तमनुस्मरन् ॥ सर्वारिष्टविनाशा
ययदुक्तंज्योतिरर्णवे ॥ पित्रारिष्टेसुतारिष्टेमात्रारिष्टेतथैवच ॥ पित्रारिष्टेपित्रारिष्टसूचकनक्षत्राद्युत्पत्तौ ॥ एवमग्रेपि ॥ प्रायश्चित्तंतदाकुर्यात्त
त्तद्दोषस्यशांतये ॥ पूषाश्विनौगुरौसार्पंमघाचित्रैंद्रमूलभे ॥ एषुऋक्षेषुजातस्यकुर्याद्गोजननंतथा ॥ अत्रप्रायश्चित्तंमूलादिशांतिकंगोजन
नंचकुर्यादितिसमुच्चयोविधीयते ॥ अन्यथागोजननस्यानिष्टनिरासार्थत्वेनशांत्याविकल्पःस्यात् ॥ नचादृष्टार्थत्वात्समुच्चयः ॥ एकप्रकर
णाधीतत्वाभावात् ॥ अन्यथादिनक्षयादिनिरसनार्थंकदलीदानादेरपिसमुच्चयापत्तेः ॥ तत्रापिशांतिकांतरात्पूर्वंपश्चाद्वागोजननंकार्यम् ॥ ज

न्मर्क्षेवात्रिजन्मर्क्षेशुभवारेशुभेदिने ॥ कृत्वाभ्यंगादिकंसर्वंगृहालंकारपूर्वकम् ॥गोमयेनोपलिप्याथगृहस्येशानभागके॥ पंकजंकर्णिकायुक्तं
रजोभिःश्वेतवर्णकैः ॥ व्रीहींस्तत्रविनिक्षिप्ययथावित्तानुसारतः॥ नवशूर्पंचतन्मध्येरक्तवस्त्रंप्रसारयेत् ॥ स्थापयित्वाशिशुंतत्रपुनःसूत्रेणवे
ष्टयेत् ॥ प्राङ्मुखंतमवाक्पादंतिलगर्भगतंशिशुम् ॥गोमुखंदर्शयित्वाथपुनर्जातंतुगोमुखात् ॥ शिशुमभिगोमुखंदर्शयित्वेत्यर्थः ॥ विष्णु
र्योनीतिसूक्तेनगव्येनस्नापयेच्छिशुम् ॥गव्येनपंचगव्येन ॥ गवामंगेषुमंत्रेणगवामंगेषुसंस्पृशेत्॥गोवामांगेषुसंस्पृशेदितिवापाठः ॥विष्णोः
श्रेष्ठेतिमंत्रेणगोप्रसूतंतुबालकम् ॥आचार्यस्तुसमादायपश्चान्मात्रेददेत्तदा ॥ ज्योतिर्निबंधेतु ॥ साचार्यस्तुसमादायपश्चान्मात्रेददेत्पितेति
पाठः ॥ माताजघन्यभागस्थाशिशुमानीयतन्मुखात् ॥ तन्मुखाद्गोमुखात् ॥ ततःपित्रेतदादद्यात्ततोमात्रेप्रदापयेत् ॥ वस्त्रंसंस्थाप्यततो
स्यपुत्रस्यमुखमीक्षयेत् ॥ संस्थाप्यनिष्कास्य ॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिश्चसंयुतम्॥ आपोहिष्ठादिभिर्मंत्रैरभिषिंचेत्ततःशिशुम्॥ मूर्ध्नि
चाघ्रायतंपुत्रंतन्मंत्रेणतदापिता ॥अंगादंगात्संभवसिहृदयादधिजायसे ॥ आत्मावैपुत्रनामासिसजीवशरदःशतम् ॥तन्मंत्रेणांगादंगादित्य
नेन ॥ मूर्द्धनित्रिरवघ्रायतंशिशुंस्थापयेत्ततः ॥ पुण्याहंवाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः ॥ अत्रस्वशाखोक्तमार्गेणपुण्याहवाचनंकुर्यादितिके
चित्पुण्याहशब्दमात्रंवाचयेदित्यपरे ॥ दरिद्रायाथविप्रायतांगामभ्यर्च्यदापयेत् ॥ गोवस्त्रस्वर्णधान्यानिदद्यादर्कादितःक्रमात्॥ यथाश
क्तिधनंदद्याद्ब्राह्मणेभ्यस्तदापिता ॥ ततोहोमंप्रकुर्वीतस्वस्वशाखोक्तमार्गतः ॥ होमंहोमसंबंध्युल्लेखनादिहोमस्यवक्ष्यमाणत्वात् ॥
उल्लेखनादिकंकृत्वाआज्यभागांतमाचरेत् ॥ होमस्यैशानदिग्भागेधान्योपरिशुभंघटम् ॥होमस्यहोमदेशस्य।पंचगव्यंघटेस्थाप्यतिलांस्त

त्रविनिक्षिपेत् ॥ क्षीरद्रुमकषायांश्चपंचरत्नानिनिक्षिपेत ॥ कषायोनिर्यासः ॥ वस्त्रयुग्मेनसंच्छाद्यगंधादिभिरथार्चयेत ॥ विष्णुंवरुणम
भ्यर्च्यप्रतिमांचविधानतः ॥ प्रतिमांरूपम् ॥ यतइंद्रादिभिर्मंत्रैःकुंभंस्पृश्याभिमंत्रयेत् ॥ यतइंद्रेतिषडृचस्यसूक्तस्यग्रहणम् ॥ आश्वला
यनेनयतइंद्रभयामहइतिसूक्तशेषमितिभयनिरसनार्थत्वेनषडचस्योक्तत्वात् ॥ दधिमध्वाज्ययुक्तेनहोमंकुर्यात्प्रयततः ॥ युक्तेनेति
भावेक्तः ॥ दधिमध्वाज्यानांयोगेनेत्यर्थः ॥ आपोहिष्ठेतितिसृभिरप्सुमेसोमइत्यर्थः ॥ तद्विष्णोःपरमंपदमक्षीभ्यामितिसूक्ततः ॥
ऋग्भिराशिःप्रत्यृचंचाऽष्टाविंशतिसंख्यया ॥ अशक्तावष्टसंख्यंवादधिमध्वाज्यसंयुतम् ॥ आदित्यादिग्रहाणांचहोमंकुर्यात्समंत्रकम् ॥
ग्रहाणांचहोमंदधिमध्वाज्येनेत्यन्वयः ॥ अन्यथापुनर्दध्यादिग्रहणस्यवैय्यर्थ्यापत्तेः ॥ इतिगोमुखप्रसवविधिः ॥ अथप्रयोगः ॥ देशका
लौसंकीर्त्यास्यबालकस्यमुक्तनक्षत्रोत्पत्तिसूचितारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंगोमुखप्रसवंकरिष्ये । :गणेशंसंपूज्याचार्यंविष्णुंवृणु
यात् ॥आचार्यः श्वेतपंकजमध्येयथाशक्तिव्रीहीन्निक्षिप्यतेषुशूर्पंनिधायशूर्पेरक्तवस्त्रंप्रसार्यतिलान्विकीर्यप्राङ्मुखंशिशुंनिधायसूत्रेणशूर्पंवेष्ट
यित्वाशिशुसमीपेगोमुखमानीयप्रसवंभावयित्वाविष्णुर्योनिमितिसूक्तेनमीलितेनपंचगव्येनशिशुंस्नापयित्वागवामंगेष्वितिमंत्रेणगो वामांगे
षुसर्वांगेषुवास्पृशेत् ॥ ततोविष्णोःश्रेष्ठेनेतिमंत्रेणाचार्यःशिशुमादायमात्रेदद्यात ॥मातापित्रेपितामात्रेदत्त्वावस्त्रंसंप्रसार्यपुत्रमीक्षेत॥ ततःआ
चार्यःशिशुंपंचगव्येन आपोहिष्ठेतितिसृभिरभिषिंचेत्॥ ततःपिताअंगादंगादितिशिशुंमूर्ध्नित्रिरवघ्रायमात्रेदत्त्वास्यगोमुखप्रसवकर्मणःपुण्या
हंभवंतोब्रुवंत्वित्युक्त्वातान्वाचयित्वागामाचार्यायदत्त्वाग्रहप्रीत्यर्थंप्रत्येकंगोवस्त्रस्वर्णधान्यानिदत्त्वायथाशक्तिभूयसींदक्षिणांदद्यात् ॥ ततः

आचार्योग्निंग्रहांश्चप्रतिष्ठाप्यान्वाधानंकुर्यात् ॥ तत्रप्रधानंआपोहिष्ठेतितिसृभिरप्सुमेइत्यनयाचप्रत्यृचमष्टशताष्टाविंशत्यष्टसंख्याभिः विष्णुं
तद्विष्णोरित्यृचाताावतीभिर्यक्ष्महणपक्षीभ्यामितिसूक्तेनप्रत्यृचंतावतीभिर्ग्रहांश्चतावतीभिर्दधिमध्वाज्याहुतिभिःशेषेणस्विष्टकृतमित्याद्या
ज्यभागांतंकृत्वाग्नेरीशान्यांकुंभंसंस्थाप्यपूर्णपात्रोपरितद्विष्णोरितिविष्णुप्रतिमांतत्वायामीतिवरुणंचाभ्यर्च्यकुंभंस्पृष्ट्वावक्ष्यमाणमंत्रान्
जपेत् । यतइंद्रेतिषण्णांकण्वपुत्रःप्रतिरथइंद्रोबृहतीच्छंदःजपेविनि० ॥ ततोमिलितैर्दधिमध्वाज्यैर्होमंकुर्यात् ॥ तत्रआपोहिष्ठेतितिसृणांसिंधु
द्वीपआंबरीषआपोगायत्रीअप्सुमेमेधातिथिरापोनुष्टुप्तद्विष्णोर्मेधातिथिर्विष्णुर्गायत्रीअक्षीभ्यामितिषण्णांविवृहायक्ष्महानुष्टुप्एभिर्मंत्रैर्न
वग्रहमंत्रैश्चहुत्वास्विष्टकृदादिकर्मशेषंसमाप्यब्राह्मणान्भोजयेत् । इतिगोमुखप्रसवप्रयोगः ॥ अथकृष्णचतुर्दशीजातशांतिः ॥ पारिजातेम
दनरत्नेगर्गः ॥ मंदरेतुसुखासीनंगर्गंमुनिवरंप्रभुम् ॥ नमस्कृत्यतुपप्रच्छशौनकोमुनिपुंगवः ॥ शांतिकर्माणिसर्वाणिततोजानाम्यहंपुरा ॥
अधुनाश्रोतुमिच्छामिकृष्णपक्षचतुर्दशीम् ॥ दिवावायदिवारात्रौप्रसूतेःकिंफलंवद ॥ कृष्णपक्षचतुर्दशीमभिलक्षीकृत्यप्रसूतेःफलंवदेत्यर्थः
कृष्णपक्षेचतुर्दश्यांप्रसूतेःषड्विधंफलम् ॥ चतुर्दशींचषड्भागांकुर्यादादौशुभंस्मृतम् ॥ द्वितीयेपितरंहंतितृतीयेमातरंतथा ॥ चतुर्थेमातुलंहंति
पंचमेवंशनाशनम् ॥ षष्ठेतुधनहानिःस्यादात्मनोवंशनाशनम् ॥ तस्मात्सर्वप्रयत्नेनशांतिंकुर्याद्विधानतः ॥ आचार्यंवरयेद्धीमान्पुत्रदारसम
न्वितम् ॥ सर्वालंकारसंयुक्तंसर्वलक्षणसंयुतम् ॥ ब्राह्मणमृत्विजश्चैवस्वस्तिवाचनपूर्वकम् ॥ रुद्राधिदेवतातस्याःकर्षमात्रसुवर्णतः ॥ तदर्द्धा
र्द्धेनवाकुर्याद्वित्तशाठ्यविवर्जितः ॥ तस्याश्चतुर्दश्याः ॥ प्रतिमामाह ॥ प्रतिमांकारयेच्छ्लक्ष्णयासर्वलक्षणसंयुताम् ॥ वृषभेचसमासीनंवर

दाभयपाणिनम् ॥ शुद्धस्फटिकसंकाशंश्वेतमाल्यांबरावृतम् ॥ त्र्यंबकेणतुमंत्रेणपूजांकुर्याद्विधानतः ॥ स्थापयेच्चतुरःकुंभांश्चतुर्दिक्षुयथा
विधि ॥ आग्नेयीमारभ्यस्थापनंआग्नेयकुंभमारभ्येत्यग्रेदर्शनात्॥ पुण्यतीर्थजलोपेतान्धान्यस्योपरिविन्यसेत् ॥ तन्मध्येस्थापयेत्कुंभंश
तच्छिद्रसमन्वितम् ॥ पंचमृत्पंचरत्नानिपंचत्वक्पंचपल्लवान्॥पंचधान्यंसुवर्णंचतत्तन्मन्त्रैर्विनिक्षिपेत्॥शतौषधानिनिक्षिप्यश्वेतवस्त्रैश्चवेष्ट
येत् ॥ सुरभीणिचपुष्पाणिश्वेतानिपरिवेष्टयेत् ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः॥ आयांतुयजमानस्यदुरितक्षयकारकाः ॥ आवा
ह्यवारुणैर्मंत्रैरनेनचविधानतः ॥ वक्ष्यमाणैवारुणैर्मंत्रैर्वरुणम् ॥ अनेनोक्तेनसमुद्रादींश्चेत्यर्थः ॥ इमंमेवरुणेत्यनयातत्वायामीत्यृचातथा ॥
त्वन्नोअग्नेत्यनयासत्वन्नइतिमंत्रतः॥आग्नेयकुंभमारभ्यपूजांकुर्याद्यथाक्रमम् ॥ आनोभद्राख्यसूक्तंचभद्राअग्नेश्चसूक्तकम्॥ जप्त्वापुरुषसूक्तंच
कद्रुद्रंचक्रमाज्जपेत् ॥ ईश्वरस्याभिषेकंचग्रहपूजांचकारयेत् ॥ ईश्वरस्यपूर्वस्थापितेश्वरप्रतिमायाइत्यर्थः ॥ पूजाकर्मसुनिर्वर्त्यहोमंकुर्याद्वि
धानतः ॥ कुर्यादाधारपर्यंतंस्वगृह्योक्तविधानतः ॥ आघारांतत्वोक्त्याचक्षुषीनइतिकेचित्॥समिदाज्यचरूंश्चैवतिलमाषांश्चसर्षपैः॥सर्षपैः
सहितोक्त्यासर्षपाणांपृथक्द्रव्यत्वम्॥समिधोविशिनष्टि॥अश्वत्थप्लक्षपालाशसमिद्भिःखादिरैःशुभैः ॥ अष्टोत्तरसहस्रंवाअष्टोत्तरशतंतुवा॥
अष्टाविंशतिमेतैश्चहोमंकुर्यात्पृथक्पृथक् ॥ त्र्यंबकेनैवमंत्रेणतिलान्व्याहृतिभिःक्रमात् ॥ ग्रहाएवंचहोतव्याअस्मदुक्तविधानतः ॥ एवंक्रमे
णहोतव्यंहोमशेषंसमापयेत्॥सर्वालंकारयुक्तानांत्रयाणामभिषेचनम्॥त्रयाणांमातापितृबालानाम्॥चतुर्भिःकलशैरद्भिर्बृहत्कुंभसमन्वितैः। ॥ ७३
बृहत्कुंभःशतच्छिद्रः॥धौतांबराणिधृत्वाथकुर्यादाज्यावलोकनम्॥पूर्णाहुतिंचजुहुयाद्यजमानःसमाहितः ॥ तत्सर्वंपरयाभक्त्याईश्वरायनिवे

दयेत्॥ सर्वालंकारसंयुक्तांसवत्सांगांपयस्विनीम्॥प्रतिमांवस्त्रयुग्मंचआचार्यायनिवेदयेत्॥ईश्वरप्रीतयेभक्त्याकुर्याद्ब्राह्मणभोजनम्॥ एवंयः कुरुतेशांतिंसर्वपापैःप्रमुच्यते॥सर्वान्कामानवाप्नोतिचिरंजीवीसुखीभवेत्॥इतिचतुर्दशीशांतिविधिः॥ अथप्रयोगः॥ नामकरणात्पूर्वंशुभेह्निअस्यबालकस्यकृष्णचतुर्दशीजन्मसूचितारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंकृष्णचतुर्दशीजननशांतिंकरिष्येइतिसंकल्प्यगणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वरणानिकुर्यात्॥ षड्भागचतुर्दश्याद्वितीयतृतीयांशयोरुत्पत्तौगोमुखप्रसवोपिततअचार्यःसर्षपान्विकीर्यभूमिंप्रोक्ष्याग्नेयीमारभ्यविदिक्षुचतुरःकुंभान्मध्येशतच्छिद्रंचसंस्थाप्यतस्मिन्पंचमृदःपंचपल्लवान्।पंचरत्नानिपंचत्वचः।पंचधान्यानिसुवर्णंशतौषधानिचप्रक्षिप्यत्रिभिर्वस्त्रैर्माल्यादिभिश्चवेष्टयित्वापूर्णपात्रोपरिकर्षतदर्द्धार्द्धंकृतांरुद्रप्रतिमांत्र्यंबकमितिमंत्रेणसंपूज्यसर्वेसमुद्राइतिकुंभमभिमंत्र्याग्नेयकलशेइमंमेवरुणेतिनैर्ऋतेतत्त्वायामीतिवायव्येत्वन्नोअग्नेईशानेसत्वंनइतिवरुणंसंपूज्याग्नेयादिकलशेष्वानोभद्राअग्नेसहस्रशीर्षाकद्रुद्रायेतिसूक्तानिक्रमेणजपेत्।ततोग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात्।अत्रप्रधानम्। त्र्यंबकंअश्वत्थप्लक्षपलाशखादिरसमिदाज्यचरुसर्षपयुततिलमाषैःप्रत्येकमष्टसहस्राष्टशताष्टाविंशत्यन्यतरसंख्यया।त्र्यंबकमितिमंत्रेणप्रजापतिंसमस्तव्याहृतिभिस्तिलद्रव्येणतथैवसंख्ययाशेषेणस्विष्टकृतमित्यादिबलिदानांतेशतच्छिद्रगतैश्चतुष्कलशोदकैर्ग्रहकलशोदकेनसाचार्यर्त्विजोयजमानमभिषिंचेयुः।यजमानोधौतवाससीपरिधायसपरिवारोरूपंरूपमित्याज्यमवलोक्यतत्पात्रंसदक्षिणंविप्रायदत्त्वापूर्णाहुतिंहुत्वाकृतंहोमादिकर्मरुद्रायसमर्प्याचार्यायसोपस्करांगांवस्त्रयुग्मंचदत्त्वाऋत्विग्भ्योदक्षिणांदत्त्वाब्राह्मणान्भोजयेत्।इतिदिनकरभट्टकृतेशांतिसारेकृष्णचतुर्दशी

शांतिप्रयोगः।अथसिनीवालीकुहूशांतिः । कुह्वादिशांतेर्नदर्शशांत्यासमुच्चयःयापूर्वामावास्यासासिनीवालीयोत्तरासाकुहूर्यांपर्यस्तमियाद
भ्युदयादितिसातिथिरितिबह्वृचब्राह्मणभेदोक्तेः अथसिनीवालीकुह्वोर्दर्शेचोक्तयोःशांत्योर्व्यवस्थाछंदोगपरिशिष्टभाष्ये । चतुर्दश्यंतेअमा
याश्चाष्टावितिनवप्रहरश्चंद्रस्यक्षयकालःचतुर्दश्यष्टमेयामेक्षीणोभवतिचंद्रमाः।अमावास्याष्टमेयामेपुनःकिलभवेदणुरितिवाक्यात्। अत्रेन्दु
राद्येप्रहरेवतिष्ठतेचतुर्थभागोनकलावशिष्टः । तदंतमेवक्षयमेतिकृष्णमेवंज्योतिश्चक्रविदोवदंतीतिवाक्यात् । एवंचतुर्दश्यंत्यामाद्ययामयो
रणुश्चंद्रःशास्त्रस्यचक्षुषोगोचरोभवतिसकालोदृष्टचंद्रत्वात्सासिनीवालीअमांत्ययोर्यामयोःशास्त्रस्यचक्षुषोगोचरइतिक्षीणश्चंद्रःसकालःकु
हूःमध्यमाःपंचयामादर्शइतिव्यवस्थयाशांतिव्यवस्थेति ॥परेतु॥चतुर्दशीमात्रयुक्तेऽहोरात्रेवर्तिन्यमासिनीवाली ॥ प्रतिपन्मात्रयुतेतिकु
हूः ॥ वारत्रयस्पर्शिमध्यमाहोरात्रवर्तिन्यमादर्शः ॥ तस्मिंश्चतुर्दशीप्रतिपदोरभावेनोभयलक्षणेनाक्रांतत्वात्॥तथाचभवतांवामदर्शःकेवल
चतुर्दशीकेवलप्रतिपद्युक्तत्वाभावाद्दर्शशांतिप्राप्तिरितियुक्तमाहुः॥प्रयोगपारिजातेउत्तरगार्ग्यः ॥सिनीवाल्यांप्रसूतास्याद्यस्यभार्यापशुस्त
था॥ गजाश्वमहिषीचैवशक्रस्यापिश्रियंहरेत्।येसंतिसकलाश्चान्येस्वप्रसादोपजीविनः॥वर्जयेत्तानशेषांस्तुपशुपक्षिमृगादिकान् ॥ सिनीवा
लीकुहूत्पन्नानितिशेषः ॥ कुहूप्रसूतिरत्यर्थंसर्वदोषकरीस्मृता ॥ यस्यप्रसूतिरेतेषांतस्यायुर्धननाशनम् ॥ कुह्वामपिपक्षादिप्रसवोनिषिद्धः
सर्वगंडसमस्तत्रदोषस्तुप्रबलोभवेत् ॥ शांतिंविनाविशेषेणपरित्यागोविधीयते॥ विशेषेणउत्तमपक्षेणशांतिकरणंविनापरित्यागः॥यदितूत्त
मपक्षेणशक्तिस्तदाकियत्कालंत्यागंकृत्वाशांतिःकर्तव्येत्याह॥परित्यागात्तत्रशांतिंकुर्याद्धीमान्विचक्षणः ॥ रुद्रःशक्रश्चपितरःपूज्याःस्युर्देव

ताः क्रमात् ॥ कर्षमात्रसुवर्णेनतदर्द्धार्द्धेनवापुनः ॥ अथवाशक्तितःकुर्याद्वित्तशाठ्यविवर्जितः ॥ प्रतिमांकारयेच्छंभोश्चतुर्भुजसमन्विताम् ।
त्रिशूलखङ्गवरदाभयहस्तांयथाक्रमात् ॥ श्वेतवर्णांश्वेतपुष्पांश्वेतांबरवृषस्थिताम् ॥ त्र्यंबकेणचमंत्रेणपूजांकुर्याद्यथाविधि ॥ इंद्रश्चतुर्भुजो
वज्रांकुशचापससायकः ॥ वज्रांकुशचापैःसहितःसायकोस्येतिविग्रहः ॥ रक्तवर्णोगजारूढोयतइंद्रेतिमंत्रतः ॥ पितरःकृष्णवर्णाश्चचतुर्ह
स्ताविमानगाः ॥ यष्टयक्षसूत्रकमंडलवभयस्यैवधारिणः ॥ गदाक्षसूत्रेतिवापाठः ॥ येचेहइतिमंत्रेणपूजांकुर्यादनंतरम् ॥ मदनरत्नेतुयेसत्या
इतिमंत्रेणेतिपाठः ॥ तस्मिन्पक्षेयेसत्यासोहविरदइतिमंत्रः ॥ आग्नेयींदिशमारभ्यकुंभान्कोणेषुविन्यसेत् ॥ तन्मध्येस्थापयेत्कुंभंशतच्छि
द्रसमन्वितम् ॥ तेष्वेवपंचगव्यादींस्तत्तन्मंत्रैश्चनिक्षिपेत ॥ चतुर्ष्वित्यर्थः ॥ गोदानंवस्त्रदानंचसुवर्णंचोर्वरांशुभाम् ॥ दशदानानिचोक्तानि
क्षीरमाज्यंगुडस्तथा ॥ गोदानादेर्दशदानांतर्गतत्वाद्वारद्वयमनुष्ठानम् ॥ आज्यावेक्षणमेतानितत्तन्मंत्रैश्चकारयेत् ॥ समिदाज्यचरोहोमंतिलमा
षैश्चसर्षपैः ॥ तिलमाषाणामेकद्रव्यत्वम् ॥ समिधआह ॥ अश्वत्थप्लक्षपालाशसमिद्भिःखादिरैःशुभैः ॥ अष्टोत्तरशतंमुख्यंप्रत्येकंजुहुयाद्वि
जः ॥ त्र्यंबकेणचमंत्रेणतिलान्व्याहृतिभिःपुनः ॥ मुख्यमित्युक्तेरधिदेवतादेःअष्टविंशत्यादिन्यूनसंख्ययाहोमः ॥ चतुर्भिःकलशैर्युक्तंबृहत्कुंभ
समन्वितम् ॥ शांतिवत्सकलंकार्यमभिषेकंचकारयेत् ॥ कार्यंकर्तव्यमभिषेकंचतुर्दशीशांतिवत्कुर्यादित्यर्थः ॥ पितृमातृशिशूनांचअभिषिंचे
त्तुवारुणैः ॥ षष्ठीद्वितीयार्था ॥ शंकरस्याभिषेकंचकुर्याद्ब्राह्मणभोजनम् ॥ ब्राह्मणांस्तर्पयिष्यइतिप्रश्नंवाकर्मसंपूर्णतावाचनंकृत्वेत्यर्थः ॥
इत्युत्तरगार्ग्योक्तसिनीवालीकुहूशांतिविधिः ॥ अथप्रयोगः ॥ देशकालौसंकीर्त्यास्यबालकस्यसिनीवालीजन्मसूचितसकलारिष्टनिरसनद्वा

राश्रीपरमेश्वरप्रीत्यर्थंसिनीवालीजननशांतिंकरिष्येइतिसंकल्प्यगणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वरणानिकु
र्यात् ॥ कुह्वांतुकुहूपदेनसंकल्पोगोमुखप्रसवश्च॥ ततः आचार्यः सर्षपान्विकीर्यभूमिंप्रोक्ष्यआग्नेयीमारभ्यविदिक्षुचतुरःकुंभान्मध्येशतच्छि
द्रंसंस्थाप्यचतुर्षुपंचगव्यंपंचमेमृत्पंचपल्लवपंचरत्नपंचत्वक्पंचधान्यसुवर्णानिनिक्षिप्यतच्छिद्रेपूर्णपात्रोपरिकर्षतदर्द्धार्द्धेकलिपतांरुद्रप्रति
मांसंपूज्यतद्दक्षिणतोयतइंद्रेतींद्रप्रतिमामुत्तरतश्चयेचेहेतिमंत्रेणपितृप्रतिमांसंपूज्यचतुर्षुकुंभेषुवरुणंपूजयित्वाशांतिंपठेत् ॥ततोयजमानोदा
नानिकुर्यात्॥गवामंगेष्वितिगाम्॥शरण्यंसर्वलोकानांलज्जायारक्षणंपरम्। सुवेषधारिवस्त्रत्वमतः शांतिंप्रयच्छमे॥वासः॥हिरण्यगर्भेतिहिर
ण्यम् ॥ सर्वसस्याश्रयाभूमिर्वराहेणसमुद्धृता ॥ अनंतसस्यफलदाअतः शांतिंप्रयच्छमे ॥भूमिम्॥ ततोदशदानानिकुर्यात् ॥ तानिच ॥
गोभूतिलहिरण्याज्यंवासोधान्यंगुडानिच ॥ रौप्यंलवणमित्याहुर्दशदानानिपंडिताः ॥ चतुर्णांमंत्राउक्ताः ॥ महर्षेर्गोत्रसंभूताःकश्यपस्य
तिलाःस्मृताः ॥ तस्मादेषांप्रदानेनममपापंव्यपोहतु ॥ तिलान् ॥ कामधेनुषुसंभूतंसर्वक्रतुषुसंस्थितम् ॥ देवानामाज्यमाहारमतः शांतिंप्र
यच्छमे ॥ आज्यम् ॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरंमहत्॥प्राणिनांजीवनोपायमतः शांतिंप्रयच्छमे ॥ धान्यम्॥यथादेवेषुविश्वात्माप्रवरश्च
जनार्दनः ॥ सामवेदस्तुवेदानांमहादेवस्तुयोगिनाम् ॥ प्रणवः सर्वमंत्राणांनारीणांपार्वतीयथा ॥ तथारसानांप्रवरःसदैवेक्षुरसोमतः॥ममत
स्मात्परांलक्ष्मींददस्वगुडसर्वदा ॥ गुडम् ॥ प्रीतिर्यतःपितॄणांचविष्णुशंकरयोःसदा ॥ शिवनेत्रोद्भवंरूप्यमतः शांतिंप्रयच्छमे ॥रूप्यम् ॥
यस्मादन्नरसाःसर्वेनोत्कृष्टालवणंविना ॥ शंभोःप्रीतिकरंनित्यमतः शांतिंप्रयच्छमे ॥ लवणम्॥ इतिदशदानानि ॥ क्षीरजातास्तथाशंखा

क्षीरादमृतसंभवः ॥क्षीरात्क्षीरोदवत्कीर्तिः क्षीरेप्राणस्यसंभवः ॥ क्षीरम् ॥ पूर्वोक्तमंत्राभ्यांपुनराज्यंगुडंचदत्त्वाकांस्यपात्रेरूपंरूपमितिमंत्रेण
सकुटुंबःप्रतिस्वरूपंवीक्ष्य ॥ आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंस्मृतम्॥ आज्यंसुराणामाहारमाज्येदेवाःप्रतिष्ठिताः ॥इत्याज्यपात्रम्॥ततः
आचार्योग्निंग्रहांश्वप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानंत्र्यंबकमश्वत्थप्लक्षपलाशखदिरसमिदाज्यचरुतिलसहितमाषसर्षपद्रव्यैःप्रत्येकमष्टश
तसंख्ययाइंद्रपितृंश्चतैरेवद्रव्यैरष्टाविंशतिसंख्ययाप्रजापतिंचव्याहृतिभिरष्टाविंशतिसंख्ययाशेषेणस्विष्टकृतमित्यादिबलिदानांतेपूर्णाहुतिं
हुत्वाशतच्छिद्रगतैश्चतुःकलशोदकैर्ग्रहकुंभोदकेनचतत्त्वायामीत्यादिभिर्वारुणमंत्रैरभिषिच्यरुद्रप्रतिमायांत्र्यंबकमित्यभिषेकंकृत्वोत्तरपू
जांकृत्वाविसृज्याचार्यहस्तेप्रतिपाद्याग्निंविसृज्यब्राह्मणांस्तर्पयिष्यइतिपृष्ट्वायथाशक्तिब्राह्मणान्भोजयेत्॥ इतिदिनकरभट्टकृतेशांतिसारेसि
नीवालीकुहूशांतिप्रयोगः ॥ अथदर्शजातशांतिः ॥ नारदः ॥ अथातोदर्शजातानांमातापित्रोर्दरिद्रता ॥ तद्दोषपरिहारार्थंशांतिंवक्ष्यामि
तेसदा ॥ पुण्याहंवाचयित्वादौकृतुसंल्पपूर्वकम् ॥ कुंडंवास्थंडिलंकुर्यात्तद्देशेस्थापयेद्घटम् ॥ तद्देशेतत्समीपे ॥ तत्कुंभेनिक्षिपेद्द्रव्यंद
धिक्षीरघृतादिकम् ॥ आदिशब्दाद्गोमूत्रगोमये ॥ न्यग्रोधोदुंबरोश्वत्थाःसचूताःनिंबकस्तथा॥ एतेषांवृक्षमूलानांत्वगादीन्पल्लवांस्तथा ॥ पं
चरत्नानिनिक्षिप्यवस्त्रयुग्मेनवेष्टयेत् ॥सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः॥ आयांतुयजमानस्यदुरितक्षयकारकाः॥आपोहिष्ठात्र्यृचेना
थकयानश्चित्रइत्यृचा ॥ यत्किंचेदमृचाचैवसमुद्रज्येष्ठइत्यृचा॥अभिमन्त्र्योदकंपश्चादग्नेःपूर्वप्रदेशके॥हरिद्रंरक्तकंचैवकृष्णंश्वेतंचनीलकम्॥
एतेषांतंडुलैश्चैवसर्वतोभद्रमुद्धरेत् ॥ कुंभतःपश्चादग्नेश्वपूर्वतोहरिद्रारंगरक्तैस्तंडुलैःसर्वतोभद्रमुद्धरेदित्यर्थः ॥ दर्शस्यदेवतायाश्चसोमसूर्यस्व

रूपकम्।प्रतिमांस्वर्णजांनित्यंराजतींताम्रजांतथा।पितृरूपाय।दर्शदेवतायाःसोमसूर्ययोश्चस्वरूपंप्रतिमारूपंस्थापयेदित्यर्थः। इतिप्रयोगपा
रिजातः।सर्वतोभद्रमध्येचस्थापयेद्दर्शदेवताम्।ग्रहवर्णवस्त्रयुग्मंतद्वर्णंगंधपुष्पकम् ।आप्यायस्वेतिमंत्रेणसवितापश्चात्तथैवच॥ उपचारैःसमा
राध्यततोहोमंचरेत्सुधीः ॥ कृत्वावन्हिप्रतिष्ठाप्यक्रतुसंकल्पमीदृशम् ॥ आयुरारोग्यसिद्ध्यर्थंसर्वारिष्टप्रशांतये ॥ पुत्रस्यदर्शजननंतस्यदो
षनिबर्हणम् ॥ मातापित्रोःकुमारस्यसर्वारिष्टप्रशांतये ॥ तेषामायुःश्रियेचैवशांतिहोमंकरोम्यहम् ॥ आयुरारोग्येतिश्लोकद्वयेनक्रतुसं
कल्पंकृत्वेत्यर्थः ॥ समिधश्चचरुद्रव्यंक्रमेणजुहुयाद्गृही ॥ हुनेत्सवितृमंत्रेणसोमोधेनुंचमंत्रतः ॥ एतैर्मंत्रैश्चप्रत्येकंहुनेदष्टोत्तरंशतम् ॥ एतैरि
तिबहुवचनात्पितृहोमोप्यष्टोत्तरशतमितिप्रयोगपारिजातः॥ दर्शस्यदेवताहोमअष्टाविंशतिसंख्यया ॥ होममेवंतुकृत्वाथविदध्याच्चाभिषेच
नम् । श्रीसूक्तमायुष्यसूक्तंसमुद्रज्येष्ठाइत्यृचा । एतैर्मंत्रैरभिषेकंमातापित्रोःशिशोस्तथा॥ततःस्विष्टकृदादिस्याद्धोमशेषंसमापयेत्॥हिरण्यं
रजतंचैवकृष्णांधेनुंसदक्षिणाम् ॥ अन्येभ्योपियथाशक्तिदातव्यादक्षिणातथा॥ब्राह्मणान्भोजयेत्तत्रकारयेत्स्वस्तिवाचनम् ।इतिनारदोक्त
दर्शशांतिविधिः ॥अथप्रयोगः॥ देशकालौसंकीर्त्यास्यबालकस्यदर्शजननसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंदर्शजननशां
तिंकरिष्यइतिसंकल्प्यगणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वरणानिकुर्यात्।ततः । आचार्यःसर्षपान्विकीर्यभूमिं
प्रोक्ष्यकुंडात्स्थंडिलाद्वापूर्वप्रदेशेकुंभंसंस्थाप्यतत्रपंचगव्यंन्यग्रोधोदुंबरोश्वत्थचूतनिंबवृक्षाणांमूलत्वचःपल्लवांश्चपंचरत्नानिनिक्षिप्यवस्त्रयु
ग्मेनसंवेष्टय । सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः॥आयांतुयजमानस्यदुरितक्षयकारकाः॥इति।आपोहिष्ठेतित्र्यृचेनकयानश्चित्रइति ।

यत्किंचेदमितिसमुद्रज्येष्ठाइतिचोदकमभिमंत्र्यपूर्णपात्रंनिधायवरुणंपूजयेत्। ततः।कुंभात्पश्चिमेअग्नेःपुरतोहरिद्राक्तैस्ताम्रैःकृष्णैश्चतंडुलैर्यथाशोभंसर्वतोभद्रंविरच्यतन्मध्येयेचेहेतिपितॄनावाह्य। दक्षिणतआप्यायस्वेतिसोममुत्तरतश्चसवितापश्चादितिसूर्यमावाह्यसर्वान्पूजयेत्। ततोग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात्॥अत्रप्रधानम्।ग्रहान्ग्रहयज्ञोक्तद्रव्येणपितॄन्सोमंसूर्यंचाष्टोत्तरशताष्टाविंशत्यन्यतमसंख्याभिः। शेषेणस्विष्टकृतमित्याद्याज्यभागांते। आयुरारोग्येतिमंत्राभ्यांहोमसंकल्पंकृत्वाहिरण्यवर्णामितिसूक्तेन। आयुष्यंवर्चस्यमितिसूक्तेन। समुद्रज्येष्ठाइत्यनयाचमातापितृशिशूनभिषिच्यस्विष्टकृदादिबलिदानांतेपूर्णाहुतिंहुत्वा। शेषंसमाप्याचार्याययथाशक्तिरजतंहिरण्यंकृष्णांधेनुंचसदक्षिणांदत्त्वा। ऋत्विग्भ्यश्चयथाशक्तिदत्वापित्रादीनामुत्तरपूजांकृत्वा॥ विसृज्याचार्यायप्रतिपाद्याग्निंविसृज्यब्राह्मणान्भोजयित्वा। शांतीःपाठयित्वास्वस्तिवाचनंकुर्यादिति॥ इतिश्रीनारायणभट्टसुतरामकृष्णभट्टसुतदिनकरभट्टकृतेशांतिसारेदर्शजातशांतिप्रयोगः॥अथ मूलशांतिः। तत्रमूलवृक्षोजपार्णवे। मूलस्तंभंत्वचाशाखापत्रंपुष्पंफलंशिखा॥ वेदाश्चमुनयश्चैवदिशश्चवसवस्तथा॥ नंदाबाणारसारुद्रा मूलभेदाःप्रकीर्तिताः॥मूलेमूलविनाशःस्यात्स्तंभेहानिर्धनक्षयः॥ त्वचिभ्रातृविनाशायशाखामातुर्विनाशकृत्॥ पत्रेसपरिवारस्यपुष्पेतुनृपवल्लभः॥फलेषुलभतेराज्यंशाखायामल्पजीवितम्॥अन्यत्रत्वन्यथोक्तम्।मूलेसप्तघटीषुमूलदहननंस्तंभेष्टसौख्यंक्षयंत्वग्दिग्बंधुविनाशनंचविटपेरुद्रैइतोमातुलः॥पत्रैकेसुकृतीतुबाणकुसुमेमंत्रीफलेसागरैराज्यंवह्निशिखाल्पमायुरितिसन्मूलांघ्रिपेस्यात्फलम्॥ पत्रादिघटिकानामुक्तमत्वेपिचरणदोषोस्त्येव॥मूलस्यस्वर्गादिस्थितत्वम्। फलंचभूपालवल्लभे।वृषालिसिंहेषुघटेषुमूलंदिविस्थितंयुग्मतुलांगनासु॥ पातालगंमे

षधनुःकुलीरनक्रेषुमर्त्येष्वितिसंस्मरंति॥अत्रवृषादौसूर्येसतिइत्यध्याहार्यम्॥ स्वर्गेमूलेभवेद्राज्यंपातालेचधनागमः॥ मृत्युलोकेयदामूलं
तदाशून्यंसमादिशेत्॥स्वर्गादिस्थितेपिचरणदोषोस्ति॥मर्त्यादिस्थितेपिशुभंपत्रादिफलमस्ति ॥वसिष्ठः॥नैर्ऋत्यभोद्भूतसुतःसुतावाक्षिप्रा
दवश्यंश्वशुरंनिहंति॥तदंत्यपादेजनितोनिहंतितस्योत्क्रमेणाभिभवेत्कलत्रम्॥ उत्क्रमेणवैपरीत्येनतस्यकलत्रमित्यन्वयः।सुरेशताराजनिता
धवाग्रजंद्विदैवताराजनितातुदेवरम्॥ पुरंदरर्क्षेजनितःसुतस्तथास्वस्याग्रजंहंतिनपुत्रिकायदि॥ नृसिंहप्रसादे। धवाग्रजंहंतिसुरेंद्रजातात
थैवपत्न्याभगिनीपुमांश्च॥ द्विदेवजादेवरमाशुहन्याद्भार्यानुजामाशुनिहंतिसूनुः॥पत्न्यग्रजामग्रजंवाहंतिज्येष्ठर्क्षजःपुमान्॥ तथापत्नी
स्वसारंवाशालकंचद्विदैवजः॥ कन्यकादेवरंहंतिविशाखांत्यसमुद्भवा॥ आद्यपादत्रयणैवआद्यभेतुपुमान्भवेत्॥ आद्यपादत्रयेदेवरंह
न्यात्पुमांस्तुआद्यपादत्रयएवपत्नीकनिष्ठंहन्यादित्यर्थः॥ नहन्याद्देवरंकन्यातुलामिश्रद्विदैवजा॥ तद्दक्षांत्योद्भवावर्ज्यादुष्टावृश्चिक
पुच्छवत्॥ भल्लाटः। अभुक्तमूलसंभवंपरित्यजेत्तुबालकंसमाष्टकंपिताथवानतन्मुखंविलोकयेत्॥ तदाद्यपादकेपिताविपद्यतेजनन्यथ॥
तृतीयकेधनक्षयश्चतुर्थकःशुभावहः॥तदीयमंत्यपादतःफलंतथैवसार्पभे॥चतुर्थःशुभःबालाभिप्रायम्।मूलाद्यपादजोहंतिपितरंचद्वितीयजः॥
मातरंचतृतीयोर्थान्सुहृदंचतुरीयजः॥फलंतदेवसार्पर्क्षेप्रतीपंत्वंत्यपादतः॥इतिकश्यपसंहितोक्तेः।प्रथमेपितुर्नेष्टो द्वितीयेमातुस्तृतीयेधनधा
न्यस्यचतुर्थेकुलशोकावहःस्वयंपुण्यभागीस्यादिति। कातीयपरिशिष्टाच्च। यत्तुवसिष्ठेन।तुरीयजःशुभकरःफलमेतदेववैलोमतोभुजगधि
ष्ण्यभवस्यसर्वमित्युक्तंतदपिबालपरम्। अभुक्तमूलमाहवसिष्ठः।ज्येष्ठांतेघटिकाचैकामूलादौघटिकाद्वयम्॥ अभुक्तमूलमित्याहुर्जातंतत्र

विवर्जयेत् ॥ बृहन्मनुनात्वन्यथोक्तम् । ज्येष्ठांतघटिकार्धंतुमूलादौघटिकार्धकम् ॥ तयोरतर्गतानाडीअभुक्तंमूलमुच्यते । बृहन्नारदेनाप्यन्यथोक्तम् । अभुक्तमूलगंडांतंनाडिकानांचतुष्टयम् ॥ तत्रैकांत्यघटीद्वंद्वंमूलाद्यंद्वंद्वमेवच ॥ गंडांतस्तु ॥ गंडांतस्त्रिविधोज्ञेयोनक्षत्रतिथिलग्नगः ॥ नवपंचचतुर्थांत्येह्येकार्द्धांतपरतोऽग्रगाः ॥ अस्यार्थः ॥ अश्विनीतोनवमंआश्लेषा । ततोज्येष्ठारेवतीतदंत्येघटिकेपरतोदशमंमघाततोमूलंततोऽश्विनीतदादौघटिके । एवंचतुर्घटीयोगंडांतः । एवंप्रतिपत्प्रभृतिपंचमांतेषष्ठादौचैकघटिकातिथिगंडांतः । एवंमेषप्रभृतिचतुर्थान्तेपंचमादौचअर्द्धार्द्धघटिकालग्नगंडान्तः । तदुक्तंरत्नमालायाम् । पौष्णाश्विन्योःसार्पपित्र्यर्क्षयोश्चयच्चज्येष्ठामूलयोरंतरालम् ॥ तद्गंडांतस्याच्चतुर्नाडिकंहियात्राजन्मोद्वाहकालेप्यनिष्टम् ॥ ज्योतिर्निबंधे । पूर्णानंदाख्ययोस्तिथ्योः संधिर्नाडीद्वियंतथा ॥ गंडांतंमृत्युदंजन्मयात्रोद्वाहव्रतादिषु ॥ कुलीरसिंहयोःकीटचापयोर्मीनमेषयोः ॥ गंडांतमंतरालंस्याद्धटिकार्द्धंमृतिप्रदम् । ज्योतिर्निबंधेतु नक्षत्रगंडांतमन्यथोक्तम् । सार्पेन्द्रपौष्णभेष्वंत्यषडंशांशाभसंधयः ॥ तदग्रभत्वाद्यपादाभानांगंडांतसंज्ञकाः ॥ उत्तरगार्ग्येणाप्यन्यथोक्तम् ॥ अश्विनीमघमूलादौद्विषट्कनवनाडिकाः ॥ रेवतीसार्पशाक्रांतेमासाश्वऋतुसायकाः ॥ सांप्रदायिकास्तुचतुर्नाडिकएवगंडांतेगंडांतशांतिकंकुर्वंति ॥ गंडांतफलमुक्तंरत्नसंग्रहे ॥ सर्वेषांगंडजातानांपरित्यागोविधीयते ॥ वर्जयेद्दर्शनंतेषांतच्चषाण्मासिकंभवेत् ॥ तिथ्यर्क्षगंडेपितृमातृनाशोलग्नेतुसंधौतनयस्यनाशः ॥ सर्वेषुनोजीवतिहंतिबंधूञ्जीवेत्पुनःस्याद्बहुवारणाश्वः ॥ अत्रकेचिदभुक्तमूलजातस्याजन्मपरित्यागोवासमाष्टकादर्शनंवाशांत्यकरणेएवतत्करणेतुनोभयमित्याहुः ॥ अन्येतु ॥ त्यागोवामूलजातस्यस्यादष्टाब्दात्प्रदर्शनमितिशौनकोक्तेर

भुक्तमूलजातस्याष्टाद्वादर्वाक्नशांतिकरणेपिदर्शनम् ॥ शांतिश्चत्यागपक्षेपिसिंहप्रसूतगोशांतिवदित्याहुः ॥ निष्कर्षस्तुनशांतित्यागप
क्षेदर्शनासंभवेनगोमुखप्रसवासंभवात् ॥ अत्रगंडांतोत्पतौगंडांतशांतेस्तत्तन्नक्षत्रशांतिर्गंडांतसामान्यविहितशिवाभिषेकादेस्तिथिगंडेत्वन
ड्वाहंनक्षत्रेधेनुरुच्यतेइत्येतद्विहितगोदानादेश्चसमुच्चयः ॥ अत्रत्यागविधानेस्वत्वस्यापायात्पातकिनंत्यजतीत्यादौत्यजतेर्दानार्थत्वाभावा
च्च॥सिंहादिप्रसूतिवन्मूलप्रसूतस्यापिपीडनंनभवतीतिकेचित् तन्न।त्यागविधानेपिस्वत्वापायेप्रमाणाभावात्॥अतश्चात्रत्यजतिनाजन्मदर्श
नाभावोवाजन्मत्यागपक्षेसमाष्टकेदर्शनेवान्यद्वाराजातकर्मादिकरणंमध्येचाकस्मिकदर्शनेशांतिपूर्वंस्वयंतत्करणम् ॥ अतस्त्यागपक्षे पीड
नादिभवत्येवेति ॥ एतेनसिंहाद्युत्पन्नगवादीनामपिदानंसिद्धम् ॥ पुण्यंस्वल्पम् अवश्यत्याज्यत्वात् मूलोत्पन्नप्रतिगृहीतुश्चनत्यागशांतिका
दिनप्रत्युत्पत्तिकालेस्वत्वाभावेनमूलोत्पन्नपुत्रत्वाभावात् ॥ मूलमध्येप्रतिग्रहेपिनशांतिकंतत्रानुत्पत्तेरिति ॥ आश्लेषाफलमुक्तम् ॥ मूर्द्धा
स्यनेत्रगलकर्णयुतंचबाहूहृज्जानुगुह्यपदमित्यहिदेहभागाः ॥ बाणाद्रिनेत्रहुतभुक्श्रुतिनागरुद्रषण्नंदपंचशिरसःक्रमशस्तुनाड्यः ॥ राज्यं
चपितृक्षयोमातृनाशः ॥ कामत्रपारातिपितृभक्तावलघ्नत्यागीभोगीधनीक्रमात् । पादफलंपूर्वमुक्तम्॥ज्येष्ठाफलमुक्तम्॥ब्रह्मयामले॥ज्येष्ठा
दौजननीमाताद्वितीयेजननीपिता ॥ तृतीयेजननीभ्रातास्वस्यमाताचतुर्थके ॥ आत्मानंपंचमेहंतिषष्ठेगोत्रक्षयोभवेत्॥सप्तमेचोभयकुलं
ज्येष्ठभ्रातरमष्टमे ॥ नवमेश्वशुरंहंतिसर्वंस्वंदशमेंशके ॥ नक्षत्रविशेषेणापिफलमुक्तंनृसिंहप्रसादे ॥ चित्राद्यार्द्धेपुष्यमध्येद्विपादेपूर्वाषाढा
धिष्ण्यपादेतृतीये ॥ जातःपुत्रश्चोत्तरामातृपित्रोर्भ्रातरंचात्मनाशं॥सर्वनक्षत्रेषुफलावधिस्तत्रैव॥द्विमासंचोत्तरादोषःपुष्येचैवत्रिमासिकः ॥

पूर्वाषाढाष्टमेमासिचित्राषाण्मासिकंफलम् ॥ नवमासंतथाश्लेषामूलेचैवाष्टवर्षकम् ॥ ज्येष्ठापंचदशेमासिपुत्रदर्शनवर्जिता ॥ यत्रतुपादजा तादौदोषमात्रंश्रूयतेनशांतिकम् । तत्रग्रहमखः कर्तव्यः॥तथाचवसिष्ठः॥व्यतीपातेंगहानिःस्यात्परिघेमृत्युमादिशेत्॥वैधृतौपितृहानिःस्या न्नष्टेंदावंधतांव्रजेत् ॥ मूलेसमूलनाशःस्यात्कुलनाशोधृतौभवेत् ॥ विकृतांगेचहीनेचसंध्ययोरुभयोरपि ॥ पर्वण्यपिप्रसूतौचसर्वारिष्टभय प्रदः ॥ तद्वत्सदंतजातश्चपादजातस्तथैवच ॥ तस्माच्छांतिंप्रकुर्वीतग्रहाणांक्रूरचेतसामिति ॥ व्यतीपातादौतन्निमित्तकशांतिग्रहमखयोः समुच्चयः तत्रापिस्वतंत्रप्रयोगतोवा ॥ यत्तुतत्तत्प्रकरणेपुनर्ग्रहमखविधानंतदेकप्रयोगतानियमार्थमितिकेचित् ॥ अन्येत्वंगस्यैकप्रयोगता पिन्यायादेवसिद्धेत्यंगभूतग्रहमखाद्भिन्नंग्रहमखांतरंविधीयतइत्याहुः ॥ ग्रहमखस्यचसर्वशांतिषुपूर्वांगत्वात्सहप्रयोगेपिपूर्वंग्रहहोमःपश्चात्तत्त त्प्रधानहोमइति ॥ अथमूलशांतिविधिः ॥ शौनकः ॥ अथातःसंप्रवक्ष्यामिमूलजातहितायच ॥ शांतिमितिशेषः ॥ मातापित्रोर्ध नस्यापिकुलज्ञातिहितायच ॥ त्यागोवामूलजातस्यस्यादष्टाब्दात्प्रदर्शनम् ॥ अभुक्तमूलजातानांपरित्यागोविधीयतइति ॥ अदर्शनाद्वा पिपितुःसतुतिष्ठेत्समाष्टकम् ॥ एवंचदुहितुर्ज्ञेयंमूलजातफलंबुधैः ॥ जातस्यद्वादशाहेतुजन्मर्क्षेवाशुभेदिने ॥ अत्रकेचिच्छुभ दिनपदंद्वादशाहादिविशेषणमितिनस्वतंत्रकालविधानमितिवदन्ति ॥ अन्येतुदिनपदस्यद्वादशाहपदांतर्गतस्यवाहःपदस्यपौनरुक्त्या पत्तेः स्वतंत्रकालविधानमित्याहुः ॥ समाष्टकेद्वादशाहेकुर्याद्वाशांतिमादरात् ॥ अभुक्तमूलोत्पत्तौसमाष्टकादर्शनपक्षेसमाष्टकानंतरं तद्भिन्नमूलोत्पतौद्वादशाहेवेत्यर्थः ॥ मदनरत्नेतुद्वादशाब्देइतिपाठः ॥ अन्यथापौनरुक्त्यापत्तेः ॥ यदैवशांतिकंकुर्यात्कर्मतंत्रंप्रचक्ष

ते ॥ सुसमेपुण्यदेशेतुमंडपंकारयेद्बुधः ॥ पुण्यर्गिभर्मंत्रितैस्तोयैःप्रोक्षितायांक्षितौततः ॥ ऋत्विंजस्तुकश्यपेनोक्ताः ॥ ब्राह्मणाः
श्रोत्रियाश्चाष्टौद्वादशत्वथषोडश ॥ तत्रोदकुंभंसुश्लक्ष्णंरक्तंव्रणविवर्जितम् ॥ अकृष्टमूलंनिर्णिक्तंपूरयेन्निर्मलांभसा ॥ निर्णिक्तंप्रक्षालितम् ॥
वस्त्रावगुंठितंकुर्यात्पूरयेत्तीर्थवारिणा ॥ कूर्चंहेमसमायुक्तंचूतपल्लवसंयुतम् ॥ स्वस्तिकोपरिविन्यस्यक्षीरद्रुमसपल्लवैः ॥ द्रोणव्रीहींश्च
निक्षिप्यईशान्यांचनिधापयेत् ॥ पंचरत्नानिनिक्षिप्यसर्वौषधिसमन्वितम् ॥ अर्चितंगंधपुष्पाद्यैःश्रीरुद्रंचस्पृशञ्जपेत् ॥ कुंभंस्पृशन्रु
द्रंजपेदित्यन्वयः ॥ अत्रचपूर्णपात्रोपरिरुद्रप्रतिमांपूजयित्वाजपःकर्तव्यः ॥ तत्कुंभमस्त्रप्रतिमांतस्मैदद्यात्प्रयत्नतइतिअग्रेदर्शनात् ॥ अत्र
केचित्सर्वौषधिसमन्वितमित्युक्तेःसर्वौषधीनामपिपूज्यत्वमाहुस्तन्निर्मूलम् ॥ षडंगसहितंसम्यक्तंजपेद्रुद्रसंख्यया ॥ बह्वृचारुद्रसूक्तैर्वाछंदो
गारुद्रसामभिः ॥ एकादशाष्टत्रिद्व्येकशक्तितःसंख्ययाजपेत्॥इयंसंख्यासूक्तेषुसामसुच ॥ तत्राप्रतिरथंसूक्तंशतरुद्रानुवाककम्॥ अप्रतिरथ
माशुःशिशानइति ॥ शतरुद्रानुवाकसत्वमग्नेरुद्रइति ॥ रक्षामंत्रंतथापुण्यंरक्षोघ्नंचस्पृशञ्जपेत् ॥ एतेषामप्येकादशवारंजपः॥ त्र्यंबकं
तुजपेत्सम्यगष्टोत्तरसहस्रकम् ॥ एकवारंतथाजापीपावमानीःस्पृशञ्जपेत् ॥ जपस्यपंचकुंभांश्चद्वयंवातदलाभतः ॥ पूर्वोक्तएकःकुंभोवावक्ष्य
माणोद्वितीयकः ॥ एतेपंचेत्येवंसप्तकुंभाइतिकेचित्॥अन्येतुपूर्वोक्तकुंभमध्येईशानादिकोणचतुष्केचत्वारइतिपंचवक्ष्यमाणःषष्ठइत्याहुः॥
कश्यपसंहितायांतु ॥ शतच्छिद्रस्यसहितंकुंभपंचकमुक्तकम्॥ ईशानादिचतुष्कोणेष्वव्रणाञ्जलपूरितान् ॥ पूर्वोक्तद्रव्यसंयुक्तान्स्थापयेद्रक्त
वर्णकान् ॥ शतच्छिद्रंबृहत्कुंभंस्थापयेत्तंडुलोपरि ॥ कात्यायनपरिशिष्टेतुकुंभद्वयमुक्तम् ॥ द्वितीयोदकुंभंकृत्वाचतुःप्रस्रवणसंयुक्तमिति ॥ ७९ ॥

कुंभद्वयपक्षेपिचतुर्विंशतिदलस्थःकुंभोभिन्नएव ॥ निर्ऋतिस्थापनचयत्रैव ॥ चतुःप्रस्रवणेचपूर्णपात्रोपरिशतमूलानिनिधायसामान्यप्राप्तं
वरुणंपूजयेत् ॥ तदुक्तंकात्यायनेन ॥ द्वितीयोदकुंभंकृत्वाचतुःप्रस्रवणसंयुक्तंतदुपरिष्टान्मूलानिधारयेत्वंशपात्रेकृतवस्त्रेबद्धेति ॥
पंचकुंभपक्षेपिमध्यकुंभोपरिशतमूलानितस्यकुंभचतुष्टयसहितस्यचतुःप्रस्रवणस्थानापन्नत्वाद्रुद्रकुंभातिरेकेषुवरुणपूजानिर्ऋतिश्चतुर्विं
शदलएवपूज्यःजपस्यपंचकुंभाइत्युक्तेः ॥ सर्वेषुपूर्वोक्तमंत्रजपोवाशांतिजपोवाकार्यः । कुंभद्वयंव्यवस्थामाह ॥ श्रीरुद्रश्चैवकुंभश्चसर्व
सूक्तानितत्रतु ॥ तथान्यंचशुभंकुंभंपूर्वोक्तैर्लक्षणैर्युतम् ॥ चतुःप्रस्रवणंकुर्यात्पंचवक्त्रंतथैवच ॥ वस्त्रावगुंठितंकुर्यात्पूरयेत्तीर्थवारिणा ॥
पंचरत्नसमायुक्तमाम्रपल्लवसंयुतम् ॥ गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् ॥ राजद्वारप्रदेशाच्चमृदमानीयनिक्षिपेत् ॥ कुंभस्यनैर्ऋतेदेशे
होमस्थानंप्रकल्पयेत् ॥ गोमयालेपितेदेशेकुर्यात्स्थंडिलमुत्तमम् ॥ मंडपपक्षेपिस्थंडिलमेवमंडपमुपक्रम्यैवस्थंडिलविधानात् ॥ कृत्वा
ग्निमुखपर्यंतमुल्लिख्यादिस्वशाखतः ॥ अग्निमुखमग्निस्थापनम् ॥ पूर्णपात्रनिधानांतंकृत्वापूजांसमारभेत् ॥ पूजांतत्सामग्रींतस्यावक्ष्यमाण
त्वात् ॥ नक्षत्रदेवतारूपंसुवर्णेनप्रयत्नतः ॥ निष्कमानेनचार्द्धेनपादेनाथस्वशक्तितः ॥ प्रतिमांलक्षणेनैकांकारयित्वाविचक्षणः ॥ यद्वामूल्यं
सुवर्णस्यस्थापयित्वाप्रपूजयेत् ॥ संस्मरेन्निर्ऋतिंश्यामंसुमुखंनरवाहनम् ॥ रक्षोधिपंखड्गहस्तंदिव्याभरणभूषितम् ॥ ज्योतिर्निबंधेमूर्त्यं
तरमुक्तम् ॥ मूलरूपंविधातव्यंश्वेतंकुणपवाहनम् ॥ खड्गखेटधरंचोग्रंद्विभुजंचवृकाननमिति ॥ प्रतिमापूजनार्थायवस्त्रयुग्मंप्रकल्पयेत् ॥
पंकजंकारयेद्धूमौरक्ताभैर्व्रीहितंडुलैः ॥ चतुर्विंशद्दलोपेतंशुक्लैर्वाकर्णिकान्वितम् ॥ तस्योपरिन्यसेत्पात्रंस्वर्णंवारौप्यमृन्मयम् ॥ पात्रंकलश

म् ॥ शुद्धवस्त्रेणसंछाद्यतत्रमूलानिनिक्षिपेत् ॥ मूलानिशतमूलानि ॥ विष्णुक्रांतासहदेवीतुलसीतुशतावरी ॥ मूलानीमानिगृह्णीयात्सर्वा
लाभेविशेषतः ॥ तस्योपरिन्यसेत्पात्रमितियदुक्तंतत्रविशेषमाह ॥ स्थापयेत्कर्णिकामध्येवस्त्रगंधाद्यलंकृतम् ॥ कूर्चहेमजलोपेतंकुंकुमौष
धिसंयुतम्॥कूर्चोदर्भस्तंभः॥कुंभोपरिन्यसेद्विद्वान्मूलनक्षत्रदेवताम्।अधिप्रत्यधिदेवौचदक्षिणोत्तरयोःक्रमात्।अधिदेवंयजेदादौज्येष्ठानक्षत्र
दैवतम्॥तथाप्रत्यधिपाढाश्चपूजयेद्देवतांशुभाम्॥उत्तराषाढऋक्षाद्यानुराधांतंसमर्चयेत्॥ऐंद्र्यादीशानपर्यंतंपूजयेत्स्वस्वनामतः॥ भूमिस्थचतु
र्विंशतिदलेषुपूर्वदलमारभ्यचतुर्विंशतिनक्षत्राणिस्थाप्यानीत्यर्थः।नक्षत्रदेवताःस्थाप्याइतिकेचित्।लिंगोक्तैश्चैवमंत्रैश्चप्रधानादीन्प्रपूजयेत ॥
कश्यपेनतु ॥ सुवर्णेनप्रमाणेनतदर्द्धार्द्धेनवापुनः ॥ यथावित्तानुसारेणप्रतिमांनिर्ऋतेःसुधीः ॥ उदुंबरवटाश्वत्थप्लक्षाम्रत्वक्सपल्लवान् ॥
शतौषधीमूलशंखनवरत्नानिमृत्तिकाः ॥ पंचामृतांबुसद्बीजंकुंकुमंरोचनंफलम् ॥ कुष्ठंमांसीहरिद्रेद्वेमुराशैलेयचंदनम् ॥ वचाकचोरकंमुस्ता
सर्वौषध्योदशस्मृताः ॥ गजाश्वरथ्यावल्मीकसंभवस्थानसंभवाः॥ह्रदगोराजनगरद्वारतश्चाष्टमृत्तिकाः॥तिलमाषव्रीहियवगोधूमाश्चप्रियंग
वः ॥ चणकैःसहिताश्चाष्टौसद्बीजाख्यानिसर्वदा ॥ दधिमध्वक्षतैःकुंभान्वस्त्रैस्तल्लिंगमंत्रकैः ॥ प्रधानमंत्रश्च॥ मोषुणश्चेतिमंत्रेणनिर्ऋतिंचार्च
येत्ततः ॥ इतिकश्यपसंहितोक्तेः ॥ पंचामृतेनसंस्नाप्यआवाह्याथसमर्चयेत् ॥ उपचारैःषोडशभिर्यद्वापंचोपचारकैः॥ रक्तचंदनगंधाद्यैःपुष्पैः
कृष्णसितादिभिः ॥ मेषशृंगादिभिर्धूपैर्घृतदीपैस्तथैवच ॥ सुरापोलिकमांसाद्यैर्नैवेद्यैश्चौदनादिभिः ॥ मत्स्यमांससुरादीनिब्राह्मणानांविव
र्जयेत् ॥ सुरास्थानेप्रदातव्यंक्षीरंसैंधवमिश्रितम् ॥ पायसंलवणोपेतंमांसस्थानेप्रकल्पयेत् ॥ उक्तमद्याद्यलाभेतुयथालाभंसमर्पयेत् ॥ पुष्पां

तंतुसमभ्यर्च्यहोमकुर्याद्यथोदितम् ॥ पुष्पांजल्यंतमित्यर्थः ॥ निर्वापप्रोक्षणादीनिचरोःकुर्याद्यथाविधि ॥ हविर्गृहीत्वाविधिवन्नैर्ऋत्येवऋचा
हुनेत् ॥ मोषुणःपरापरेतियत्तेदेवीतिवापुनः ॥ पायसंघृतसंमिश्रंहुनेदष्टोत्तरंशतम् ॥ समिदाज्यचरून्पश्चाच्छक्तितःसंख्ययाहुनेत् ॥ अधिदेव
तयोश्चैवजुहुयात्स्वस्वमंत्रतः ॥ चतुर्थ्यंतैर्नमोंतैश्चस्वाहांतैःस्वस्वमंत्रकैः ॥ नक्षत्रदेवताभ्यश्चपायसेनतुहोमयेत् ॥ स्वस्वमंत्रकैर्नाममंत्रैरित्यर्थः
कृणुष्वेतिपंचदशर्ग्भिर्जुहुयात्कृसरंततः ॥ अत्रऋग्भिरितिग्रहणात्प्रत्यृचंहोमः ॥ यत्रतुअमुकसूक्तेनहोमःकर्तव्यइत्याम्नातम् ॥ तथा तत्रैवश्रीसू
क्तेनेतितत्रसूक्तेनैवहोमःकर्तव्यइतियुक्तम् ॥ संप्रदायस्तुप्रत्यृचंहोमइति ॥ गायत्र्याजातवेदसेत्र्यंब कमृइतिक्रमात् ॥ अत्रक्रमादित्युक्तेरेतत्पर्य
न्तंकृसरान्वयः ॥ उत्तरत्रवक्ष्यमाणसमिदाज्य चर्वन्वयःमंत्रद्वयस्यपाठादेवसिद्धेरितिकेचित् ॥ सीरायुंजंतितामग्निंवास्तोष्पत्याग्निमेवच ॥ ताम
ग्निवर्णांतपसाज्वलंतींवैरोचनीमिति ॥ क्षेत्रस्यपतिनागृणानामग्निंदूतंतथैवच । एतत्पर्यंतंकृसरान्नंइत्यपरे । संख्यातुवक्ष्यमाणा ॥ श्रीसूक्तेनतथा
विद्वान्समिदाज्यचरून्क्रमात् ॥ अष्टोत्तरशतैर्वापिअष्टाविंशतिभिःक्रमात् । अष्टाष्टसंख्ययावापिजुहुयाच्छक्तितोबुधः । त्वन्नःसोमेनजुहुयात्पा
यसंतुत्रयोदश ॥ चतुर्गृहीतमाज्यंचयातेरुद्रेतिमंत्रतः ॥ स्रुवेणजुहुयादाज्यंमहाव्याहृतिभिःक्रमात् ॥ महाव्याहृतीराहपराशरः ॥ संक्षपायासृजद्ब्र
ह्मासप्तमाव्याहृतीःपुरा ॥ भूर्भुवःस्वर्महर्जनस्तपःसत्यंतथैवच ॥ आद्यास्तिस्रोमहाप्रोक्ताःसुवस्तुप्रतियोजयेत् ॥ शंखस्तु ॥ भूर्भुवःस्वर्महो
जनस्तपःसत्यमितिमहाव्याहृतयइत्याह ॥ बौधायनेनतु ॥ भूरग्नयेचेतिमंत्रचतुष्टयंमहाव्याहृतयइत्युक्तम् ॥ चतुर्गृहीतादौसकृदेवहोमः ॥
हुत्वास्विष्टकृतंपश्चात्प्रायश्चित्ताहुतीर्हुनेत् । आचार्योयजमानोवाअग्नौपूर्णाहुतिंहुनेत् ॥ समुद्रादूर्मीतिसूक्तेनप्राजापत्यऋचातथा ॥ पूर्णाद

विंसतते तिमंत्रैः पूर्णाहुतिंहुनेत् ॥ होमशेषंसमाप्याथवह्निमारोपयेद्बुधः ॥ जातारण्यग्निपक्षेनवग्रहविकृतित्वाद्रास्मार्ताग्निपक्षेत्रवह्निसमारो
पः ॥लौकिकाग्निपक्षेनसमारोपः ॥ कुम्भाभिमंत्रणंकुर्याद्दक्षिणेनाभिमर्शयेत् ॥ मृत्यूपशमनार्थायजपेच्चत्र्यंबकंशतम् ॥ रुद्रकुंभोक्तमार्गेण
रुद्रमंत्रंस्पृशञ्जपेत् ॥ रुद्रकुंभंस्पृशन्पूर्वोक्तंरुद्राद्दिमत्रजपेदित्यर्थः ॥ तत्रायंनियमस्त्र्यंबकस्यशतवारमेवनसहस्रवारम् ॥ धूपंदीपंचनैवेद्यं
कुंभयुग्मेनिवेदयेत्।कुंभयुग्मेरुद्रकुंभेनिर्ऋतिकुंभेच ॥ प्रसादयेत्ततोदेवमभिषेकार्थमादरात् ॥ निर्ऋतिंरुद्रंच ॥ तस्मिन्कालेग्रहातिथ्यं
कर्तव्यंभूतिमिच्छता ॥ पृथक्प्रशस्तंतेनैवनक्षत्रेष्ट्यासहैववा॥ग्रहातिथ्यंग्रहमखः ॥ तेनमूलशांत्यग्निनानक्षत्रेष्टिमूलशांतिः ॥ अभिषेकवि
धिंवक्ष्येसर्वाचार्यैरुदीरितम् ॥ भद्रासनोपविष्टस्ययजमानस्यऋत्विजः ॥ दारपुत्रसमेतस्यकुर्युःसर्वेभिषेचनम् ॥ अक्षिभ्यामितिसूक्तेनपा
वमानीभिरेवच ॥ आपोहिष्ठेतिनवभिरापइद्वाद्वयेनच ॥ मदनरत्नेतु यतदंर्द्वयेनचेतिपाठः ॥ सहस्राक्षत्र्यृचेनापिदेवस्यत्वेतिमंत्रकैः।शिव
संकल्पमंत्रेणवक्ष्यमाणैश्चमंत्रकैः ॥ वक्ष्यमाणमंत्राश्चप्रयोगेवक्तव्याः॥तच्छंयोरभिषेकंतुसर्वदोषोपशांतिदम् ॥ सर्वकामप्रदंदिव्यंमंगलानां
चमंगलम् ॥ वस्त्रांतरितकुंभाभ्यांपश्चात्तुस्नापयेद्बुधः ॥ ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः ॥ यजमानोदक्षिणाभिस्तोषयेदृत्विगादि
कान् ॥ धेनुंपयस्विनींदद्यादाचार्यायसवत्सकाम् ॥ निर्ऋतिप्रतिमांवस्त्रंकुंभंहेमचदापयेत् ॥ वस्त्रकुंभौनिर्ऋतिसंबंधिनौ ॥हेमस्वतंत्रंयथा
शक्ति ॥ ग्रहार्थवस्त्रप्रतिमास्तत्तदुक्ताचदक्षिणा ॥ श्रीरुद्रजापिनेदेयःकृष्णोनड्वान्प्रयत्नतः ॥ तत्कुंभवस्त्रप्रतिमांतस्मैदद्यात्प्रयत्नतः ॥इत
रेभ्योपिविप्रेभ्यःशक्त्यादद्याच्चदक्षिणाम् ॥ ऋत्विग्भ्यइत्यर्थः॥ उक्तालाभेततोदद्यादाचार्यब्रह्मऋत्विजाम् ॥ तत्तन्मूल्यंप्रदातव्यंशक्त्यावा

थप्रदापयेत् ॥ उत्तमपक्षेणमूल्यंदातव्यंतदशक्तावधमपक्षेणेत्यर्थः ॥ आचार्यायचयद्दत्तंतदर्द्धंब्रह्मणेभवेत् ॥ सदस्यायब्रह्मणोर्द्धमृत्विग्भ्य
श्वतदर्धकम् ॥ मुख्यदक्षिणायाअभावेअर्द्धादिकल्पना ॥ ज्योतिानबंधेत्वत्रसर्वमूलहोमाप्याम्नातः ॥ प्रच्छादनोर्णवस्त्रादिदद्याद्धेनुंचकांच
नम् ॥ दानंतद्धोमयेद्विप्रःसर्वमूलानितत्रवैइति ॥ देवताचात्रमूलमेव ॥ आशीश्वतेभ्योगृह्णीयात्प्रणम्याथक्षमापयेत् ॥ दद्यादन्नंपायसादिब्रा
ह्मणान्भोजयेच्छतम् ॥ अलाभेसतिपंचाशद्दशकंतदलाभतः ॥ सर्वशांतेश्चपठनंब्राह्मणैराशिषस्तथा ॥ गृहीक्षमापयेद्विप्रान्निर्ऋतिःप्रीयता
मिति ॥ विधानेचरितेस्मिंस्तुततःशांतिर्भवेद्ध्रुवम् ॥ गंडांतेप्येवंकर्तव्यंपुष्याद्र्धेतद्वदेवतु । पुष्याद्र्धेपुष्यस्नानमंत्रैःस्नपनमित्यर्थः ॥
अतएवज्योतिर्निबंधे ॥ पुष्यस्नानोक्तमंत्रैश्चस्नापयेद्दंपतीशिशुमित्युक्तम् ॥ मदनरत्नेतु पुष्यार्द्धेएवमेवत्विातिपाठः ॥इतिशौनकीयेमूलशां
तिविधिः ॥ शतमूलानिदेवज्ञमनोहरेपुराणसमुच्चये ॥ बर्हिःशिखा १ हरिक्रांता २ सहदेवी ३ पुनर्नवा ४ ॥ शरपुंखा ५ वराहीच
६ काकजंघा ७ सुलक्षणा ८ ॥ तुंबिकाचैव ९ कर्कंधूः १० कर्पूरी ११ कालवल्लिका १२ ॥ कर्कोटिकाच १३ चक्रांका १४
श्वेतार्को १५ व्याघ्रपत्रिका १६ ॥ रुदंती १७ चाश्वगंधाच १८ मुसली १९ गिरिकर्णिका २० ॥ इंद्रवारुण्य २१ पामार्ग २२ शंख
पुष्पी २३ कुमारिका २४॥ शल्लकी २५ चाथगंधारी २६ निर्गुंडी २७ देवदालिका २८॥वटः २९ शमी ३०तथाप्लक्षः ३१पालाशो ३२
श्वत्थएवच ३३॥ चूत ३४ श्चोदुंबरो ३५ जंबू ३६ नंदीवृक्षोथ ३७ वेतसः ३८ ॥पुन्नागो ३९ थार्जुनो ४० शोको ४१ बकुलो ४२ श्मंत
कस्तथा ४३॥शाल ४४ स्ताल ४५ स्तमालश्च ४६ पाटलः ४७ शतपत्रिका ४८ ॥ मधूकश्च ४९ शिरीषश्च ५० श्रीवृक्षो ५१ बृहतीद्वयं

५२-५३॥बला ५४ चातिबलाचैव ५५ पाठा५६नागबलातथा ५७॥जातीच ५८ बकुलश्चैव ५९ केतकी ६० कदलीतथा६१॥मातुलिंगी
६२ जयंतीच६३ यवानी६४ पुंड्रिकातथा ६५॥द्रोणपुष्पा ६६तथाकुंभी ६७ श्रीपर्णी ६८ मदनस्तथा ६९ ॥चंपकं ७० पद्मकंचैव ७१
तथाकांचनपुष्पिका ७२ ॥ सिद्धेश्वरीच ७३ बदरी ७४ राजवृक्षो ७५ धवस्तथा ७६ ॥ कुंदश्च७७ मुचुकुंदश्च७८ गोजिह्वा७९क्षरकंदुका
८०॥दाडिमी ८१ बीजपूरीच ८२ ब्राह्मी ८३ चामलकीतथा ८४॥ भृंगराज ८५ अधःपुष्पी ८६मत्स्याक्षी८७चाटरूपकं८८॥तरंगिणी
८९ गुडूचीच ९० निशाह्वा ९१ शतमूलिका ९२॥ बाकुची ९३ काकजंघाच ९४ बर्बरी ९५ तुलसीतथा९६ ॥कुशः९७काशश्चे ९८क्षु
मूलं९९तथासर्षपमूलकम्१००॥अलाभेचोक्तमूलानांसदृक्षाणांसमाहरेत् । सर्वेषामलाभेयथालाभमाहरेदित्यर्थः।अथतेषांमध्यदेशभाषया
नाम।नि।मयूरशिखा १ विष्णुक्रांता २ गदहश्च ३ पुनर्नवा ४ सरकोका ५ वाराहीकंद ६ मसी ७ लक्ष्मणा ८ लौकी९ वैरी१० कर्पूरी
११ करेंबु १२ खखसी १३ चाकवड १४ श्वेतार्क १५हैसी १६ रुदंती १७ असगंधा १८ मूसरी १९ कोरैया २० इदारुनी २१चिटचिरा
२२ शंखपुष्पी २३ घिकुवारी २४ शालै २५ गंधप्रसादनी २६ मेउडी २७ देवदाली २८ वट २९ शमी ३० पाकरी ३१ परास ३२
पीपर ३३ आंब ३४ गुलरी ३५ जामुनी ३६ धनबहेरा ३७ वेतसा ३८ नागेश्वर ३९ कौह ४० अशोक ४१ बौलसरी ४२ पाषाणभेद
४३ शाल ४४ तमाल ४५ ताल ४६ पारंडी ४७ सेवंत ४८ महुवा ४९ सिरीसा ५० बेल ५१ कटाई ५२ बड़ीकटाई ५३ बरियारी ५४
ककही ५५ पाठी ५६ गुरसकरी ५७ चंबेली ५८ बकुल ५९ केवडा ६० विजडदर ६१ मातुलिंग ६२ जैती ६३ अजवाइनी ६४ पुंड्रि

का ६५ गूमा ६६ जलकुंभी ६७ कंभारी ६८ दौना ६९ चंपा ७० पद्मकाष्ठ ७१ पीतकटसरैया ७२ भुईचांफा ७३ बड़ीवैरी ७४ सिरौ जी ७५ धव ७६ कुंद ७७ मुचकुंद ७८ गौमी ७९ मुंडुई ८० अनार ८१ आम्लवेतस ८२ ब्राह्मी ८३ औरा ८४ भोंगरिया ८५ अधहुली ८६ गंडिनी ८७ अरुस ८८ सेवार ८९ गुरीवी ९० हरद ९१ शतावरी ९२ बकुची ९३ कोवाठोठी ९४ ममरी ९५ तुलसी ९६ कुश ९७ काश ९८ ऊख ९९ सरिसौ १०० सर्वौषधिगणश्चतत्रवोक्तः।मुरामांसीवचाकुष्ठंशैलेयंरजनीद्वयम्॥सठीचंपकमुस्ताचसर्वौषधिगणःस्मृतः॥ एकांगी १ जटामांसी २ वेखंड ३ कोष्ठ ४ मनशील ५ हलद ६ दारुहलद ७ कचोरा ८ चंपा ९ मोथ १० कात्यायनेनशतमूलमध्येद्वात्रिंशन्मूलान्युक्ता न्यप्रतिषिद्धानि।यानिकानिचिद्ब्राह्मणीत्युक्तम्।प्रतिषिद्धानिचतेनवोक्तानि।अथातोमूलविधिंव्याख्यास्यामइत्युपक्रम्यप्रधानानिमूलानि वक्ष्याम्यष्टादशमाहिरण्मयमयमूलसप्तधान्याप्रथमाकाशमर्यासहदेव्यपराजिताबालापाठाशंखपुष्पाधःपुष्पीमधुयष्टिकाचक्रांकितामयूरशि खाकाकजंघाकुमारिकाद्वयंजीवंत्यपामार्गभृंगराजलक्ष्मणासुलक्ष्मणाजातिव्याघ्रपत्रश्चक्रमर्दकसिद्धेश्वराश्वत्थोदुंबरपलाशप्लक्षवटार्कदूर्वारो हितकशतावरीशमीत्यादिमूलशतंपूरयित्वा।तस्मिन्निषिद्धानिमूलानिवक्ष्यामि।बैल्वधवनिंबकदंबराजवृक्षोक्षशालप्रियालदधिकपित्थको विदारश्लेष्मातकबिभीतकशाल्मलीसरलसर्वकंटकिवर्ज्यंतत्राभिषेकंकुर्यात्।पितुःशिशोर्जनन्यादेवस्यत्वेतिऔदुंबर्यासदीसुदगग्रामास्तृष्णा तितत्रासीनासंपातेनाभिषिंचतिशिरसोध्यनुलोमशिरोमेश्रीर्यशइतियथालिंगमंगानिसंस्पृशतिस्नानादूर्ध्वंनैर्ऋतंपायसंश्रपयित्वाश्मर्यम यंस्त्रुक्स्त्रुवंप्रताप्यसमृज्यान्वारब्धआघारावाज्यभागौहुत्वासत्वन्नमितिचतस्रःस्थालीपाकेनजुहुयात्कृणुष्वपाजइतिपंचदशाज्याहुतीश्चतुर्गृ

हीतेनजुहुयान्मानस्तोकइतिद्वाभ्यांयातेरुद्रशिवातनूरितिषट् । अग्नेरक्षांसिसेधतिशुक्रशोचिरमर्त्यः शुचिःपावकईड्यइतित्वन्नःसोमविश्वतो
रक्षाराजन्नघायतः । नरिष्येत्वावतःसखेतिस्विष्टकृदादिप्राशनांतंकृष्णागौःकृष्णाश्वतिलाहेममयमूलसप्तधान्यसंयुक्तमाचार्यायदद्यात्कृ
ष्णोनड्वान्ब्रह्मणेदद्यान्नक्षत्रसूचकेभ्योवासोदद्यादन्येभ्योब्राह्मणेभ्यः सुवर्णंदद्यात्कृष्णागौः पायसेनब्राह्मणान्भोजयेत् । सार्पदैवतेगंडजातेए
षविधिः । कात्यायनेनोक्तः।कृतेशांतिर्भवतीतिअष्टादशमाषंतत्परिमितंसुवर्णकृतमूलम्केचित्तुअष्टादशमाषमितिनपठंति यानितुपुराण
समुच्चयविहितान्यपिबैल्वादीन्यत्रप्रतिषिद्धानि ।तेषुविकल्पः ॥ अथशौनकोक्तमार्गेणमूलशांतिप्रयोगः ॥ उक्तकालेगोमुखप्रसवंकृत्वादेश
कालौसंकीर्त्यममास्यकुमारस्यकुमार्यावामूलप्रथमचरणादिजन्मसूचितपित्राद्यरिष्टादिशांतिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसनवग्रहमखांमूलज
ननशांतिंकरिष्यइतिसंकल्प्य । गणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धानिकृत्वाचार्यब्रह्मसदस्यानृत्विजश्चाष्टौचतुरोवावृत्वा
मधुपर्कवस्त्रालंकारादिभिर्यथाविभवमर्चयेत् । ततः । आचार्यःप्राणानायम्यास्मिन्कर्मणिआचार्यकर्मकरिष्यइतिसंकल्प्य ।यदत्रसंस्थित
मितिसर्षपान्विकीर्यापोहिष्ठादिमंत्रैःकर्मभूमिंप्रोक्ष्यमंडपपक्षेमंडपदेवतापूजांकृत्वाईशानदेशेवर्णकैः स्वस्तिकंविरच्यतत्रमहीद्यौरितिभूमिं
स्पृष्ट्वा।ओषधयःसमितिद्रोणप्रमाणव्रीहीन्निक्षिप्यतत्राकलशेष्वितिकुंभंनिधायेमंमेगंगेइतिवारिणाऽऽपूर्यगंधद्वारामितिगंधंयाओषधीरिति।
ओषधीः ओषधयः समितियवान्कांडात्कांडादितिदूर्वाः अश्वत्थेवइतिपंचपल्लवान्चूतपल्लवांश्च ।ःस्योनापृथिवीतिसप्तमृदः।याःफलिनी
रितिफलम् ।सहिरत्नानीतिपंचरत्नानि। आपोहिष्ठेतितृचेनपंचगव्यम् । हिरण्यवर्णइतिसुवर्णंचप्रक्षिप्ययुवासुवासाइतिकलशंवाससासंवे

ष्टचपूर्णांदर्वीतितदुपरिताम्रादिमयंपूर्णपात्रंनिदध्यात् । कुंभस्थापनादौयथाशाखंमंत्रपाठः । ततोरुद्रकलशाच्चतुर्दिक्षुचतुरःकलशान्स्थाप
यित्वापूर्णपात्रनिधानांतंकुर्यात् ॥ प्रतिकलशंमंत्रावृत्तिः ॥ मध्यकुंभेसुवर्णनिर्मितांरुद्रप्रतिमांत्र्यंबकमितिमंत्रेणावाह्यपूजयेत् ॥ अस्यव
सिष्ठोरुद्रोनुष्टुप् । ततएकऋत्विक्कुंभंस्पृष्ट्वारुद्रैकादशनींजपेत् । यदियाजुषोयजमानः॥बहृचश्चेच्चत्वारिरुद्रसूक्तानि । छंदोगस्तुरुद्रसामानि।
अत्रशक्तितएकादशाष्टत्रिद्व्येकसंख्याग्राह्या।केचित्तुरुद्रःसर्पसाधारणोबहृचच्छंदोगयोस्तुसूक्तसाम्नोर्व्यवस्थितंविकल्प्यइत्याहुःकद्रुदेतिनव
र्चस्यसूक्तस्यघोरःकण्वोरुद्रोगायत्रीजपेविनि० ।इमारुद्रायतवसइत्येकादशर्चस्यकुत्सरुद्रआद्यानवजगत्योंत्येद्वेत्रिष्टुभौजपेविनि० । आते
पितारितिपंचदशर्चस्यगृत्समदोरुद्रस्त्रिष्टुप्जपेविनि०इमारुद्रायस्थिरधन्वनइतिचतुर्ऋचस्यवसिष्ठोरुद्रस्तिस्रोजगत्योंत्यात्रिष्टुप्जपेविनि०
आवोराजानंवामदेवोरुद्रस्त्रिष्टुप्जपेविनि० ।तमुष्टुहिभौमोत्रिरुद्रस्त्रिष्टुप्जपेविनि० ।भुवनस्यपितरमृऋजिश्वारुद्रस्त्रिष्टुप्जपेवि० ।एकादशानां
रुद्रसाम्नांवामदेवोरुद्रआद्यस्यत्रिष्टुप्।ततश्चतुर्णांगायत्रीततस्त्रयाणामुत्कृतिच्छंदःजपेवि० । ततएकऋत्विङ्मध्यकुंभेत्र्यंबकमित्यष्टसहस्रंज
पेत्।अन्येषुतुक्रमेणआशुःशिशानइतित्रयोदशर्चस्यइंद्रोपतिरथऋषिःइंद्रोदेवताचतुर्थ्याबृहस्पतिस्त्रिष्टुप्छंदःअंत्यानुष्टुप्जपेवि० ।त्वमग्नेरुद्र
इत्यनुवाकस्यहव्यवाड्ऋषिःअस्यात्मारुद्रोजगतीज० ।त्वमग्नइत्य० जवारक्षोहणमितिपंचविंशर्चस्यांगिरसःपायुरग्निस्त्रिष्टुप्चतस्रोन्त्यानुष्टु
भःजपेविनि०अत्रसंख्यापूर्वोक्ता।शक्त्याग्राह्याचतुर्थेंतुपवमानमपिसकृत्।यद्वाएतेषामपिरुद्रकुंभएवजपःचतुर्षुतुशांतिजपइतिपंचकुंभासंभ
वेकुंभद्वयंवाअस्मिन्पक्षेरुद्रकुंभेरुद्रादिजपःअन्यस्मिंस्तुवरुणमावाह्यशांतिजपइति ॥अथवापंचकुंभस्थानेएकएवचतुःप्रस्रवणःतत्रमध्यमकुं

भकार्यंमध्यकुंभचतुष्टयकार्याणिचतुर्षुप्रस्रवणेषुइतिविवेकः। ततःपूर्वस्थापितकुंभोत्तरतश्चतुर्विंशद्दलंपंकजंपंचवर्णैःशुक्लतंडुलपिष्टेनवाकृत्वा
कर्णिकायांमंत्रवत्कुंभंसंस्थाप्यगंधद्वारामित्यन्तंकृत्वाशतमूलानितदलाभेविष्णुक्रांतासहदेवीतुलसीशतावरीकुशान्कुंकुमंचप्रक्षिप्ययाओष
धीरित्यादिपूर्णपात्रनिधानांतंकृत्वोपरिवस्त्रेष्टदलंकृत्वाकर्णिकायांमोषुणइतिनिष्कतदर्धंतदर्धनिर्मितांनिर्ऋतिप्रतिमांपंचामृतस्नापितांस्था
प्यतद्दक्षिणतइंद्रंवोमधुच्छंदाइंद्रोगायत्रीतींद्रंतदुत्तरतश्चअप्सुमेमेधातिथिरापोरनुष्टुप्इत्यपःस्थापयेत् ॥ ततःप्रागादितश्चतुर्विंशतिषुभूमिस्थ
दलेषुउत्तराषाढाद्यनुराधांतानिनक्षत्राणितद्देवतावास्थापयेत॥ ताश्चविश्वेदेवाःविष्णुः वसवःवरुणः अजैकपात् ॥ अहिर्बुध्न्यःपूषा अश्विनौ
यमःअग्निः प्रजापतिः सोमः रुद्रः अदितिः बृहस्पतिः सर्पाः पितरः भगः अर्यमा सविता त्वष्टा वायुःइंद्राग्नी मित्र इति ॥ ततोलोकपालाना
वाह्य नैर्ऋतेग्निस्थापनंकृत्वातदीशान्येनवग्रहांस्तत्तन्मंत्रैरावाह्यान्वादध्यात । चक्षुषीआज्येनेत्यंतमुक्तानवग्रहानमुकसंख्याभिःसमिच्चर्वा
ज्याहुतिभिःअधिदेवताःप्रत्यधिदेवतालोकपालान्विनायकादींश्चप्रत्येकममुकसंख्याभिःसमिच्चर्वाज्याहुतिभिः। निर्ऋतिंप्रतिद्रव्यमष्टोत्तरश
तसंख्याभिर्घृतसंमिश्रपायससमिदाज्यचर्वाहुतिभिः । इंद्रमपश्चप्रतिद्रव्यमष्टाविंशतिसंख्याभिर्घृतसंमिश्रपायससमिदाज्यचर्वाहुतिभिः ॥
विश्वेदेवाद्यश्चतुर्विंशतिदेवताअष्टाष्टसंख्याभिःपायसाहुतिभिः ॥ रक्षोहणंकृणुष्वेतिपंचदशर्ग्भिःप्रत्यृचमष्टाष्टाभिःकृसराहुतिभिः। सवितारंदु
र्गांत्र्यंबकंऋत्विक्स्तुतिंदुर्गांवास्तोष्पतिंअग्निंक्षेत्राधिपतिंमित्रावरुणौअग्निंएताअष्टाष्टसंख्याभिःकृसराहुतिभिःश्रियंहिरण्यवर्णामितिपंचद
शर्ग्भिःप्रतिमंत्रमष्टसंख्याभिःसमिदाज्यचर्वाहुतिभिः। सोमंत्रयोदशवारंपायसाहुतिभिः। रुद्रंचतुर्गृहीतेनाज्येन। अग्निंवायुंसूर्यंप्रजापतिंचाज्ये

नशेषेणस्विष्टकृतमित्यादिपूर्णपात्रनिधानांतंकृत्वास्वस्वमत्रार्निर्ऋत्यादिपूजांकुर्यात्। तत्रवस्त्रयुग्मंरक्तचंदनंकृष्णसुरभीणिपुष्पाणिमेषशृंग
स्यधूपः नैवेद्यंपुरुषाहारान्नंपोलिकाश्वब्राह्मणस्यसुरास्थानेसैंधवमिश्रंक्षीरंमांसस्थानेलवणयुक्तंपायसंक्षत्रियादीनांतुसतिसंभवेमुख्यमेवएताव
न्नैवेद्यंपूजांसमाप्यअन्वाधानक्रमेणपायसकृसरचरून्श्रपयित्वाज्यभागांतंकुर्यात् ॥ ततोयजमानःसर्वदेवताउद्दिश्यत्यागंकुर्यात् ॥ ततोऋ
त्विक्सहितआचार्योजुहुयात्॥तद्यथा॥ नवग्रहादिदेवताधिप्रत्यधिदेवताविनायकादीनांतत्तन्मंत्रैःसमिदाज्यचरून्निर्दिश्यसंख्ययाहुत्वानि
र्ऋतेरिंद्रस्यापांचमंत्रैःक्रमेणद्रव्यचतुष्टयंहुत्वावक्ष्यमाणर्ग्भिर्जुहुयात्॥कृणुष्वेतिपंचदशर्चस्यगौतमोवामदेवोरक्षोहात्रिष्टुप्कृसरहोमेवि० ॥प्र
त्यृचमष्टसंख्ययासर्वत्रजुहुयात्॥गायत्र्याकृसरंजातवेदसेकश्यपोदुर्गात्रिष्टुप्कृसरहोमेवि० । त्र्यंबकं० सीरायुंजंतीत्यस्यबुधऋत्विक्स्तुतिर्गा
यत्रीकृसरहोमेवि० ।तामग्निवर्णांसौभरिर्दुर्गात्रिष्टुप्वास्तोष्पतेवसिष्ठोवास्तोष्पतिस्त्रिष्टुप्।अग्निंमेधातिथिरग्निर्गायत्रीक्षेत्रस्यवामदेवःक्षेत्रपालो
नुष्टुप्गृणानाजमदग्निर्मित्रावरुणौगायत्री अग्निंदूतंपुरोदधइत्यस्य आंगिरसोविरूपोग्निर्गायत्रीसर्वत्रकृसरहोमेविनियोगः हिरण्यवर्णामितिपंच
दशर्चस्यआनंदकर्दमचिक्लीतेंदिरासुताऋषयःश्रीर्देवताआद्यास्तिस्रोनुष्टुभःचतुर्थीप्रस्तारपंक्तिःपंचमीषष्ठ्यौत्रिष्टुभौततोष्टावनुष्टुभःअंत्याप्र
स्तारपंक्तिःप्रत्यृचंसमिदाज्यचरूनष्टशताष्टाविंशत्यष्टान्यतरसंख्ययाहोमेवि. त्वन्नःसोमविश्वतइत्यस्यप्रगाथःसोमस्त्रिष्टुप्पायसहोमेवि० ।त्व
न्नःसोमविश्वतोगोपइंतिवामंत्रःत्वन्नःसोमसुक्रतुरितिवाअनयोरैंद्रोविमदःसोमःप्रस्तारपंक्तिः॥ ततश्चतुर्गृहीताज्यंयातेरुद्रेतिकश्यपोरुद्रःस्वरा
डनुष्टुप्ततःस्रुवेणव्यस्तसमस्तव्याहृतिभिराज्यंहुत्वास्विष्टकृदादिप्रायश्चित्तहोमांतंकुर्यात् ॥ ततोदिक्पालेभ्योनवग्रहेभ्योविनायकादिभ्यो

निर्ऋतयेइंद्रायाग्नोरुद्रायक्षेत्रपालायसदीपमाषभक्तबलीन्दद्यात्। ततआचार्योयजमानोवापूर्णाहुतिंजुहुयात्। तत्रमंत्राः। समुद्रादूर्मिरित्येकादशर्चस्यवामदेवोग्निस्त्रिष्टुप्अंत्याजगतीपूर्णाहुतिहोमेवि०। प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप्पूर्णा० पूर्णादर्वीतिविश्वेदेवाः शतक्रतुरनुष्टुप्पूर्णाहुति०॥सप्ततेअग्नेसप्तवानग्निर्जगतीपूर्णाहुति०। ततःप्रणीतानिनयनादिकर्मशेषंसमाप्यचतुःकुंभमध्यवर्तिनंकुंभंदक्षिणतःस्पृष्ट्वात्र्यंबकमितिशतावरंजपेत्॥ याजुषश्चेद्यजमानस्तदारुद्रैकादशिनीमपि ॥ बह्वृचश्चेद्रुद्रसूक्तानिसामगश्चेद्रुद्रसामानिआथर्वणश्चेत्र्यंबकमंत्रमात्रंअथवाएकादशाष्टात्रिद्व्येकसंख्यायारुद्रजपःशतंत्र्यंबकजपश्चसर्वेषांततोरुद्रंनिर्ऋतिंचपंचोपचारैःसंपूज्य त्र्यंबकंमोषुणइत्युपस्थायसर्वकलशोदकंपात्रांतरेगृहीत्वासर्त्विगाचार्योयजमानंसर्वौषधीभिरनुलिप्तांगंधृतनववस्त्रंतद्वामतोधृतनववस्त्रांसपुत्रांतत्पत्नीमुपवेश्यवक्ष्यमाणैर्मंत्रैरभिषिंचेत्॥तेचअक्षिभ्यामितिषण्णांकश्यपोविवृहायक्ष्मनाशनोनुष्टुप्अभिषेकेवि०। त्रिभिष्ट्वंदेवेतिसप्तानांवसिष्ठऋषिःआद्यानांत्रयाणामग्निर्देवताततश्चतुर्णांविश्वेदेवाआद्यागायत्रीद्वितीयानुष्टुप्ततस्तिस्रोगायत्र्योंत्येद्वेअनुष्टुभो अभिषेकेवि० ॥आपोहिष्ठेतिनवर्चस्यांबरीषःसिंधुद्वीपआपोगायत्रीअंत्येद्वेअनुष्टुभौपंचमीवर्द्धमानासप्तमीप्रतिष्ठा अभिषेकेविनियोगः॥आपइद्वेतिद्वयस्यसमर्षयोविश्वेदेवाअनुष्टुप्अभिषेकेवि०॥सहस्राक्षेणेतिप्राजापत्योयक्ष्मनाशनोयक्ष्महात्रिष्टुप् अभिषेकेवि० ॥ देवस्यत्वेत्यापस्तंबशाखागतैस्त्रिभिर्मंत्रैःयज्ञाग्रतइतिषण्णांप्रजापतिर्मनस्त्रिष्टुप् अभिषेके०॥योसौवज्रधरोदेवोमहेंद्रोगजवाहनः ॥ मूलजाताशिशोर्दोषंमातृपित्रोर्व्यपोहतु ॥ १ ॥ योसौशक्तिधरोदेवोहुतभुङ्मेषवाहनः ॥ सप्तजिह्वश्चदेवोग्निर्मूलदोषंव्यपोहतु ॥ २॥योसौदंडधरोदेवोधर्मोमहिषवाहनः॥मूलजाताशिशोर्दोषंव्यपोहतुयमोमम ॥ ३॥

योसौखङ्गधरोदेवोनिर्ऋतीराक्षसाधिपः ॥ प्रशामयतुमूलोत्थंदोषंगंडांतसंभवम् ॥ ४ ॥ योसौपाशधरोदेवोवरुणश्चजलेश्वरः ॥
नक्रवाहःप्रचेतानोमूलोत्थाघंव्यपोहतु ॥ ५ ॥ योसौदेवोजगत्प्राणोमात्रतोमृगवाहनः ॥ प्रशामयतुमूलोत्थंदोषंबालस्यशांतिदः ॥ ६ ॥
योसौनिधिपतिर्देवःखङ्गभृद्वाजिवाहनः ॥ मातापित्रोःशिशोश्चैवमूलदोषंव्यपोहतु ॥ ७ ॥ योसौपशुपतिर्देवःपिनाकीवृषवाहनः ॥
आश्लेषामूलगंडांतदोषमाशुव्यपोहतु ॥ ८ ॥ विघ्नेशःक्षेत्रपोदुर्गालोकपालानवग्रहाः ॥ सर्वदोषप्रशमनंसर्वेकुर्वंतुशांतिदाः ॥ ९ ॥ सुरा
स्त्वामभिषिंचंत्वित्यादिभिश्चाभिषिच्यतच्छंयःशंभुर्विश्वेदेवाःशक्करीअभिषेके० ॥ ततोरुद्रनिर्ऋतिकलशोदकेनान्येनचशतच्छिद्रमंत
र्धाया भिषिक्तोयजमानोधौतेवाससीधृत्वातिलकंकृत्वाचार्यादीन्संपूज्याचार्यायसवत्सांधेनुंब्रह्मणेवृषभंरुद्रजापिनेकृष्णमनड्वाहंऋत्विग्भ्यो
यथाशक्तिदक्षिणांभूयसींचदत्त्वानिर्ऋत्यादीनामुत्तरपूजांविधायउत्तिष्ठब्रह्मणस्पते० । अभ्यारमि० । यांतुदेवगणाइतिविसृज्यसंकल्पपूर्व
कमाचार्यहस्तेप्रतिपाद्याग्निंसंपूज्यगच्छगच्छेत्यग्निंविसृज्यशततदर्द्धदशान्यतरब्राह्मणभोजनंसंकल्प्यशांतिसूक्तजपंकारयित्वायस्यस्मृत्ये
तिजपित्वाकर्मसंपूर्णतांवाचयित्वाकर्मेश्वरार्पणंकृत्वासुहृद्युतोभुंजीतेति॥इतिमूलशांतिप्रयोगः ॥ अथकश्यपसंहितोक्तोमूलजननशांतिवि
धिः ॥ ईशानभागेपूर्वेवाउत्तरेवास्वसद्मतः॥मंडपंचतुरस्रंचचतुर्हस्तंप्रमाणतः । चतुर्द्वारसमायुक्तंतोरणाद्यैरलंकृतम् ॥ गोमयेनानुलिप्तेतु
चतुरस्रेचमंडले॥पूर्वोक्तलक्षणोपेतंकुंडमीशानतोबहिः॥सुवर्णेनप्रमाणेनतदर्धार्धेनवापुनः॥ यथावित्तानुसारेणप्रतिमांनिर्ऋतेःसुधीः॥ उदुंब
रवटाश्वत्थप्लक्षाम्रकसपल्लवम्॥शतौषधीमूलशंखनवरत्नानिमृत्तिकाम्॥पंचामृतांबुसद्बीजंकुंकुमंरोचनंफलम्॥ कुष्ठमांसीहरिद्रेद्वेमुराशैलेयचं

दनम् ॥ वचाकचोरकंमुस्तासर्वौषध्योदशैवहि ॥ गजाश्वरथ्यावल्मीकसंगमस्थानसंभवाम् ॥ ह्रदगोराजनगरद्वारतश्चाष्टमृत्तिकाम् ॥
तिलमाषव्रीहियवगोधूमानिप्रियंगवाः ॥ चणकैःसहिताश्चाष्टौसद्बीजाख्यानिसर्वदा ॥ ब्राह्मणाःश्रोत्रियाश्चाष्टौद्वादशत्वथषोडश ॥
ततस्तान्वरयेत्कर्तास्वस्तिवाचनपूर्वकम् । ईशानादिचतुष्कोणेष्वव्रणान्जलपूरितान् ॥ पूर्वोक्तद्रव्यसंयुक्तान्स्थापयेद्रक्तवर्णकान् ॥ शत
च्छिद्रंभवेत्कुंभंस्थापयेत्तंदुलोपरि ॥ स्थापयेन्मंडपेमध्येखड्गचर्मोग्रदंष्ट्रिणम् ॥ मोषुणश्चेतिमंत्रेणनिर्ऋतिंचार्चयेत्ततः ॥ शुक्लाक्षतांबरैः
षोडशोपचारांश्चकारयेत् ॥ दधिमध्वक्षतैःकुंभान्वस्त्रैस्तल्लिंगमंत्रकैः ॥ गंधपुष्पैःसधूपाद्यैरर्चयेत्कुशदूर्वकैः ॥ रुद्रेणक्रमशोभद्रा अग्नेः
सूक्तेनभक्तितः ॥आनोभद्राअनेनैवपुरुषसूक्तेनचार्चयेत् ॥ मूलंप्रजामित्यष्टौवावाक्यान्याचार्यकोजपेत् ॥ दुर्गांचग्रहविघ्नेशलोकपालां
श्चपूजयेत् ॥ स्वगृह्योक्तविधानेनकुंडेग्निंस्थापयेत्ततः ॥ प्रजापतयेस्वाहेतिमुखांतंजुहुयाद्यमम् ॥ मूलायस्वाहाप्रजापतयेस्वाहेत्युपहोममं
त्रौ ॥ पलाशसमिदाज्येनेनाष्टसहस्रकम् ॥ अथवाष्टोत्तरशतंप्रत्येकंजुहुयात्ततः मूलंप्रजामित्यष्टाभिर्वाक्यैर्मंत्रद्वयेनच ॥ सावित्रसौ
म्यनैर्ऋत्यमंत्रैरश्वत्थसंभवैः ॥ समिद्भिश्चतिलव्रीहीन्हुत्वाव्याहृतिभिस्ततः॥पूर्णाहुतिंचजुहुयाज्जपादीनांचपूर्वकम् ॥ततोमंगलघोषैश्चस्नान
कर्मसमाचरेत् ॥ आद्यपादेपितुर्गंडेत्रयाणामभिषेचनम्॥इतरत्रशिशोर्मातुरभिषेकंचकारयेत् ॥ धारयित्वाबृहत्कुंभंशतच्छिद्रंसमाहितः ॥
ततःकुर्यादनेनैवनिर्ऋतिःप्रीयतामितिवाचयेत् ॥ आचार्यायवृषंलोहपिंडदद्यात्सदक्षिणम् ॥ आचार्यान्यब्राह्मणेभ्योदद्याच्छ
क्त्याचदक्षिणाम् ॥ श्रोत्रियायविशिष्टायब्राह्मणायकुटुंबिने॥ वस्त्रालंकारसंयुक्तांधेनुंदद्यात्पयस्विनीम् ॥ ब्राह्मणान्भोजयेत्पश्चाद्दंभलीभवि

वर्जितः ॥ कुरुतेशांतिकंयस्तुगंडदोषात्प्रमुच्यते ॥ एतत्सर्वंसार्पभेपिसमानंकिंचिदुच्यते ॥ सर्पेभ्यःस्वाहेतिमंत्रमुखांतेजुहुयात्ततः ॥ अ
श्लेषाभ्यःस्वाहादंदशूकेभ्यःस्वाहेत्युपहोममंत्रौ ॥ इदंसर्पेभ्यइत्यष्टौवाक्यैः।कार्यंतुपूर्ववत् ॥ तेषामास्तीकऋषिएषुसर्पाश्चदेवताः ॥ नमोअ
स्तुसर्पेभ्यइत्युपचारांश्चकारयेत् ॥ अयंचविधिस्तैत्तिरीयपरःतदीयमंत्राग्निमुखयुक्तत्वात् ॥ इतिकश्यपोक्तोमूलाश्लेषाशांतिविधिः ॥ अथ
शौनकोक्तआश्लेषाशांतिविधिः ॥ आश्लेषायांतुजातानांशांतिंवक्ष्याम्यतःपरम् ॥ जातस्यद्वादशाहेचशांतिहोमंसमाचरेत् ॥ असंभवेतु
जन्मर्क्षेअन्यस्मिन्वाशुभेदिने ॥ स्नातोभ्यंगादिभिस्तस्मिन्वरयेत्तुद्विजोत्तमान् ॥ ऋत्विक्संख्यामूलवत् । विभवेपंचकुंभांस्तुद्वयंवातदला
भतः ॥ कुंभद्वयस्यमूलव्यवस्थातोवैलक्षण्यमाह ॥ देवतास्थापनेचैकमेकंरुद्राभिमंत्रणे ॥ चतुर्विंशद्दलोपरिप्रधानदेवतास्थापनार्थमेको
द्वितीयश्चतुःप्रस्रवणः ॥ मूलर्क्षोक्तप्रकारेणकुंभेनिक्षिप्यपूजयेत् ॥ चतुःप्रस्रवणेपंचरत्नादिचतुर्विंशद्दलस्थेशतमूलानीत्यर्थः ॥ गोमया
लेपितेदेशेधात्वाद्युपरिशोभिते ॥ पंकजंकारयेत्तत्रचतुर्विंशद्दलान्वितम् ॥ तंडुलैःकारयेद्विद्वान्रक्तपीतसितासितैः ॥ कर्णिकायां
न्यसेद्व्रीहींस्थापयत्तेषुकुंभकम् ॥ आकलेशेष्वित्यनयाकलशस्थापनंशुभम् ॥ इमंमेगंगेमंत्रेणपूरयेत्तीर्थवारिणा ॥ कुंभंचवस्त्रगं
धाद्यैस्तत्तन्मंत्रैःप्रपूजयेत् ॥ याःफलिनीरित्यनयाक्षिपेद्रत्नौषधादिकान् ॥ कुंभोपरिस्थपात्रेतुआश्लेषाप्रतिमांयजेत् ॥ निष्कनि
ष्कार्धपादैर्वाकारयित्वास्वशक्तितः ॥ तत्पूर्वोत्तरनक्षत्रेदक्षिणोत्तरयोर्यजेत् ॥ ऐंद्रादीशानपर्यंतमितरर्क्षाणिपूजयेत् ॥ नक्षत्र
देवताइतिकेचित् ॥ मूलोक्तेनविधानेनकुंभयोरभिमंत्रणम् ॥ रुद्रर्चारुद्रकुंभेतुपूर्ववच्छेषमाचरेत् ॥ पंचामृतस्नानादिसुरादिनैवेद्यां

तमित्यर्थः । नमोअस्तुसर्पेभ्यःपूजामंत्रइतीरितः ॥ सर्पोरक्तस्त्रिनेत्रश्चद्विभुजःपीतवस्त्रकः ॥ फलकासिधरस्तीक्ष्णोदिव्याभरणभूषितः ॥
एवंध्यात्वाततोभ्यर्च्यहोमकर्मसमाचरेत् ॥ कर्तुःशाखोक्तमार्गेणआचार्यस्याथवाचरेत् ॥ मुखान्तंकर्मनिर्मायहविरादायशास्त्रतः ॥
इदंसर्पेभ्योजुहुयात्साधिप्रत्यधिदैवतम् ॥ इदंहवि० । अष्टोत्तरशतंवाथअष्टाविंशतिमेवच ॥ मूलनक्षत्रवच्छेषंहोमकर्मसमाचरेत् ॥
पूर्णाहुत्यंतकर्माणिकृत्वासम्पातकंतथा ॥ पूर्णाहुत्यंतमित्युक्तारुद्रकुंभादौपुनःरुद्रादिजपोनास्ति ॥ कुम्भेजलंचप्रक्षिप्यअभिषेकमथा
चरेत् ॥ दारपुत्रसमेतस्ययजमानस्यपूर्ववत् ॥ अभिषिंचेत्तथाऽऽचार्यऋत्विग्भिःसहितस्तथा॥ अभिमंत्रितकुंभाद्भिरभिषेचनमाचरेत् ॥
तथापौराणमंत्रैश्चपञ्चनैरभिषेचयेत् ॥ आश्लेषाऋक्षजातस्यमातापित्रोर्धनस्यच ॥ भ्रातृज्ञातिकुलस्थानांदोषंसर्वंव्यपोहतु ॥ १ ॥ योऽसौ
वागीश्वरोनामअधिदेवोबृहस्पतिः॥मातापित्रोःशिशोश्चैवगण्डांतंचव्यपोहतु ॥ २ ॥ पितरःसर्वभूतानांरक्षन्तुपितरःसदा ॥ सर्पनक्षत्रजात
स्यवित्तंचज्ञातिबान्धवान् ॥ एवंकृतेभिषेकेतुसर्पशान्तिर्भवेद्ध्रुवम्॥ततःशुक्लाम्बरधरोयजमानःसुभूषितः ॥ दक्षिणाभिस्ततोविप्रान्मूलवच्च
प्रतोषयेत्॥ भुक्तवद्भ्यश्चविप्रेभ्यःस्वीकुर्यादाशिषंगृही ॥ इत्युक्तेनविधानेनसर्वारिष्टंव्यपोहति॥ उत्तरपूजायामर्घ्यमाह ॥ सर्पाधीशनमस्तु
भ्यंनागानांचगणाधिप ॥गृहाणार्घ्यंमयादत्तंसर्वाऽरिष्टप्रशान्तये ॥ मूलनक्षत्रवत्कुर्यात्सार्पगंडेस्वनामतः ॥आश्लेषामूलगंडांतदोषमाशुव्य
पोहत्वित्येवमूहः ॥ यद्वामूलगंडांतेयथागंडांतशांतिर्भिन्नाएवमत्रापि॥ इतिशौनकोक्तआश्लेषाशांतिविधिः॥ज्योतिर्निबन्धेतुविशेषउक्तः ॥
नागप्रतिकृतिंकुर्यात्सौवर्णींपलमानतः ॥ अथवाशक्तितःकुर्याद्वित्तशाठ्यंविवर्जयेत् ॥ कद्रुद्राय प्रचेतसइतिमंत्रविशेषतः॥ नैवेद्यंह्यामिषंचा

स्तिपूजादानकृतिःसमा ॥ अयुतंहवनंह्यत्रतिलैःसाज्यैःप्रधानकैः ॥ ब्रह्मवृक्षस्यसमिधःशतमष्टोत्तरंशुभाइति॥अथप्रयोगः॥ द्वाहशाहेजन्म
र्क्षेन्यस्मिन्वाशुभेहनिगोमुखप्रसवंकृत्वायजमानः कृताभ्यंगोदेशकालौस्मृत्वाअस्यबालकस्यआश्लेषाजन्मर्क्षसूचितपित्राद्यरिष्टादिशांति
द्वाराश्रीपरमेश्वरप्रीत्यर्थंमाश्लेषाजननशांतिंकरिष्ये ।इतिसंकल्प्यतदंगतयागणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यवरणा
निकुर्यात् ॥ ततऋत्विजश्चाष्टौचत्वारोवा ॥ ततःआचार्योऽस्मिन्कर्मणिआचार्यकर्मकरिष्येइतिसंकल्प्य। यदत्रसंस्थितमितिसर्षपान्विकी
र्यआपोहिष्ठेतिमंत्रैःकर्मभूमिंप्रोक्ष्यईशानदेशेपंचवर्णैःस्वस्तिकंविरच्यतत्रैकंकलशंस्थापयेत्॥ व्रीहयोद्रोणप्रमाणाः।आपोहिष्ठेतित्र्यृचेनपंच
गव्यंतत्रनिक्षिपेत् ॥ ततोविभवेतस्मात्कलशाच्चतुर्दिक्षुचतुरःकलशान्स्थापयेत् ॥ ततःपूर्णपात्रोपरिस्थवस्त्रेसौवर्णींरुद्रप्रतिमांत्र्यंबकमिति
मंत्रेणावाह्यपूजयेत् ॥ अस्यवसिष्ठोरुद्रोनुष्टुप्ततःएकऋत्विक्कुंभस्पृष्ट्वारुद्रैकादशिनींजपेत् ॥ यदियाजुषोयजमानःबह्वृचश्चेच्चत्वारिरुद्रसू
क्तानि । छंदोगश्चेद्रुद्रसामानि । रुद्रसाम्नोःएकादशाष्टत्रिद्व्येकसंख्याग्राह्या । केचित्तुरुद्रःसर्वसाधारणाबह्वृचच्छंदोगयोस्तुसूक्तसाम्नोरुद्रे
णसहविकल्पइत्याहुः।इदमेवशिष्टाःकुर्वन्ति।रुद्रसूक्तानितुकद्रुद्रायेतिघोरःकण्वोरुद्रोगायत्री।इमारुद्रायतवसइत्येकादशर्चस्यसूक्तस्यकुत्सो
रुद्रोनवजगत्योंत्येद्वेअनुष्टुभौ आतेपितरितिपंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् इमारुद्रायस्थिरधन्वनइतिचतसृणांवसिष्ठस्तिस्रोजग
त्योंत्यात्रिष्टुप् आवोराजानंवामदेवोरुद्रस्त्रिष्टुप् तमुष्टुहिभौमोत्रिरुद्रस्त्रिष्टुप्भुवनस्यपितरमृजिश्वारुद्रस्त्रिष्टुप्त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् तत
स्त्र्यंबकमितिमन्त्रमष्टोत्तरशतंपावमानीश्चमध्यकुम्भेजपेत् ॥ ततःप्राक्कुंभेआशुःशिशानइतित्रयोदशर्चस्यसूक्तस्यइंद्रोप्रतिरथऋषिःइंद्रोदे

वताबृहस्पतिस्त्रिष्टुप्छंदोंत्यानुष्टुप् दक्षिणकुंभेत्वमग्नेरुद्रइत्यनुवाकस्यहव्यवाट्ऋषिःअग्न्यात्मारुद्रोदेवताजगतीच्छंदः पश्चिमकुंभेरक्ष
णोइत्यस्यवामदेवोग्निस्त्रिष्टुप् उत्तरकुम्भेरक्षोहणमितिपंचविंशर्चस्यसूक्तस्य आंगिरसःपायुस्त्रिष्टुप् अंत्याश्चतस्रोनुष्टुभः अत्रापिपूर्वोक्तसं
ख्याःशक्त्याग्राह्याःपंचकुंभासंभवेचतुःप्रस्रवणंपंचवक्त्रंकुंभंस्थापयित्वासर्वंतत्रैवकुर्यात् ॥ ततःकुंभोत्तरतश्चतुर्विंशदलपंकजंपंचवर्णैःकृत्वाक
र्णिकायांकलशंस्थापयेत् ॥ तत्रयाःफलिनीरितिरत्नौषधीःक्षिपेत् ॥ ततःपूर्णपात्रोपरिसर्पप्रतिमामाश्लेषाप्रतिमांनमोअस्तुसर्पेभ्यइत्यावाह
येत् ॥ ततः॥सर्पोरक्तस्त्रिनेत्रश्चद्विभुजःपीतवर्णकः ॥ फलकासिधरस्तीक्ष्णोदिव्याभरणभूषितः ॥इतिसर्पंध्यात्वा तद्दक्षिणेबृहस्पतेगृत्समदो
बृहस्पतिस्त्रिष्टुप् इतिमंत्रेणप्रतिमायांबृहस्पतिमावाह्य उत्तरतश्चउदीरतांशंखःस्वधास्त्रिष्टुप् अनेनप्रतिमायांपितॄनावाह्यप्रागादितश्चतुर्वि
शतिपंकजदलेषुपूर्वामारभ्यपुनर्वसुपर्यन्तंनक्षत्राणितद्देवताआवाहयेत्॥ यथाभगः १ । अर्यमा २ । सविता ३ । त्वष्टा४ । वायुः ५ । इंद्रा
ग्नी ६ । मित्रः ६ । इंद्रः ८ । निर्ऋतिः ९ । आपः १० । विश्वेदेवाः ११ । विष्णुः १२ । वसवः १३ । वरुणः १४ । अजैकपात् १५ ।
अहिर्बुध्न्यः१६ । पूषा १७ । अश्विनौ १८ । यमः १९ । अग्निः२० ।प्रजापतिः २१ । सोमः २२ । रुद्रः २३ ।अदितिः२४।इतिततोलो
कपालानावाह्य पदार्थानुसमयेनकांडानुसमयेनवापूजयेत्॥ततःआचार्योऽग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानम् । नवग्रहान्प्रत्ये
कममुकसंख्याभिःसमिच्चर्वाज्याहुतिभिः अधिदेवताःप्रत्यधिदेवताश्चामुकसंख्याभिःसमिच्चर्वाज्याहुतिभिः विनायकादीन्लोकपालां
श्चप्रत्येकममुकसंख्याभिःसमिच्चर्वाज्याहुतिभिः प्रधानदेवतांसर्पान्प्रतिद्रव्यमष्टोत्तरशतसंख्याभिःपायसाहुतिभिःरक्षोहणंकृणुष्वेति

पंचदशर्ग्भिः प्रत्यृचमष्टसंख्याभिः कृसराहुतिभिः सवितारंदुर्गांत्र्यंबकमृक्त्विक्स्तुतिदुर्गांवास्तोष्पतिमग्निंक्षेत्राधिपतिंमित्रावरुणौअ
ग्निम्एताःअष्टाष्टसंख्याभिःकृसराहुतिभिः श्रियंहिरण्यवर्णामितिपंचदशर्ग्भिः प्रतिमंत्रमष्टसंख्याभिः समिदाज्यचर्वाहुतिभिः सो
मंत्रयोदशसंख्याभिः पायसाहुतिभिः रुद्रंचतुर्गृहीतेनाज्येन अग्निंवायुंसूर्यंचाज्येनशेषेण स्विष्टकृतमित्यादिपूर्णपात्रनिधानांतंकृत्वा
पायसकृसरचरूनुश्रपयित्वाज्यभागांतंकुर्यात् ॥ततोयजमानोदक्षिणतःसर्वादेवताउद्दिश्यत्यागंकुर्यात् ॥ ततऋत्विक्सहितआचार्योहोमं
कुर्यात्।तद्यथा॥ नवग्रहानधिदेवताःप्रत्यधिदेवताःविनायकाद्याःलोकपालांश्चतत्तन्मंत्रैर्हुत्वासर्पेभ्योबृहस्पतयेपितृभ्यश्चतत्तन्मंत्रैर्द्रव्यचतुष्ट
यंहुत्वाभागादिचतुर्विंशतिदेवताभ्योऽष्टाष्टसंख्ययापायसंजुहुयात्।कृणुष्वेतिपंचदशर्चस्यगौतमोवामदेवोरक्षोहात्रिष्टुप्कृसरहोमेविनियोगः।
गायत्र्याकृसरंजातवेदसेकश्यपोदुर्गात्रिष्टुप्कृसरहोमेवि० ॥ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप्कृसरहो० । सीरायुंजंतीत्यस्यबुधःसौम्यऋषिः
ऋत्विक्स्तुतिर्देवतागायत्रीच्छन्दःकृसरहोमेवि० । तामग्निवर्णांसौभरिर्दुर्गात्रिष्टुप्कृसरहोमे० ॥ वास्तोष्पतेवसिष्ठोवास्तोष्पति
स्त्रिष्टुप्कृसरहोमे० ॥ अग्निंकाण्वोमेधातिथिरग्निर्गायत्रीकृसरहो० ॥ क्षेत्रस्यपतिनावामदेवःक्षेत्रपालोनुष्टुप्कृसरहोमेवि० ॥
गृणानाभार्गवोजमदग्निर्मित्रावरुणौगायत्रीकृसरहो० ॥ अग्निंदूतंपुरोदधइत्यस्यआंगिरसोविरूपोग्निर्गायत्रीकृसरहो० ॥ हिरण्य
वर्णामितिपंचदशर्चस्यसूक्तस्यआनंदःकर्दमचिक्लीतेंदिरासुताऋषयः ॥ श्रीर्देवताआद्यास्तिस्रोनुष्टुभःचतुर्थीप्रस्तारपंक्तिःपंचमीषष्ठ्यौ
त्रिष्टुभौततोष्टावनुष्टुभःअंत्याप्रस्तारपंक्तिःहोमेविनियोगः ॥ प्रत्यृचंसमिदाज्यचरूनष्टशताष्टाविंशत्यन्यतमसंख्यया जुहुयात् ॥

त्वन्नःसोमविश्वतइत्यस्यप्रगाथःसोमस्त्रिष्टुप्पायसहोमे० ॥१३॥ त्वन्नःसोमविश्वतोगोपाइतिवामंत्रःत्वन्नःसोमसुक्रतुरितिवा अन
योरैन्द्रोविमदःसोमःप्रस्तारपंक्तिःयातेरुद्रेतिकश्यपोरुद्रःस्वराडनुष्टुप् चतुर्गृहीतमाज्यहोमेविनियोगः ॥ ततःस्रुवेणव्यस्तसमस्तव्या
हृतिभिराज्यंहुत्वास्विष्टकृदादिप्रायाश्चित्तहोमांतेदिक्पालेभ्योनवग्रहेभ्योविनायकादिभ्यःसर्पेभ्योबृहस्पतयेपितृभ्योरुद्रायक्षेत्रपालायस
दीपमाषभक्तबलीन्दद्यात् ॥ ततःआचार्योयजमानोवाचतुर्गृहीतेनद्वादशगृहीतेनवापूर्णाहुतिंजुहुयात् ॥ तत्रमंत्राः ॥ समुद्रादू
र्मिरित्येकादशर्चस्यसूक्तस्यगौतमोवामदेवोग्निस्त्रिष्टुप्पूर्णाहुतिहोमे० ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप्पूर्णादर्विर्विश्वेदेवाःशतक्रतुरनु
ष्टुप् सप्ततेअग्नेसप्तनवाग्निर्जगतीपूर्णाहुतिहोमे०॥एतैर्मंत्रैःपूर्णाहुतिंहुत्वाप्रणीतानिनयनादिकर्मशेषंसमाप्यरुद्रंसपांश्चपंचोपचारैःसम्पूज्य
त्र्यंबकंमोषुणइत्युपस्थायसर्वकलशोदकंपात्रांतरेगृहीत्वासर्त्विग्गाचार्योयजमानं सर्वौषधीभिरनुलिप्तांगंधृतनववस्त्रंधृतनववस्त्रांसपुत्रांतत्प
त्नींचाभिषिंचेत् ॥अक्षीभ्यामितिषण्णांकश्यपोविवृहायक्ष्मनाशोनुष्टुप् त्रिभिष्ट्वंदेवेतिसप्तानांवसिष्ठऋषिः आद्यानांत्रयाणामग्निर्देवतातत्तश्चतु
र्णांविश्वेदेवाःआद्यागायत्रीद्वितीयानुष्टुप्ततस्तिस्रोगायत्र्योंत्येद्वेअनुष्टुभौआपइद्वेतिसप्तर्षयोविश्वेदेवाअनुष्टुप्आपोहिष्ठेतिनवर्चस्यांबरीषः
सिंधुद्वीपआपोगायत्रीपंचमीवर्द्धमानासप्तमीप्रतिष्ठाअंत्येद्वेअनुष्टुभौसहस्राक्षेणेतिप्राजापत्योयक्ष्मनाशनोयक्ष्महात्रिष्टुप्अभिषेकेविनियो
गःततःयोसौवज्रधरोदेवोमहेंद्रोगजवाहनः ॥ सार्पजातशिशोर्दोषंमातापित्रोर्व्यपोहतु ॥ योसौशक्तिधरोदेवोहुतभुङ्मेषवाहनः ॥ सप्त
जिह्वश्चदेवोग्निःसार्पदोषंव्यपोहतु ॥ योसौदंडधरोदेवोधर्मोमहिषवाहनः ॥ सार्पजातशिशोर्दोषंव्यपोहतुयमोमम ॥ योसौखड्गधरोदे

वोनिर्ऋतीराक्षसाधिपः ॥ प्रशामयतुसापोंत्थंदोषंगंडांतसंभवम् ॥ योऽसौपाशधरोदेवोवरुणश्चजलेश्वरः ॥ नक्रवाहःप्रचेतानःसापों
त्थाघंव्यपोहतु ॥ योसौदेवोजगत्प्राणोमारुतोमृगवाहनः ॥ प्रशामयतुसापोंत्थंदोषंबालस्यशान्तये ॥ योसौनिधिपतिर्देवःखड्गभृ
द्वाजिवाहनः ॥ मातापित्रोःशिशोश्चैवसार्पदोषंव्यपोहतु ॥ योसौपशुपतिर्देवःपिनाकीवृषवाहनः ॥ आश्लेषामूलगंडांतदोषमाशुव्यपो
हतु ॥ विघ्नेशःक्षेत्रपोदुर्गालोकपालानवग्रहाः ॥ सर्वदोषप्रशमनंसर्वेकुर्वन्तुशांतिदाः ॥ आश्लेषाऋक्षजातस्यमातापित्रोर्धनस्यच ॥
भ्रातृज्ञातिकुलस्थानांदोषंसर्वंव्यपोहतु ॥ योसौवागीश्वरोनामअधिदेवोबृहस्पतिः ॥ मातापित्रोःशिशोश्चैवगंडांतंसंव्यपोहतु ॥ पितरः
सर्वभूतानांरक्षन्तुपितरःसदा ॥ सर्पनक्षत्रजातस्यवित्तंचज्ञातिबांधवान् ॥ सुरास्त्वेत्यादिभिश्चाभिषिच्यतच्छंयोः शंयुर्विश्वे
देवाःशक्करीअभिषेकेविनियोगः ॥ ततःसर्वकलशोदकेनान्येनचशतच्छिद्रमंतर्धायाभिषिक्तोयजमानःआचार्यायधेनुंब्रह्मणेवृषभंरुद्रजा
पिनेकृष्णमनड्वाहंरुद्रप्रतिमांचऋत्विग्भ्योयथाशक्तिदक्षिणांदत्त्वासर्पाणामुत्तरपूजनंविधायताम्रपात्रेफलपुष्पादियुक्तमर्घ्यंगृहीत्वा सर्पाधी
शनमस्तुभ्यंनागानांचगणाधिप गृहाणार्घ्यंमयादत्तंसर्वारिष्टप्रशांतये ॥ इत्यर्घ्यंदत्त्वाउत्तिष्ठेतिविसृज्यसंकल्पपूर्वकमाचार्यहस्तेप्रतिपाद्या
ग्निंसंपूज्यगच्छगच्छेतिविसृज्ययथाशक्तिब्राह्मणान्भोजयित्वाशांतिजपंकारयित्वासुहृद्युतोभुंजीत ॥ इतिदिनकरभट्टकृतेशांतिसारेआश्ले
षाशांतिप्रयोगः ॥ ( अथज्येष्ठाशांतिविधिः ) ॥ गर्गः ॥ घटिकैकाचमात्रांतेज्येष्ठादौघटिकाद्वयम् ॥ तयोःसंधिरितिज्ञेयंशिशुगंडंसमी
रितम् ॥ प्रथमेचद्वितीयेचज्येष्ठायांचतृतीयके ॥ पादत्रयेजातनरोज्येष्ठायत्रप्रजायते ॥ ज्येष्ठान्त्यपादजातस्तुपितुःस्वस्यचना

शनः ॥ जायतेनाऽत्रसंदेहोदशाहाभ्यंतरेयथा ॥ ज्येष्ठर्क्षेचपुमान्जातःस्वाग्रजस्यविनाशनः ॥ ज्येष्ठर्क्षेकन्यकाजाताहंतिशीघ्रंधवाग्र
जम् ॥ तस्माच्छांतिंप्रवक्ष्यामिगंडदोषप्रशांतये ॥ सुदिनेशुभनक्षत्रेचंद्रताराबलान्विते ॥ सूतकांतेतथाकुर्याज्ज्येष्ठाशांतिंविधानतः॥ वज्रां
कुशधरंदेवमैरावतगजान्वितम् ॥ कुर्याच्छचीपतिंरम्यंदेवेंद्रंसुरनायकम् ॥ कर्षमात्रसुवर्णेनकर्षार्द्धेनाथपादतः ॥ तद्विधानंप्रकुर्वीतवित्तशा
ठ्यंनकारयेत् ॥ शालितंडुलसंपूर्णकुंभस्योपरिपूजयेत् ॥ इंद्रायेन्द्रोमरुत्वेतइतिमंत्रेणवाग्यतः ॥ गंधपुष्पैर्धूपदीपैर्नानाभक्ष्यनिवेदनैः ॥
पूजयेद्विधिनाविप्रलोकपालगणान्वितम् ॥ रक्तवस्त्रद्वयोपेतंपूजयेत्सुरनायकम् ॥ तत्रसंस्थापयेत्कुंभांश्चतुर्दिक्षुविशेषतः ॥ तन्मध्येस्थाप
येत्कुंभंशतच्छिद्रसमन्वितम्॥ पुण्योदकसमायुक्तंवस्त्रयुग्मेनवेष्ठितम् ॥ कुंभेषुविन्यसेद्धीमान्पंचगव्यंसमंत्रकम् ॥ पंचामृतंपंचरत्नंमृत्तिका
पंचसंख्यकाः ॥ पंचवृक्षकषायांश्चपंचपल्लवकांस्तथा ॥ सुवर्णकुशदूर्वांश्चशतौषधिविनिक्षिपेत् ॥ पूरयेद्वारुणैर्मन्त्रैःपंचकुंभान्प्रयत्नतः ॥
त्वन्नोअग्नेजपेदादौसत्वन्नोपिद्वितीयकम् ॥ समुद्रज्येष्ठाइतिचइमंमेगंगेचतुर्थकम् ॥ पूजयेयुर्वस्त्रयुग्मैश्चतुरःकलशानपि ॥ पूजयेयुरितिबहु
वचनादृत्विक्कर्तृकापूजा ॥ जपंकुर्युःप्रयत्नेनमंत्रैरेभिर्द्विजोत्तमाः ॥ आनोभद्राजपंचादौभद्राअग्नेद्वितीयकम् ॥ तृतीयंपुरुषसूक्तंकद्रुद्राय
चतुर्थकम् ॥ आचार्योमूलमंत्रेणजपंकुर्याद्विशेषतः ॥ इंद्रसूक्तंरुद्रजाप्यंजपेन्मृत्युंजयंततः॥इंद्रंसंपूज्यदेवेंद्रंवरुणंकुंभसंस्थितम्॥ सुसंकल्प
विधानेनहोमकर्मततश्चरेत् ॥ समिद्भिर्ब्रह्मवृक्षस्यशतमष्टोत्तरंतथा ॥ अष्टोत्तरसहस्रकमितिक्वचित्पाठः ॥ सर्पिषाचरुणाचैवमूलमंत्रेणवा
ग्यतः ॥ हुनेज्जाप्यंचतेनैवयतइंद्रभयेतिच ॥ तिलान्व्याहृतिभिर्हुत्वाशतमष्टोत्तरंपृथक् ॥ भार्याशिशुसमोपेतंयजमानंविशेषतः ॥ अभिषे

कंप्रकुर्वीतसूक्तैर्वारुणसंज्ञितैः ॥ समुद्रज्येष्ठादिभिर्मंत्रैरिमंमेवरुणस्तथा ॥ द्यौःशांत्येत्यादिभिर्मंत्रैरभिषेकंसमाचरेत् ॥ ज्योतिर्निबंधेत्वोष
शीत्यादिभिर्मंत्रैरितिपाठः ॥ तन्मंत्रास्तुमहार्णवेप्रसिद्धाः ॥ अभिषेकनिवृत्तौतुयजमानःसमाहितः॥शुक्लांबराणिधृत्वाथकुर्यादाज्यावलो
कनम् ॥ रूपंरूपेतिमंत्रेणचित्रंतच्चक्षुरेववा ॥ देवतापुरतःस्थित्वाधूपदीपनैवेद्यकम् ॥ दद्यादाचमनंसम्यक्तांबूलार्घ्यंतथैवच ॥ नमस्तेसु
रनाथायनमस्तुभ्यंशचीपते ॥ गृहाणार्घ्यंमयादत्तंगंडदोषप्रशांतये ॥ आचार्यऋत्विगादीनांकारितंयत्फलंशुभम् ॥ लब्ध्वातुतत्फलंसम्य
ग्देवेन्द्रायनिवेदयेत् ॥ आचार्यादिभिःकारितंयत्कर्मतज्जन्यंशुभमाचार्यादिभ्यःप्रतिगृह्येंद्रायसमर्पयेत् ॥ आचार्यायचगांदद्यात्सु
शीलांचपयस्विनीम् ॥ रक्तवर्णांवस्त्रयुतांसर्वालंकारभूषिताम् ॥ वस्त्रयुग्मपिधानांचयथाविभवसारतः ॥ यक्षगंधर्वसिद्धैश्चपूजितोऽसिश
चीपते ॥ दानेनानेनदेवेशगंडदोषंविनाशय ॥ अनेनगांदद्यादित्यर्थः ॥ अष्टोतरशतंसंख्यंकुर्याद्ब्राह्मणभोजनम् ॥ तेभ्योपिदक्षिणां
दत्त्वाप्रणिपत्यक्षमापयेत् ॥ अज्ञानाद्वाथवाज्ञानाद्वैकल्प्याद्वाधनस्यच ॥ यन्न्यूनमतिरिक्तंचतत्सर्वंक्षंतुमर्हसि ॥ अथप्रयोगः ॥ गोमुखप्र
सवंकृत्वादेशकालौसंकीर्त्यअस्यशिशोर्ज्येष्ठाजननसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंज्येष्ठाजननशांतिंकरिष्येइतिसंकल्प्य
गणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वरणानिकुर्यात्॥ततःआचार्यःसर्षपविकिरणादिभूमिप्रोक्षणेकृत्वामहीद्यौरि
तिभूमिंस्पृष्ट्वा ओषधयःसमितियवान्भूमौनिक्षिप्यआकलशेष्वितिकलशंसंस्थाप्यशालितंडुलैःकलशंपूरयित्वापूर्णादर्वीतिपूर्णपात्रंनिधा
यतदुपरिकर्षंतदर्द्धार्द्धकल्पितामिंद्रप्रतिमामिंद्रायेंद्रोमरुत्वतइतिमंत्रेणवाग्यतःपूजयेत् ॥ पूजायांचवस्त्रद्वयंदद्यात् ॥ इंद्रभिन्नाँल्लोक

पालान्समंतादावाह्यपूजयेत् ॥ ततःपूर्वादिदिक्षुचतुरःकुंभान्मध्येशतच्छिद्रंसंस्थाप्यदिक्कुंभेषुपंचगव्यपंचामृतपंचरत्नपंचमृत्तिकापंचवृक्ष
कषायपंचपल्लवसुवर्णकुशदूर्वाःशतौषधीश्चक्षिप्त्वावस्त्रयुग्मेनवेष्टयित्वावरुणमावाह्यपूजयेत् ॥ पूजायांचवस्त्रद्वयंदद्यात् ॥ ततःपूर्वकलशेत्व
न्नोअग्नइतिमंत्रेणदक्षिणांसत्वंनोअग्नइतिपश्चात्समुद्राज्येष्ठेत्युत्तरंइमंमेगंगेइत्यभिमंत्रयेत्॥ततःऋत्विजश्चतुर्षुकुंभेषु आनोभद्राइतिसूक्तंभद्रा
अग्नेरितिसूक्तंपुरुषसूक्तंकद्रुद्रायेतिचसूक्त।निरुद्रंमृत्युंजयंचजपेयुः॥ततोग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात् ॥अत्रप्रधानंइंद्रंपलाशसमिदाज्यच
रुद्रव्यैरष्टशतसंख्ययाइंद्रायेंदोमरुत्वतइतिमंत्रेणप्रजापतिंतिलद्रव्येण।ष्टशतसंख्ययाव्याहृतिभिःशेषेणस्विष्टकृतमित्यादिहोमकालेइंद्रायेंदो
मरुत्वतयतइंद्रभयामहइतिचमंत्रंजपेत्॥ जपांतेबालिंपूर्णाहुतिंपूर्णपात्रविमोकंचकृत्वावरुणसूक्तैःसमुद्रज्येष्ठेतिचतुर्भिरिमंमेवरुणेत्यनयाद्यौः
शांतिरितिवाभिषिंचेत्यजमानोरूपंरूपमित्याज्यमवलोक्यतत्पात्रंसदक्षिणंब्राह्मणायदत्त्वेंद्रंसंपूज्य नमस्तेसुरनाथायनमस्तुभ्यंशचीपते।
गृहाणार्घ्यंमयादत्तंगंडदोषप्रशांतये॥इत्यर्घ्यंदद्यात् ॥ आचार्यादिभ्योजपहोमादिश्रेयोगृहीत्वातमिंद्रायसमर्प्याचार्यायरक्तवर्णांवस्त्रद्वययुतां
सवत्सांगाम् । यक्षगंधर्वसिद्धैश्चपूजितोसिशचीपते॥ दानेनानेनदेवेशगंडदोषंविनाशयेतिमंत्रेणदद्यात् ॥ ततउत्तरपूजांविधायविसृज्यप्रति
मांदत्त्वाऽग्निंविसृज्यशतंब्राह्मणान्भोजयित्वातेभ्योयथाशक्तिदक्षिणांदत्त्वेन्द्रंप्रार्थयेत् ॥अज्ञानादथवाज्ञानाद्वैकल्याद्वाधनस्यच ॥यन्न्यूनम
तिरिक्तंवातत्सर्वंक्षंतुमर्हसिइति ॥ इतिनारायणभट्टसुतश्रीमद्रामकृष्णभट्टसुतदिनकरभट्टकृतेशांतिसारेज्येष्ठाशांतिप्रयोगः॥अथवृद्धगर्गोक्तै
कनक्षत्रजननशांतिविधिः।एकस्मिन्नेवनक्षत्रेभ्रात्रोर्वापितृपुत्रयोः।प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्यनिश्चयः॥भ्रात्रोर्भ्रातृभगिन्योरित्यर्थः॥ पितृपु

त्रयोः पित्रोर्नक्षत्रेपुत्रदुहित्रोरित्यर्थः। तत्रशांतिंप्रवक्ष्यामिसर्वाचार्यमतेनतु॥ शुभर्क्षेशुभवारेचचंद्रताराबलान्विते। रिष्टविष्टिविवर्जेतुप्रारभेद्वि
सेसुधीः॥ आचार्यंवरयेत्पूर्वंचतुरोऽथद्विजोत्तमान्॥ पुण्याऽहंवाचयित्वातुशांतिकर्मसमाचरेत्॥ अग्नेरीशानदिग्भागेनक्षत्रप्रतिमांततः॥ तत्त
द्दक्षोक्तमंत्रेणपूजयेत्कलशोपरि॥ नक्षत्रमंत्रावसिष्ठप्रोक्तेकात्यायनपरिशिष्टेउक्ताः॥ अत्रनक्षत्रंतद्देवतांचपूजयेत्॥ वक्ष्यमाणज्योतिर्निबंधवच
नात्॥ रक्तवस्त्रेणसंछाद्यवस्त्रयुग्मेनवेष्टयेत्॥ स्वशाखोक्तेनमार्गेणकुर्यादग्निमुखंततः॥ अनेनैवतुमंत्रेणहुनेदष्टोत्तरंशतम्॥ तत्तद्दक्षोक्तेनेत्यर्थः॥
प्रत्येकंसमिदन्नाज्यैःप्रायश्चित्तंतमेवच॥ अभिषेकंततःकुर्यादाचार्यःपितृपुत्रयोः॥ इत्यत्रपितृग्रहणमुपलक्षणम्॥ यन्नक्षत्रेजन्मतेनसहबालस्या
भिषेकइत्यर्थः॥ वस्त्रालंकारगोदानैराचार्यम्पूजयेत्पुनः॥ ऋत्विजांदक्षिणांदद्यान्माषत्रयसुवर्णकम्॥ देवताप्रतिमादानंधान्यवस्त्रादिभिःसह॥
यानशय्यासनादीनिदद्याद्दोषप्रशांतये। भोजयेद्ब्राह्मणान्सर्वान्वित्तशाठ्यविवर्जितः॥ इत्येकनक्षत्रजननशांतिविधिः॥ अथप्रयोगः॥ मातापितृ
नक्षत्रोत्पत्तौगोमुखप्रसवंकृत्वाभ्रातृनक्षत्रोत्पत्तौतमकृत्वादेशकालौसंकीर्त्याऽस्यशिशोःपित्रादिनक्षत्रोत्पत्तिसूचितसकलारिष्टनिरसनद्वारा
श्रीपरमेश्वरप्रीत्यर्थंपित्रादिनक्षत्रजननशांतिंकरिष्येइतिसंकल्प्य गणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वरण। निकु
र्यात्॥ ऋत्विजश्चत्वारः॥ ततः आचार्यःसर्षपान्विकीर्यभूमिंप्रोक्ष्याग्न्यायतनादीशान्यांकलशंसंस्थाप्यपूर्णपात्रोपरिजन्मर्क्षप्रतिमांतद्द
क्षमंत्रेणपूजयेत्। पूजायांचैकंरक्तवस्त्रंश्वेतंचवस्त्रयुग्मंदद्यात्॥ ततोग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात्॥ अत्रप्रधानं अमुकनक्षत्रंतद्देवतांवास
मिच्चर्वाज्यैः प्रत्येकमष्टशतसंख्ययाशेषेणस्विष्टकृतमित्यादिबलिदानांतेपूर्णाहुतिंप्रणीताविमोकादिचकृत्वाकलशजलेनाभिषिच्याचार्याय

वस्त्रालंकारगाः ऋत्विग्भ्यश्च माषत्रयपरिमितंसुवर्णंदत्वाउत्तरपूजांकृत्वाप्रतिमांविसृज्याचार्यहस्तेप्रतिपाद्याचार्याययथाशक्तिधान्यवस्त्रया
नशय्यासनानिदत्त्वाचार्यर्त्विजोभोजयेदिति॥ इतिश्रीमद्दिनकरभट्टकृतेशांतिसारेएकनक्षत्रजननशांतिप्रयोगः॥अथज्योतिर्निबंधोक्तएक
नक्षत्रशांतिविधिः॥समानभेयदादेविपितापुत्रौचसोदरौ॥भगिन्यौवास्वबंधूवातदापूर्वस्यनाशनम् ॥ एकस्मिन्नेवनक्षत्रेपुत्रयोः ॥ पितृपुत्र
योः ॥ प्रसूतयोस्तयोर्मृत्युर्भवेदेकस्यनिश्चयः ॥ विधानंतत्रकर्तव्यंजन्मनक्षत्रपूजनम् ॥ नक्षत्रदेवतापूज्यात्वधिप्रत्यधिपूर्वकम्॥यस्यऋ
क्षस्ययद्द्रव्यंदक्षिणाविधिमंत्रणम् ॥ तच्चतच्चविधातव्यमृक्षदैवततुष्टये ॥ स्वगृह्योक्तविधानेनहवनंतत्रकारयेत् ॥ भक्त्याहरिहरौदेवौस्व
र्णरूप्यमयौशुभौ ॥ ततोमूर्तिदानमंत्रः ॥ विविधस्यास्यविश्वस्यपितरौविश्वतोमुखौ ॥ प्रीयेतांमूर्तिदानेनदेवौहरिहराबुभौ ॥ दानंहोमवि
धिःपश्चान्नादेनचाभिषेचनम् ॥ अभिषेचनपूर्वांचविप्रपूजास्मृताशिवे ॥ततोभिगम्यगोविंदशूलिनोश्चनिकेतनम् ॥तूर्याणांचनिनादेनजय
घोषेणपार्वति ॥ पूजाविधिंसमाप्यैवंसर्वोपस्करसंयुतम् ॥ प्रार्थयेद्देवदेवेशौलक्ष्मीशैलसुतेश्वरौ ॥ दंडवत्प्रणिपातेनवंदनीयौपुनःपुनः ॥
ततःस्वगृहमागत्यब्राह्मणान्भोजयेत्सुधीः तोषयेद्दक्षिणादानैर्यथाशक्त्यावरानने ॥ एवंकृतेविधानेतुविघ्ननाशोभवेद्ध्रुवम् ॥ अथशौन
कोक्तव्यतीपातादिशांतयः ॥ अथातःसंप्रवक्ष्यामिशौनकःशांतिमुत्तमाम् ॥ कुमारजन्मकालेतुव्यतीपातश्चवैधृतिः ॥ संक्रमश्चरवेस्त
त्रजातोदारिद्र्यकारकः ॥ संक्रमशब्देनसंक्रमकालात्पूर्वाःपराश्चषोडशघटिकागृह्यन्ते ॥ द्वात्रिंशद्दंडैःसंपूर्णसूर्यमंडलस्यराश्यंतरप्रवेशात् ।
दारिद्र्यंचमहादुःखंव्याधिपीडामहद्भयम् ॥ अश्रियंमृत्युमाप्नोतिनात्रकार्याविचारणा ॥ स्त्रीणांचदुःखंशोकंचसर्वनाशकरोभवेत् ॥

शांतिश्चपुङ्कलाकार्यातत्रदोषोनकश्चन ॥ गोमुखप्रसवंकुर्याच्छांतिंकुर्यात्प्रयत्नतः ॥ जपाभिषेकदानैश्चहोमाद्यपिविशेषतः ॥
नवग्रहमखंकुर्यात्तस्यदोषोपशांतये॥प्रथमंगोमुखाज्जन्मततःशांतिंसमारभेत् ॥ अनेनपाठादेवप्राथम्येसिद्धेपुनःप्राथम्यविधानमितरशांति
षुप्राथम्यंनियतमित्येतदर्थः ॥ गृहस्यपूर्वदिग्भागेगोमयेनोपलिप्यच ॥ अलंकृतेचदेशेतुव्रीहिराशिंप्रकल्पयेत् ॥ पंचद्रोणमितंधान्यं
तदर्द्धंतंडुलेनतु ॥ तदर्द्धंतुतिलैःकुर्यादन्योन्योपरिकल्पयेत् ॥ द्रव्यत्रितयराशौतुअष्टपत्रंलिखेद्बुधः ॥ पुण्याहंवाचयित्वातुआचार्यं
वरयेत्पुरा ॥ राशिकल्पनात्पूर्वम् ॥ आचारवंतंधर्मज्ञंकुलीनंचकुटुंबिनम् ॥ मंत्रमंत्रार्थतत्त्वज्ञंशांतिकर्मणिकोविदम् ॥ पंचांगभूषणंद
द्यात्पट्टवस्त्रांगुलीयकम् ॥ राशौप्रतिष्ठितंकुंभमव्रणंसुमनोहरम् ॥ तीर्थोदकेनसंपूर्यसमृदोषधिपल्लवम् ॥ सगव्यंगंधरत्नंचवस्त्रयुग्मेनवेष्टये
त् ॥ तस्योपरिन्यसेत्पात्रंसूक्ष्मवस्त्रेणसंयुतम् ॥ प्रतिमांस्थापयेद्धीमान्साधिप्रत्यधिदेवताम् ॥चंद्रादित्याकृतीपार्श्वेमध्येवैधृतिमर्चयेत् ॥
वैधृतिंतद्देवतांरुद्रम् इदंवैधृतिशांतौ ॥ मध्येरुद्रस्तद्दक्षिणोत्तरयोः ॥ सूर्यचंद्रावित्यर्थः॥ व्यतीपातसंक्रमशांतौतुमध्येसूर्यस्तद्दक्षिणोत्तरयो
श्चाग्निरुद्रावित्याह ॥ एवमेवव्यतीपातेशांतौसंक्रमणस्यच॥भानोरुत्तरतोरुद्रमग्निंदक्षिणतोयजेत् ॥ निष्कमात्रेणवार्द्धेनपादेनापिस्वशक्ति
तः ॥ प्रतिमांकारयेद्धीमांस्तत्तल्लक्षणलक्षिताम्॥रुद्रसूर्यौलक्षणयुक्तौ । केचित्तुअंगप्रतिमास्वप्येतन्मानंप्रतिमापूजनार्थायवस्त्रयुग्मंनिवेद
येत्॥अधिदेवंभवेत्सूर्यश्चंद्रःप्रत्यधिदैवतम्॥इदंवैधृतिशांतौतत्तद्दचाहुतिपूर्वेणतत्तन्मंत्रेणपूजयेत्॥त्र्यंबकेणमंत्रेणप्रधानप्रतिमांयजेत्॥ अं
गत्वेप्यनेनैवपूजा ॥ उत्सूर्यइतिमंत्रेणसूर्यपूजांसमाचरेत् ॥ प्रधानत्वेंगत्वेच ॥ आप्यायस्वेतिमंत्रेणसोमपूजांसमाचरेत् ॥ उपचारैःषोडश

भिर्यद्वापंचोपचारकैः ॥ अर्चितंगंधपुष्पाद्यैःफलंनैवेद्यमर्पयेत् ॥ मृत्युंजयेनमंत्रेणप्रधानप्रतिमांस्पृशन् ॥ अष्टोत्तरसहस्रंवाअष्टोत्तरशतंतु
वा ॥ अष्टाविंशतिनावाथप्रजप्यस्वस्वशक्तितः॥सर्वसौरंप्रजप्याथसोमार्थंसोममंत्रतः ॥ आनोभद्रेतिसूक्तंचभद्राअग्नेश्वसूक्तकम्॥जपेच्चपौ
रुषंसूक्तंत्र्यंबकमतःपरम् ॥ कुंभंस्पृष्ट्वाचतुर्दिक्षुजपंकुर्युस्तथार्त्विजः॥चतुर्दिक्षुचत्वारिसूक्तानीत्यर्थः ॥ केचित्तुएकैकस्यजपमाहुः ॥ कुंभ
स्यपश्चिमेदेशेस्थंडिलेग्निंप्रकल्पयेत् ॥ स्वगृह्योक्तविधानेनकारयेत्संस्कृतानलम् ॥ त्र्यंबकेणमंत्रेणसमिदाज्यचरून्हुनेत्॥ अष्टोत्तरसहस्रं
वाअष्टोत्तरशतंतुवा ॥ अष्टाविंशतिवाकुर्यात्स्वस्यवित्तानुसारतः ॥सूर्यचंद्रयोःप्रधानतोल्पसंख्या॥मृत्युंजयेनमंत्रेणतिलहोमंसमाचरेत् ॥
सर्वशांतिष्वयंहोमः ॥ ततःस्विष्टकृतंहुत्वाअभिषेकंचकारयेत् ॥ समुद्रज्येष्ठासूक्तेनआपोहिष्ठात्र्यृचेनच॥ अक्षीभ्यामितिसूक्तेनपावमानी
भिरेवच ॥ त्र्यंबकेनउत्सूर्यआप्यायस्वेतिमंत्रतः॥ सुरास्त्वामितिमंत्रेणअभिषेकंसमाचरेत्॥आचार्यंपूजयेत्पश्चाद्वस्त्रहेमांगुलीयकैः॥ गो
दानंवस्त्रदानंचहेमदानंविशेषतः॥ तद्दोषशमनार्थायआचार्यायनिवेदयेत्॥श्वेतवस्त्रधरोभूत्वाभूषणाद्यैरलंकृतः॥यजमानस्त्रियायुक्तोआज्या
वेक्षणमाचरेत्॥प्रच्छादनपटंदद्यात्ततःशांतिर्भविष्यति।जापकेभ्योब्राह्मणेभ्योदक्षिणाभिश्चतोषयेत्।जापकेभ्योःऋत्विग्भ्यः।।दीनांधकृपर
णेभ्यश्चप्रदद्याद्भूरिदक्षिणाम्॥ब्राह्मणाञ्छतसंख्याकान्मिष्टान्नैर्भोजयेच्चतान्॥तानृत्विजश्चेत्यर्थः।बन्धुभिःसहभुंजीतयथाविभवसारतः। ए
वंयःकुरुतेमर्त्योनैवदुःखमवाप्नुयात्॥आयुरारोग्यमैश्वर्यंमातापित्रोःशिशोरपि।सर्वदुःखनिवृत्तिश्चपुत्रपौत्रप्रवर्द्धनम् । सर्वान्कामानवाप्नोति
सुखीभूत्वाचिरंवसेत्॥इतिशौनकोक्तव्यतीपातादिशांतिविधिः॥अथप्रयोगः॥गोमुखप्रसवंकृत्वादेशकालौसंकीर्त्यास्यशिशोर्वैधृतिजननसू

चितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंवैधृतिजननशांतिंकरिष्येइतिसंकल्प्य।व्यतीपातादौतुतत्संकल्पः।व्यतीपातवैधृत्योः संक्रम
दिनपातेशांतिद्वयमेकत्ररुद्रप्राधान्या।दपरत्रसूर्यप्राधान्यात्।यदातुव्यतीपातेसंक्रमस्तदाव्यतीपातामावास्याश्राद्धवत्तंत्रम्।ततोगणपतिपूजन
पुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वरणानिकुर्यात्॥ ततःआचार्यःसर्षपान्विकीर्यभूमिंप्रोक्ष्यपूर्वस्यांगोमयेनोपलिप्यतत्रपंच
द्रोणमितव्रीहिराशिंकृत्वातदुपरिसार्द्धद्रोणद्वयमिततंडुलराशिंकृत्वातदुपरिसपादद्रोणमिततिलराशिंकृत्वाराशिमस्तकंसमंकृत्वा॥तत्रपंचरं
गैरष्टदलंकृत्वातत्कर्णिकायांकुंभंप्रतिष्ठाप्यतीर्थजलेनापूर्यतत्रसप्तमृत्तिकासर्वौषधिपंचपल्लवपंचगव्याष्टगंधपंचरत्नानिप्रक्षिप्यवस्त्रयुग्मेनावे
ष्ट्यपूर्णपात्रंनिधायतदुपरिसूक्ष्मवस्त्रेणदेवताःस्थापयेत्। तत्रवैधृतिशांतौत्र्यंबकमितिमंत्रेणमध्येरुद्रम् । तद्दक्षिणउत्सूर्यइतिमंत्रेणसूर्यमुत्तर
तश्चाप्यायस्वेतिसोमम्।व्यतीपातसंक्रमशांतौतुउत्सूर्यइतिमध्येसूर्यम् ॥ तद्दक्षिणतोग्निंदूतमित्यग्निमुत्तरतश्चत्र्यंबकमितिरुद्रम्।सर्वत्रमंत्राः।
व्याहृतिपूर्वकंपूजांविधायरुद्रप्रतिमांस्पृशन्मृत्युंजयमंत्रंसबीजमष्टसहस्राष्टशताष्टाविंशतिसंख्ययायथाशक्तिवाजपेत् । ततःसूर्यप्रतिमांस्पृ
शन्ऋग्वेदस्यसर्वसौरमंत्रान्जपेत्। तेचउदुत्यमितित्रयोदशर्चस्यसूक्तस्यकण्वपुत्रःप्रस्कण्वोनवाद्यागायत्र्योंत्याश्वतस्रोनुष्टुभः । चित्रंदे
वानामितिषडर्चस्यांगिरसःकुत्सःसूर्यस्त्रिष्टुप् इंद्रंमित्रमितिद्वयोरौतथ्योदीर्घतमास्त्रिष्टुप्।हंसःशुचिषदित्येकस्यागौतमपुत्रोवामदेवोजगती।
यत्वासूर्येत्येकस्याभूमिपुत्रोत्रिरनुष्टुप्।यदद्यसूर्येत्येकस्याउत्सूर्यम् इतितिसृणामुउ द्वेतिसार्द्धचतसृणांमैत्रावरुणिर्वसिष्ठस्त्रिष्टुप् उदुत्यन्दर्शत
मितिबृहती। शीर्षइतिसतोबृहती । तच्चक्षुरितिपुरउष्णिक् । बण्महांअसीतिद्वयोर्भृगुपुत्रोजमदग्निःपूर्वाबृहती। उत्तरासतोबृहती । नमोमित्र

स्येतिद्वादशर्चस्यसूक्तस्यसूर्योभितपाःसूर्योजगती । शन्नोभवेतित्रिष्टुप् । सूर्योनोदिवइतिपंचर्चस्यसूर्यपुत्रश्चक्षुर्गायत्री । विभ्राड्बृहदितिच
तसृणांसूर्यपुत्रोविभ्राड्जगती । विभ्राजमित्यास्तारपंक्तिः।आयंगौरितित्र्यृचस्यस्वयंभूःसार्पाराज्ञीःसर्पागायत्री।सर्वेषांसूर्योदेवता। ततः।सो
मप्रतिमांस्पृशन्नाप्यायस्वेतिजपेत् । व्यतीपातसंक्रमशांतौपूर्वंसूर्यजपस्ततोमृत्युंजयजपः अग्निजपोनास्ति । ततश्चतुर्दिक्षुऋत्विजःकुंभंस्पृ
ष्ट्वाआनोभद्राइतिसूक्तंपुरुषसूक्तंत्र्यंबकमंत्रंचजपेयुः । केचित्तुएकैकस्यांदिशिएकैकसूक्तमितिवदंति । ततः। आचार्योग्निंग्रहांश्चप्रतिष्ठाप्या
न्वादध्यात्।रुद्रम् ।अष्टसहस्राष्टशतान्यतरसंख्ययासमिदाज्यचरुद्रव्येणव्यतीपातसंक्रमयोस्तुसूर्यंरुद्रसंख्ययाग्नौरुद्रौचाष्टाविंशतिसंख्यया
मृत्युंजयंतिलद्रव्येण अष्टसहस्राष्टशताष्टाविंशत्यन्यतरसंख्ययाशेषेणस्विष्टकृतमित्यादि । मृत्युंजयहोमोव्यतीपातादावपि । बलिदानान्ते
पूर्णाहुतिंहुत्वासमुद्रज्येष्ठाइतिसूक्तेनआपोहिष्ठेतित्र्यृचेनअक्षीभ्यामितिसूक्तेनपावमानीभिःप्रधानदेवतामंत्रैःसुरास्त्वेत्यादिपौराणैश्चाभिषिं
चेयुः।ततोयजमानोभिषेकवस्त्रमाचार्यायदत्त्वाश्रीनालघुत्कोरूपंरूपमित्याज्यमवेक्ष्यतत्पात्रंस दक्षिणंब्राह्मणायदत्त्वाचार्यायवस्त्रद्वयमंगुलीय
कंयथाशक्तिसुवर्णंप्रच्छादनपटंचदत्त्वाऋत्विग्भ्यश्चयथाशक्तिपारितोषिकमन्येभ्यश्चभूरिदक्षिणांदत्त्वोत्तरपूजांकृत्वाविसृज्याचार्यंहस्तेप्रति
पाद्याग्निंविसृज्यशतंब्राह्मणानृत्विजश्चभोजयेदिति।इतिदिनकरभट्टकृतेशांतिसारेव्यतीपातादिशांतिप्रयोगः।अथगर्गोक्तनक्षत्रगंडांतशांति
विधिः । अश्विनीमघमूलादौत्रिषट्कनवनाडिकाः । रेवतीसार्पशाक्रांतेमाशाश्चऋतुसायकाः । प्रकारांतरेणगंडांतमाह । अश्विनीमघमूलादौ
नाडिकाद्वितयंतथा।रेवतीसार्पशाक्रांतेनाडिकाद्वितयंतथा ॥ अश्विनीमघमूलानांपूर्वार्द्धेबाध्यतेपिता ॥ पूषाहिशक्रपश्चार्द्धजननीबाध्य

तेशिशोः ॥ पितृघ्नश्चदिवाजातोरात्रिजातस्तुभ्रातृहा ॥ दिवाजातोदिवापतितगंडांतजातइत्यर्थः ॥ एवंरात्रिजातः । आत्मध्रुक्संध्ययो
र्जातोनास्तिगंडेनिरामयः । सर्वेषांद्वंद्वजातानांपरित्यागोविधीयते ॥ वर्जयेद्दर्शनंभावंतच्चषाण्मासिकंभवेत् ॥ तस्यशांतिंप्रवक्ष्या
मिसोममंत्रेणभक्तिमान् ॥ कांस्यपात्रंप्रकुर्वीतपलैःषोडशभिर्नवम् ॥ अष्टाभिर्वांचतुर्भिर्वाद्वाभ्यांवाशोभनंतथा ॥ तन्मध्येपायसंशंखे
नवनीतेनपूरिते ॥ राजतंचंद्रमंचैवसितपुष्पसहस्रकैः ॥ दैवज्ञःक्षौमवासास्तुशुक्लमाल्यांबरार्चितः ॥ सोमोयमितिसंचिंत्यआप्या
यस्वेतिपूजयेत् ॥ जपेत्साहस्रकंमंत्रंश्रद्दधानःसमाहितः ॥ दद्याद्वेदक्षिणामिष्टांगंडदोषप्रशांतये ॥ शुक्लंवागीश्वरंचैवताम्रपात्रसमन्वित
म् ॥ गंडदोषोपशांत्यर्थंदद्याद्वेदविदेशुचिः ॥ इतिगंडांतशांतिविधिः ॥ ज्योतिर्निबंधेतु॥ ब्रह्मपुराणोक्तत्वेनैतानेवश्लोकान्पठित्वा ॥ कुंकु
मंचंदनंकुष्टंगोरोचनमथापिवा ॥ घृतपूर्णेषुकुंभेषुचतुर्षुप्रक्षिपेत्क्रमात् ॥ सहस्राक्षेणमंत्रेणबालकंस्नापयेत्क्रमात् ॥ पितृयुक्तंदिवाजातंमातृ
युक्तंतुरात्रिजम् ॥ स्नापयेत्पितृमातृभ्यांसंध्ययोरुभयोरपि ॥ कांस्यपात्रंघृतैःपूर्णंगंडदोषोपशांतये ॥ सक्षीरमौक्तिकंशंखंश्वेतवस्त्रयुगंशु
भम् ॥ यजुर्वेदविदेदद्याद्गंडदोषापनुत्तये ॥ दद्याद्वेनुंहिरण्यंचग्रहांश्चापिप्रपूजयेत् ॥ आयुर्वृद्धिकरंजप्ध्वाकुर्याद्ब्राह्मणतर्पणम् ॥ तिथिगंडा
दौतुगर्गः ॥ तिथिगंडेत्वनड्वाहंनक्षत्रेधेनुरुच्यते ॥ कांचनंलग्नगंडेतुगंडदोषोविनश्यति ॥ इतिनक्षत्रगंडांतशांतिविधिः ॥ अथप्रयोगः ॥
गोमुखप्रसवंकृत्वादेशकालौसंकीर्त्यास्यशिशोरमुकनक्षत्रगंडांतोत्पत्तिसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंनक्षत्रगंडांतशां
तिंकरिष्ये इतिसंकल्प्यतदंगतयागणपतिपूजनपुण्याहवाचननांदीश्राद्धानिकृत्वाऽऽचार्यंवृत्वातंशुक्लैःक्षौमवस्त्रमाल्यैरर्चयेत् ॥ ततः । आ

चार्यः सर्षपविकिरणभूमिप्रोक्षणेकृत्वाषोडशभिरष्टाभिश्चतुर्भिर्वाद्वाभ्यांवापलैः कांस्यपात्रंकृत्वातत्पायसेनपूरयित्वातत्रनवनीतपूरितशंखंपूर्वाग्रंनिधायतन्मुखेराजतींचंद्रप्रतिमांआप्यायस्वेतिमंत्रेणषोडशोपचारैः संपूज्यसितपुष्पसहस्रत्रयेण ३००० पुष्पांजलिंदत्त्वातदुत्तरतस्ताम्रपात्रेबृहस्पतिप्रतिमांतन्मंत्रेणार्चयेत् । ततोयजमानःप्रतिमामाचार्यायदत्त्वायथाशक्तिदक्षिणांचदद्यात् । इतिदिनकरभट्टकृतेशांतिसारेनक्षत्रगंडांतशांतिप्रयोगः ॥ अथोत्तरादिशांतिविधिः ॥ उत्तरातिष्यचित्रासुपूर्वाषाढोद्भवस्यच ॥कुर्याच्छांतिंप्रयत्नेननक्षत्राकारजांबुधः॥ सुवर्णेनतदर्द्धेनयथावित्तानुसारतः ॥ नक्षत्राधिपतेरूपंकृत्वावस्त्रद्वयान्वितम् ॥ वरुणस्यार्चनंकार्यंस्वस्तिवाचनपूर्वकम् ॥कुंभेवरुणमभ्यर्च्येपूर्णपात्रोपरिनक्षत्राधिपतिंपूजयेदित्यर्थः॥शतौषधानिनिक्षिप्यमृत्त्वक्पल्लवसंयुतम्॥पूजांतेसमिदन्नाज्यैर्होमंतिलयवैस्तथा॥ततःपूर्णाहुतिंहुत्वावेदाध्यायिकुटुंबिने ॥ उत्तराप्रथमेपादेतिलपात्रंतथैवच ॥ तिष्येतुगांसवत्सांचसुशीलांचपयस्विनीम् ॥ अजांचित्रासुवैदद्यात्पूर्वाषाढेतुकांचनम् ॥ यवांश्चव्रीहिमाषांश्चतिलमुद्गान्प्रदापयेत् ॥ यथावित्तानुसारेणकुर्याद्ब्राह्मणभोजनम् ॥ पितुरायुष्यवृद्ध्यर्थंशांतिरत्रविधीयते ॥ अथदिनक्षयादिशांतिविधिः ॥ दिनक्षयेऽव्यतीपातेव्याघातेविष्टिवैधृतौ ॥ शूलेगंडेतिगंडेचपरिघेयमघंटके ॥ कालदंडेमृत्युयोगेदग्धयोगेसुदारुणे ॥ तस्मिन्गंडदिनेप्राप्तेप्रसूतिर्यदिजायते॥ विचार्यतत्रदैवज्ञःशांतिंकुर्याद्यथाविधि॥ यजनंदेवतानांचग्रहाणांचैवपूजनम्॥ यजनंवक्ष्यमाणम् ॥ दीपंशिवालयेभक्त्याघृतेनपरिदापयेत् ॥ अभिषेकंशंकरस्यअश्वत्थस्यप्रदक्षिणम् ॥ आयुर्वृद्धिकरंजाप्यंसर्वारिष्टविनाशनम् ॥ गुरुदैवतविप्राणांपूजनंगोत्रवर्द्धनम्॥गाणपत्यंपुरुषसूक्तंसौरंमृत्युंजयंशुभम् ॥ शांतिजाप्यंरुद्रजाप्यंकृत्वामृत्युंजयीभवेत् ॥ मूले

वासर्पगंडेवाकुर्यादेतानियत्नतः ॥ एतेषांमूलव्यतीपातादिशांत्यासमुच्चयः॥अथविषघटिकाशांतिविधिः॥विषनाड्योज्योतिर्निबंधे॥ तिथी
षुनागाद्रिगिरीशवारिधिर्गजाद्रिदिक्पावकदिक्षुभास्कराः ॥ मुनीशसंख्याप्रथमातिथेःक्रमात्परंविषाख्यंघटिकाचतुष्टयम् ॥ विंशच्चतुर्द्राद
शदिक्चशैलाबाणाश्चतत्त्वानियथाक्रमेण ॥ २० ४ १२ १० ७५ २५ सूर्यादिवारेषुभवंत्यनंतरंनाड्योविषाख्यंघटिकाचतुष्टयम् ॥
नारदः ॥ खमार्गणा५०वेदपक्षाः२४खरामा३०व्योमसागराः४०॥ वार्धिचंद्रा १४ रूपदस्राः २१ खरामा ३० व्योमबाहवः २०॥द्विरामाः
३२ खाग्नयः ३० शून्यदस्राः २०कुंजरभूमयः १८॥ रूपपक्षा २१ व्योमदस्रा २०वेदचंद्रा १४श्चतुर्दश १४॥ शून्यचंद्रा२० वेदचंद्राः १४
षडक्षा५६वेदबाहवः २४॥शून्यदस्राः२०शून्यचंद्राः १० पूर्णचन्द्रा१०गजेंदवः १८॥ तर्कचन्द्रा१६वेदपक्षाः२४ खरामा३०श्चाश्विभात्क
मात् ॥ आभ्यः पराः स्युर्घटिकाश्चतस्रोविषसंज्ञिताः ॥ वृद्धगर्गः ॥ विषनाडीषुसंजातः सर्वारिष्टभयप्रदः ॥ पितृमातुलमात्मानंघातयेन्ना
त्रसंशयः ॥ मातुश्चविषशस्त्रास्त्रैः क्रूरेलग्नेशकेपिवा ॥ तद्दोषपरिहारायशांतिकर्मसमारभेत् ॥ रुद्रोयमोग्निर्मृत्युश्चदेवताःपरिकीर्तिताः ॥
सुवर्णेनयथाशक्त्यातत्तल्लक्षणलक्षिताः ॥ प्रतिमाः कारयित्वातुआढक्यव्रीहिभिःस्थले ॥ स्थंडिलंपरिकल्प्याथकुंभमौषधिसंयुतम् ॥ ज
लैःसंपूर्यसंस्थाप्यमृदादिप्रक्षिपेत्ततः ॥ आढक्यव्रीहिभिःकुंभस्थलंचपरिकल्पयेदित्यन्वयः ॥ वस्त्रद्वयेनसंवेष्ट्यपंचरत्नानिनिक्षिपेत् ॥ कुं
भोपरितुसंस्थाप्यचतस्रःप्रतिमास्तथा ॥ तत्रतंत्रैश्चमंत्रैश्चक्रमादर्चेद्धुनेत्तथा ॥ समिच्चरुघृतद्रव्यैः प्रत्येकंचयथाक्रमात् ॥ ऋत्विग्भिश्चस
हाचार्योहुनेदष्टसहस्रकम् ॥ अष्टोत्तरशतंवाथअष्टाविंशतिमेववा॥ ततस्तिलैर्हुनेद्देवांस्तत्तन्मंत्रैश्चकृत्यवित्॥ ततोऽभिषिंचयेद्दानमंत्रैःपौरा

णिकैःक्रमात् ॥ वक्ष्यमाणमंत्रैर्दानंकुर्यादित्यर्थः ॥ प्रीयतांभगवानीशःपिनाकीसर्वतोमुखः ॥ तवमूर्तिप्रदानेनममपापंव्यपोहतु ॥ दंष्ट्रा
करालवदनोनीलांजनसमाकृतिः ॥ रक्तसिक्तगदापाणिर्मृत्योर्मांपातुसर्वदा ॥ दानमेवंविधैर्मंत्रैर्यथाविधिसमाहितः ॥ गोभूहिरण्यवस्त्रैश्च
आचार्यंपूजयेत्सुधीः ॥ एवंकुर्याद्विधानेनविषदोषःप्रशाम्यति ॥ इतिविषघटिकाशांतिविधिः॥ अथग्रहणजननशांतिः॥ शौनकः ॥ ग्रहणे
चंद्रसूर्यस्यप्रसूतिर्यदिदृश्यते॥ व्याधिपीडातदास्त्रीणामादौतुऋतुदर्शनात् ॥ इत्थंसंजायतेयस्तुतस्यमृत्युर्नसंशयः ॥ व्याधिःपीडाचदारि
द्र्यंशोकश्चकलहोभवेत्॥शांतिंतेषांप्रवक्ष्यामिनराणांहितकाम्यया॥यस्मिन्नृक्षेविशेषेणग्रहणंयदिजायते॥तन्नक्षत्राधिपंरूपंसुवर्णेनप्रकल्पयेत्
ऋक्षाधिपस्यरूपमित्यर्थः॥यथाशक्त्यानुसारेणवित्तशाठ्यंनकारयेत्॥सूर्यग्रहेसूर्यरूपंहिरण्येनस्वशक्तितः॥ चन्द्रंचंद्रग्रहेधीमान्रजतेनविशे
षतः॥ राहोरूपंप्रकुर्वीतनागेनैवविचक्षणः॥नागेनसीसेन॥शुचौदेशेप्रयत्नेनगोमयेनोपलेपयेत्॥तस्योपरिन्यसेद्धीमान्नवंवस्त्रंशुशोभनम्॥ त्र
याणांचैवरूपाणांस्थापनंतत्रकारयेत्॥रक्ताक्षतंरक्तगंधंरक्तपुष्पांबराणिच॥सूर्यग्रहेप्रदातव्यंसूर्यप्रीतिकरायच॥प्रीतिकरणायेत्यर्थः॥श्वेतवस्त्रं
श्वेतमाल्यंश्वेतगंधानुलेपनम्॥चंद्रग्रहेप्रदातव्यंचन्द्रप्रीतिकरायच॥राहवेचैवदातव्यंकृष्णपुष्पांबराणिच ॥ दद्यान्नक्षत्रनाथायराहुप्रीतिकरा
यच॥सूर्यंसंपूजयेद्धीमानाकृष्णेनेतिमंत्रतः॥चंद्रग्रहेतथासम्यगाप्यायस्वेतिमंत्रतः। स्वर्भानोरितिमंत्रेणराहुंयत्नेनपूजयेत्।एवंसंपूजयेद्धीमा
न्समिद्भिश्चार्कसंभवैः।सूर्यग्रहइत्यर्थः।चंद्रग्रहेचपालाशसमिद्भिर्जुहुयात्ततः॥दूर्वाभिर्जुहुयाद्धीमान्राहोःसंप्रीणनायच ॥ समिद्भिर्ब्रह्मवृक्षस्य
मेशायजुहुयाद्बुधः॥आज्येनचरुणाचैवतिलश्चजुहुयात्ततः॥त्रिभ्यइत्यर्थः॥पंचगव्यैःपंचरत्नैःपंचत्वक्पंचपल्लवैः॥जलैरौषधकल्कैश्चसहितैः

कलशोदकैः।अभिषेकंप्रकुर्वीतयजमानेप्रयत्नतः।मंत्रैर्वारुणसंभूतैरापोहिष्ठादिभिस्त्रिभिः॥इमंमेगंगेइत्यादितत्त्वायामीतिमंत्रकैः। अभिषेकेनि
वृत्तेतुयजमानःसमाहितः।आचार्यंपूजयेत्पश्चात्सुशांतोविजितेंद्रियः।तस्मैदद्यात्प्रयत्नेनभक्त्याप्रतिकृतित्रयम्॥ गांचैवदक्षिणांदद्याद्यजमानः
समाहितः॥इत्थंग्रहणजातानांसर्वारिष्टविनाशनम्॥ कथितंभार्गवेणदशौनकायमहात्मने तिग्रहणजातशांतिः॥ अथकात्यायनोक्तयम
लजननशांतिः॥ अथातोयमलजननेप्रायश्चित्तविधिंव्याख्यास्यामोभार्यागौदासीमहिषीवडवानांविकृतिंप्रसवेत्प्रायश्चित्तीभवेत्पूर्णेदशाहेच
तुर्णांक्षीरवृक्षाणांकषायमुपसंहरेत्प्लक्षवटोदुंबराश्वत्थशमीदेवदारुगौरसर्षपास्तेषांमिश्रमपोहिरण्यदूर्वांकुराम्रपल्लवैरष्टौकलशान्प्रपूर्यसर्वौषधी
नांदंपतीस्नापयित्वाआपोहिष्ठेतितिसृभिःकयानश्चित्रइतिद्वाभ्यांपंचैंद्रेणपंचवारुणेनेदमापःप्रवहतेत्यपाघमितिस्नापयित्वालंकृत्यतौदर्भेषूप
वेश्यतत्रमारुतंस्थालीपाकंश्रपयित्वाज्यभागाविष्टाज्याहुतीःपूर्वोक्तैःस्नपनमंत्रैःस्थालीपाकस्यजुहोति।अग्नयेस्वाहा।सोमायस्वाहा। पवम
नायस्वाहा।पावकायस्वाहा।मारुतायस्वाहा।मरुद्भ्यःस्वाहा।यमायस्वाहांतकायस्वाहा।मृत्यवेस्वाहा।ब्रह्मणेस्वाहा।अग्नयेस्विष्टकृतेस्वाहेति।
तदेवग्रहोत्पातेषूलूकगृध्रकपोताःश्येनोवागृहंप्रविशेत्स्तंभेवाप्ररोहेद्वल्मीकंमधुजालंवास्त्रवेदुदकुंभःप्रज्वलनेआसनशयनयानभंगेगृहकपोति
काकृकलासशरीरसर्पणेछत्रध्वजविनाशेऽन्येपूत्पातेषुभूकंपोल्कापातकाकसर्पसंगमप्रेक्षणादिष्वेतामेवग्रहशांतिंचोक्तविधिनाकृत्वा।आचा
र्यायवरंदत्त्वाब्राह्मणान्भोजयित्वास्वस्तिवाचयीताशिषःप्रतिगृह्यशांतिर्भवतीति।अत्रविकृतिंप्रसवेइत्यस्ययमलजननेपीत्यर्थः तथायंक्र
मात्इदंचकुलनाशाद्यरिष्टनिवारणार्थत्वाच्छ्रौतेनम।रुतत्रयोदशकपालेनप्रत्यवायपरिहारार्थेनसमुच्चीयते।इतियमलजननशांतिः। अथसदं

तजननशांतिः। पाद्मेहेमाद्रौविष्णुधर्मोत्तरेच॥ दंतजन्मनिबालानांलक्षणंतन्निबोधमे॥ ऽपरिप्रथमंयस्यजायंतेचशिशोर्द्विजाः॥ दंतैर्वासहयस्य
स्याज्जन्मभार्गवसत्तम॥ द्वितीयेचतृतीयेथचतुर्थेपंचमेतथा॥ यदादंताश्चजायंतेमासेचैवमहद्भयम्॥ मातरंपितरंवाथखादेदात्मानमेववा॥ तत्र
शांतिंप्रवक्ष्यामितांमेनिगदतःशृणु॥ गजपृष्ठगतंबालंनौस्थंवास्थापयेद्द्विजः॥ तदभावेतुसर्वज्ञकांचनेचवरासने॥ सर्वौषधैःसर्वगंधैर्बीजैःपुष्पैः
फलैस्तथा॥ पंचगव्येनरत्नैश्चमृत्तिकाभिश्चभार्गव॥ स्नापयेदित्यन्वयः॥ स्थालिपाकेनधातारंपूजयेत्तदनंतरम्॥ चतुर्थ्यंतनाम्नासकृदाहुतिः
सप्ताहंचात्रकर्तव्यंतथाब्राह्मणभोजनम्॥ अष्टमेहऽनिविप्राणांतथादेयाच्चदक्षिणा॥ स्थालीपाकोत्रसप्ताहंकर्तव्यइतिकेचित्। कांचनंराज
तंगांचभुवंवाधान्यमेवच॥ दद्यादितिशेषः। इतिसदंतजननशांतिः। अद्भुतसागरेत्वत्रपंचदशीशांतिरुक्ता। तत्रैवबृहस्पतिः। बालाना
मष्टमेमासिषष्ठेमासिततःपुनः॥ दंतायस्यचजायंतेमातावाम्रियतेपिता॥ बालकःपीडयतेतत्रस्वयमेवनसंशयः॥ दधिक्षौद्रघृताक्तानाम
श्वत्थसमिधांततः॥ जुहुयादष्टचशतंप्राज्ञोमंत्रेणमंत्रवित्॥ धेनुंचदक्षिणांदद्यात्ततःसंपद्यतेशुभम्॥ यत्तुज्योतिर्निबंधे॥ अष्टमादिषुमासेषु
दंतोत्थानंशुभावहमित्युक्तंतत्तद्गुणसंविज्ञानबहुव्रीहिणानवमादिपरम्॥ इतिषष्ठाष्टममासयोर्दंतोत्पत्तिशांतिः। साधारणेनप्रकारांतरमु
क्तंपद्मपुराणे। दंतजन्मनिसामान्येशृणुस्नानमतःपरम्॥ सामान्येनिषिद्धे। भद्रासनेनिवेश्यैममूर्ध्निमूलफलैस्तथा॥ सर्वौषधैःसर्वबीजैःपंच
गव्यैस्तथैवच॥ स्नापयेत्पूजयेच्चाथवह्निसोमसमीरणम्॥ समीरणोवायुः॥ पर्वतांश्चतथाख्यातान्देवदेवंचकेशवम्। एतेषामेव
जुहुयाद्घृतमग्नौयथाविधि॥ ब्राह्मणानांतुदातव्यायथाशक्त्याचदक्षिणा॥ ततस्त्वलंकृतंबालमासनेतूपवेशयेत्॥ पूज्याश्चाविधवानार्यो

ब्राह्मणाः सुहृदस्तथा ॥ अथत्रिकशांतिः । शांतिसर्वस्वे । सुतत्रयेसुताचेत्स्यात्तत्रयेवासुतोयदि ॥ मातापित्रोःकुलस्यापितदाऽनिष्टंमहद्भवे
त् ॥ज्येष्ठनाशोधनेहानिर्दुःखंवासुमहद्भवेत् ॥ जातस्यैकादशाहेवाद्वादशाहेशुभेदिने॥ आचार्यमृत्विजोवृत्वाग्रहयज्ञपुरःसरम् ॥ ब्रह्मविष्णु
महेशेंद्रप्रतिमाःस्वर्णतःकृताः ॥ पूजयेद्धान्यराशिस्थकलशोपरिशक्तितः ॥ पंचमेकलशेरुद्रंपूजयेद्रुद्रसंख्यया॥रुद्रसूक्तानिचत्वारिशांति
सूक्तानिसर्वशः ॥ रुद्रसंख्ययारुद्रसूक्तानिजपेदित्यर्थः । आचार्योजुहुयात्तत्रसमिदाज्यतिलैश्चरुम् ॥अष्टोत्तरसहस्रंवाशतंवात्रिंशतींतुवा॥
देवताभ्यश्चतुर्वक्त्रादिभ्योग्रहपुरःसरम् ॥ ब्रह्मादिमंत्रैरिंद्रस्ययतइंद्रभयामहे ॥ ततःस्विष्टकृतंहुत्वाबलिंपूर्णाहुतिंततः ॥ अभिषेकंकुटुं
बस्यकृत्वाचार्यंप्रपूजयेत् ॥ हिरण्यंधेनुरेकाचऋत्विजांदक्षिणाततः ॥ आज्यस्यवीक्षणंकृत्वाशांतिपाठंतुकारयेत् ॥ इतित्रिकशांतिः ॥
अथसिंहादिप्रसूतगवादिशांतयः ॥ अद्भुतसागरेनारदः ॥ भानौसिंहगतेचैवयस्यगौःसंप्रसूयते ॥ मरणंतस्यनिर्दिष्टंषड्भिर्मासैर्नसंशयः ॥
प्रसूतांतत्क्षणादेवतांगांविप्रायदापयेत् ॥ ततोहोमंप्रकुर्वीतघृताक्तमधुसर्षपैः ॥ आहुतीनांघृताक्तानामयुतंजुहुयात्ततः ॥ व्याहृतिभि
र्होमः ॥ सोपवासःप्रयत्नेनदद्याद्विप्रायदक्षिणाम् । वस्त्रयुग्मंचगांचैवसुवर्णंचप्रदापयेत् ॥ इष्टदैवतमंत्रेणततःशांतिर्भविष्यति ॥ अथर्ववेदप
रिशिष्टे ॥ माघेबुधेचमहिषीश्रावणेवडवादिवा ॥ सिंहेगावःप्रसूयंतेस्वामिनोमृत्युदायकाः ॥ विधानंतत्रकर्तव्यंनरेणहितमिच्छता ॥
सौरैःसूक्तैःप्रकर्तव्योहोमःसूर्यस्यतुष्टये । प्रधानंतिलसर्पिश्चपायसंशर्करायुतम् ॥ सहस्रंहवनंप्रोक्तंदानान्यष्टौयथाविधि ॥ प्रत्यृचंपायसं
हुत्वातांगांविप्रायदापयेत् ॥ततोष्टौदानानिदापयेत् ॥तिललोहंहिरण्यंचकार्पासंलवणंतथा ॥सप्तधान्यंक्षितिर्गावएकैकंपावनंस्मृतम्॥इति

सिंहादिप्रसूतगवादिशांतिः॥इतिदिनकरभट्टकृतेशांतिसारेजननशांतयः॥(अथबालपीडाशांतयः)। सारसंग्रहेक्रियाकालगुणोत्तरे। ग्रहोध
नवतीनाम।गृह्णीतेजातमात्रकम् ॥ क्रियाकालगुणोत्तरेतु प्रथमेऽहनिगृह्णातिबालकंबालिनीग्रहीत्युक्तम्॥नारायणीयेतुपापिनीग्रहीतिपा
ठः। ग्रीवायांपृष्ठभागेचललाटेश्रवणेमुखे ॥ उद्वेजयतिगात्राणिआहारंचनगृह्णते ॥ मांजिष्ठाधातकीलोध्रहरितालंचचंदनम् ॥ एतैःप्र
लेपयेद्बालंततोमुंचतिसाग्रही भोगंदद्याच्चमातॄणांसर्वकालंविचक्षणः ॥ गंधंमाल्यंचकृसरंसुरामांसंयथेच्छया ॥ भोगंबलिंसर्वकालंसं
ध्यात्रयेनिमित्तानंतरंचेतिमदनरत्ने ॥ तत्रैवनारायणीये ॥ मत्स्यमांससुराभक्ष्यगंधस्रग्धूपदीपकैः ॥ बलिंहरेदित्यर्थः। तत्रैवक्रियाकालो
त्तरे। लेपनंधातकीलोध्रमंजिष्ठतालचंदनैः ॥ धूपयेन्महिषाक्षेणततोमुंचतिसाग्रही ॥ बलिदानेविशेषस्तत्रैवप्रयोगसागरे ॥ कदंबश्च
करंजश्चबिभीतोनिम्बएवच ॥ अश्वत्थोदुंबरौचैवश्लेष्मातकवटौतथा ॥ मातृवृक्षाःक्रमेणोक्ताःपूर्वादीशांतदिग्गताः ॥ तेषामेकंसमाश्रित्यब
लिंदद्याद्यथोदितम् ॥ प्रतिस्थूलंप्रत्युदकंप्रतिवृक्षमथापिवा॥स्थूलमुच्चप्रदेशः। बल्याशायामनुक्तायांप्राक्प्रोक्तानानुसारतः ॥ यत्रवारोचते
तत्रमातॄणांबलिमाहरेत् कृत्वानीराजनांतंबलिमितिविधिवद्बालमाहूयतत्रसंस्पृश्याद्भिःसमंत्रंशिरससुकुसुमैरक्षतैर्भ्रामयित्वा। क्षिप्त्वाग्रेदेव
तायाविधिवदुपहितैस्तत्रगीतैःसुमंत्रैःकुर्याद्रक्षांसमीक्ष्यक्षणमिवविलयंयातिदुष्टग्रहार्तिः॥ नीराजनमंत्रोनारायणीये॥ब्रह्माविष्णुश्चरुद्रश्चस्कं
दोवैश्रवणस्तथा ॥ रक्षंतुत्वरितंबालंमुंचमुंचकुमारकम्॥तत्रैवकालगुणोत्तरे। पलाशाश्वत्थकापित्थबिल्वोदुंबरपल्लवाः॥पंचभंगःस्मृतोह्येष
बालनांहितकारकः ॥ प्रयोगसागरेतु। पलाशोदुंबराश्वत्थबिल्वन्यग्रोधपल्लवैः ॥क्वथितेनकषायेणपरिषिंचेत्प्रशांतये ॥परिषेचनमभिषेकः

पूर्वोक्तबलिदानानुलेपनादिकर्मसुमंत्रस्तत्रैवनारायणीये। चंडौसकर्णावनिलोत्रिनिष्ठोठांतिंसनासार्धशशीचचंडः।हुंफट्शिरोंतोमनुरेषहन्या
द्वालग्रहंक्तजपादिकर्मॐरकुखुदर्णखंहुंफट्स्वाहा । सारसंग्रहेक्रियाकालगुणोत्तरे। ग्रहीतुमाहिषीनामगृह्णतेतुद्विरात्रकम्। कासश्वासार्तिमा
न्बालोगात्रसंकोचतेतदा ॥ अपामार्गंमुशीरंचपिप्पलीबीजकंतथा ॥ आजक्षीरेणसंपिष्यततोबालंप्रलेपयेत् ॥ गवांशृंगैश्चकेशैश्चनखैश्चधूप
येच्छिशुम् ॥ भोगंदद्याच्चमातॄणांततोमुंचतिसाग्रही ॥ भोगोगंधादिपूर्वोक्तः ॥ १॥एवमग्रेपि ॥ ;घंटालीसाग्रहीनामगृह्णतेचत्रिरात्रकम् ॥
जृंभतेश्वसतेबालोरोदित्येवमुहुर्मुहुः ॥ नोन्मीलयतिगात्राणिआहारंचनगृह्णते ॥ गोदंतंगजदंतंचतथाचैकैकराजिनम्॥अजाक्षीरेणनिष्पि
ष्यततोबालंप्रलेपयेत् ॥ धूपयेन्निम्बपत्रैश्चसितसर्षपसंयुतैः ॥ लेपितंधूपितंबालंततोमुंचतिसाग्रही ॥३॥ काकोलीसाग्रहीनामगृह्णतेचतु
रात्रकम् ॥ फेनमुद्वमतेबालोदिशश्चैवनिरीक्षते॥उद्वेजयतिगात्राणिरोदित्येवमुहुर्मुहुः ॥ गजदंताहिनिर्मोकसर्षपैःसमभागकैः ॥ गोमूत्रेण
तुपिष्टानिततोबालंप्रलेपयेत्॥ भोगंदद्याच्चमातॄणांकुल्माषैःसममासवम्॥४॥ हंसनीसाग्रहीनामगृह्णतेपंचरात्रकम् जृंभतेश्वसतेबालआ
काशंचनिरीक्षते॥मेषशृंगंवचांलोध्रंहरितालंमनःशिलम्॥अजामूत्रेणसंपिष्यततोबालंप्रलेपयेत्॥ भोगंदद्याच्चमातॄणांततोमुंचतिसाग्रही ॥
॥ ५ ॥ फूत्कारीसाग्रहीनामगृह्णतेषट्चरात्रिकम् ॥ हस्तौपादौचक्षिपतिहसतेचपुनःपुनः ॥ मुह्यतेरोदतेबालआहारंचनगृह्णते ॥ गजदंतं
गुग्गुलंचराजसर्षपसंयुतम् ॥ पिष्ट्वाचघृतसंयुक्तंततोबालंप्रलेपयेत् ॥ भोगंदद्याच्चमातॄणांध्रुवंमुंचतिबालकम् ॥ ६ ॥ मुक्तकेशीग्रहीनाम
गृह्णतेसप्तरात्रकम् ॥मुंचत्येवघृतोनादंकाकवद्रुदतेसदा॥ जायतेपूतिगंधश्चबालकोनात्रसंशयः ॥ कुष्ठंत्वचावचाचैवछागमूत्रेणपेषयेत् ॥

एतैःप्रलेपयेद्बालंधूपोव्याघ्रनखस्यच ॥ भोगंदद्यात्तुमातृणांततोमुंचतिसाग्रही ॥७ ॥ गृह्णतेचाष्टरात्रंतुग्रहीनामत्रिदंडिका ॥ अतीवश्वसते
बालोगृह्यमाणस्तुरोदिति ॥ निरीक्षतेदिशश्चैवजिह्वालालायतेसदा ॥ लेपनंतुवचाहिंगुलशुनैःसहसर्षपैः ॥ भोगंदद्याच्चमातणांततोमुंचति
साग्रही ॥ ८ ॥ सातुमेषीग्रहीनामगृह्णतेनवरात्रकम्॥मुहुश्चत्रसतेबालऊर्ध्वंनिःश्वसतेसदा ॥ रोदित्येवाप्यविश्रांतमुभौमुष्टीदशत्यपि ॥
चंदनंचवचाकुष्ठंतगरंसितसर्षपाः ॥ उदकेनैवपिष्टानिततोबालंप्रलेपयेत ॥ धूपंनरनखैःसार्द्धंतथावानररोमभिः॥ मातृणांभोगनैवेद्यैःशिशुं
मुंचतिसाग्रही॥९ ॥रोदनीसाग्रहीनामगृह्णतेदशरात्रकम्॥नीलोत्पलसवर्णाभोबालोभवतिवर्णतः॥दिवारोदितिरात्रौचगृध्रगन्धश्चजायते ॥
रक्तंतुजायतेमूत्रंसुष्ठुगंधसमन्वितम् ॥कुष्ठंसर्जरसंचैववचासर्षपसंयुतम्॥ उदकेनचसंपिष्यततोबालंप्रलेपयेत॥धूपयेन्निंबपत्रैश्चसमंमांस्याच
लाक्षया॥भोगंदद्यात्तुमातृणामासवंकोद्रवौदनम्॥दिनत्रयंबलिंदद्याद्धचांचैवप्रलेपयेत्॥अथमासेषु॥ पूतनाशिखिनीनामगृह्णतेमासजातकम्
तयागृहीतमात्रस्तुकाकारावंप्रमुंचति॥दिवारात्रौचश्वसतेगृध्रगंधश्चजायते॥सरक्तंस्रवतेमूत्रंचक्षुभ्यानैववपश्यति॥तेनसारमतेनित्यंकुमारी॥
बलिकांक्षिणी ॥पायसंत्रिविधंदद्यान्मांसंचैवचतुर्विधम्॥ रक्तपुष्पंततोगंधंवस्त्रंदद्याच्चपीतकम् ॥ मत्स्यमांसंसुरांचैवदिशमाश्रित्यदक्षिणाम्॥
अधःकरंजवृक्षस्यमध्याह्नेबलिमाहरेत्॥पायसादियुक्तंबलिंदद्यादित्यर्थः॥ धूपंगोदंतनखजंदद्याच्छृंगसमन्वितम्॥दीपकंतिलतैलेनसप्तरात्रं
बलिंहरेत्॥स्ना पितंधूपितंबालंततोमुंचतिसाग्रही ॥ १ ॥पूतनाकुलटानामगृह्णतेचद्विमासिकम् ॥ तयागृहीतमात्रस्तुबालोसौकंपतेसदा ॥
शीतलानिचगात्राणिस्विद्यंतेवापिनित्यशः॥ग्रीवाचपृष्ठतोवक्रामुखंचपरिशुष्यति॥क्षीरंपिबतिविस्रब्धंतत्क्षणादेवछर्दति ॥ तंडुलैःपंचवर्णै

स्तुबलिंदद्यात्समाहितः ॥ पुष्पंगंधांश्चवस्त्राणिकृष्णान्येवप्रदापयेत् ॥ धूपयेन्निंबपत्रैश्चकुसुंभलशुनेनच॥दीपंहितिलतैलेनबलिंपूर्वेणदापये
त् ॥ एवंकृतेतुसादेवीबालंमुंचतितत्क्षणात् ॥ २ ॥ पूतनागौतमीनामगृह्णतेसात्रिमासिकम् ॥ तयागृहीतमात्रस्तुबालोरोदितिनिश्चितम्॥
स्रवन्मूत्रंपुरीषंचनिद्रामोहयुतोभवेत्॥ मधुगंधश्चभवतिगोगंधश्चकचित्कचित् ॥ ओदनंक्षीरशाकंचयवान्नंसोष्णमेवच ॥ सक्तवस्तिलचू
र्णस्यपिंडिकांचैवदापयेत् ॥ धूपयेत्सर्षपैःश्वेतैःस्नापयेच्चविशेषतः ॥ स्नपनंपंचगव्येनतिलतैलेनदीपकम् ॥ पूर्वांतुदिशमाश्रित्यमध्याह्नेब
लिमाहरेत् ॥ एतेनबलिदानेनततोमुंचतिसाग्रही ॥ ३ ॥ पूतनापिंगलानामचतुर्थेमासिगृह्णते ॥ तयागृहीतमात्रस्तुकंपतेदक्षिणेकरे॥क्षीरं
पिबतिविश्रब्धंरावंमुंचतिदारुणम् ॥ श्वेतवर्णशरीरंचमुखंचपरिशुष्यति ॥ पूतिगंधंभवेत्तस्यगात्रंवैबालकस्यतु॥ नमंत्रानौषधंतस्यबलिंत
त्रनकारयेत् ॥ धात्रतव्यंचनिस्नेहंयदिजीवतिमोनवः ॥४॥ पूतनाकुंचनीनामगृह्णतेपंचमासकम् ॥ तयागृहीतमात्रस्तुजायतेकांचनप्रभः॥
सीदंतिसर्वगात्राणिमुखंचपरिशुष्यति ॥ क्षीरंपिबतिविस्रब्धंरोदित्येवमुहुर्मुहुः ॥ ओदनेपोलिकाशाकमत्स्यमांसानिकारयेत् ॥ पक्वान्नंपा
लिकांचैवस्वस्तिकान्श्यामकांस्तथा ॥ दक्षिणांदिशमाश्रित्यमध्याह्नेबलिमाहरेत् ॥ एतेनबलिदानेनततोमुंचतिसाग्रही ॥५॥ पूतनापंक
जानामषण्मासंगृह्णतेशिशुम् ॥ तयागृहीतमात्रस्तुरोदित्येवमुहुर्मुहुः ॥ ज्वरश्चविविधस्तस्यकुक्षिशूलश्चजायते॥मांसौदनंसुरामांसंबलिंवि
विधमेवच ॥ पुष्पैर्गंधैस्तथादीपैर्बलिंतस्याःप्रकल्पयेत् ॥ एवंबलिविधानेनततोमुंचतिसाग्रही ॥ ६ ॥ पूतनाशीतलानामगृह्णतेसप्तमासि
कम् ॥ आस्फोटयतिगात्राणितदाऽऽहारंनगृह्णते ॥ मांसौदनंसुराशाकंकुल्माषंचतिलास्तथा ॥ चक्रकाणिचपिष्टानिकुसुमंविविधंतथा ॥

एकरात्रंबलिंदद्यात्ततोमुंचतिसाग्रही ॥ ७ ॥ पूतनारजनीनामगृह्णतेचाष्टमासिकम् ॥ तयागृहीतमात्रस्तुबालोमुह्यतितत्क्षणात् ॥ स्फोट
काःसर्षपाकाराजायंतेतत्कलेवरे ॥ स्वनतेकंपतेचैवमुखंचपरिशुष्यति ॥ एवंहिलक्षणंज्ञात्वाबलिंतत्रनकारयेत् ॥ नमन्त्रंनौषधंतस्यबाल
कस्यसमाचरेत् ॥ जीवितेतस्यसंदेहोविनाशेनास्तिसंशयः ॥ ८ ॥ शिशुंमासेचनवमेगृह्णतेकुंभकर्णिका ॥ तयागृहीतमात्रस्तुतत्क्षणादे
वछर्दति ॥ दुर्गन्धकृच्छरीरेचज्वरोभवतिदारुणः ॥ क्षीरंपिबतिविस्रब्धंततोभवतिनिस्वनः ॥ कृसरंमत्स्यमांसंचक्षीरमोदनमेवच॥कुल्माष
तिलचूर्णंचपुष्पगंधादिशोभितम् ॥ पूर्वांदिशंसमाश्रित्यमध्याह्नेबलिमाहरेत् ॥ एवंकृतेतुविधिनाततोमुंचतिसाग्रही ॥९॥ पूतनापंकजा
नामगृह्णतेदशमासिकम् ॥ तयागृहीतमात्रस्तुचक्षुर्भ्यांनैवपश्यति ॥ उद्वेजयतिगात्राणिआहारंचनरोचते ॥ ओदनंकृसरारक्तंमत्स्यमांसं
सुरासवम् ॥ घंटांचैवपताकांचसक्तुपिष्टंचकारयेत् ॥ उत्तरांदिशमाश्रित्यमध्याह्नेबलिमाहरेत् ॥ १० ॥ गृह्णात्येकादशेमासिराक्षसीनामपू
तना ॥ तयागृहीतमात्रस्तुदृग्भ्यांकिंचिन्नपश्यति॥नमंत्रोनौषधंतस्यनबलिःकार्यतेबुधैः ॥ तयागृहीतोजीवच्चेत्ततोमेविस्मयोमहान् ॥११॥
पूतनाचपलानाममासेद्वादशकेभवेत् ॥ तयागृहीतमात्रस्तुरोदित्येवमुहुर्मुहुः ओदनंदधिकुल्माषंतिलचूर्णंतथैवच ॥ लाजाश्चपूपकाश्चैव
सर्वंयत्नेनकारयेत् ॥ पूर्वांदिशमथाश्रित्यमध्याह्नेबलिमाहरेत् ॥१२ ॥ अथवर्षेषुगृह्णातिवार्षिकंबालंपूतनापापकारिणी ॥ तयागृहीतमा
त्रस्तुधरण्यांपततेध्रुवम् ॥ नोन्मीलयतिगात्राणिरोदित्येवमुहुर्मुहुः ॥ दह्यंतेचैवगात्राणिआहारश्चनरोचते ॥ गुडोदनंसुरामांसंकुल्माषंपो
लिकादधि ॥ तिलपिंडंचलाजाश्चगंधमाल्यंसुगंधवत् ॥ धूपयेच्चापिगोदन्तैः केशैश्चनखसंयुतैः ॥ स्नपनंपंचभंगेनतिलतैलेनदीपकम् ॥

पूर्वांदिशमथासाद्यएकपत्रंबलिंहरेत् । एवंकृतेविधानेतुततोमुंचतिसाग्रही ॥ १ ॥ कुमारीरोदनीनामगृह्णतेचद्विवार्षिकम् ॥ तयागृही
तमात्रस्तुज्वरेणपरिपीडयते ॥ स्रवतेशोणितंविष्ठांमूत्रंरक्तंचजायते ॥ स्फुरतेदक्षिणोहस्तोरोदित्येवपुनःपुनः ॥ पद्मकेसरसंकाशगात्रं
तत्रप्रजायते ॥ तेनसारमतेनित्यंकुमारीबलिकांक्षिणी ॥ गुडाक्तंकृसरंमांसंसिंदुवारंचपोलिकाम् ॥ कुल्माषंदधिसंयुक्तंतिलचूर्णंतथै
वच ॥ पिष्टमूर्तिंबलिंकृत्वापूर्वस्यांदिशिचाहरेत् ॥ धूपयेत्सर्षपैःश्वेतैर्दोषघ्नैर्बालकंततः ॥ पालाशाश्वत्थकापित्थबिल्वोदुंबरपल्लवाः ॥ पंच
भंगस्मृतस्त्वेषबालानांहितकारकः स्नापितंधूपितंबालंततोमुंचतिसाग्रही ॥२॥ कुमारीधनदानामगृह्णतेचत्रिवार्षिकम् ॥ तयागृहीतमात्र
स्तुचक्षुर्भ्यांनैवपश्यति ॥ सीदंतिसर्वगात्राणिज्वरःशोषश्चजायते ॥ कंपतेवामहस्तश्चआहारश्चनरोचते ॥ ओदनंकृसरंमांसंमत्स्यानांचसुरा
सवम् ॥ कुल्माषंदधिमाषाश्चफलानिकुसुमानिच ॥ फलेतुप्रतिमांकृत्वाबलिंतत्रप्रदापयेत् ॥ धूपंमयूरपिच्छैश्चमृगरोमनखैस्तथा ॥ स्नपनं
पंचभंगेनरात्रौचैवबलिंहरेत् ॥ उत्तरांचदिशंगत्वाशुचिर्भूत्वासमाहितः ॥ सन्नद्धः कवचीभूत्वाबलिकर्मसमारभेत् ॥ विधानमेतत्कृत्वातु
ततोमुंचतिसाग्रही ॥ ३ ॥ चतुर्वार्षिकबालंतुचपलानामगृह्णते ॥ तयागृहीतमात्रस्तुज्वरेणपरितप्यते ॥ सीदंतिसर्वगात्राणिश्वसतेकंपते
पुनः ॥ कारयेत्सर्पंकृष्णेनगंधमाल्यबलिंतथा ॥ स्नपनंपंचभंगेनमेषशृंगेणधूपनम् ॥ यथासिद्धंबलिंकृत्वापूर्वस्यांदिशिदापयेत् ॥ बलि
दानमिदंकृत्वाततोमुंचतिसाग्रही ॥ ४ ॥ कुमारीवर्तनीनामगृह्णतेपंचवार्षिकम् ॥ तयागृहीतमात्रस्तुअंधोभवतिबालकः ॥ सीदंतिस
र्वगात्राणिमुखंचपरिशुष्यति ॥ मूत्रंप्रस्रवतेनित्यंत्रसत्येवमुहुर्मुहुः ॥ पायसंशर्कराक्षीरंतिलपिष्टंसुरासवम् ॥ पक्वाऽपक्वानिमांसानिदधिमूलं

फलंतथा॥ धूपयेल्लशुनैःकेशैःसर्षपैश्चसमन्वितैः॥स्नपनंपंचभंगेनतिलतैलेनदीपकम्॥सतरात्रंबलिंदद्यात्ततोमुंचतिसाग्रही॥५॥ कुमारीयमुना
नामगृह्णतेषष्ठवार्षिकम् ॥ तयागृहीतमात्रस्तुरोदितिस्वरदारुणम् ॥ हसतेचदिवारात्रमाहारश्चनरोचते ॥ मत्स्यमांससुरामांसंपायसंकृस
रंदधि ॥ पूपकान्पोलिकाश्चैवगंधमाल्यानुलेपनम् ॥ स्नपनंपंचभंगेनतिलतैलेनदीपकम् ॥ गवांशृंगेणधूपंचगोरोचननखैस्तथा ॥ चतुः
पंचशुचिर्भूत्वात्रिरात्रंवाबलिंहरेत् ॥ एवंकृत्वाविधानेनबालंमुंचेन्नसंशयः॥ ६ ॥ कुमारीजातवेदाश्चगृह्णतेसप्तवार्षिकम् ॥ तयागृहीतबा
लंतुरूपेणैवोपलक्षयेत् ॥ मुह्यतेचदिवारात्रौआहारश्चनरोचते ॥ कृसरामत्स्यमांसानिपायसंघृतमिश्रितम् ॥ दधिक्षीरंमधुतथापूपकांश्च
विशेषतः ॥ कुशैरास्तरणंकृत्वातिलहोमंचकारयेत् ॥ ॐ कूष्मांडीनिभगवतीराजनीसजुह्वतबालकंमुंचरश्रोसर ॥ ॐ सरदोषंहरदो
षंहरस्वाहा॥ सर्वग्रहाणांदुष्टानांहोतव्यंसविधानवत् ॥ धूपंसर्षपधूपेनपञ्चरात्रंतुहोमयेत्॥ ततोमुंचतिसाबालंसर्वदोषेभ्यएवच ॥ ७॥
कुमारीललितानामगृह्णतेचाष्टवार्षिकम् ॥ तयागृहीतमात्रस्तुबालोरोदितिगर्जति ॥ आस्फोटयतिबाहुभ्यांत्रसतेचपुनःपुनः॥ पा
यसंकृसराभ्यक्तंकुल्माषंस्वस्तिकांतथा ॥ रक्तंपूपान्मत्स्यमांसंदधिगंधांश्चदीपकम् ॥ दद्यात्तुवटवृक्षस्यमूलेगत्वास्वयंशुचिः ॥ धूपे
चकुष्ठमांसीस्यादेवंमुंचतिसाग्रही ॥ ८ ॥ (अथदिनमानवर्षग्रहहराणि) ॥रावणः॥ संभेदकूलद्वयमृत्तिकायामूर्तिंविधायैककरप्रमाणाम् ॥
त्रिलोचनांशूलकपालपाणिंजटाधरांरुद्रतनुंदधानाम् ॥ भुजंगभूषांभसितोज्ज्वलांगीमंगीकृताशेषललामलीलाम् ॥ अत्रमूर्तौसमावा
ह्यरुद्रंसर्वग्रहाधिपम् ॥ स्कंदादिपूतनायुक्तंपूजयेच्चंदनादिभिः ॥ विरच्यतंडुलैश्चूर्णैश्चतुरस्रंकरद्वयम् ॥ तत्रसंस्थाप्यपूर्वस्यांतावदर्चा

विधिंचरेत् ॥ तत्तन्मंत्रैर्विचित्रैश्चनानोपकरणादिभिः ॥ ततःसोपस्करांतांतुनिक्षिपेच्चचतुष्पथे ॥ कार्पासास्थिमयूरपिच्छबृहती
निर्माल्यपिंडांतकत्वङ्मांसीविषदंशविट्तुषवचाकेशाहिनिर्मोककैः ॥ नागेंद्रद्विजहिंगुशृंगमरिचैस्तुल्यैश्चधूपःकृतःस्कंदोन्मादपिशाचरा
क्षससुरावेशज्वरघ्नःस्मृतः ॥ मदनरत्नेकुमारतंत्रे ॥ द्वितीयेदिवसेमासेहायनेवासुनंदन॥ गृह्णातिपूतनाबालंयोगिनीस्वस्तनापिवा॥ततोभ
वेज्ज्वरःपूर्वंःसंकोचोहस्तपादयोः ॥ दंतान्प्रखादत्यनिशंनिमीलयतिचक्षुषी ॥ आहारंचनगृह्णातिदिवारात्रंचरोदिति॥अक्षिरागच्छर्दनंच
भवेद्वीतिःपुनःपुनः ॥ कृशत्वंचप्रजायेतइत्येतच्छिशुलक्षणम् ॥ तंडुलप्रस्थपिष्टेनविनिर्मायाथपुत्तिकाम् ॥ त्रयोदशध्वजादीपाःस्वस्तिका
यवलौदनाः ॥ प्रस्थप्रमाणपिष्टेनसिद्धापूपाश्चमत्स्यकाः ॥ मांसंचेत्येतदखिलंपश्चिमायांदिशिक्षिपेत् ॥ पश्चिमायांचसंध्यायामेतद्दद्या
द्दिनत्रयम् ॥ द्वितीयदिनादिग्रहगृहीतेपिप्रथमदिनादिगृहीतवत् ॥ धूपस्नानब्राह्मणभोजनादिकार्यमितिमदनरत्ने ॥ २॥ तृतीयदिवसे
मासेवर्षेवापूतनाभिधा ॥ गृह्णीयाद्योगिनीबालंततःपूर्वंज्वरोभवेत् ॥ प्रथमप्रमाणपिष्टेनपुत्तिकांकारयेत्तदा ॥ रक्तौदनंध्वजोरक्तःस्वस्ति
कोरक्तएवच ॥ रक्तपुष्पंरक्तगंधस्तथागंधानुलेपनम् ॥ पश्चिमायांचसंध्यायामुदीच्यांनिक्षिपेद्बलिम् ॥ ३ ॥ चतुर्थेऽहनिमासेतुवर्षेगृह्णाति
बालकम् ॥ तुषमंडनिकानाम्नपूतनावाथयोगिनी ॥ भीषणाख्याततस्तस्यजायतेप्रथमंज्वरः ॥ गात्रभंगोस्थितिर्मूर्छावैवर्ण्यंचाक्षिमी
लनम् ॥ वैकथ्यंश्यामताश्वासःकंपोरुचिरितीरितम्॥ तिलपिष्टमयींकृत्वापुत्तिकांबिल्वकंटकैः ॥अष्टांगैरर्चयेत्पुष्पयुक्तशुक्लध्वजोऽर्जुनः॥
स्वस्तिकोर्द्धप्रस्थसिद्धंभक्तंतावदपूपकाः ॥ त्रिसंध्यंपश्चिमाशायांबलिंदद्यात्प्रयत्नतः ॥ तावत्अर्धप्रस्थम् ॥ गोशृंगंसर्पनिर्मोकंलशुनं

नबपत्रकम् ॥ मनुष्यकेशमार्जारलोमान्याजघृतंतथा ॥ एतैश्चधूपयेदेकनिशिसंध्यात्रयेपिच ॥ एकस्मिन्नेवदिनेबलिः ॥ ४ ॥ पंचमे
दिवसेमासेवर्षेवापूतनाशिशुम् ॥ बिडालिकाख्यागृह्णीयात्प्रथमंजायतेज्वरः ॥ हिक्काश्वासश्चशूलश्चगात्रभंगोरुचिस्तथा ॥ तंडुलप्रस्थ
पिष्टेनविनिर्मायतुपुत्तिकाम् ॥ शुक्लौदनंध्वजाःपंचस्वस्तिकाःपंचचोज्ज्वलाः ॥ पंचदोषारशुक्लानिकुसुमानिचचंदनम् ॥ अपराह्णेवृक्ष
मूलेपश्चिमायांदिशिक्षिपेत् ॥ पंचमदिनात्प्रभृतिचतुर्थदिनाच्छुक्लोधूपोपिकर्तव्यइतिमदनरत्ने ॥ ५ ॥ षष्ठेऽहनितथामासेहायनेचापिबा
लकम् ॥ पूतनाशकुनीनामगृह्णीयात्तदनंतरम् ॥ ज्वरउद्वेजनंगात्रेशोषःश्वासोरुचिस्तथा ॥ कासश्चहस्तपादाक्षिसंकोचश्चेतिलक्षणम् ॥
तंडुलप्रस्थपिष्टेनविनिर्मायाथपुत्तिकाम् ॥ कृष्णौदनंध्वजाःपंचकृष्णाःस्वस्तिकपंचकम् ॥ कृष्णएवाथमत्स्यश्चपायसंदुग्धमेवच ॥ मां
संचापूपकास्त्वर्द्धप्रस्थपिष्टविनिर्मिताः ॥ अपराह्णेपश्चिमायांनिक्षिपेद्बलिपुत्तिकाम् ॥ पुत्तिकांपूर्ववत्कृत्वापललंशुनपाचितम् ॥
मत्स्याःपर्पटिकाश्चैवरक्तंचप्रस्थसंमितम् ॥ उदीच्यांपूर्वसंध्यायांबलिर्देयःप्रशांतये ॥ अत्रबलिदानयोर्विकल्पः ॥ ६॥ सप्तमेदिवसे
मासेवर्षेवाशुष्करेवती ॥ गृह्णातिपूतनाबालंततःस्यात्प्रथमंज्वरः ॥ गात्रभंगोथविद्वेषआहारेकंपरोदने ॥ प्रस्थसंमितपिष्टेनसम्यक्कृ
त्वाथपुत्रिकाम् ॥ सप्तध्वजाःसप्तदीपाःस्वस्तिकाःसप्तवैतथा ॥ पुष्पाणिमत्स्यमांसंचभक्तंचेत्युदगाहरेत् ॥ ७ ॥ अष्टमे
दिवसेमासेवर्षेवाक्रमतेशिशुम् ॥ बिडालिकानामधेयापूतनास्यततोज्वरः ॥ गात्रभेदोऽत्ररुदितंरोदनंनेत्रमीलनम् ॥ जिह्वाशो
षशिरःस्फोटआहारद्वेषएवच ॥ तंडुलप्रस्थपिष्टेनपुत्तलींकारयेत्ततः ॥ पायसंमधुसर्पिश्चक्षीरलाजाश्चशष्कुलीः ॥ गुग्गुलंमेषमांसं

चतथापर्पटिकाअपि॥ध्वजादीपाश्चचत्वारोगंधानानाविधाअपि॥ सुमनांसिचरक्तानीत्येवमंत्रोदितोबलिः॥ अमुंसताहरेत्पूर्वसंध्यायांदक्षि
णादिशि॥ कृष्णाष्टम्यांवक्ष्यमाणमंत्रेणानेनसंयतः ॥ पूजापितथैवचअष्टमीग्रहणमुपलक्षणम्॥नवमेदिवसेवर्षेहायनेवापिबालकम्॥ गृह्णा
तिमदनानाम्नीपूतनातदनंतरम् ॥ ज्वरश्छर्दिर्घृणाध्यानंकासःश्वासश्चतृष्णता॥गात्रभंगश्चशूलश्चचिह्नान्येतानिबालके ॥ प्रस्थमात्रेणपिष्टे
नविनिर्माय चपुत्तिकाम् । ओदनंमत्स्यमांसंचपर्पटिं चेक्षुमूलकम्।निक्षिपेत्पूर्वसंध्यायामुत्तरस्यांबलिंदिशि॥ मंत्रस्तु ॥ ॐ नमोभगवतेवा
सुदेवायहुंफट्स्वाहा॥९॥दशमेदिवसेमासेहायनेवाथबालकम् ॥ पूतनारेवतीनामगृह्णीयाद्बालंकततः ॥ ज्वरश्छर्दिःश्वासकासौशूलंचे
त्येतदीरितम् ॥ प्रस्थप्रमाणपिष्टेनपुत्तिकांतत्रकल्पयेत् ॥ अष्टांगंलेपयेत्तत्रबिल्वपत्रस्यकंटकैः॥ गुडौदनंचसर्पिश्चध्वजानांपंचविंशतिः ॥
स्वस्तिकानांप्रदीपानांपंचविंशतिरेवच॥चत्वारिरक्तपुष्पाणीत्येतद्दक्षिणदिग्गतम्॥संध्यात्रयेवक्ष्यमाणमंत्रेणानेननिक्षिपेत् ॥ ॐनमोभगव
तेवासुदेवायहुंफट्स्वाहा ॥ १० ॥ एकादशदिनेमासेहायनेपूतनार्चिका ॥ गृह्णातिबालकंपश्चाज्ज्वरस्तस्यप्रजायते ॥ अन्नद्वेषोमुखेशोषो
गात्रभंगश्चरोदनम् ॥ ऊर्ध्वदृष्टिरपीत्येतल्लक्षणंतद्ग्रहाच्छिशोः ॥ पुत्तिकामाषपिष्टेनरचिताशुक्लमोदनम्॥ पुष्पाण्यपिचशुक्लानिध्वजानांपंच
विंशतिः ॥ स्वस्तिकानांप्रदीपानांपंचविंशतिरेवच ॥ एतत्सर्वंयमाशायांसंध्यायांप्रातराहरेत् ॥ ॐ नमोभगवतेवज्रहस्तायॐ फट्स्वाहा
॥ ११ ॥ द्वादशेदिवसेमासेवर्षेवापूतनाशिशुम् ॥ अद्भुताख्याप्रगृह्णातिज्वरःस्यात्प्रथमंततः ॥ रोदनंसर्वदादंतखादनंरक्तनेत्रता ॥ त्रयोद
शस्वस्तिकाश्चध्वजादीपास्त्रयोदश ॥अपूपामस्त्यमांसंचतथापर्पटिकाअपि ॥एतत्सर्वंदक्षिणस्यांदिशिमंत्रेणनिक्षिपेत् ॐ नमोनारायणा

यहनदुष्टसत्त्वानांफट्स्वाहा ॥१२॥ अथत्रयोदशादिवर्षशांतिःमदनरत्ने प्रयोगसागरे ॥ वर्षेत्रयोदशेबालंग्रहीगृह्णातिपक्षिणी॥ तच्चेष्टाकि
लहच्छूलज्वररोदनहासनम् ॥ शाल्योदनसुरामांसमत्स्यकुल्माषपायसैः॥दद्यात्सकृसरंप्रोक्तैर्मध्याह्नेत्रिदिनंबलिम्॥पिबेच्चाभ्यंजयेत्सर्पि
स्ततोमुंचतिसाग्रही ॥ १३ ॥वर्षेचतुर्दशेबालंस्वच्छंदानामतोग्रही ॥ गृह्णातिचेष्टातत्रस्याच्छोणितस्रवणंतथा ॥ शूलंचनाभिदेशेस्यात्त
त्रनास्तिप्रतिक्रिया ॥ १४॥ वर्षेपंचदशेबालंग्रहीगृह्णातिवारुणी ॥ तत्रेदंचेष्टितंविंद्याज्ज्वरोनिद्राविरहस्तथा ॥ कुल्माषकृसरापूपपोलिका
पायसासवैः ॥ सपूगकैर्बलिंदद्यात्त्रिरात्रंचापिधूपयेत् ॥ चंदनेनाज्यसंयुक्तंततोमुंचतिसाग्रही ॥१५॥ षोडशेवत्सरेबालंग्रहीगृह्णातिदुर्जया ॥
तच्चेष्टाहासनंकोपोयास्यामोतिवचोमुहुः ॥ कुल्माषकृसरापूपतिलपिष्टान्नफल्गुकैः ॥ दध्नासहबलिंदद्यात्प्राच्यांदिशिदिनत्रयम् ॥ १६ ॥
वर्षेसप्तदशेबालंग्रहीगृह्णातिबालकी ॥कासश्वासौचविज्ञेयौतत्रनास्तिप्रतिक्रिया॥संवत्सरगृहाद्येतेकुमारीपदपूर्वकाइति ॥ इतिबालपीडाशां
तयः ॥ अथरोगोत्पत्तिशांतिर्वसिष्ठसंहितायाम्॥रोगशांतिंप्रवक्ष्यामिरोगार्तानांशरीरिणाम्॥बलिपूजांगहोमैश्चजपब्राह्मणभोजनैः॥यस्मि
न्धिष्ण्येयदानृणांरोगःसंजायतेतदा ॥ तद्धिष्ण्यपूजाकर्तव्यातदीश्वरसुतुष्टये ॥ सुवर्णेनप्रमाणेनतदर्धार्द्धेनवापुनः ॥ धिष्ण्येशप्रतिमा
कल्प्यायथावित्तानुसारतः ॥ ईशान्यामथवाप्राच्यामुदीच्यांदिशिसंलिखेत् ॥ तंडुलोपर्यष्टदलंपद्मंगोमयमंडले ॥ पंचामृतैश्चसलिलैस्त
त्तन्मंत्रैःपृथक्पृथक् ॥ स्नाप्यकल्पोक्तमंत्रेणप्रतिमांस्थापयेत्ततः ॥ कर्णिकायांतुसंस्थाप्यध्यात्वादेवंसमर्चयेत् ॥ तद्वर्णवस्त्रगंधाद्यैरुक्तधू
पोपहारकैः॥ आरक्तवर्णकुंभंचपंचभिःपल्लवैर्युतम् ॥ शुक्लवस्त्रस्वर्णरत्नशतौषधिसमन्वितम् ॥ देवस्यपूर्वतःस्थाप्यजलमंत्रैःसमर्चयेत् ॥

तत्राच्यांस्थंडिलेवह्निंविधिवत्स्थापयेत्ततः ॥ मुखांतेजुहुयादुक्तद्रव्येणाष्टसहस्रकम् ॥ उक्तद्रव्येणतत्तन्नक्षत्रशांतौवक्ष्यमाणेनतिलहोमंव्या
हृतिभिरष्टोत्तरसहस्रकम् ॥पूर्णाहुतिंचजुहुयात्सम्यक्जपतिपूर्वकम्॥ततःशुद्धोपविष्टस्यरोगिणःप्राङ्मुखस्यच ॥ मंत्रपूतैःकुंभजलैरभिल
गैर्वारिमंत्रकैः ॥ मार्जनंकारयेत्तस्यसम्यक्संकल्पपूर्वकम् ॥ नीराजनंविशुद्धात्मापूजास्थानंसमागतः ॥ देवंहुताशनंभक्त्याप्रणम्यप्रार्थये
दिति ॥ अमृतोद्भवधिष्ण्येशयज्ञस्त्वंशंकरात्मकः ॥ रोगादस्माच्चमांरक्षतववश्याश्चधिष्ण्यपाः ॥ इतिप्रार्थ्यततोदद्यात्प्रतिमांवस्त्रसंयुता
म्॥ दक्षिणासहितांगांचआचार्यायकुटुंबिने॥ब्राह्मणेचयथाशक्त्याब्राह्मणान्भोजयेत्ततः ॥ कृत्वानक्षत्रपूजांचतिथिवासरयोरपि॥सर्वान्का
मानवाप्नोतिरोगीरोगात्प्रमुच्यते ॥ अत्रजपःआपस्तंबशाखीयानामष्टौवाक्यानामेतद्विधियुतांवक्ष्यमाणांनक्षत्रशांतिंकृत्वातिथिशांतिंवार
शांतिंचकुर्यादित्यर्थः ॥ अश्विन्यामुत्थितोव्याधिर्नवरात्रेणमुंचति॥देवस्यत्वेतिमंत्रस्यगायत्रीकाश्यपोश्विनौ ॥ श्वेतवर्णौसुधापूर्णौकुंभांभो
जधरौपृथक् ॥ चंदनोत्पलपुष्पाज्यगुग्गुलूचगुडप्रियौ ॥ क्षीरलड्डुकभोक्तारौसमिधःक्षीरवृक्षजाः ॥ आज्यंगुग्गुलुश्चधूपइत्यर्थः ॥ गुडःक्षीर
लड्डुकंचनैवेद्यंसमिधोहोमद्रव्यमित्यर्थः ॥ एवमग्रेपिद्रष्टव्यम् ॥गुडौदनबलिंदद्याद्दीपैःसार्द्धंनिशामुखे ॥ १ ॥ भरण्यामुत्थितोव्याधिरचि
रान्निधनप्रदः । मासेनमुंचत्यथवादैवस्यकुटिलागतिः ॥ त्र्यंबकस्यतुमंत्रस्यचोक्ताश्छंदर्षिदेवताः ॥ गंधोगरुःकरवीरपुष्पंधूपश्चगुग्गुलः ॥
आज्यदीपंचसर्वेषांनैवेद्यंचगुडोदनम्॥ पाशदंडधरोरक्तस्त्वाज्यमध्वक्षतैर्हविः ॥ महिषीनायकारूढाकृसरान्नबलिंहरेत् ॥ वक्ष्यमाणेनमंत्रे
णबलिंसम्यक्प्रदापयेत् ॥ कृत्तिकासूत्थितोव्याधिर्दशरात्रेणमुंचति॥सुरूपश्चाभयवरदःसुवर्चामेषवाहनः॥ मेधातिथिर्जगत्यग्निःपुनंतुमामि

त्यस्यच ॥ चंदनंयूथिकापुष्पंघृतधूपःसगुग्गुलः ॥ नैवेद्यंतिलमाषान्नंवटकाद्येनसंयुतम्॥गुडौदनंहविस्तत्रपायसेनबलिंहरेत् ॥ ३ ॥ रोहि
ण्यामुत्थितोव्याधिर्दशरात्रेणमुंचति ॥ नमोब्रह्मणमंत्रस्यगायत्रीविधिरश्विरः ॥ शुष्कःकमंडलुस्त्वक्षसूत्रंत्वभयवरप्रदः ॥ चंदनंकमलंपुष्पं
सदशांगंचगुग्गुलम् ॥ नैवेद्यंपायसंसाज्यंसर्वदानैर्हविर्भवेत् ॥ दधिक्षीरघृतक्षौद्रशाल्यन्नेनबलिंहरेत् ॥४॥ चंद्रभेचोत्थितोव्याधिःपंचरात्रे
णमुंचति ॥ गदावरदपाणिश्चश्वेतोसौरथवाहनः ॥ नवोनवोभवत्यस्यगायत्रीगौतमःशशी ॥ चंदनंकुमुदंपुष्पंदशांगंपायसौदनम्॥नैवेद्यमंड
कापूपघृतक्षौद्रसमन्वितम॥शर्करादधिमिश्रेणशुक्लान्नेनबलिंहरेत्॥॥५॥आर्द्रायामुत्थितोव्याधिरचिरान्निधनप्रदः ॥ मासेनमुंचत्यथवादेव
स्यकुटिलागतिः॥शुद्धस्फटिकसंकाशःशूलखड्ग भयेष्टदः॥नमःशंकरायेत्यस्यबृहतीशोविधिर्ऋषिः॥चंदनंसौरभंपुष्पंदशांगंपायसौदनम् ॥
समध्वाज्यंहविस्तत्रदध्योदनबलिंहरेत्॥६॥पुनर्वसाभवेद्व्याधिर्नवरात्रेणमुंचति॥ कमंडलक्षसूत्रेध्मदर्भस्रुक्स्रुवभृत्सदा ॥ अदितिर्द्यौश्चमंत्र
स्यत्रिष्टुपोद्रुहिणोदितिः॥हरिद्राकुंकुमंगंधःपुष्पंसेवंतिकादयः॥धूपोमलयजंपिष्टंघृतान्नंपीतवर्णकम्॥घृताक्तंतंडुलहविःपीतान्नेनबलिंहरेत् ७
पुष्येसमुत्थितोव्याधिःसप्तरात्रेणमुंचति ॥ पीतोदंडकमंडलक्षसूत्राभयोद्यतः॥बृहस्पतेअतीत्यस्यत्रिष्टुप्जीवांगिराऋषिः॥ कुंकुमंवारिजंपु
ष्पंनैवेद्यंघृतपायसम्॥मंडकागुडसंयुक्तमेतदेवहविर्भवेत्॥समंडकघृतान्नेनबलिंतत्रसदापयेत्॥ आश्लेषासुत्थितोव्याधिःक्लेशान्मासेनमुंचति
नमोअस्त्वितिमंत्रस्यहविराडानिसपराट्॥मधुवर्णोभोगयुक्तःखड्गचर्मधरःशुभः॥सकुंकुमागरुर्गंधःपुष्पंचागस्तिसंभवम्॥घृतंगुग्गुलधूपोत्र
नैवेद्यंक्षीरसर्पिषा॥हविःसाज्यंसुदध्यन्नंदध्योदनबलिंहरेत्॥९॥पितृभेचोत्थितोव्याधिरचिरान्निधनप्रदः॥अथवासार्द्धमासेनधूमोदंडपवित्र

धृक् ॥ आयंतुनस्त्वितिचास्यजगतीपितरोब्जजः॥ चंदनंचंपकंपुष्पंधूपःसघृतगुग्गुलुः॥ नैवेद्यंघृतपिष्टान्नंतिलान्नंसघृतंहविः॥ सतिलाज्यंचमु
द्गान्नंबलिंचपितृतृप्तये॥ १०॥ पूर्वाफाल्गुनभेव्याधिरर्द्धमासेनमुंचति ॥ भगएवभगवानित्यस्यत्रिष्टुब्भागोविधिः ॥ पद्माभयकरःपद्मवर्णःसिं
हासनेस्थितः॥ चंदनंमालतीपुष्पंबिल्वधूपोघृतौदनम्॥ नैवेद्यंशर्करापूपलड्डुकाद्यैश्चसंयुतम्॥ घृतौदनंहविस्तत्रपायसेनबलिंहरेत् ॥ ११ ॥ अ
र्यमर्क्षेभवेद्व्याधिरर्धमासेनमुंचति ॥ पद्मवर्णःपद्मसंस्थःपद्मगर्भसमद्युतिः ॥ अर्यमायातिमंत्रस्यचार्यमात्रिष्टुबब्जजः ॥ कर्पूरःकुंकुमंगंधःपु
ष्पंबंधूकसंज्ञकम् । घृतगुग्गुलधूपोत्रनैवेद्यंघृतपायसम् । होमद्रव्यंघृतान्नंस्याच्छाल्यन्नेनबलिंहरेत् ॥ १२॥ हस्तेसमुत्थितोव्याधिर्नवरा
त्रेणमुंचति ॥ उदुत्यमितिहिरण्यस्तूपोगायत्र्यदितिर्गजेत् ॥ रक्तगंधंकुंकुमंचपुष्पंराजीवसंज्ञकम् । गंधगुग्गुलुधूपोत्रनैवेद्यंघृतपायसम् ।
मधुपुष्पंतिलाज्यान्नंदूर्वाभिःसहितंहविः ॥ गुडशर्करमध्वाज्यपिष्टान्नेनबलिंहरेत् ॥ १३॥ चित्रायामुत्त्थितोव्याधिर्दशरात्रेणमुंचति॥ चि
त्रंदेवानामित्यस्यत्वष्टात्रिष्टुप्पितामहः ॥ अक्षसूत्राभयकरश्चित्रवर्णःशिवेतरः ॥ सकुंकुमागरुर्गंधःकुसुमंचित्रवर्णकम् ॥ नैवेद्यंमोदकाज्या
न्नंचित्रान्नंसघृतंहविः॥ तदन्नेनबलिंदद्यात्सर्वरोगापनुत्तये ॥ १४ ॥ स्वात्यृक्षचोत्थितोव्याधिःसर्वदानिधनप्रदः ॥ एकद्वित्रिचतुष्पंचषण्मा
सैर्वापिमुंचति ॥ सनःपितेतिमंत्रस्यगायत्रीमरुदंगिराः॥ खड्गचर्मधरःकृष्णोगंधःकृष्णागरुर्भृशम् ॥ पुष्पंदमनकंधूपंचन्दनागरुगुग्गुलुः॥
नैवेद्यंपायसंसाज्यंहविस्तेनबलिंहरेत् ॥ १५ ॥ द्विदैवभेभवेद्व्याधिर्मासेनैकेनमुंचति ॥ इंद्राग्नीआगतमितिगायत्रीवास्यचैवहि ॥ मधुच्छन्द
ऋषींद्राग्नीतयोर्ध्यानंचपूर्ववत् ॥ श्रीखंडंकुंकुमंगंधंतयोःपुष्पंसरोरुहम् ॥ देवदारुस्तयोर्धूपोनैवेद्यंघृतपायसम् ॥ तदेवान्नंहविस्तत्रचि

त्रान्नेनबलिंहरेत्॥ १६॥ मित्रभेचोत्थितोव्याधिर्दशरात्रेणमुंचति ॥मित्रस्यचषणीरितिगायत्रीचास्यचैवहि ॥ ऋषिर्हिरण्यस्तूपाख्यस्तत्रमि
त्रोधिदेवता ॥द्विभुजःपद्मगर्भाभःपद्मभूपद्मसंस्थितः॥ कुंकुमंपुंडरीकाख्यंपुष्पंधूपंचचंदनम्॥नैवेद्यंपायसंसाज्यंहविःकंदंचसूरणम्॥ बलि
स्तत्रप्रदातव्योमधुशर्करपायसम् ॥ घृतपूरकमाषान्नंमुद्गगर्भैश्चसंयुतम् ॥१७॥ ज्येष्ठायामुत्थितोव्याधिर्मृत्युरेवनसशयः ॥ अथवामासमेकं
वामुंचत्येवनसशंयः॥इंद्रंवइतिमंत्रस्यगायत्रींद्रोंगिराऋषिः ॥ इंद्रस्तुपूर्ववद्गंधंचंदनंकुसुमंशुभम्॥कर्पूरधूपोनैवेद्यंचित्रान्नंसुमनोहरम् ॥ हवि
स्तुसूरणंकंदंमधुकंदंसुपायसम् ॥ विचित्रपुष्पगंधेनदध्यन्नेनबलिंहरेत् ॥ १८ ॥ मूलभेचोत्थितोव्याधिर्मासार्धेनविमुंचति ॥ खड्गचर्म
धरःकृष्णःकरालवदनःप्रभुः ॥ मोषुणस्यचगायत्रीघोरःकण्वोथनिऋतिः॥ गंधःकृष्णागरुःपुष्पंपद्मनीलोत्पलंशुभम्॥धूपःकृष्णागरुर्माष
मिश्रान्नमुपहारकम् ॥ तदेवान्नंहविस्तत्रमाषान्नेनबलिंहरेत् ॥ १९ ॥ वारिभेचोत्थितोव्याधीरोगिणोनिधनप्रदः ॥ विमुंचत्यथवामासै
र्द्वित्रिषट्पंचसप्तभिः ॥आप्यायस्वेतिमंत्रस्यगायत्रीपद्मयोर्जलम् ॥ सुवर्णोद्विभुजःपद्मपाणिर्गंधश्चचंदनम् ॥ पद्मशैलेयधूपोत्रनैवेद्यंघृत
पायसम् ॥ हविर्मसूरपिष्टान्नंतदन्नेनबलिंहरेत् ॥ २० ॥ विश्वभेचोत्थितोव्याधिःसार्धमासेनमुंचति ॥ विश्वेदेवासइत्यस्यगायत्री
विश्वदेवताः ॥ कमंडल्वभयांभोजवरदश्चकुशासनः ॥ चंदनंकमंडलुंपुष्पंधूपःसघृतगुग्गुलुः ॥ नैवेद्यंपायसाज्यान्नंहविरप्ये
तदेवहि ॥ समिद्भिर्नितुलैःसार्द्धंतदन्नेनबलिंहरेत् ॥ २१ ॥ श्रवणेचोत्थितोव्याधिर्दशरात्रेणमुंचति ॥ अतोदेवेतिमंत्र
स्यगायत्रीपद्मजोहरिः॥पीतांबरःकृष्णवर्णःशंखचक्रगदाब्जजः॥ चंदनंमालतीपुष्पंधूपःकर्पूरगुग्गुलुः॥शाल्यन्नंषड्रसोपेतंभक्ष्यभोज्यादिभि

स्सह ॥ नैवेद्यंहविरप्येतत्पायसेनबलिंहरेत् ॥ २२ ॥ वसुभेचोत्थितोव्याधिदशरात्रेणमुंचति ॥ त्रायंतामितिमंत्रस्यानुष्टु
ब्व्यासोवसुस्ततः ॥ चापबाणधरःशुक्लोगंधःकर्पूरचंदनम् ॥ वारिजंगुग्गुलुर्धूपोनैवेद्यंघृतपायसम् ॥ हविश्चौदुंबरसमिद्गुडपायससंयुतम् ॥ ल
ड्डुकापूपमध्वाज्यतिलपिष्टबलिंहरेत् ॥ २३ ॥ वारुणेचोत्थितोव्याधिरष्टरात्रेणमुंचति ॥ इमंमेवरुणइत्यस्यगायत्रीकण्ववारिपः ॥ नागपा
शधरःश्रीमान्नवरत्नविभूषितः ॥ मकरस्थोगुरुर्गन्धःपुष्पंचकमलोत्पलम् ॥ कर्पूरंचंदनंधूपोनैवेद्यंघृतपोलिका ॥ हविरश्वत्थसमिध्रश्चित्रान्नेन
बलिंहरेत् ॥ २४ ॥ अजैकपाद्भवोव्याधिःसर्वदानिधनप्रदः ॥ अथवाबहुभिर्मासैर्दिवसैर्वाविमुंचति ॥ वामपादकरंभूम्यामाकाशेत्वपरद्वय
म् ॥ प्रसार्यप्रांजलिःसाक्षादीश्वरंचिंतयन्स्थितः ॥ शमग्निरित्यस्याजपाद्गायत्रीचतुराननः ॥ कुंकुमंचंदनंगंधंपुष्पंश्वेतार्कसंभवम् ॥ धूपः
शतौषधीमिश्रोनैवेद्यंदधिपायसम् ॥ हविःकूष्मांडखंडःस्याद्दध्यन्नेनबलिंहरेत् ॥ २५ ॥ अहिर्बुध्न्येभवेद्व्याधिःसार्धमासेनमुंचति ॥ नमस्तेरु
द्रइत्यस्यसर्वंतत्रैवसंस्थितम् ॥ गंधचंदनकर्पूरैःपुष्पंपद्मोत्पलंशुभम् ॥ सबिल्वगुग्गुलुर्धूपोनैवेद्यंघृतपायसम् ॥ मुद्गमाषतिलान्नाज्ययवव्रीहि
भवंहविः ॥ २६ ॥ रेवत्यामुत्थितोव्याधिरष्टरात्रेणमुंचति ॥ हंसःशुचिषदित्यस्यजगतीवामदेवकः ॥ पूषाचदेवतांभोजवर्णोभोजधरःशुभः
रक्तचंदनगंधोत्रपुष्पंमंदारसंज्ञकम् ॥ धूपस्तुगुग्गुलुःसाज्यंनैवेद्यंघृतपायसम् ॥ हविस्तदेवसजलंदध्यन्नेनबलिंहरेत् ॥ भूतेशानुस्मृतो
यस्माद्रोगनाथोमहाज्वरः ॥ रोगादस्माच्चमांत्राहित्वंगृहीत्वोत्तमंबलिम् ॥ २७ ॥ इतिनक्षत्रपीडाशांतयः ॥ ( अथबौधायनोक्तज्वराद्युत्पत्तौ
शांतयः ) ॥ प्रतिपदिकष्टंसंदेहोदिनानिदशअग्निर्देवताग्निरस्मीतिपूजामंत्रः ॥ हैमीप्रतिमाघृतधूपोघृतदीपश्चयथासंभवंनैवेद्यंघृतंहोमद्रव्यंशांति

र्भवति। अत्र सर्वत्र प्रथमं तत्तद्देवतामंत्रजपः। सहस्रादिसंख्याकः पश्चात्पूजाहोमदानादिसंख्या चाष्टोत्तरशतादि र्व्याधिता रतम्येन कल्प्या सद्दस्रमृ
त्युर्दिनेशः॥ १॥ द्वितीयायां दिनानि षोडश ब्रह्मा देवता ब्रह्मजज्ञानमिति जपपूजाहोममंत्रः॥ अगरुर्धूपः घृतदीपः सर्वत्र शर्करा नैवेद्यं तिलयवाज्या
नि होमद्रव्याणि प्रतिमा हैमी॥ २॥ तृतीयायां दिनानि नव पार्वती देवता गौरीर्मिमायेति मंत्रः। दूर्वाभिः पूजा कुंकुमगंधः गुग्गुलुः सर्वधूपो घृतदीपः द्रा
क्षाक्षीराज्य नैवेद्यं पायसं त्रिमधुराक्तं दूर्वाश्च प्रतिमा हैमी॥ ३॥ चतुर्थ्यां दिनानि षोडश गणपतिर्देवता गणानां त्वेति पूजाहोमादि मंत्रः हैमी प्रतिमा कुं
कुमं रक्तचंदनं गंधः करवीरादीनि पुष्पाणि अगरुधूपो लड्डुकेक्षुखंडानि नैवेद्यं नारिकेल सकलानि कदलीफलानि च होमद्रव्यम् ४ पंचम्यां दिनान्ये
कविंशतिर्नागो देवता हैमी प्रतिमा नमो अस्तु सर्पेभ्य इति मंत्रः॥ चंदनं गंधः सुरभिपुष्पाणि घृतधूपः पयो नैवेद्यं तिलयवाज्य पायस शर्करा मधूनि य
था होमद्रव्यम्॥ ५॥ षष्ठ्यां दिनानि द्वादश स्कंदो देवता द्रप्सश्चस्कंदेति पूजामंत्रः॥ पीतचंदनम् रक्तं वा गंधः रक्तानि पुष्पाणि जातीपुष्पाणि वा
जटामांसी धूपः। लड्डुकादि नैवेद्यं फलानि वा तिलयवाज्य शर्करा मधूनि यथा होमद्रव्यं हैमी प्रतिमा शांतिर्भवति ६ सप्तम्यां दिनान्यष्टौ दिननाथो देव
ता आसत्येन आकृष्णेनेति वा मन्त्रः हैमी ताम्रजा वा प्रतिमा कुंकुमं गंधः करवीरादीनि पुष्पाणि गुग्गुलुर्धूपः शर्करा घृतसंयुक्तं पायसं नानाफलं नैवेद्यं
मर्कसमिधः पायसं होमद्रव्यम्॥ ७॥ अष्टम्यां दिनानि त्रयोदश ईश्वरो देवता तमीशानमिति पूजामंत्रः। राजती प्रतिमा कर्पूरमिश्रं चंदनं गंधः बिल्वद
लान्यर्कपुष्पाणि नीलोत्पलानि च पुष्पाणि जटामांसी धूपः पायसं नानाभक्षाश्च नैवेद्यं त्रिमध्वक्तास्तिला होमद्रव्यं रोगशांतिर्भवति ८ नवम्यां दि
नान्यष्टादश भगवती दुर्गा देवता जातवेदस इति पूजामंत्रः॥ हैमी प्रतिमा रक्तचंदनं गंधः कुंकुमादिकं वा नैवेद्यं होमद्रव्यमोदनम्॥ ९ दशम्यां दिनानि

पंचविंशतिः यमोदेवताहैमीलौहीवाप्रतिमायमायत्वेतिपूजामंत्रः ॥चंदनंमृगमदश्चगंधः मधुसर्जजश्चधूपः तिलतैलदीपः बिल्वपत्राणिकृष्णति
लाश्चहोमद्रव्यम्॥कृसरान्ननैवेद्यंघृतमधुतिलमुद्गहोमद्रव्यम्॥ १० ॥एकादश्यांदिनानिसप्तविश्वेदेवादेवताविश्वेदेवासइतिमंत्रः हैमीप्रतिमाश्वेत
चंदनगंधः कृष्णागरुर्धूपः घृतदीपः तुलसीपत्राणिपूजायांयवमोदकंनैवेद्यंतिलयवमध्वाज्यंहोमद्रव्यम् ११॥द्वादश्यांद्वादशदिनानिरुद्रोदेवता
यातेरुद्रेतिमंत्रः हैमीप्रतिमाचंदनंश्रीखंडमगरुर्धूपः घृतदीपः पायसंनैवेद्यंचंपकपुष्पंकमलंचपूजायांतिलयवाज्यमधूनिहोमद्रव्यंशांतिर्भवति
॥ १२ ॥ त्रयोदश्यांदिनान्यष्टौशमीदेवतारौक्मीराजतीवामूर्तिः आप्यायस्वेतिमंत्रः।पूजादौश्वेतचंदनगंधः चंदनधूपः घृतदीपः दधिशर्करानैवे
द्यंतिलयवास्त्रिमध्वक्ताहोमद्रव्यंशांतिर्भवति।१३॥चतुर्दश्यांदिनानिद्वाविंशतिः नमः शंभवेचेतिमंत्रः रौक्मीराजतीवामूर्तिः श्वेतचंदनगंधः अ
र्कपुष्पंबिल्वदलानिवापूजायामगरुर्धूपः पायसंनैवेद्यंत्रिमध्वक्तास्तिलाहोमद्रव्यम् ॥१४॥ अमायांदिनान्यष्टादशशचीदेवताहोतायक्षदिति
मंत्रः॥हैमीप्रतिमाकुंकुमादिगंधः नानासुगंधपुष्पाणिकृष्णागरुर्धूपः फेणिकापूरिकानैवेद्यंघृतपायसंहोमद्रव्यम् ॥१५॥ पूर्णिमायांदिनानिषो
डशचंद्रोदेवतादमनकपूजायामन्यत्सर्वंत्रयोदशीशांतावुक्तंग्राह्यम् ॥ १६ ॥ इतिदिनकरभट्टकृतेशांतिसारेतिथिदोषशांतिः ॥ अथाश्वला
यनोक्तवारशांतिः॥आदित्यवासरस्यरुद्रोदेवतायातेरुद्रेतिमंत्रः ॥हैमीराजतीवामूर्तिः चंदनगंधः अगरुर्धूपः घृतदीपः पायसंनैवेद्यंहोमद्रव्यंच॥
॥१॥सोमवासरस्यपार्वतीदेवतागौरीर्मिमायेतिमंत्रः ॥ हैमीराजतीवाप्रतिमाकुंकुमंगंधः सुगंधिपुष्पमगरुर्धूपः घृतदीपः नानाभक्ष्याणिनैवेद्यं
तिलयवाहोमद्रव्यंदेवभक्तसंतर्पणंच॥२॥ भौमस्यस्कंदोदेवताअन्यत्सर्वंषष्ठीशांतिवत् ॥ ३ ॥ बुधवासरस्यविष्णुर्देवताविष्णोरराटमसीति

मंत्रः हैमंस्वरूपंपीतचंदनंपीतपुष्पाणिकमलानिचअगरुर्धूपः घृतदीपः यवलड्डुकनवेद्यंतिलयवाज्यहोमः ४॥ गुरुवारस्यब्रह्मादेवताब्रह्मजज्ञान
मितिमंत्रः हैमीप्रतिमाकुंकुमगंधः पर्णपुष्पंगुग्गुलुर्धूपः शर्कराज्यंनैवेद्यंतिलयवधानाघृतंहोमद्रव्यम् ॥५॥ शुक्रवासरस्यइंद्रोदेवतात्रातारमिं-
द्रमितिमंत्रः॥हैमीमूर्तिः चंदनंगंधः चंपकंपुष्पमगरुर्धूपः घृतपक्वंनैवेद्यंतिलयवाज्यमधूनिहोमद्रव्यम् ॥६॥ शनिवारस्ययमोदेवतायमेनदत्त
मितिमंत्रः॥हैमीलौहीवाप्रतिमाताम्रजेतिकेचिच्चंदनंगंधः पुष्पंकृष्णंमधुधूपः तिलतैलेनदीपः मधुमत्स्याश्वनैवेद्यंतिलामधुचहोमद्रव्यंशांति
र्भवति ॥७॥ इतिवारशांतिः॥प्रतिपद्युत्थितोव्याधिर्द्वादशाहेनमुंचति॥अग्निस्तुदेवतातत्रकृसरान्नबलिंहरेत् ॥ १॥ द्वितीयायांभवेद्व्याधिः
पंचरात्रेणमुंचति॥ब्रह्मातुदेवतातत्रपायसेनबलिंहरेत् ॥२॥तृतीयायांभवेद्व्याधिः सप्तरात्रेणमुंचति॥कामस्तुदेवतातत्रघृतान्नेनबलिंहरेत् ॥३॥
चतुर्थ्यामुत्थितोव्याधिर्दशरात्रेणमुंचति॥चंद्रस्तुदेवतातत्रमुद्गान्नेनबलिंहरेत् ॥४॥ पंचम्यामुत्थितोव्याधिर्नवरात्रेणमुंचति॥नागस्तुदेवता
तत्रदुग्धान्नेनबलिंहरेत्॥५॥ षष्ठ्यांसमुत्थितोव्याधिश्चतूरात्रेणमुंचति॥स्कंदस्तुदेवतातत्रमुद्गान्नेनबलिंहरेत् ॥६॥ सप्तम्यामुत्थितोव्याधिर
ष्टरात्रेणमुंचति ॥अर्यमादेवतातत्रगुडान्नेनबलिंहरेत् ॥७॥अष्टम्यामुत्थितोव्याधिर्दशरात्रेणमुंचति ॥बृहस्पतिर्देवतात्रपायसान्नंबलिंहरेत्।८
नवम्यामुत्थितोव्याधिमरणंनिश्चितंभवेत्।यमस्तुदेवतातत्रमाषान्नेनबलिंहरेत्॥ ९॥दशम्यामुत्थितोव्याधिः पंचरात्रेणमुंचति।सवितादेवतात
त्रघृतान्नेनबलिंहरेत्॥ १०॥एकादश्युत्थितोव्याधिस्त्रिरात्रेणचमुंचति ॥महाविष्णुर्देवतात्रपूपान्नेनबलिंहरेत्॥ ११॥द्वादश्यामुत्थितोव्याधिर्मर
णंनिश्चितंभवेत्।रोगिणोनाविनिर्मुक्तिर्यमलोकंसगच्छति १२त्रयोदश्युत्थितोव्याधिः सप्तरात्रेणमुंचति।वरुणोदेवतातत्रलड्डुकान्नंबलिंहरेत् १३

चतुर्दश्यां भवेद्व्याधिर्मृत्युर्दोवाद्विमासकः ॥ मुंचंतिदेवताःसर्वाः पिष्टान्नेनबलिंहरेत् ॥ १४ ॥ पूर्णिमायांभवेद्व्याधिस्त्रिरात्रेणप्रमुंचति ॥ चंद्रस्तुदेवता
तत्रदध्योदनबलिंहरेत् ॥ १५ ॥ अमावस्यांभवेद्व्याधिर्मासेनैकेनमुंचति ॥ अथवाष्टाचत्वारिंशद्दिनानिदाहपीडितः ॥ ३० ॥ महामृत्युर्भ
वेत्तेनयमलोकंसगच्छति ॥ तत्रशांतिंप्रवक्ष्यामिसर्वदोषोपशांतये ॥ पितॄणांप्रतिमाकार्यासौवर्णीकर्षसंमिता ॥ येचेहपितरइतिपूजामंत्रउदी
रितः ॥ कृष्णागरुश्चंदनंचकृष्णपुष्पैस्तुपूजयेत् ॥ समिदाज्यतिलैर्माषचर्वाज्येनचहोमयेत् ॥ अष्टोत्तरशतंवापिअष्टाविंशतिरेववा ॥ कृ
ष्णागौश्चप्रदातव्याआचार्यायसदक्षिणा ॥ ब्राह्मणान्भोजयेत्पश्चादेकादशस्त्रशक्तितः ॥ सर्वारिष्टप्रशांत्यर्थंदीर्घायुश्चसुखीभवेत् ॥ रविवा
रेभवेद्व्याधिर्ज्वरदाहेनपीडितः ॥ सवितादेवतातत्रपायसान्नंबलिंहरेत् ॥ १ ॥ इंदुवारेभवेद्व्याधिःसप्तरात्रेणमुंचति ॥ सोमस्तुदेवतातत्रघृ
तान्नेनबलिंहरेत् ॥ २ ॥ भौमवारेभवेद्व्याधिःक्लेशायमरणायच ॥ कुजस्तुदेवतातत्रहरिद्रान्नबलिंहरेत् ॥ ३ ॥ बुधवारेभवेद्व्याधिःक्लेशायमर
णायच ॥ बुधस्तुदेवतातत्रमुद्गान्नेनबलिंहरेत् ॥ ४ ॥ गुरुवारेभवेद्व्याधिःपञ्चरात्रेणमुंचति ॥ गुरुस्तुदेवतातत्रहरिद्रान्नंबलिंहरेत् ॥ ५ ॥ भृगुवारे
भवेद्व्याधिःसप्तरात्रेणमुंचति ॥ भृगुश्चदेवतातत्रहरिद्रान्नंबलिंहरेत् ॥ ६ ॥ शनिवारेभवेद्व्याधिर्मासार्द्धेनविमुंचति ॥ शनिस्तुदेवतातत्रमाषान्नेन
बलिंहरेत् ॥ ७ ॥ पञ्चराश्यादिषड्वर्गाद्बलिंदद्यात्तदीश्वरे ॥ योबालिंकुरुतेसम्यग्रोगीरोगात्प्रमुच्यते ॥ आधाननिधनप्रत्यग्जन्माह्वयविपत्करे ॥
नक्षत्रेजनितेव्याधौक्लेशायमरणायच ॥ आश्लेषार्द्रात्रिपूर्वायमवरुणमरुच्छक्रतारानलाःस्युर्द्वादश्यांस्कंधरिक्तातिथिषुचरविजारार्कवारेषुधि
याम् ॥ रोगःसंजायतेतेयमपुरमचिरात्प्राप्नुवंत्येवचंद्रेजन्मन्यष्टाख्यबंधुव्ययभवनगतेमृत्युलग्नेचराशौ ॥ इतिदिनकरभट्टकृतेशांतिसारेव्याये

नक्षत्रादिशांतयः ॥अथज्वरशांतयःमदनरत्नेआश्रेयप्रोक्तनक्षत्रपरिशिष्टे॥ अश्विन्यांज्वरोत्पत्तिश्चेद्दशदिनानिपीडानीलोत्पलपुष्पैःपूजागुग्गु
लुर्धूपःक्षीरलड्डुकंनैवेद्यंदेवस्यत्वेतिपूजामंत्रः ॥ क्षीरवृक्षसमित्प्रधानद्रव्यम् ॥ गायत्र्याष्टशतंहुत्वादध्योदनबलिंहरेत् ॥ एकादशदिनादार
भ्यपंचविंशतिदिनांतेसुखीस्यात् ॥ १॥ भरण्यांज्वरोत्पत्तिश्चेन्मृत्युःसंदेहोवागुडापूपंनैवेद्यंकृष्णसुरभिपुष्पंमहिषाक्षोधूपःत्र्यंबकमितिपूजा
मंत्रः॥ घृतमधुतिलाहोमद्रव्यंगायत्र्याष्टोत्तरशतंयमायहुत्वाएकविंशतिदिनांतेसुखीस्यात्॥२॥ कृत्तिकायांज्वरश्चेन्नवदिनानिपीडाघृतौदनं
नैवेद्यंयूथिकापुष्पपूजासर्पिर्धूपःपुनंतुमांदेवजनाइतिपूजामंत्रः ॥ सावित्र्याष्टोत्तरशतंदध्योदनंचहुत्वाहुतशेषेणबलिंहरेत्पंचदिनादारभ्यएक
विंशतिदिनांतेसुखीस्यात्॥३॥ रोहिण्यांज्वरश्चेन्नवदशत्रीणिदिनानिपीडाक्षीरान्नंनैवेद्यंकमलपुष्पपूजासर्जरसोधूपःनमोब्रह्मणइतिपूजामंत्रः
घृतंसर्वधान्यानिचहोमद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वाक्षीरान्नेनप्रजापतयेबलिंदद्यात्त्रिदिनादारभ्यनवदिनांतेसुखीस्यात्॥४॥ मृगशिरसिज्व
रश्चेत्पंचदिनानिपीडापायसंनैवेद्यंकुमुदोत्पलपुष्पपूजादशांगोधूपःनवोनवइतिपूजामंत्रः मुद्गतिलपंचगव्यंहोमद्रव्यंसावित्र्याष्टोत्तरशतंहु
त्वामुद्गतिलैश्चंद्रायबलिंदद्यात्पंचदिनादारभ्यनवदिनांतेसुखीस्यात्।५ आर्द्रायांज्वरश्चेन्मृत्युर्दिनान्येकाविंशतिंपीडावासोहालकंनैवेद्यंधत्तूर
पुष्पपूजाअगरुर्धूपःनमःशंभवेइतिपूजामंत्रः।मध्वाज्यंहोमद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वापायसान्नेनरुद्रायबलिंदद्यात्।पंचदिनादारभ्यदशदि
नांतेसुखीस्यात् ६ पुनर्वसौज्वरश्चेत्सप्तदिनानिपीडागुडौदनंनैवेद्यंमल्लिकापुष्पपूजामलयजोधूपःअदितिर्द्यौरितिपूजामंत्रःघृततंडुलाःप्रधा
नद्रव्यंगायत्र्याष्टोत्तरशतंहुत्वाअदितयेगंधमाल्यौदनैर्बलिंदद्यात्सप्तदिनादारभ्यसप्तविंशतिदिनांतेसुखीस्यात्७ पुष्येज्वरश्चेत्सप्तदिनानिपी

डाखंडमंडकानैवेद्यंमल्लिकासरोरुहंचपुष्पंगुग्गुलुर्धूपः॥ बृहस्पतेअतीतिपूजामंत्रः॥घृतपायसंद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वागंधमाल्यौदनैर्बृह
स्पतयेबलिंदद्यात्।दिनत्रयादारभ्यसप्तदिनांतेसुखीस्यात् ८ आश्लेषायांज्वरश्चेन्नवदिना।निपीडापायसंनैवेद्यंअतसीपुष्पपूजाघृतमंडोधूपः
मधुवातेतिपूजामंत्रः।दधिमध्वाक्तकृसरान्नंद्रव्यंगायत्र्याष्टोत्तरशतंहुत्वासक्त्वन्नेननागायबलिंदद्यान्नशांतिश्चेदष्टदिनांतेमरणंस्यात्॥९॥मघा
यांज्वरश्चेन्मृत्युःएकविंशतिदिना।निपीडावाघृतपूरकनैवेद्यंचंपकपुष्पपूजागुग्गुलुर्धूपःपितुंनुस्तोषमितिपूजामंत्रः॥ घृतमधुमिश्रतिलाक्षतवट
पत्राणिद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वातिलैःपितृभ्योबलिंदद्यान्नशांतिश्चेद्दशदिनांतेमृत्युः॥१०॥पूर्वायांज्वरश्चेद्दशदिना।निषष्टिःपंचदशवापी
डारक्तमाल्यौदननैवेद्यंबिल्वफलधूपःअर्यमणंनुदेवमितिमंत्रः। घृतप्रियंगवःद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेणसूर्यायबलिंदद्यात्षड्दि
नादारभ्यषष्ठिदिनांतेसुखीस्यात्॥११॥उत्तरायांज्वरश्चेदेकविंशतिदिना।निपीडाकृसरंनैवेद्यंश्वेतकरवीरपूजाबिल्वफलधूपःयन्मेतिमंत्रःतिल
माषसर्पिर्व्रीहियवद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वातैरेवार्यम्णेबलिंदद्यादष्टादशदिनादारभ्यएकविंशतिदिनांतेज्वरमोक्षः॥१२॥ हस्तेज्वरश्चेन्मृ
त्युःसंदेहोवादिना।निपंचदशपीडाअपूपंनैवेद्यंरक्तकरवीरपूजादशांशोधूपःउदुत्यमितिमंत्रः॥दधिघृतंद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेण
बलिंदद्यात् पंचदिनादारभ्यएकविंशतिदिनांतेसुखीस्यात् ॥ १३ ॥ चित्रायांज्वरश्चेद्दिना।निपंचपीडामोदकंनैवेद्यंजपापुष्पपूजादशांगोधूप
श्चित्रंदेवानामितिमंत्रः॥जलमिश्रघृतंचित्रौदनंद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वात्वष्ट्रेघृतमिश्रमुद्गैर्बलिंदद्यात्।सप्तदिनादारभ्यपंचविंशतिदिनां
तेसुखीस्यात्॥१४॥स्वात्यांज्वरश्चेत्षष्टिदिनानिपीडादध्योदननैवेद्यंदमनकपुष्पपूजाश्वेतागरुर्धूपःसनःपितेवेतिमंत्रः॥घृताक्तयवाद्रव्यंसा

वित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेणवायवेबलिंदद्यादशदिनादारभ्यचत्वारिंशद्दिनांतेसुखीस्यात् ॥ १५ ॥ विशाखायांज्वरश्चेद्विंशतिदिना
निपीडागुडकंनैवेद्यंबंधूकपुष्पपूजादेवदारुधूपःशन्नइंद्राग्निइतिपूजामंत्रः ॥ दुग्धौदनघृतंद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वापयोमिश्रितैर्गंधमा
ल्यैरिंद्राग्निभ्यांबलिंदद्यादशदिनारभ्यविंशतिदिनांतेसुखीस्यात् ॥ १६ ॥ अनुराधायांज्वरोत्पत्तिर्दशदिनानिपीडापायसाज्यंनैवेद्यंआरक्तपु
ष्पंचंदनंधूपःकर्पूरदीपःमित्रस्यचर्षणीधृतइतिपूजामंत्रः ॥ घृताक्तसूरणकंदंद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वामधुशर्करापायसघृताक्तमाषान्नंमुद्ग
गंधपुष्पसहितंमित्रायबलिंदद्यात्पंचदिनादारभ्यदशदिनांतेसुखीस्यात् ॥ १७ ॥ ज्येष्ठायांज्वरश्चेन्मृत्युःसंदेहोवापंचदिनानिपीडाचित्रौदनंनै
वेद्यंपटोलीपुष्पपूजाकर्पूरागरुधूपःइंद्रंवोइतिपूजामंत्रः ॥ घृताक्तसूरणकंदंद्रव्यंसावित्र्याऽष्टोत्तरशतंहुत्वागंधपुष्पेणेंद्रायबलिंदद्यान्नशांतिश्चेद
न्यतरांगतिंगच्छतीत्याश्वलायनोमांडव्यश्च ॥ १८ ॥ मूलेज्वरश्चेन्मृत्युःसंदेहोवादशदिनानिपीडामत्स्यमांससुरापोलिकानैवेद्यंरक्ताशोकपुष्प
पूजामेषशृंगोधूपःमोषुणःपराइतिपूजामंत्रः ॥ सघृतकंदमूलंद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वानिर्ऋतयेपायसान्नेनबलिंदद्यात् १९ पूर्वाषाढायांज्वर
श्चेत्पंचविंशतिदिनानिपीडामंडकानैवेद्यंकह्लारपुष्पपूजामनःशिलाधूपःआपोहिष्ठेतिमंत्रः। रक्तशालिद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वावरुणाय
पायसान्नेनबलिंदद्याच्चतुर्दिनादारभ्यविंशतिदिनांतेसुखीस्यात् २० उत्तराषाढायांज्वरश्चेद्विंशतिदिनानिपीडापंचभक्ष्यनैवेद्यंपंचवर्णपुष्पैः
पूजालाक्षाधूपःविश्वेदेवासआगतइतिमंत्रः। घृतसल्लकीखंडानिद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वाविश्वेभ्योदेवेभ्यःपायसान्नेनबलिंदद्यादेकादशदि
नादारभ्यविंशतिदिनांतेसुखीस्यात् २१ श्रवणेज्वरश्चेन्मासद्वयंपीडासंदेहोवाक्षीरशर्कराघृतमंडकानैवेद्यंजातीपुष्पपूजादशांगोधूपःअतोदे

वाइतिमंत्रः।रक्ततंडुलाद्द्रव्यंसावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेणविष्णवेबलिंदद्यान्मासांतेवत्सरांतेवासुखीस्यात् २२ धनिष्ठायांज्वरश्चेत्पंच
दशदिनानिपीडापायसंनैवेद्यंशतपत्रपुष्पपूजागुग्गुलुर्धूपः त्रायंतामिहदेवाइतिमंत्रः॥ बिल्वोदुंबराश्वत्थसमिधोद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वा
घृतमिश्रमुद्गैर्वसुभ्योबलिंदद्याद्दशदिनादारभ्यपंचदशदिनांतेसुखीस्यात् ॥२३ ॥ शततारायांज्वरश्चेद्दशदिनानिपीडाघृतमंडकानैवेद्यंजलो
द्भवपूजाकर्पूरागरुर्धूपः इमंमेवरुणेतिमंत्रः॥ अश्वत्थसमिधः द्रव्यंसावित्र्याष्टोत्तरशतंहुत्वावरुणायपायसेनबलिंदद्यात्षष्ठदिनादारभ्यद्वादशदि
नांतेसुखीस्यात् ॥२४॥पूर्वाभाद्रपदायांज्वरश्चेन्मृत्युःसंदेहोवाद्वाविंशतिदिनानिपीडादधिघृतंनैवेद्यं अर्कपुष्पपूजासर्वौषधिर्धूपः शंनोअजए
कपादितिमंत्रः॥घृतकूष्मांडखंडद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वागंधमाल्यौदनैरजैकपादेबलिंदद्याद्दशदिनांतेशांतिर्मृतिर्वा॥२५॥ उत्तराभाद्रप
दायांज्वरश्चेत्पंचदशदिनानिपीडागुडसहितौदनंनैवेद्यंपंकजपत्राणिपुष्पंघृतधूपः विष्णोर्योनिमितिपूजामंत्रःघृतयुतमाषमुद्गाद्द्रव्यंसावित्र्या
ष्टोत्तरशतंहुत्वागंधपुष्पेणाहिर्बुध्न्यायबलिंदद्यात् ॥२६॥ रेवत्यांज्वरश्चेद्दशदिनानिपीडा।तिलतंडुलपिष्टंनैवेद्यंमंदारपुष्पपूजागुग्गुलुर्धूपःहं
सःशुचिषदितिमंत्रः ।।घृतान्नजलसहितकदलीफलानिचद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पादिभिःपूष्णेबलिंदद्यात्पंचदिनादारभ्याविंश
तिदिनांतेसुखीस्यात्॥२७॥इतिदिनकरभट्टकृतेशांतिसारेनक्षत्रशांतयः॥ अथांशविभागेनरोगदिनसंख्यादैवज्ञमनोहरेगर्गः॥कृत्तिकासुज्व
रस्तीव्रोव्याधिर्भवतिपैत्तिकः॥दशाहंप्रथमेपादेएवंज्ञात्वाविनिर्दिशेत्॥दशद्वितीयेभागेचतृतीयेदिनपंचकम् ॥ रोहिण्यांप्रथमेपादेनवरात्रंप्र
कीर्तितम् ॥ द्वितीयेद्विगुणंप्रोक्तंतृतीयेदशरात्रकम् ॥ नक्षत्रेचंद्रदैवत्येसप्ताहंप्रथमेंऽशके ॥ मध्यमांशेतथाविंशद्व्याधिर्द्वादशरात्रिकः ॥

तृतीयेमुनिभिःप्रोक्तोदिनानांपंचाविंशतिः॥ नक्षत्रेरुद्रदैवत्येपक्षःस्यात्प्रथमेंशके ॥ द्वादशाहंद्वितीयेचतृतीयांशेनजीवति ॥ पुनर्वसौज्वरं
विंद्यात्प्रथमेंशेत्रिपक्षकम् ॥ मध्यमेदिवसान्सप्ततृतीयेपंचाविंशतिः ॥ पुष्येस्यात्प्रथमेसप्तद्विकेविंशतिवासरान् ॥ तृतीयांशेभवेद्व्याधिर्दिव
सानेकविंशतिः ॥ आश्लेषायांचनक्षत्रेयस्यसंभवतिज्वरः ॥ मासत्रयेणप्रागंशेकष्टैर्जीवतिमानवः ॥ द्वितीयेचतृतीयेचमृत्युरेवनसंशयः ॥
नक्षत्रेपितृदैवत्येरोगोयत्रप्रकीर्तितः ॥ प्रथमेसप्तरात्रंस्याद्द्वितीयेद्वादशाहतः ॥ तृतीयेपंचदशभिरंतेविंशतिसंख्यया ॥ नक्षत्रेभगदैवत्ये
यस्यसंजायतेज्वरः ॥ प्रथमेपंचरात्रंस्यान्मध्येद्वादशवासरान् ॥ तृतीयेंऽशेतथाज्ञेयोमृत्युरेवनसंशयः॥उत्तराप्रथमेंशेतुवासराणिचतुर्दश ॥
द्वितीयेसप्तरात्रंतुतृतीयेदिवसानव ॥ यदिहस्तेभवेद्रोगःप्रथमेसप्तरात्रकम् ॥ चत्वार्यहानिद्वितीयेतृतीयेदिनपंचकम् ॥ मृत्युर्विन्द्या
त्तथापूर्वेत्वाष्ट्रयस्यभवेज्ज्वरः ॥ त्रिमासात्तुद्वितीयेंशेरोगोभवतिदारुणः ॥ तृतीयेंशेतथाज्ञेयोवासराणित्रयोदश ॥ वायव्येप्राक्सप्तदश
द्वितीयेचैकाविंशतिः ॥ अंत्येचैवतृतीयेंशेमृत्युमेवविनिर्दिशेत् ॥ प्रथमेंशेविशाखायास्त्रिगुणाःषोडशस्मृताः ॥ द्वितीयेद्वादशप्रोक्तास्तृती
येतुतथैवच ॥ मैत्रस्यादौषोडशाहाद्द्वितीयेपक्षमादिशेत् ॥ तृतीयेंशेचतुःषष्टिर्वासराणांमहामुने ॥ त्रिपक्षंप्रथमेज्येष्ठाद्वितीयेस्यात्तुषो
डश ॥ तृतीयेंशेपुनर्मृत्युरतिसारात्प्रजायते ॥ मूलांशेप्रथमेपक्षेद्वितीयेद्वादशैवतु ॥ तृतीयेनवरात्रेणक्लेशान्मुक्तोभवेन्नरः ॥ जलर्क्षादौत्रयो
मासामध्यमेहानिषोडश ॥ तृतीयेमृत्युरेवस्याद्रोगिणांतुमहामुने॥ विश्वर्क्षेप्रथमेपक्षंमध्येद्वादशरात्रकम् ॥ दिनानांविंशतिःप्रोक्तातृतीयेंशे
महामुने ॥ सप्ताहमादौश्रवणेविंशतिर्मध्यमांशके ॥ षोडशाहंतृतीयेंशेसत्यमेतद्ब्रवीम्यहम् ॥ धनिष्ठादौचविंशत्यामध्यमेमासयुग्म

कम् ॥ मासस्तृतीयेविज्ञेयोदैवज्ञैश्चनिवेदितम् ॥ वारुणेदारुणोयोगस्त्रिपक्षःप्रथमेंशके ॥ द्वितीयेमासषट्कंचषोडशाहंतृतीयके ॥ पूर्वा
भाद्रपदायांचदिनाष्टादशकंपुनः ॥ मध्येमरणकंविंद्यादंतेष्टाऽहात्सुखीभवेत् ॥ अहिर्बुध्न्येपक्षमादौमध्येषोडशरात्रकम् ॥ अंतेऽष्टा
विंशतिर्ज्ञेयापीडास्यात्पापकर्मभिः ॥ रेवत्यांप्रथमेंशेष्टौद्वित्रिभागेचषोडश ॥ दस्रेदशाहंपूर्वांशेमध्येसप्तदशाहतः ॥ अंतेत्रिंशद्दिना
नीतिकथितंपूर्वसूरिभिः ॥ भरण्यांप्रथमेंशेचसप्तवासरमेववा॥ मध्येमृत्युस्तथांत्येंशेरोगोमासत्रयावधिः ॥ एवंज्ञात्वासुधीःसम्यक्शांतिंकु
र्वीतयत्नतः॥ इतिदिनकरभट्टकृतेशांतिसारेनक्षत्रांशवशेनरोगदिनविवेकः॥ अथपंचकमरणादिशांतिः ॥ पंचकंनक्षत्रपंचकंसार्द्धचतुष्टयं
वा ॥ कुर्यान्नदारुतृणसंग्रहमंतकाशायानंमृतस्यदहनंगृहगोपनंच॥शय्यावितानमिहवासवपंचकंचेत्केचिद्वदंतिपरतोवसुदैवतार्धादितिदैवज्ञ
मनोहरोक्तेः ॥अत्रचमरणमप्यनिष्टावहम् ॥ त्रिपुष्करेपिमरणदाहावनिष्टौत्रिपादभेमरणमात्रंतत्तन्निमित्तशांतिविधिषुतथानिर्देशात् ॥ त्रि
पुष्करमाहभूपालवल्लभः ॥ रविभौममंदवारेभद्रातिथिषुत्रिपादकेधिष्ण्ये ॥ योगस्त्रिपुष्कराख्योद्विपादकेयमलनामास्यात् ॥रत्नकोशेतु॥
गुरुभौममंदवारेभद्रायांविषमपादर्क्षे ॥ योगस्त्रिपुष्करोयंत्रिगुणफलोयमलभेद्विगुणम् ॥ गर्गः पंचकेपंचगुणितंत्रिगुणंचत्रिपुष्करे ॥ यम
लेद्विगुणंसर्वंहानिवृद्ध्यादिकंभवेत्॥तत्रपंचकमरणेतदुत्तरंतदैववादाहःकार्यः ॥ कुंभमीनस्थितेचंद्रेमरणंयस्यजायते ॥ पंचकानंतरंकार्यंत
स्यदाहादिकंखलु ॥ अथवातद्दिनेकार्योदाहस्तुविधिपूर्वकमितिमदनरत्नेब्राह्मात् ॥ पंचकाभ्यंतरेनैवकार्यादाहादिकाक्रिया॥पुनर्मृत्युभया
त्तस्मात्पंचकानंतरंशुभेतिदैवज्ञमनोहरेगारुडाच्च ॥ तत्रैवकारिकायाम् ॥ सद्योदाहादिकंकार्यंपंचकर्क्षमृतस्यच ॥ वक्ष्यमाणविधानेनप्राय

श्चित्तपुरःसरम् ॥ चत्वारःपुरुषादर्भमयाःशवसमीपतः ॥ तन्मंत्रैर्मंत्रितास्स्थाप्यास्ततोदाहस्तुतैःसह ॥ सूतकांतेतुपुत्राद्यैःकार्यं
शांतिकमुक्तवत् ॥ कांस्यपात्रघृतंदद्यात्कुर्याद्ब्राह्मणभोजनम् ॥ मदनरत्नेगारुडे ॥ आदौकृत्वाधनिष्ठार्धमेतन्नक्षत्रपंचकम् ॥ रेवत्यंतं
सदादूष्यमशुभंदाहकर्मणि ॥ शवस्यचसमीपेतुक्षेप्तव्याःपुत्तलास्तदा ॥ दर्भमयास्तुचत्वारऋक्षमंत्राभिमंत्रिताः ॥ ततोदाहःप्रकर्त
व्यस्तैश्चपुत्तलकैःसह ॥ सूतकांतेतथापुत्रैःकार्यंशांतिकपौष्टिकम् ॥ पंचकेषुमृतोयोवैनगतिंलभतेनरः ॥ तिलांश्चैवहिरण्यंचतमुद्दिश्य
घृतंदहेत् ॥ तत्रैवब्राह्मे ॥ धनिष्ठापंचकेजीवोमृतोयदिकथंचन ॥ त्रिपुष्करेयाम्यभेवाकुलजान्मारयेद्ध्रुवम् ॥ तदानिष्टविनाशार्थं
विधानंसमुदीर्यते ॥ दर्भाणांप्रतिमाःकार्याःपंचोर्णासूत्रवेष्टिताः ॥ यवपिष्टेनानुलिप्तास्ताभिःसहशवंदहेत् ॥ प्रेतवाहःप्रेतसखःप्रेतपःप्रेत
भूमिपः ॥ प्रेतहर्तापंचमस्तुनामान्येतानिचक्रमात् ॥ अत्रप्रतिमागंधमाल्याद्यैरलंकृत्यप्रथमांशवस्यशिरसिद्वितीयांनेत्रयोस्तृतीयांवाम
कुक्षौचतुर्थींनाभौपंचमींपदयोर्न्यस्यतदुपरितन्नामभिर्घृतंहुत्वापुनर्यमायसोमंत्र्यंबकमितिमंत्राभ्यांप्रत्येकंतास्वाज्यंहुत्वादहेदितिभट्टाः ॥
सूतकांतेततःपुत्रःकुर्याच्छांतिकपौष्टिकम् ॥ कांस्यपात्रस्थितंतैलंवीक्ष्यदद्याद्द्विजन्मने ॥ ब्रह्मविष्णुमहेशेंद्रवरुणप्रीतयेततः ॥
माषमुद्गयवव्रीहिप्रियंग्वादिप्रयच्छति ॥ स्वर्णदानंरुद्रजाप्यंलक्षहोमोद्विजार्चनम् ॥ गोभूदानंषडंशेनकुर्याद्दोषोपशांतये ॥ अपरार्केपि ॥
धनिष्ठापंचकमृतेपंचरत्नानितन्मुखे ॥ प्रास्याहुतित्रयंतत्रहुनेद्दहवपामिति ॥ ततोनिर्हरणंकुर्यादेषसाग्नेर्विधिःस्मृतः ॥ इतरंनिखनेद्देवेज
लेवाप्रतिपादयेत्॥तत्रैव॥नीलकंहीरकंनीलंपद्मरागंचमौक्तिकम्॥ पंचरत्नमिदंप्रोक्तमृषिभिःपूर्वदर्शिभिः॥रत्नानांवाप्यभावेतुस्वर्णंकार्षार्द्धं

मेववा॥सुवर्णस्याप्यभावेतुआज्यंज्ञेयंविचक्षणैः॥घनिष्ठायांविशेषमाहबौधायनः॥वासवेमरणंचेत्स्याद्भूहेवापिपुनर्मृतिः॥सुवर्णंदक्षिणांदद्या
त्कृष्णवस्त्रमथापिवा॥अथत्रिपुष्करादिशांतिःमदनरत्नेगर्गः॥द्वित्रिपुष्करयोगेतुमृतिर्मृत्यंतरावहा। दहनेमरणेचैवत्रिगुण्यंस्यात्त्रिपुष्करे।खन
नेप्येवमेवस्याद्देहादोषोपशांतये ॥ तिलपिष्टैर्यवैर्वापिशरीरंतस्यकारयेत् ॥ शूर्पेनिधायालंकृत्यदाहयेत्पैतृकोपरि॥दाहमंत्रमाहबौधायनः॥
अग्नात्वामितिमंत्रेणतिलपिष्टंप्रदापयेत् ॥ द्वित्रिपुष्करयोर्दोषंत्रिभिःकृच्छ्रैर्व्यपोहति ॥ दैवज्ञमनोहरेगारुडे ॥ त्रिपुष्करेत्रयःकार्याःपुत्तला
द्वौद्विपुष्करे॥मृतस्यचसमीपेतुस्थाप्याःपिष्टमयास्ततः ॥ कार्योदाहस्तुतत्सार्धंसूतकांतेतुशांतिकम् ॥ कृत्वागाश्चहिरण्यंचदद्याद्वित्तंचश
क्तितः ॥तत्रैवप्रेतखंडे ॥ त्रिपुष्करमृतेदद्याद्गोत्रयंमूल्यमेववा ॥ द्विपुष्करेचगोयुग्मंततोदाहोनदोषकृत् ॥ अथत्रिपादशांतिः ॥अपरार्के॥
पुनर्वसूत्तराषाढाकृत्तिकोत्तरफाल्गुनी ॥पूर्वाभाद्रपदाविशाखाचज्ञेयमेतत्त्रिपादभम् ॥ त्रिपादर्क्षेमृतौतद्वद्धिरण्यशकलंमुखे ॥ तस्यपिष्टम
यंकुर्यात्पुरुषत्रितयंयतः ॥ होमंप्रतिमुखंकुर्यात्तथावहवपामिति ॥ कर्णायसंचकार्पासंकुसुंभंप्रतिपाद्य च ॥ निर्यातयसाग्निंसंकुर्याद्धुव्यग्नौवा
न्यमुत्सृजेत् ॥ मरणपद्धतौभट्टाः ॥ स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंततः॥अन्वाधानंनिर्वपणंदेवतानांतथाहुतीः॥ यमायधर्मराजाय
मृत्यवेचांतकायच॥औदुंबरायदध्नायनीलायपरमेष्ठिने॥वृकोदरायचित्रायचित्रगुप्तायवैक्रमात्॥ विधिनाश्रपणंकृत्वाएकैकामाहुतिंहुनेत् ॥
कृष्णांगांकृष्णवस्त्रांचहेमनिष्कसमन्विताम्॥दद्याद्विप्रायशांतायप्रीतोभवतुमेयमइति॥इयंशांतिःपंचकादिसाधारणीविधानमालायाम्॥ ध
निष्ठापंचकेयाश्चदेवताश्चत्रिपुष्करे ॥ ताःपूज्यास्तुप्रयत्नेनमंत्रैस्तल्लिंगसंज्ञकैः ॥ तिथिवारौचनक्षत्रंत्रिपुष्करइतिस्मृतः ॥ सर्वेषामपितेषांतु

त्रयोदेवाःप्रकीर्तिताः ॥ यमोरुद्रश्चमघवासंपूज्योविधिवद्बुधैः॥कुबेरस्यपृथक्पूजाविधातव्यामनीषिभिः ॥ होमंचविधिवत्कुर्यान्नक्षत्रशमनो
चितम्।सामान्यंचहविस्तेषांसाज्यंपायसमुत्तमम् ॥मंत्राभावेचगायत्रीपालाश्यःसमिधस्तथा॥होमांतेयजमानस्यविदध्यादभिषेचनम्॥ल
क्ष्मीसूक्तंजपेत्पश्चाद्दद्याद्दानानिभूरिशः॥लक्ष्मीनारायणप्रीत्यैमंचकंचसतूलिकम्॥वृषंगजंचमहिषंलोहंताम्रंचराजतम्॥ एतन्निर्मूलमितिशि
ष्टाः॥इतिशांतिसारेपंचकादिमरणशांतिः । अथद्वादशाब्दादूर्ध्वमवलोकनविधिःस्मृत्यंतरे । दंपतीपितृपुत्रौचस्वसारौभ्रातरौतथा॥ पितृव्य
मातुलौचैवदौहित्रौभागिनेयकौ॥पुत्रिकापितरौचैवभगिनीपितरौतथा ॥ द्वादशाब्देव्यतीतेतुदूरदेशंगतोयदि ॥ एतेषामेकमेकोपिनान्यो
न्यमवलोकयेत् ॥ इच्छंतिकेचिदाचार्या अन्योन्यमवलोकनम् ॥ शिवालयेथवातीर्थेस्नात्वाप्रज्वाल्यदीपकौ ॥ शिवंसंपूज्यविधिवद्बुभौ
तौदेवमध्यतः ॥ धृत्वाकांस्यमयंपात्रंसजलंरत्नपूरितम्॥शांतिकेमंत्रघोषैश्चद्विजैःसहविलोकयेत् ॥ आननंचैकमेकस्यदृष्ट्वासम्यक्शिवंनमे
त् ॥ ब्राह्मणेभ्योयथाशक्त्यादद्यात्पात्रंसदक्षिणम् ॥ अन्येभ्यश्चाथविप्रेभ्योयथावित्तानुसारतः ॥ तेभ्योपिदक्षिणांदत्त्वापूजयेच्चपुनःपुनः ॥
नत्वादेवंद्विजान्सूर्यमागच्छेत्स्वस्यमंदिरम् ॥ ततोव्याहृतिभिर्होमंशतमष्टोत्तरंतिलैः ॥ कृत्वाथभोजयेद्विप्रान्यथावित्तानुसारतः ॥ बांध
वैःसहभुंजीतसर्वारिष्टप्रशांतये ॥ इत्थंयःकुरुतेमर्त्यस्तस्यारिष्टंनविद्यते ॥ आयुष्कामोनरश्चैवमकृत्वानावलोकयेत् ॥ पूर्वंविलोकितानां
तुविधिरेषउदाहृतः॥नचैवापूर्वदृष्टाना।मितिप्राहुर्मनीषिणः ॥ पारिजाते ॥ द्वादशाब्देव्यतीतेतुनकुर्याद्भ्रातृदर्शनम् ॥ पित्रोःपुत्रस्यनैवाहु
र्महाहानिकरंभवेत् ॥ दर्शनंतुप्रकुर्वीतशिवंपूज्यशिवालये॥कांस्यपात्रंस्फोटयित्वाअंतःपटविधानतः॥मुखावलोकनंपश्चात्समालिंग्यविप

र्येयात् ॥ एवंकृतेविधानेतुदोषशांतिर्भविष्यति ॥ सूर्यारुणसंवादेतु ॥ गणेशमृत्युंजयविष्णुलक्ष्मीमघोरसंज्ञंचग्रहंघटेषु ॥ आवाह्य
संपूज्यचधान्यराशौहोमंचकुर्यादिहदेवमंत्रैः॥शिवपूजांप्रकुर्वीतप्रतिमापूजनंततः॥अघोरप्रतिमांदद्याद्ब्राह्मणायसदक्षिणाम्॥अनेनसहगच्छ
त्वंक्रीडस्वचसुखंचिरम्॥मांतथैवाधुनामुंचक्षमांकुरुममोपरि॥ शिवाग्रेतुसमागत्यकृत्वाचैवांतरेपटम्॥उभाभ्यांनारिकेलंचभङ्त्वाभूयोधि
गम्यताम् ॥ निवर्तसूक्तंजह्वादावघोरद्विजपुंगवम् ॥ अघोरप्रतिग्राहिणंब्राह्मणमित्यर्थः। विसर्जयेत्पुनस्तंचनैवपश्येत्कदाचन॥कांस्यपा
त्रेघृतंकृत्वाहष्ट्वारूपंस्वकंस्वकम् ॥ तत्पात्रंब्रह्मणेदद्याद्दक्षिणासंयुतंततः॥पादप्रक्षालनंकृत्वाआचम्यचयथाविधि॥ शांतिमंत्रान्पठेत्पश्चात्पू
जांगृह्यशिवंव्रजेत्॥धूपदीपादिनैवेद्यंतांबूलैर्दक्षिणादिभिः॥वस्त्रैराभरणैर्दिव्यैस्तोषयेच्छंकरंततः ॥ शिवस्यप्रार्थनांकृत्वाजपेत्सूक्तंकानिक्रद
त्॥प्रदक्षिणीभद्रंचेतिपठेत्सूक्तंशिवोपरि॥पुष्पांजलिंचयुगपद्दद्याच्चैवांतरंपटम्।पुनःपुनर्नमस्कृत्यपश्चात्तंचविलोकयेत् ॥प्रणामालिंगनंकुर्या
त्स्वागतंक्षेमपृच्छनम् ॥ ततोद्विजवराःसर्वेसूक्तानिस्वस्तिकानिच ॥ पठित्वाहोमदेशंचगच्छेयुश्चमुदान्विताः॥ प्रतिमापूजनंकृत्वावह्नेश्चा
पियथाक्रमम् ॥ होमशेषंसमाप्यैवंब्रह्माचार्यादिकान्यजेत् ॥ अभिषेकंततःकुर्युरुभयोर्मंगलंवदेत्॥स्वस्तिशब्दंतथाब्रूयुर्गांचदद्यात्पयस्वि
नीम्॥देवान्वह्निंविसृज्याथकुंभेलक्ष्मींनिधायच॥ आचार्यब्रह्मऋत्विग्भिर्वाद्यघोषपुरःसरम् ॥ स्वगृहंचशनैर्गच्छेत्सार्द्धंतेनप्रवासिना॥ देवा
नांचैवतृप्त्यर्थंकर्तव्यंद्विजभोजनम् ॥ एवंकृतेविधानेतुनस्याद्विघ्नंकदाचन ॥ देवद्विजप्रसादेनकल्याणंस्यान्नसंशयः ॥ आयुष्यंक्षेममारोग्यं
पुत्रपौत्रप्रवर्द्धनम्॥ सौभाग्यमतुलंचैवलभेदस्यप्रसादतः ॥ आरामेऽण्यतीर्थेवादेवागारेऽथसंगमे॥ सुपवित्रनदीतीरेविधानंक्षेमदंभवेत् ॥

अथप्रयोगः॥ सुमुहूर्तेचंद्रताराबलान्वितेपुण्याहंवाचयित्वाचार्यब्रह्मर्त्विगादीन्कृत्वादेशकालौसंकीर्त्यास्माकंसकुटुंबानांक्षमायुरारोग्यैश्वर्या
भिवृद्धयर्थंसर्वत्रमंगलाभ्युदयार्थमात्मनोबंध्वादीनांद्वादशाब्दाधिकप्रवासस्थितिजनितपापग्रहपीडापरिहाराथवियोगग्रहशांतिंकरिष्येइ
तिसंकल्प्य।तदंगस्थंडिलोल्लेपनकलशस्थापनेकरिष्यइतिसंकल्प्यदधिदूर्वामृत्पंचगव्यसर्वौषधीहिरण्यरत्नफलपुष्पपंचपल्लवाद्यलंकृतेषुपच
धान्यपुंजस्थितपंचकलशेषुतीर्थवारिणापूर्णेषुस्थापितवंशपात्रोपरिअष्टदलालंकृतवस्त्रेषुगणेशमृत्युंजयविष्णुलक्ष्म्यघोरप्रतिमानामग्न्युत्ता
रणंकृत्वातत्तन्मंत्रैःकलशावाहनपूजनस्थापनादिपूर्वकंतत्तन्मंत्रैस्तत्तद्देवतानामावाहनादिपूजांकुर्यात् ॥ ततोन्वाधानंकृत्वातत्तदुद्देशेनप्रति
दैवतंदूर्वातिलाज्यचरुशर्कराभिरष्टसहस्रमष्टशतमष्टाविंशतिंवाहुतीर्हुत्वाअघोरमंत्रेणाघोरायहुत्वारुद्राभिषेकंकृत्वाशिवालयेंतःपटंधृत्वोभा
वपियुगपच्छिवस्यपुरतोनारीकेलफलंप्रत्येकंभङ्क्त्वाहोमदेशगत्वानिवतध्वमितिसूक्तंजपेताम्॥ततोऽघोरंप्रार्थयेताम्। अघोरत्वंमहाकायनृ
णांविश्लेषकारक ॥त्वत्क्षोभजनितंघोरंनृणांविश्लेषजंफलम्॥ वियोगविषमाक्षस्त्वंविषमांघ्रिकरायुध॥ विबुद्धिर्विगतस्थायीविलापीविगताश्र
यः ॥ योगभ्रष्टोयोगध्वंसीयोगीयोगविघातकः ॥ नृनार्योर्योगहंताचबंधुयोगवियोगकृत् ॥ गच्छत्यनुदिनंचोवाम्प्राणिनांक्लेशहेतवे ॥
योगविश्लेषकार्यत्वाद्वियोगंत्वांप्रचक्षते ॥ भावियोगमहाघोरप्राणिनांक्लेशदायक ॥ शरणागतमापन्नंत्राहिमांशोकसागरात् ॥
द्विजंसमभ्यर्च्याघोरप्रतिमांदद्यादाज्यावेक्षणंकृत्वाशांतिमंत्रान् जपित्वापादौप्रक्षाल्यशिवंगंधपुष्पैस्तोषयित्वास्वस्तिनोआनोभ
द्राकनिक्रदत्प्रदक्षिणीभद्रंवदेतिसूक्तानिपठन्अंतःपटंनिष्कास्ययुगपच्छिवोपरिपुष्पांजलिंदत्त्वामुहुःशिवंनमस्कृत्यसंप्राथ्यबंधुंविलोकये

त् ॥ तौप्रणामक्षेमालिंगनेकृत्वा स्वागतंपृष्ट्वायेयज्ञेनेत्याशिषोदत्त्वाहोमशषंसमाप्याभिषेकंकृत्वाभ्युद्गासनंकृत्वाकुंभेलक्ष्मीप्रतिमांनिधायवा
द्यघोषपुरःसरंब्राह्मणैःसहप्रवासिनाचसहगृहंप्रविशेत्ततोब्राह्मणान्संभोज्यद्विजान्वस्त्रालंकारदक्षिणाभिःसंतोष्यस्वस्तिभवंतोब्रुवन्त्विितिब्रू
यात्तेचस्वस्तिरस्त्वितिप्रत्यूचुः ॥ इतिप्रवासादागतगृहविधानम् ॥ अथतडागादौमृतदोषशांतिः ॥ नदीनवसमुद्रेषुमृतदोषो
नविद्यते ॥ वापीकूपतडागेषुमृतस्यशुद्धिरिष्यते ॥ सूतकानंतरंशुद्धिःशौनकेनह्युदीरिता ॥ उद्धरेच्छतसाहस्रंतदर्धार्द्धमथा
पिवा ॥ अष्टोत्तरसहस्रंवाकलशैर्जलमुद्धरेत् ॥ मृततारतम्येनब्राह्मणादिवर्णभेदेनगवादिपशुभेदेनकलशोद्धारणम्॥प्रयोगंविधिवत्कृत्वाजा
तदोषपुरःसरम्॥ जलदेवार्चनंकार्यंमंडलेभद्रसंज्ञके ॥ जलदेवतावरुणःसदीपंचबलिंदद्याद्देवताभ्योयथाविधि ॥ एवंपूजाविधातव्या
ततोहोमंसमारभेत् ॥ लोकपालग्रहादिभ्योजलाधिपतयेतथा ॥ अष्टोत्तरशतंचैवप्रत्येकंतिलसर्पिषा ॥ जलशुद्धिंततः कुर्याद्ब्रह्मकूर्चपुरः
सरम् ॥ मृत्तिकाभिश्चतोयैश्चतिलामलकभस्मभिः ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥ राजद्वाराच्चतुष्पथादितिमृदः । ज
लानिनदीनदसमुद्रगंगादिजीर्णकूपप्रस्रवणोदकःयज्ञकुंडभस्मतिलामलकशंखोदकविष्णुपादोदकैर्जलावगाहनम्॥ पावमानीभिःप्रायश्चित
सूक्तैःपौरुषंपावमानंचनतमंहइतीतिचह्रस्वसूक्तंजपेत्अन्यान्यपिवारुणानिजप्त्वाजलमवगाह्यशांतिंपठेतकस्यनूनमित्यादीनिस्वस्तिवा
चनपूर्वंतुहोमशेषंसमापयेत् ॥ अभिषेकंततःकृत्वाब्राह्मणान्भोजयेदथ॥ दक्षिणाभिश्चसंतोष्यतेभ्यआशिषोगृहीत्वाजलशुद्धिर्भवेद्ध्रुवमिति
जलशुद्धिः ॥अथगजशांतिः॥वसिष्ठसंहितायाम् ॥ यस्यराज्ञोगजाःसंतितदधीनाखिलाधरा॥तस्माद्गजाःकल्पनीयाःपोषणीयाश्चसर्वदा ॥

कल्पनंपोषणंतेषांगजवक्रप्रसादतः।तस्माद्गजाननोराज्ञापूजनीयःप्रयत्नतः।गजाननोगजपतिर्गजसूक्तंजपेत्सदा।असावेवप्रभुस्तेषांपोषणेशो
षणेसदा ॥पुरामहेश्वरोदेवउक्तवानस्यजन्मनि ॥ यदायदागजानांचजायंतेव्याधयस्तदा ॥ तदाशांतिंप्रकुर्वीतपूजाहोमजपादिभिः ॥ भानु
वारेचसंक्रांतौग्रहणेचंद्रसूर्ययोः ॥ विषुवत्ययनेचैवव्यतीपातेदिनक्षये॥ अन्यस्मिन्पुण्यदिवसेचद्रताराबलेष्वपि॥दिग्बंधनंसमेभूमौईशान्ये
चसुरालये ॥ मध्याद्विनिर्गतैःसूत्रैश्चतुरस्रंतुकारयेत् ॥मंडपंत्वष्टभिर्हस्तैःसूत्रमार्गेणकारयेत् ॥ चतुःषष्टिदलंकृत्वामंडपांतःक्षमातले ॥मध्ये
चतुष्पदेव्योममंडलंवेदिकास्थलम्॥द्वादशांशात्मकंवायुमंडलंव्योमवेष्टितम्॥ विंशांशकात्मकंवाह्निमंडलंव्योमवेष्टितम ॥ निखिलान्मंड
लान्वेष्ट्यामाहिमंडलमास्थितम् ॥ ज्ञात्वाग्निमंडलंतत्रदिक्षुकुंडचतुष्टयम् ॥ प्राग्रेखामध्यमंकुंडद्वारंचैकांशमानतः ॥ तथैवकुंडद्वारंचशेषदि
क्षुप्रकल्पयेत्॥पूर्वोक्तलक्षणोपेतंमेखलावप्रसंयुतम्॥ तोरणाद्यैरलंकृत्यवितानंवेदिकोपरि ॥ आशिषोवाचनंकुर्यात्सम्यक्संकल्पपूर्वकम् ॥
ऋत्विजोवरयेत्पश्चाच्चतुर्विंशतिसंख्यकान् ॥ तेषांमध्येशिष्टतममाचार्यंतंप्रकल्पयेत्॥मधुपर्कादिकंकृत्वाततत्कार्येनियोजयेत्॥ब्राह्मणांश्चतु
रोहोतॄन्कुंडेषुविनियोजयेत्॥द्वारेषुजापकानष्टौषट्संख्यानंगजापकान्।गंधपुष्पादिकंकृत्वा।तत्रकार्येप्रयोजयेत् ॥ ब्रह्मणःपंचविप्रांश्चयोजये
च्चयथाविधि ॥कारयेच्चसुवर्णेनगजवक्रंचतुर्भुजम् ॥ अक्षमालापरश्वधबीजदंतधरंक्रमात् ॥ वाहनायुधवर्णादिसर्वेषांकथितंपुरा ॥ तत्पुरु
षायविद्महेवक्रतुंडायधीमहि॥तन्नोदंतीप्रचोदयात्॥वामदेवऋषिःछंदोसौतत्रगायत्रीगजवक्रोस्यदेवता।कुंभाष्टकंचतुर्द्वारेपूर्वोक्तंद्रव्यसंयुतम्॥
लिखेदष्टदलंपद्मंवेदिकातंडुलोपरि॥गजवक्रंकर्णिकायांलोकपालान्दलेषुच॥गणेशशक्रयोर्मध्येपद्ममष्टदलंलिखेत्॥ आदित्यादिग्रहांस्तत्रपू

जयेत्पूर्ववत्क्रमात्।गणेशयमयोर्मध्येपंचकोणंप्रकल्पयेत्।तत्रपंचमहाभूतानचयेत्पूर्ववत्तदा।गणेशांबुपयोर्मध्येत्रिकोणंमंडलंलिखेत्॥ तत्रार्च
येदष्टभुजांमहिषासुरमर्दिनीम्।गणेशसोमयोर्मध्येवर्तुलंमंडलंलिखेत्॥तत्रार्चयेत्प्रयत्नेनचाश्विनीदेवताद्वयम्। ऐशान्यामर्चयेद्रुद्रंमंडलेतेजसां
निधिम्।आग्नेय्यामर्चयेद्विष्णुमंडलंहाटकात्मकम्।वेदात्मकंचनैर्ऋत्यामर्चयेद्ब्रह्ममंडलम्। वायव्यामर्चयेत्सम्यग्मंडलंप्रणवात्मकम्।रुद्रेणपु
रुषसूक्तेनचतुर्वेदादिमंत्रकैः ॥प्रणवस्यऋषिश्छंदोदेवताकथितापुरा॥ तत्तद्वर्णैर्गन्धपुष्पैर्वस्त्रधूपैश्चदीपकैः।सम्यक्कृत्वोपचाराणिरक्तवस्त्रैर्गजा
ननम्॥प्राक्कुंडंगजवक्रस्यपंचभूतात्मकंततः ॥दुर्गाकुंडंप्रतीच्यांचउदक्कुंडंग्रहात्मकम्॥ तदेवाश्विनकुंडंचग्रहहोमादितःपरम् ॥ दिक्कुंडेदिक्षु
जिग्घोमःकर्तव्यस्स्वस्वमंत्रकैः॥ स्वगृह्यविधिनाकुंडेस्थापयेच्चहुताशनम् ॥ मुखांतेस्वस्वकुंडेचजुहुयात्तन्मुखाहुतिम् ॥ पलाशसमिदा
ज्यान्नैःपृथगष्टोत्तरंशतम्॥ग्रहमंत्रैःसमिद्भिश्चहोमंपूर्ववदाचरेत् ॥ चतुर्दिक्षुचतुर्वेदपरायणपराद्विजाः॥ अब्लिंगैर्वारुणैःसूक्तैःकलशार्चापरा
श्वते॥नैवेद्यंविविधान्नेनबहुवाद्यैःसमर्पयेत्॥तांबूलानिततोदद्याच्छांतिवाचनपूर्वकम्॥एकरात्रंत्रिरात्रंचनवरात्रमथापिवा॥ अनेनविधिनाकु
र्यादेकभक्तोजितेंद्रियः॥ तिलहोमंव्याहृतिभिःसहस्रंचाष्टसंयुतम्॥ एवंप्रतिदिनंसम्यग्व्रीहिभिश्चयथापुरा॥संपूर्णेदिवसेकर्ताकुर्यात्पूर्णाहुतिं
ततः ॥ मंत्रपूतोदकैःकर्तागजानामार्जयेत्ततः ॥ अलंकृत्यपुनःसम्यग्गंधपुष्पादिभिस्तथा॥ हुतशेषंततोदद्यादौपनायनिकंगजे ॥ दोषशां
त्यैपंचदुर्गारुद्रंपुरुषसूक्तकम् ॥ पंचब्रह्मादिभिर्मंत्रैर्गजशालांसुमार्जयेत् ॥ गृहीत्वासुकृतंतेभ्योदक्षिणांचसमर्पयेत्॥ आचार्यायततोदद्यान्नि
ष्काणामेकविंशतिम् ॥ तदर्धमितरेभ्यश्चयजेच्छेषान्स्वशक्तितः॥ ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुंजीतबंधुभिः॥एवंयःकुरुतेसम्यग्गजशां

तिंनृपोत्तमः॥सर्वान्कामानवाप्नोतिगजवृद्धिंलभेत्तुसः।इतिगजशांतिः अथाश्वशांतिः।तत्रैव,भूपतेर्यस्यसन्त्यश्वाःसएवविजयीरणे।श्रीमान्सए
वतत्तस्मात्कार्यमश्वाभिरक्षणम्।सूर्यःस्वात्यृक्षसंपातेजायंतेबहवोरुजः।यदायदारुग्जननमश्वानामथवातदा ॥ सलोकपालोरेवंतपूजांहोमंच
कारयेत् ॥ भानुवारेचसंक्रांतावयनेविषुवद्वये॥ दिनक्षयेव्यतीपातेद्वादश्यामश्वभेपिवा॥ऐशान्यामष्टभिर्हस्तैश्चतुर्भिर्वापिमंडपम् ॥ चतुर्द्वारं
वितानस्रक्तोरणाद्यैरलंकृतम् ॥ तन्मध्येवेदिकांतस्यपंचविंशतिमानतः ॥ मंडपस्यबहिःकुंडंप्राच्यांपूर्वोक्तलक्षणम् ॥ वरयेत्पूर्ववद्विप्रा
न्स्वस्तिवाचनपूर्वकम् ॥ सूर्यपुत्रंहयारूढंपंचवक्त्रंदशांबकम् ॥ रक्तवर्णंकशांखड्गंरेवंतंद्विभुजंस्मरेत् ॥ सूर्यपुत्रनमस्तेस्तुनमस्तेपंचवक्त्रक ॥
नमोगंधर्वदेवायरेवंतायनमोनमः ॥ मंत्रेणानेनरेवंतंगंधवस्त्राक्षतादिभिः॥ विधिवद्वेदिकामध्येतंडुलोपरिपूजयेत् ॥ परितःस्वस्वमंत्रैस्ता
न्लोकपालांश्चपूजयेत् ॥ प्राग्वदेवकशांखड्गंरेवंतस्यसमीपतः ॥ ऋग्वेदादिचतुर्वेदान्जपेद्द्वारेषुपूर्ववत् ॥ पूर्णकुंभान्रक्तवर्णान्गंधवस्त्राद्यलं
कृतान् ॥ पंचत्वक्पल्लवोपेतानष्टमृद्भिःसुसंयुतान् ॥ द्वारेषुस्थाप्यचाब्लिंगमंत्रैःकार्यंसमर्चनम् ॥ रेवंतपूजामाचार्यःकृत्वागृह्यविधानतः ॥
स्थापयेच्चव्याहृतिभिस्तस्मिन्कुंडेहुताशनम् ॥ ततस्तत्राज्यभागांतेमुखाहुतिमतंद्रितः ॥ अग्नयेस्वाहेतिहुत्वाघृतेनादौप्रयत्नतः ॥ रेवंत
पूजामंत्रेणआद्यंतप्रणवेनच ॥ पलाशसमिदन्नाज्यैःपृथगष्टोत्तरंशतम् ॥ आचार्योजुहुयाद्व्रीहींस्तिलान्व्याहृतिभिस्ततः॥एकरात्रंत्रिरात्रंवा
नवरात्रमथापिवा ॥ अनेनविधिनाकुर्यादेकभक्तोजितेंद्रियः ॥ जपादिपूर्वकंसम्यक्कर्तापूर्णाहुतिंहुनेत् ॥ ततोमंगलघोषैश्चनैवेद्यं
चसमर्पयेत् ॥ ततस्तद्धुतशेषेणसहकुंभोदकेनच ॥ प्रदक्षिणंव्रजन्नश्वान्सुप्रीतोबलिमुत्तमम् ॥ जीमूतस्येत्यनूवाकांश्चतुरोदिक्षुनिक्षि

पेत ॥ आचार्यायततोदद्याद्दक्षिणांगोचतुष्टयम् ॥ तदर्द्धंवातदर्द्धंवायथावित्तानुसारतः ॥ ब्राह्मणेभ्योजापकेभ्यस्त्वाचार्यार्द्धंप्रदापयेत् ॥
ब्राह्मणान्भोजयेत्पश्चाच्छांतिवाचनपूर्वकम् ॥ एवंयःकुरुतेसम्यगश्वशांतिमनुत्तमाम् ॥ मुच्यतेसर्वरोगेभ्योवर्द्धतेनात्रसंशयः ॥
इत्यश्वशांतिः ॥ अथगजनीराजनम् ॥ उत्पलपरिमलेशौनकः ॥ नवम्यामाश्वयुङ्मासिकार्तिक्यामथवापिवा ॥ हस्तिनीरा
जनंकुर्याद्राजागजसमृद्धये ॥ प्रागुदक्प्रवणेदेशेविशालेसुमनोहरे ॥ पूर्वस्यामुत्तरस्यांवानगरस्यबहिर्दिशि ॥ पंचाशद्धस्तनिर्माणं
देशंसंप्रोक्ष्यवारिणा ॥ तन्मध्येतोरणंकुर्याद्वनस्पतिमयंशुभम् ॥ स्योनापृथिवीत्यनयास्थापितंसुदृढंसमम् ॥ षोडशारत्निमुत्से
धाद्विस्तारेणतदर्द्धकम् ॥ ऋजुनिरीक्षणंस्निग्धंवस्त्रयुग्मविभूषितम् ॥ उच्छ्रयस्वेतिमन्त्रेणसंप्रोक्ष्यपरितोजनैः ॥ अन्यैश्चैवाब्लिं
गमंत्रैर्गन्धपुष्पैस्तथार्चयेत् ॥ कोणस्तंभद्वयेवेदिंद्विहस्तेकारयेदथ ॥ फलपुष्पैस्तबककिसलयैर्भूषयेत्ततः ॥ होमंतद्दक्षिणेकुर्यात्समाहित
मनागुरुः ॥ कुंडेवास्थंडिलेवाथयज्ञतंत्रंप्रकल्प्यच ॥ पूर्णकुंभानष्टदिक्षुविन्यसेद्धान्यराशिषु ॥ तेष्वावाह्यदिशांपालान्पूजयेद्वस्त्रमाल्यकैः ॥
योजातइतिसूक्तेनप्रत्यृचंजुहुयाद्घृतम् ॥ मधुच्छंदसआज्येनसूक्तेनाज्यंयजेत्ततः ॥ आचिदित्यादिसूक्तेनयाम्यहोममतःपरम् ॥ एवंकृत्वा
तुविधिवन्निवृत्तेजुहुयाद्घृतम् ॥ यच्चिद्धितेतिसूक्तेनजुहुयाद्वरुणायच ॥ आवायोवितिसूक्तेनयजेद्वायुंसमाहितः ॥ त्वंसोमप्रतिसूक्तेनसोमाय
जुहुयाद्धविः ॥ पश्चाद्रौद्रेणकौत्सेनरुद्रमिष्ट्वायथाक्रमम् ॥ आनोभद्रेतिसूक्तेनहोमशेषंसमापयेत् ॥ वरुणायैवमिष्ट्वाथमधुनापयसातथा ॥
पश्चात्स्विष्टकृतंहुत्वाबलिंतेभ्यःसमाहरेत् ॥ दुर्गामाराध्यविधिवदग्नौपूर्वोत्तरेस्वयम् ॥ कृत्तिकाश्वसमभ्यर्च्यवस्त्राभरणमाल्यकैः ॥ हिरण्य

कुसुमंसिंहीममृतांचापराजिताम् ॥ पृश्निपत्रींततोव्याघ्रींदूर्वांमुत्पलमालिनीम् ॥ कुष्टचंदनपद्मानिनलदान्यगरूणिच ॥ प्रक्षिप्यकुंभेसौव
र्णेतीर्थतोयैःप्रपूर्यच ॥ गजाधिपंगजांश्चैवप्रोक्षयेत्तेनवारिणा ॥ आपोहिष्ठेतिसूक्तेनस्वस्तिवाच्ययथाविधि॥ गजमारोप्यराजानंतोरणाभ्यं
तरेगुरुः ॥ स्वस्त्यात्रेयंजपेन्मंत्रंत्रिःकृत्वातुप्रदक्षिणम् ॥ प्रस्थापयेत्प्रभुंतेनगजेंद्रेणद्विजोत्तमः ॥ पार्श्वतोदीप्यमानासुदीपिकासुचदी
पकैः ॥ सारोहाःसादिनःसर्वेगच्छेयुस्तस्यपृष्ठतः ॥ उपलिप्तासुशालासुस्वास्तृतासुविसृज्यतान् ॥ सामात्योभृत्यसहितःप्रविशेन्मंदि
रंनृपः ॥ ब्राह्मणान्भोजयित्वातुगुरवेदक्षिणांततः ॥ हस्तिनंगांहिरण्यंचवस्त्रंमाल्यानुलेपनम् ॥ दद्यान्नृपःस्वयंतस्मैसम्यगाभरणानिच ॥
एवंनीराजनाद्राजासर्वान्कामानवाप्नुयात् ॥ निरातंकाद्विजाःसर्वेभविष्यंतिनसंशयः॥ इतिगजनीराजनम् ॥ अथाश्वनीराजनंतत्रैवोक्तम्॥
अश्वनीराजनंवक्ष्येअश्वानांहितकाम्यया ॥ तद्वच्चैवाश्वयुङ्मासिपूर्वपक्षेनृपोत्तमः॥कारयित्वाश्वशालासुहोमशालामलंकृताम् ॥ प्रत्यूपेस्नाप
यित्वाश्वान्सम्यक्तीर्थेजलाशये ॥ सप्ताहंकारयेद्धोमंरक्षांबद्ध्वातुरंगमान् ॥ स्थंडिलाद्याज्यभागांतंयज्ञतंत्रंप्रकल्पयेत् ॥ ब्राह्मणःसोद
कान्कुंभांश्चतुर्दिक्षुसहौषधीन् ॥ विन्यस्यधान्यपुंजेषुदिक्पालांस्तत्रपूजयेत् ॥अश्वमारोप्यराजानंतोरणाभ्यंतरेगुरुः॥गजस्यनीराजनवत्स
र्वंकुर्यादतंद्रितः॥एवंनीराजनाद्राजासर्वान्कामानवाप्नुयात्॥ इत्यश्वनीराजनम् ॥ अथगोशांतिः ॥ मदनरत्नेविष्णुधर्मे॥ अतःपरंप्रवक्ष्या
मिकर्मनैमित्तिकंतव ॥ धेनूनांमारकेप्राप्तेतथारोगाद्युपद्रवे ॥ क्षीरक्षयेतथान्यस्मिन्प्रकृतेस्तुविपर्यये ॥ त्रिरात्रोपोषितोविद्वानेकरात्रोषितो
पिच॥गवांमध्येशुभेदेशेस्थंडिलेग्निंप्रकल्पयेत् ॥ अष्टपत्रंन्यसेत्पद्मंकर्णिकाकेसरान्वितम्॥पूजयेत्कर्णिकामध्येवासुदेवंश्रियासह ॥ केसरे

पूजनंकार्यंदेवतानांयथाक्रमम् ॥ यासांतासांतुवक्ष्यामितवनाम ॥ निभार्गव ॥ सुतद्रांनामदेवींतुपूर्वभागेसमर्चयेत् ॥ पूजनीयस्ततोब्रह्मासुरभि
स्तदनंतरम् ॥ ततःसूर्यस्ततोधेनुर्बहुरूपाद्विजोत्तम ॥ ततस्तुपृथिवींदेवींततोनंतंतुपूजयेत् ॥ ततःखंविश्वरूपाख्यंदिग्धेनुंतदनंतरम् ॥ ततःसिद्धिं
ततःऋद्धिंततःशांतिंसमर्चयेत् ॥ गेहिनीनामदिग्धेनुस्ततःपूज्याद्विजोत्तम ॥ तत श्चंद्रमसंदेवंमहादेववृषंततः ॥ महादेवंततोदेवींपूजयेत्तदनंतर
म् ॥ इत्येतादेवताःप्रोक्ताःकेसरेष्वेवषोडश ॥ पत्रेषुपूजनीयास्तुदिक्पालासुयथादिशम् ॥ गंधमाल्यादिवस्त्रंचधूपदीपान्नसंपदः ॥ प्रत्येकंपूजयेद्राम
देवताःप्रयतोद्विजः ॥ पूर्णकुंभांश्चसर्वासांप्रत्येकंविनिवेदयेत् ॥ भक्तश्चगीतवस्त्राणिवर्धमानैःस्तुतंडुलैः ॥ सहिरण्यैर्यथाशक्तिततोहोमंसमाचरेत्
वेदिंकृत्वायथाशास्त्रंसमिध्यचहुताशनम् ॥ एकैकांदेवतांरामसमुद्दिश्ययथाविधि ॥ चतुर्थ्यंतेननाम्नातुधर्मज्ञोजुहुयात्क्रमात् ॥ ततोर
क्षोहणैर्मंत्रैर्जुहुयाद्गौरसर्षपान् ॥ ततःसमापयेद्विद्वानग्निकर्मयथाविधि ॥ सुवर्णंचतथाकांस्यंधेनुंवस्त्रयुगंतथा ॥ कर्त्रादेयमुपद्रष्ट्रेवस्त्रयुग्मं
शुभंतथा ॥ भोजनंगोरसप्रायंब्राह्मणांश्चात्रभोजयेत् ॥ स्वस्तिवाच्यंततःपश्चादन्नमादायवैद्विजः ॥ रक्षोहणंतथामंत्रैःकुर्युस्तेउक्षणंगवाम् ॥
गवांचपूजाकर्तव्यागंधमाल्यानुलेपनैः ॥ कर्तव्याश्चतथावत्सायथाकामंद्विजोत्तम ॥ शांतिकर्मगवामेतत्सर्वोत्पातप्रशांतये ॥ इतिगोशां
तिः ॥ अथकाकमैथुनशांतिः ॥ श्वेतकाकमैथुनदर्शनमेवानिष्टावहम् ॥ काकोमैथुनयुक्तश्चेच्छ्वेतःसयदिदृश्यतइतिहेमाद्रौगर्गोक्तेः ॥ नार
दसंहितायाम् ॥ दिवावायदिवारात्रौयःपश्येत्काकमैथुनम् ॥ सनरोमृत्युमाप्नोतिह्यथवास्थाननाशनम् ॥ तद्दोषशमनायेत्थंशांतिकर्मसमाच
रेत् ॥ गृहस्येशानभागेतुहोमस्थानंप्रकल्पयेत् ॥ स्वगृह्योक्तविधानेनतत्रस्थाप्यहुताशनम् ॥ मखांतेसमिदन्नाज्यैर्हुनेदष्टोत्तरंशतम् ॥

प्रतिमंत्रंत्र्यंबकेणअपमृत्युद्वयेनच ॥ व्याहृतिभिर्व्रीहितिलैर्जपाद्यंतंप्रकल्पयेत् ॥ पूर्णाहुतिंचजुहुयात्कर्ताशुचिरलंकृतः ॥ स्वर्णशृंगींरौ
प्यखुरांकृष्णांधेनुंपयस्विनीम्॥ वस्त्रालंकारसहितांनिष्कद्वादशसंयुताम्॥ तदर्द्धेनतदर्द्धेनतदर्द्धार्द्धेनवायुताम् ॥ यथावित्तानुसारेणतन्न्यूना
धिककल्पना ॥ आचार्यायश्रोत्रियायतांगांदद्यात्कुटुंबिने ॥ ब्राह्मणेभ्योविशिष्टेभ्योयथाशक्त्याचदक्षिणाम् ॥ ब्राह्मणान्भोजयेत्पश्चात्स्व
स्तिवाचनपूर्वकम् ॥ एवंयःकुरुतेसम्यक्सतद्दोषात्प्रमुच्यते ॥ अद्भुतसारेगर्गः ॥ काकस्यमैथुनंपश्येत्काकःशिरसिचेद्विशेत् ॥ शिरस्यु
सिवाकुर्यात्पक्षाघातंनखैस्तथा ॥ विदारणंचकुरुतेशयानंवस्पृशेद्यदि ॥ तदावदेत्तुमरणंमहारिष्टमथापिवा ॥ महारात्रेयथाकाकोवासतेहे
तुनाविना ॥ तद्गृहारिष्टमाचष्टेग्रामारिष्टमथापिवा ॥ शांतिंतत्रप्रकुर्वीतविधानेनयथोदिताम् ॥ उद्दिश्यारिष्टशमनंकुर्यात्संकल्पमादितः ॥
शुचौदेशेरत्निमात्रेस्थंडिलेग्निंनिधायच ॥ तदीशानेचाष्टदलेकलशोपरिशक्तितः ॥ हिरण्यनिर्मितंत्विंद्रलोकपालसमन्वितम् ॥ पूजयित्वा
स्वशाखोक्तविधिनाश्रपयेच्चरुम् ॥ कृत्वाज्यभागपर्यंतंजुहुयात्क्रमशोहविः ॥ पालाशीःसमिधोव्रीहींश्चरुमाज्यमितिक्रमात् ॥ अष्टोत्तरसह
स्रंतुशतमष्टोत्तरंतुवा ॥ यतइंद्रेतिमंत्रेणलोकपालेभ्यएवच ॥ शक्त्याहुत्वास्वशाखोक्तप्रायश्चित्ताहुतीर्हुनेत्॥लोकपालबलिंदत्त्वाइंद्राग्न्योश्च
रुशेषतः ॥ वायसेभ्योबलिंदद्यादैंद्रवारुणमंत्रतः ॥ पूर्णाहुतिंततोदत्त्वाआचार्यंपूजयेत्ततः ॥ कुंभोदकेनाभिषेकोयजमानस्यविस्तरात् ॥
आचार्यायेंद्रप्रतिमांदद्यात्सोपस्करांततः ॥ शक्त्याचभूयसींदद्याद्द्विजानांभोजनंदिशेत् ॥ शतंतदर्द्धमर्द्धंवाशक्त्यभावेदशापिवा ॥ सर्व
शांतिंपाठयित्वागृह्णीयाच्चद्विजाशिषः ॥ एवंकृतेभवेच्छांतिःकाकारिष्टविनाशिनी ॥ मानवसंहितायाम्॥ अथातःसंप्रवक्ष्यामिवायसःप्रवि

शेद्गृहम् ॥ प्रवेशद्वारतोगच्छेन्मासमेकंविवर्जयेत् ॥ द्वारांतरेयदागच्छेत्षण्मासांस्तद्विवर्जयेत् ॥ देवालयंविशेच्चैवशीघ्रंमृत्युकरोभवेत् ॥
देवालयेनृपाणांतुग्रामनाशोभविष्यति ॥ गृहप्रवेशनेकाकोगृहाशेषक्षयंकरः ॥ श्वानमार्जारतोगच्छेद्वायसःप्रविशेद्गृहम् ॥ गृहस्थमरणंवि
द्यात्सर्वनाशोगृहेभवेत् ॥ एतेषांदोषजातानांशांतिंवक्ष्येसमासतः ॥ प्रवेशस्थानदेशेतुदक्षिणेवागृहात्ततः ॥ गोमयेनोपलिप्तेचस्थंडिलेसम
लंकृते ॥ आचार्यंवरयेत्पश्चाद्ब्राह्मणंवेदपारगम् ॥ व्रीहिद्रोणेचसुश्लक्ष्णंस्थापयेदव्रणंघटम् ॥ पंचपल्लवसंयुक्तंपंचगव्यसमन्वितम् ॥
पंचरत्नसमायुक्तंपूजयेत्तीर्थवारिणा ॥ तस्योपरिन्यसेत्पात्रंकाकरूपंशचीपतिम् ॥ कर्षमात्रसुवर्णेनपादेनाथस्वशक्तितः ॥ प्रतिमांपूजये
त्पश्चाद्वस्त्रयुग्मंनिवेदयेत् ॥ यतइंद्रेतिमंत्रेणअर्चयित्वातुदैववित् ॥ इंद्राग्नीशानपर्यंतमर्चयेल्लोकपान्क्रमात् ॥ कुंभाभिमंत्रणंकुर्या
च्छ्रीरुद्रंचस्पृशञ्जपेत् ॥ स्वगृह्योक्तेनविधिनाहोमकर्मसमाचरेत् ॥ यतइंद्रेतिमंत्राभ्यांसमिदाज्यचरून्हुनेत् ॥ अष्टोत्तरसहस्रं
वाशतमष्टोत्तरंतुवा॥त्र्यंबकेणचमंत्रेणतिलानष्टशतंहुनेत् ॥ इदंविष्णुस्तुमंत्रेणलाजहोमंसमाचरेत् ॥ उपहोमंततःकृत्वामहाव्याहृतिभिर्हु
नेत् ॥ ततःस्विष्टकृतंहुत्वाहोमशेषंसमापयेत् ॥ संपातैरभिषिक्तस्तुगोयुग्मंदक्षिणांदिशेत् ॥ आज्यावलोकनंकृत्वामहाशांतिंपठेत्ततः ॥
इतिवायसशांतिः ॥ अथपल्लीसरटशांतिः ॥ वसिष्ठसंहितायाम् ॥ कुड्यगेमस्तकाद्यंगेपतितेफलमुच्यते ॥ मस्तकेराज्यलाभःस्याद्भालेकर्णे
चभूषणम् ॥ नेत्रयोर्मित्रलाभःस्यात्सुगंधंनासिकोपरि ॥ वक्त्रेसुभोजनंकंठेस्त्रीलाभःस्कंधयोर्जयः॥ अंसेतेजोविवृद्धिःस्यादर्थवृद्धिःकरद्वये॥
वक्षःस्थलेतुसौभाग्यंहृदिप्रीतिविवर्द्धनम् ॥ पुत्रलाभस्तुकुक्षौस्यान्नाभौकीर्तिविवर्द्धनम् ॥ अर्थलाभस्तुपृष्ठेस्यात्पार्श्वयोःसुहृदागमः ॥कटि

स्थानेवस्त्रलाभोगुह्यस्थानेसमागमः।गुददेशेविनाशःस्यादूरुजान्वोश्ववाहनम्॥जंघयोः पादयोश्चैवसदागमनमादिशेत् ।पादतश्चोर्ध्वंगमनंकु
र्यांदामस्तकाद्यदि॥गात्रेप्रदक्षिणेचापिराज्यलाभोभवेत्तदा॥मस्तकात्पादपर्यंतंयदिगच्छेदधोपिवा ॥ भवेयुश्चतदातस्यकुटुंबकलहामयाः ॥
सरटीपतनादेवसचैलंस्नानमाचरेत् ॥ नारदसंहितायाम् ॥ पल्ल्याःप्रपतनेचैवसरटस्यप्ररोहणे ॥ शुभाशुभंविजानीयात्तत्तत्स्थानविशेष
तः ॥ पल्ल्याःप्रपतनेपूर्वैःफलमुक्तंशुभाशुभम् ॥ शीर्षेराज्यश्रियोवाप्तिर्भालेत्वैश्वर्यवर्द्धनम्॥ सव्येभुजेजयः प्रोक्तोह्यपसव्येमहद्भयम् ॥ कुक्षौ
दक्षिणभागेतुधनलाभस्तथैवच ॥ वामकुक्षौतुनिधनंगदितंपूर्वसूरिभिः ॥ सव्यहस्तेमित्रलाभोवामहस्तेतुनिःस्वता ॥ उदरेसव्यभागेतुसुपु
त्रावाप्तिरुच्यते॥वामभागेमहारोगःकट्यांसव्येमहद्यशः ॥ वामकट्यांतुनिधनंमुनिभिस्तत्त्वदर्शिभिः॥ जान्वोरेवंविजानीयात्सव्यपादेशुभा
वहम् ॥ वामपादेतुगमनंस्त्रीणांव्यक्तंफलंवदेत ॥ फलंप्ररोहणेचैवसरटस्यप्रचारतः ॥ सर्वांगेप्यशुभंविद्याच्छांतिंकुर्यात्स्वशक्तितः ॥ शुभ
स्थानेशुभावाप्तिरशुभेदोषशांतये ॥ तत्स्वरूपंसुवर्णेनरुद्ररूपंतथैवच ॥ मृत्युंजयेनमंत्रेणवस्त्रादिभिरथार्चयेत् ॥ अग्निंतत्रप्रतिष्ठाप्यजुहुया
त्तिलपायसैः ॥आचार्योवारुणैःसूक्तैःकुर्यात्तत्राभिषेचनम् ॥ आज्यावलोकनंकृत्वाशक्त्याब्राह्मणभोजनम् ।गणेशक्षेत्रपालार्कदुर्गाक्षोण्यंग
देवताः ॥ तासांप्रीत्यैजपःकार्यःशेषंपूर्ववदाचरेत् ॥ ऋत्विग्भ्योदक्षिणांदद्यात्षोडशभ्यःस्वशक्तितः ॥ इतिदिनकरभट्टकृतेशांतिसारेपल्लीस
रटशांतिः ॥ अथकपोतशांतिः॥तत्रैव ॥आरोहेत्तुगृहंयस्यकपोतोवाप्रवेशयेत् ॥ स्थानहानिर्भवेत्तस्ययद्वाऽनर्थपरंपरा ॥ दोषायधनिनांगे
हेदरिद्राणांशिवायच॥तच्छांतिस्तुप्रकर्तव्याजपहोमविधानतः॥ ब्राह्मणान्वरयेत्तत्रस्वस्तिवाचनपूर्वकम्॥षोडशद्वादशाष्टौवाश्रौतस्मार्तक्रि

यापरान्॥देवाःकपोतइत्यादिऋग्भिः स्यात्पंचभिर्जपः ॥ कुंडंकृत्वाप्रयत्नेनस्वगृह्योक्तविधानतः ॥ ईशान्यांस्थापयेद्वह्निंसुखांतेष्टोत्तरंशत
म् ॥ प्रत्येकंसमि दाज्यान्नैःप्रतिप्रणवपूर्वकम्॥यतइंद्रभयामहेस्वस्तिदेतिचत्र्यंबकैः ॥ त्रिभिर्मंत्रैश्चजुहुयात्तिलान्व्याहृतिभिःसह॥जपादींश्च
ततोभक्त्याकर्तापू र्णाहुतिंस्वयम्।विप्रेभ्योदक्षिणांदद्याद्धोमशांतिंततोजपेत्।ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुजीतबंधुभिः॥एवंयःकुरुतेभक्त्या
तस्माद्दोषात्प्रमुच्यते॥ पिंगलस्यस्वरेप्येवंमधुवल्मीकयोरपि॥ सम्पूर्णमंदिरेहानिःशून्यसद्मनिमंगलम्॥प्राकारेषुपुरद्वारेप्रासादाद्येषुवीथि
षु ॥ तत्फलंग्रामपस्यैवसीम्निसीमाधिपस्यच ॥ शांतिकर्माऽखिलंकार्यंपूर्वोक्तेनक्रमेणतु ॥ इतिकपोतपिंगलाशांतिः ॥ अथकृत्याशां
तिः ॥ शौनकोहंप्रवक्ष्यामिकृत्याशांतिंद्विजन्मनाम् ॥ कुर्यात्स्वजन्मनक्षत्रेमासेमासेसमाहितः ॥ सुसंस्नातोनवंवस्त्रमाच्छाद्यसमलंकृतः॥
द्विजाग्र्यैःस्वस्तिवाच्योच्चैराशीर्भिर्वेदपारगैः ॥ सुसंस्कृतेसुप्रदेशेपरेणानवलोकिते॥अथाज्यभागपर्यंतंयज्ञतंत्रंप्रकल्पयेत्॥उपलेपनप्रभृतिजु
हुयात्पायसंचरुम् ॥ यांकल्पयतिसूक्तेनऋचोद्धारिशनैःपुनः ॥ इंद्रस्तवेतिसूक्तेनजुहुयाच्चघृताहुतिम्॥ततः स्विष्टकृत्प्रभृतिहोमशेषंसमापये
त् ॥ शांत्यर्थंदक्षिणादेयाब्राह्मणांश्चैवभोजयेत् ॥ जपेद्दैतानिसूक्तानियतात्मासुसमाहितः ॥ प्रत्यगिरसकल्पेनसद्यस्तांप्रतिबाधते ॥ इति
कृत्याशांतिः॥अथाशनिदग्धगृहादिशांतिः ॥ वेश्मक्षेत्रादिदग्धेषुवैद्युतेनाग्निनायदि ॥ तेषांशांतिंप्रवक्ष्यामिशौनकोहंद्विजन्मनाम् ॥तस्मि
न्देशेजानुमात्रंगर्तंकृत्वावसेन्निशि॥तुलसीमवकांचैवनिधायस्वस्तिवाचयेत्॥कर्तास्यपश्चिमेदेशेहोमंकुर्याद्विचक्षणः ॥ इध्माधानादिपर्यंतं
यज्ञतंत्रंप्रकल्पयेत्॥उपलेपादिकंसर्वमिध्माधानाज्यभागयोः ॥ आज्याहुतीःशंवतीभिर्जुहुयादग्निमग्रतः॥सप्रत्नथेतिसूक्तेनजुहुयाच्चचरुंततः

ततःस्विष्टकृत्प्रभृतिहोमशेषंसमापयेत् ॥ अग्नेरुत्तरतःस्विष्टांत्स्वस्त्यात्रेयंजपेत्ततः ॥ ब्राह्मणान्भोजयेत्तत्रयथाशक्तिचदक्षिणा ॥ तदग्नि
दग्धवपुषेप्रदद्याद्ब्राह्मणायच ॥ प्राणदग्धेषुसर्वेषुहिरण्यंदक्षिणाभवेत् ॥ इत्यशनिदग्धगृहादिशांतिः ॥ अथाद्भुतशांतयः ॥ उत्पातउप
सर्गःअद्भुतंचेतिपर्यायाः । तल्लक्षणंवसिष्ठसंहितायाम् ॥ अन्यत्वंप्रकृतेर्यत्तदसावुत्पातसंज्ञकः ॥ अधर्मतस्त्वसत्याच्चनास्तिक्यादतिलोभ
तः ॥ अनाचारान्नृणांनित्यमुपसर्गःप्रजायते ॥ तद्भेदस्तत्रैव ॥ दिव्यांतरिक्षक्षितिजाविकाराघोररूपिणः॥ ग्रहर्क्षजाःकेतवश्चउत्पातादिव्य
संज्ञकाः ॥ निर्घातःतापरिवेषोल्कापुरंदरधनुर्ध्वजाः ॥ एवमाद्यामहोत्पाताअंतरिक्षाह्वयाःस्मृताः ॥ उत्पद्यतेक्षितौयच्चस्थावरंवाथजंगमम् ॥
तदेकदेशिकंभौमउत्पातःपरिकीर्तितः ॥ भौमाःस्युस्तुच्छफलदाआंतरिक्षास्तुमध्यमाः ॥ संपूर्णफलदादिव्यावर्षादर्धात्तदर्धतः ॥ अथ
केतुफलंवसिष्ठसंहितायाम् ॥ केतोरुदयास्तमयंज्ञातुंगणितान्नशक्यतेयस्मात् ॥ दिव्यांतरिक्षभौमास्तस्मात्त्रिविधाश्चकेतवोजगति ॥ १ ॥
एकोत्तरशतभेदादृश्यंतेवासहस्रभेदास्ते ॥ औत्पादिकरूपत्वाद्भवंतिबहवस्तथैकोवा ॥ २ ॥ दिविऋक्षग्रहजास्तेदिव्याख्याःकेतवोमहाफ
लदाः ॥ परिवेषेंद्रधनुरुल्कागंधर्वनगराणिनिर्घाताः ॥ ३ ॥ गगनविकारजमेतन्मध्यमफलदंतथांतरिक्षंच॥भूमिभवाभौमास्स्युश्चरस्थिरा
वस्तुसंभवायेच ॥४॥ तेधमफलदास्तेषांकथयामिफलानिरूपाणि ॥ वर्षैर्मासैःपक्षैःक्रमशःपरिपाकमुपयांति ॥ ५ ॥ स्निग्धःप्रसन्नरूपः
शुक्लनिभोह्रस्वदंडवत्सौम्यः ॥ उदयास्तमयेत्त्वेवंसुभिक्षसौख्यावहःकेतुः ॥ ६ ॥ धूमनिभोधूमाख्यःकेतुर्दोषप्रदोभवति ॥ इंद्रशरासन
रूपःस्थूलनिभोवर्षभीतिदःसम्यक् ॥ ७ ॥ बहुभिःशिखिभीरतुलाविद्युन्मणिहारहेमनिभाः ॥ अपरेंद्रदिशोर्दिश्यान्महाहवंतद्दिगी

शानाम् ॥ ८ ॥ शुकमुखबंधुनिभावह्निसुराक्षतसन्निभारूक्षाः ॥ दृश्यंतेयद्यनलदिशितावंतस्तेपिशिखिभयदाः ॥ ९ ॥ मृत्यु
सुतावक्रशिखाःकृष्णारूक्षाःप्रहरणाकाराः ॥ दृश्यंतेयाम्यायांजनमारकभयप्रदास्ते ॥ १० ॥ क्षितितनयाद्वात्रिंशद्दर्पणसदृशाः
सरश्मयोविशिखाः ॥ क्षुद्भयदाःसशिरस्कायमतनयामृत्युदाश्चशैलनिभाः ॥ ११ ॥ शशितनयाःकुसुमनिभाःकुंदेंदुक्षीररजत
निभाः ॥ उत्तरभागेशिखिनोजंतूनांतेसुभिक्षकराः ॥ १२ ॥ त्रिशिखीत्रिवर्णयुक्तोब्रह्मसुतोब्रह्मदंडनिभः ॥ अनियतदिक्प्रभवोसौ
शांतिकरोब्रह्मदंडाख्यः ॥ १३ ॥ शनितनयास्तारास्थाःशुक्रऋजवश्चषट्संख्याः ॥ दृश्यंतेद्वित्रिदिनैःशुभदामासैश्चरुग्भयदाः ॥ १४ ॥
जीवसुताविचकाख्याःशुक्लास्ताराश्रिताःस्निग्धाः ॥ याम्यायांदिशिसंस्थाबहवस्तेतापदाःसततम् ॥ १५ ॥ बुधतनयाश्चोराख्याः
शुक्लाःसूक्ष्मायथेष्टदिक्प्रभवाः ॥ आमयभयदाःसततंजंतूनांपंचपंचाशत् ॥ १६॥ कुजतनयाःकैकेयाःक्षतजानलसन्निभास्त्रिशूलधराः ॥
याम्यायांदिशिसंस्थाःक्षुद्भयदाःषष्टिसंख्याकाः ॥ १७ ॥ तामसकीलकसंज्ञाराहुसुताःसूर्यमंडलेदृष्टाः ॥ तेषांतन्निखिलफलंसम्यक्क
थितंचसूर्यवारेपि ॥ १८॥ अग्निसुतास्त्वाग्नेय्यांविंशत्यधिकाश्चशतसंख्याकाः ॥ प्रलयानलसदृशभानुवह्निभयप्रदास्तेपि ॥ १९ ॥
अरुणाख्याःश्यामनिभाःशुक्रसुताविविधरूपसंकीर्णाः ॥ शस्त्रक्षुद्भयदास्तेसप्तोत्तरसप्ततिश्चसंख्याकाः ॥ २० ॥ दंडकसंज्ञाश्चाष्टौ
तारासदृशाःप्रजापतेस्तनयाः ॥ द्वाचत्वारिंशोत्तरशताधिकाःपापदाविधातृसुताः ॥ २१ ॥ वरुणभवार्ककाख्याद्वित्रिंशद्वंशगुल्मयष्टि
निभाः॥शशिवत्प्रभासमेताराज्ञोन्यत्वंप्रकुर्वंति ॥ २२ ॥ कालभवाःषण्णवतिसंख्यास्तेषांकबंधनिभाः ॥ तन्नामानःशिखिनःपुंड्रमयभी

तिदाजगतः ॥ २३ ॥ विमलास्ताराकारादशदिक्षुसमुद्भवाःशिखिनः ॥ एवंसहस्रभेदाः पापाश्चैषांविशेषमभिधास्ये ॥ २४ ॥ पश्चि
मदिशिसंभूतश्चोत्तरनम्रश्चसौम्यकेतुःसः ॥ कुरुतेसुभिक्षमतुलंसितवर्णोसौमहास्निग्धः ॥ २५ ॥ दक्षिणनम्रःप्राच्यांतथाविधोयाम्य
केतुःसः॥रूक्षःक्षुद्भयदायीमरकभयंवाकरोत्येव ॥२६॥धूमनिभोयाम्यायांकपालकेतुर्बृहत्तनुःस्निग्धः॥ दिक्षुविदिक्षुप्रभवःक्षुन्मरकावृष्टिरो
करः ॥ २७ ॥ प्राच्यांदिशिसंभूतःप्रदक्षिणंभ्रमतिचक्रवद्रूक्षः ॥ सचचक्रकेतुरनिशंकपालकेतोश्चतुल्यफलः ॥ २८ ॥ पश्चिमतःसंभूतो
याम्यांदिशंभ्रमतिचप्रादक्षिण्यम् ॥ धूमनिभोविषमाख्यःकेतुर्भूभारमपनयति ॥ २९ ॥ कतिपयदिवसंगत्वागमननिवृत्तिकरोधूमनिभः ॥
नरपतिकलहाज्जगतःकरोतिविलयंसचक्रकाख्यः ॥ ३० ॥ गगनत्रिभागदीर्घःश्यामनिभोसौमहासटाकारः ॥ केतुवक्रगतिंकुरुतेक्रम
शोजगतस्त्रिभागहरः ॥ ३१ ॥ गतिरहितोध्रुवकेतुःप्रमाणवर्णाकृतिर्नभवेत् ॥ ग्रहनक्षत्रोपगतेदृष्टोनैवाशुभप्रदःकेतुः॥ ३२ ॥ उपकरणे
षुचराज्ञांसुरगृहतरुपर्वतेषुसदनेषु ॥ दर्शनमुपैतिपतितंविनाशिनामेवनियमेन ॥३३॥ कुमुदनिभःकुमुदाख्योदिवसैःषड्भिस्तुपश्चिमेदृष्टः ॥
प्रागुत्तरदिशियदिवासुभिक्षमतुलंकरोत्येव ॥ ३४ ॥ तारोपरिमणिकेतुर्याम्यायांदिशिसकृद्दृष्टः ॥ उदयास्तमयसमयेशुभदोसौक्षीर
दारेव ॥ ३५ ॥ जलधारेवहिऋज्वीनतयाशिखयापरेणदृष्टःसः ॥ जलकेतुर्जलसदृशःसुभिक्षकरस्तुसर्वजंतूनाम् ॥ ३६ ॥ हरिलांगूल
निभोभवकेतुःक्रकचसन्निभोवापि ॥ बहुरोगभयंकुरुतेसर्पाकारस्तुसर्वदाभवति ॥ ३७ ॥ अपरोपिपद्मकेतुःपद्मनिभःपद्मगर्भसंकाशः ॥
क्षेमकरोनृपतीनांसुभिक्षदःसर्वजंतूनाम् ॥ ३८ ॥ आवर्तकेतुरयंप्रादक्षिण्येनदीप्तिमाञ्शुक्लः ॥ शुभदोव्यत्ययकेतुस्त्वतुलामयभीति

सार.

॥१२०॥

रीतिकरः॥३९॥आक्रम्यगगनमखिलंसंवर्ताख्यस्सधूमनिभः॥शूलाग्रस्त्वितरोवासकेतुरसकृद्भयप्रदोजगतः॥४०॥ शुभदाःशुक्तिनिभायेकृ
ष्णास्त्वशुभप्रदाजगतः॥केतूनांफलमुक्त्वावक्ष्येदस्रादिभेषुजातानाम्॥४१॥अश्विन्यांयदिकेतुर्जातस्तदश्वजीविनोहन्यात्॥यामयेम्लेच्छा
धिपतिंबहुलायांकलिंगाधिपतिम् ॥ ४२ ॥ रोहिण्यामतुलबलंनिहंतिकेतुश्चशूरसेनेशम् ॥ औशीनरमुख्यपतीन्सौम्येरौद्रेचजलजंतून्॥
॥ ४३ ॥ अश्मकदेशाधिपतिंत्वादित्येपुष्यभेचमगधपतिम् ॥ आर्याधिपतिंसार्पेपांड्याधिपतिंचपितृधिष्ण्ये ॥ ४४ ॥ भाग्यर्क्षेतू
ज्जयिनंचोत्तरेदण्डनायकांस्त्वखिलान् ॥ हस्तर्क्षेधनिकवरांश्चित्रायांकुरुभवांस्त्वखिलान्॥४५॥कांबोजनृपतिमुख्यंप्रभंजनेजातकेतुरपि॥
इक्ष्वाकुवंशनाशंद्विदैवभेचगौडेशम् ॥ ४६ ॥ ज्येष्ठायांयदिजातःसहन्यतेसर्वमंडलाधीशम् ॥ मूलेभद्राधिपतिंजलदैवेकलिंगदेशप
तिम् ॥ ४७ ॥ गूंजरिकायेदेशास्तान्हन्याद्वैश्वधिष्ण्यजःसोपि ॥ केकयनाथंहन्याच्छ्रवणर्क्षेवसुभवेऽखिलान्द्रविडान् ॥ ४८॥ नैमिषनृप
तिंहन्याच्छतभिषजस्त्वजांघ्रिजश्चपांचालान् ॥ अहिर्बुध्न्यर्क्षभवःसंकारिकान्किरातकोणभवान् ॥ ४९ ॥ पौष्णर्क्षभवःकेतुर्द्विजसज्जनधर्म
मार्गस्थान् ॥ अभिजिन्नक्षत्रभवःकौंकणदेशंचनिशिचरांश्चापि ॥ ५० ॥ येकेतवश्चाश्विमुखर्क्षजातास्ताराग्रहादिष्वपिसंभवाश्च ॥ कुर्वंतुते
तीक्ष्णफलंजनानामन्येपिसामान्यफलप्रदाःस्युः ॥ ५१ ॥ उल्कादिलक्षणंतत्फलंचनारदीये ॥ स्वर्गच्युतानांरूपाणियान्युल्कास्तानिवैभु
वि ॥ धिष्ण्योविद्युदशनिताराःपंचविधाःस्मृताः ॥पीडाश्चोष्ट्राहिगोमायुखरगोगजदंष्ट्रिकाः ॥ कपिगोधाधूमनिभाविविधाःपापदानृणाम्॥
उदयास्तमयेर्केन्द्वोःपतितोल्काशुभप्रदा॥ सितरक्तापीतसितासोल्काहंतिद्विजातिनः ॥ राजराष्ट्रविनाशायप्रासादप्रतिमासुच ॥ गृहेषुस्वा

मिनांपीडानृपाणांपर्वतेषुच ॥ दिक्षुतत्तद्दिगीशानांकर्षकाणांस्थलेषुच ॥ गोष्ठेगोस्वामिनांपीडाशिल्पिकानांजलेषुच ॥ वर्तुलोल्कापुरंहंति
च्छत्राकारापुरोहितम् ॥ वंशगुल्मलताकाराराष्ट्रविद्राविणीतथा ॥ इतिकेतुफलम् ॥ अथपरिवेषः ॥किरणावायुनिहताउच्छ्रितामंडली
कृताः ॥ नानावर्णाकृतयःखेपरिवेषाःशशीनयोः ॥ मुहुर्मुहुःप्रलीयंतेनसंपूर्णफलप्रदाः ॥ अनेकवृत्तवर्णश्चपरिवेषोनृपांतकृत् ॥ द्विमंडल
श्चभूनाथंनृपघ्नोथत्रिमंडलः ॥ द्वौग्रहौपरिवेषस्थौक्षितीशकलहप्रदौ ॥ कुर्वंतिकलहानर्थम्परिवेषगतास्त्रयः ॥ चत्वारःपरिवेषस्थानृपस्यमर
णप्रदाः ॥ परिवेषगताःपंचजगत्प्रलयदाग्रहाः॥नृपहानिःकुजादीनांपरिवेषेपृथक्पृथक् ॥ प्रावृट्कृतौतुशरदिपरिवेषोजलप्रदः ॥ प्रायेणान्ये
ष्वृतुषुतदुक्तफलदायिनः ॥ अन्यत्रापि ॥ रविशशिपरिवेषेपूर्वयामेचपीडारविशशिपरिवेषेमध्यमेचातिवृष्टिः । रविशशिपरिवेषेधान्य
नाशस्तृतीये रविशशिपरिवेषेराज्यनाशश्चतुर्थे ॥ इतिपरिवेषः ॥ अथेंद्रधनुः ॥ नानावर्णांशवोभानोःसाभ्रवायुनिघट्टिताः ॥ यद्व्योम्नि
चैवसंस्थानमिंद्रचापंप्रदृश्यते ॥ अथवाशेषनागेंद्रदीर्घनिःश्वाससंभवम् ॥ विदिक्षुजंदिक्षुजंचतद्दिक्कूपविनाशनम् ॥ अवृष्टौवृष्टिदंत्वैंद्र्यां
दिशिवृष्ट्यामवृष्टिदम् ॥ अवनीगाढमच्छिन्नंप्रतिकूलंधनुर्द्वयम् ॥ नृपांतकृद्यदिभवेदानुकूलेतुतच्छुभम् ॥ इतींद्रधनुः ॥ अथनिर्घा
तः ॥ वायुनानिहतोवायुर्गगनात्पततिक्षितौ॥तदादीप्तः सुगुरुतःसनिर्घातोतिदोषकृत्॥इतिनिर्घातः॥अथरजः॥सितेनरजसाच्छन्नादिग्ग्रा
मवनपर्वताः ॥ यदातदाभवंत्येतेनिधनंयांतिभूमिपाः ॥ भूमोद्भवस्तुयस्यांवैतस्यांदिशिविनाशनम् ॥ऋतावन्यत्रशिशिरात्संपूर्णफलदंरजः
॥ इतिरजः ॥ अथभूकंपः ॥भूभारखिन्ननागेंद्रशेषविश्रामसंभवः॥भूकंपःसोपिजगतामशुभायभवेत्सदा॥ यामक्रमेणभूकंपाद्द्विजादीनामनि

ष्टदाः॥अनिष्टदाःक्षितीशानांसंध्ययोरुभयोरपि ॥प्रायेणनिखिलोत्पाताःक्षितीशानामनिष्टदाः॥षड्भिर्मासैश्चभूकंपोद्वाभ्यांदाहःफलप्रदः ॥
अनुक्ताःपंचभिर्मासैस्तदानींफलदंरजः ॥ इतिभूकंपः ॥अथग्रहयुद्धम् ॥ अद्भुतसागरेगर्गः॥छादनंरोधनंचैवरश्मिरोधस्तथैवच॥ अपसव्यं
ग्रहाणांचचतुर्द्धायुद्धमुच्यते ॥ इदंचभौमादीनामेवनसूर्यचंद्रयोः ॥ ताराग्रहाणांपंचानांयुद्धान्युक्तानियोगतइत्युपसंहारात्॥ पराजयलक्षणं
चतत्रैव ॥ ग्रहोग्रहंसमागम्यश्यामीभवतियोभृशम्॥हानिंप्राप्नोतिवक्तव्यंस्यंदतेचमुहुर्मुहुः ॥ तत्फलंविस्तरभीतेर्नोच्यते ॥ अत्रसामान्यशां
तिरेवविशेषानुक्तेः ॥ इतिग्रहयुद्धम् ॥ अथप्रतिसूर्यः ॥ तत्रैवमयूरचित्रे ॥ उदीयमानःसूर्योवैदृश्यतेप्रतिरूपकः ॥ त्रीण्यब्दानिभवेन्नाशो
मासार्द्धेननसंशयः॥अत्रापिसाधारणशांतिः॥इतिप्रतिसूर्यः॥अथरश्मिदंडः ॥ वाराहसंहितायाम्॥रविकिरणजलदमरुतांसंघातोदंडवत्सि
तोदंडः॥सर्वविदिङ्मुखोनृपाणामशुभोदिक्षुद्विजानांच ॥इतिरश्मिदंडः ॥ अथदिग्दाहः॥अद्भुतसागरेबार्हस्पत्ये॥ यदास्तमितआदित्येवह्नि
ज्वालाप्रदृश्यते ॥ दिशांदाहंतुतंविद्यादितिभार्गवभाषितम् ॥नारदसंहितायाम्॥दिग्दाहःपीतवर्णश्चेत्क्षितीशानांभयप्रदः॥ इतिदिग्दाहः ॥
अथच्छाया॥तत्रैवमात्स्ये॥विरजस्कंरवौचैवयदाच्छायानदृश्यते॥दृश्यतेचप्रतीपावातदादेशभयंवदेत्॥अत्रमासिकःफलपाकः॥ अनुक्तफल
कालत्वात्॥इतिच्छाया॥अथमेघगर्भोपघातः।तत्रैववटकनिकायाम्॥गर्भोपघातलिंगान्युल्काशनिभूमिकंपनिर्घाताः। ग्रहयुग्मराहुशशिनांभ्रं
शःपुरोवारजोवापि॥तत्रैवबृहत्संहितायाम् ॥ रुधिरादिवृष्टिवैकृतमथवेंद्रधनुर्निदर्शनंराहोः॥इत्युत्पातैरेतैर्विविधैश्चान्यैर्हतोगर्भः ॥ इतिमेघ
गर्भोपघातः॥अथाद्भुतपाककालः॥अद्भुतसागरेबृहत्पाराशरः ॥तत्रोत्पातफलंदिव्यंपूर्णेवर्षेविपच्यते ॥ आंतरिक्षंतथाभौमंमासैःपड्भिस्तथ

र्तुभिः॥निर्घातस्तुत्रिभिर्मासैर्गंधर्वनगराणिच॥अग्निनासप्तरात्रेणमासेनोल्काविपच्यते ॥ पुरचैत्यादिभंगेषुपुरसंक्रमणेषुच ॥ नरेंद्रध्वजभं
गेषुफलंमासाद्विपच्यते॥शांतिस्वरूपजातानांपाकःषाण्मासिकोभवेत् ॥ अरिष्टंपच्यतेषट्सुमासेषुफलदंत्रिषु ॥ अतिहर्षोतिशोकश्चसद्यए
वविपच्यते ॥ कीटमूषकसर्पाणांमक्षिकादिषुयत्फलम् ॥ पच्यतेतद्विमासेनमधुसप्तसुपच्यते ॥ हयानांहस्तिनांचैवशकुनंचशुनस्तथा॥ स
द्यस्त्वहाद्वानियतमुलूकस्यतथैवच ॥ विदेहवाक्संश्रवणंदर्शनंयक्षरक्षसाम् ॥ पशूनांविकृतंयच्चषष्ठेमासिविपच्यते ॥ मांसतैलविकारेषुदेहां
गस्पंदनेषुच ॥ वस्त्रजातिविकारेषुफलंस्यात्सप्तमेऽहनि ॥ चित्रकर्मणिमासाभ्यांशयनेषष्ठमासिकम् ॥ वल्मीकेषट्सुमासेषुक्षयेवृद्धौतथात्रि
षु ॥ जयोच्छ्रायेषुभग्नेषुयज्ञकर्मणिवैकृते॥ सोमध्वजविकारेचविकाराःसप्तमासिकाः ॥ तंतुबीजेविकारेषुराज्ञःशस्त्रेवजृंभणे ॥ पद्मोत्पलफ
लादीनांफलंषाण्मासिकंभवेत् ॥ विनाशेनिष्फलंतेषांपाककालेनिवर्तते ॥ तत्रैवगर्गः ॥ पक्षाद्विपाकःसूर्यस्यपाकःसोमस्यमासिकः ॥ मा
सद्वयेस्मृतोराहोर्विपाकोनात्रसंशयः ॥ त्रिभिर्मासैर्विपाकस्तुनियतंधूमकेतवः ॥ संवत्सरविपाकौतुज्ञेयौसूर्यबृहस्पती ॥ षाण्मासिकश्चो
शनसःसूर्यजस्यतुपंचभिः ॥ त्रिभिर्मासैस्तुभौमस्यउल्कापातस्तुमासिकः ॥ अष्टभिर्भूमिकंपस्तुनिर्घातःपच्यतेत्रिभिः ॥ अना
र्तवंपुष्पफलंषड्भिर्मासैर्विपच्यते ॥ पक्षिकीटपतंगानांदशाहात्फलमादिशेत् ॥ घृततैलवसावर्षेसद्यःफलमुदाहृतम् ॥ अरिष्टंषट्सुमासेषुप
च्यतेकलहंत्रिषु ॥ हिरण्यविक्रियायांतुफलंमासाद्विपच्यते ॥ कलहार्थविपर्यासउत्सवक्रिययासह॥अचलानांचचलनेषण्मासात्फलमादि
शेत् ॥ कीटमूषकसर्पाणांमक्षिकाणांतथैवच॥ दंशनेत्त्वतिमात्रेणफलंत्रैमासिकंभवेत् ॥ रात्राविंद्रधनुर्दृष्ट्वाराज्ञःशीलविपर्ययम् ॥ वानराणां

नराणांचतथैवगजवाजिनाम् ॥ नानावादित्रशब्दानांफलंमासाद्विपच्यते ॥ गृध्रगोमायुसिंहानांफलंमासाद्विपच्यते॥बिडालनकुलानां
चवराहव्याघ्रयोस्तथा ॥ श्रुत्वांतरिक्षेशब्दंतुफलंमासाद्विपच्यते ॥ मात्स्येविष्णुधर्मोत्तरेच ॥ अद्भुतेतुसमुत्पन्नेयदिवृष्टिःशिवाभवेत् ॥
सप्ताहाभ्यंतरेज्ञेयमद्भुतंनिष्फलंभवेत् ॥ शिवानिर्विकारा॥इतिअद्भुतपाककालः ॥ अथाद्भुतफलस्थानानि ॥ अद्भुतसागरेपाराशरः ॥
राज्ञःशरीरेलोकेचपुरदारपुरोहिते ॥ पाकआयातिपुत्रेषुतथाकोशेचवाहने ॥ तत्रैवगर्गः ॥ पुरेजनपदेकोशेवाहनेचपुरोहिते ॥ पुत्रे
स्वामिनिभृत्येचपच्यतेदैवमष्टधा ॥ वसिष्ठसंहितायाम् ॥ भौमंशांत्याशमंयातिमार्दवंत्वंत रैक्षजम् ॥ दिव्यंहेमान्नगोभूमिदानैस्तत्को
टिहोमतः ॥ महोपहाराद्रुद्रस्यगोदोहात्तत्पुरःसरम् ॥ अलंकृतेक्षितितलेयावत्क्षारप्लुवंभवेत् ॥ अपिदिव्यंशमंयातिकिंपुनस्त्वित
रद्वयम् ॥ अत्राधिकारीतत्रैव ॥ अकृत्वाशांतिकंराजादुःखांभोधौनिमज्जति ॥ अश्वरोमथाष्टवर्गादि ॥ रजोदर्शनादौतुतत्स्वामि
नोधिकारः ॥ केचित्त्वत्रापिराज्ञोधिकारमाहुः॥ अथवासर्वाद्भुतशांतिषुसर्वेषामधिकारः ॥ अद्भुतसागरे ॥ येतेषुशांतिंकुर्वंतिनतेयांतिप
राभवम् ॥ येतुनप्रतिकुर्वंतिक्रियामश्रद्धयान्विताः ॥ नास्तिक्याद्वाविमोहाद्वाविनश्यंत्येवतेचिरादितिगर्गोक्तेः ॥ अश्वादिकंचदत्त्वाशां
तिःकार्या ॥ वृक्षोत्पातेछेदनमाहनारदः ॥ अकालेपुष्पितावृक्षाहृश्यंतेफलितायदि ॥ कार्यंतच्छेदनंतत्रततःशांतिर्मनीषिभिः ॥ अथोत्पा
तसाधारणशांतयः ॥अथाद्भुतानांसर्वेषांशांतिंवक्ष्यामिशौनक ॥ आश्चर्यमद्भुतंपश्येल्लक्षणेनसमन्वितम् ॥ दिव्यानिचांतरिक्षाणिभौमानी
तित्रिधाभवेत् ॥ रश्मिहीनंरविंपश्येद्रवौछिद्रंचभेदनम् ॥ नक्षत्रचंद्रसूर्याणांमहोल्कापतनंतथा॥अमेघेविद्युतंपश्येन्नचमेघेचविद्युतम्॥ अति

सूर्यंचतुर्दिक्षुपरिवेषंतथात्रयम् ॥ त्रिकोणंचतुरस्रंवाविपरीताकृतिंतथा ॥ प्रतिचंद्रेतथारात्रौचंद्रस्याप्येवमेवतु ॥ अश्वमूर्त्यांसुरक्तानांवर्ष
णंजलकाष्ठयोः॥अनग्निधूममाकाशेपतंतींदीपिकांतथा ॥ गंधर्वनगरंदृष्ट्वादिवानक्षत्रदर्शनम् ॥एवमादीनिदिव्यानिअशुभान्यद्भुतानिच॥
अथान्यान्यंतरिक्षाणिह्यद्भुतानिनिबोधमे। गगनंलोहितंपश्येत्पश्येद्वाकाकमैथुनम्।काकदुर्गंधिवद्गंधोयद्वाशिरसिजायते।शिरस्युपविशेत्का
कस्ताडयेद्वाप्यकारणात् ॥देवालयानिकंपंतेदृश्यंतेप्रतिरूपकम् ॥ कलशोविकलेत्किंचिद्ध्वजप्रपतनंतथा॥भिद्यंतेदेवताःसर्वाःस्विद्यंतेचा
प्यकारणात्॥उन्मीलंत्यपिरोदंतिनिमीलंतिहसंतिच॥गायंत्यकस्मान्नृत्यंतितिष्ठंतिनिजपीठतः॥पीठदेशेप्रजायंतेमधुच्छत्रंपिपीलिकाः ॥
रात्रौविंद्रधनुर्दृष्ट्वादिवाश्वेतंचवायसम् ॥ एवमादीन्यसंख्यानिआकाशप्रभवाणिच ॥भूमेःकंपनभेदौचनिर्घातःकंपनंस्फुटम् ॥ पूयनंतटनंवा
पिज्वलंतंचनिरिंधनम्॥छत्राकंमधुवल्मीकंगृहेयत्रप्रजायते॥तृणानिचैवदारूणिप्ररोहंतिगृहोत्तरे ॥ शुष्कवृक्षाःप्ररोहंतिक्षीयतेतैलभांडकम्॥
जायंतेचोद्भिदःसर्वेप्राणिनोबहुधामताः॥अरण्यस्थामृगाःसर्वेअतीताश्चाप्यकारणात्॥प्रविशंतिगृहेयत्रगृहमारोहयेद्यदि ॥सर्वेमृगाश्चगावोवा
अश्वोष्ट्रमहिषादयः ॥ निर्गच्छांतिगृहद्वारात्सर्पोवैस्वयमेवहि ॥ मंडूकसर्पनकुलैर्मुखाग्रेप्रविशेद्यदि॥सौवीरभांडान्मंडूकोनिर्गच्छन्प्रविशे
त्तथा ॥तृणगुल्मलतावृक्षाविपरीतफलाअपि ॥ कदलीपूगवृक्षादिकाष्ठगर्भेफलद्वयम् ॥ उद्यानस्थापितारंभादक्षिणाभिमुखेफले ॥ देवो
द्यानेनरोद्यानेविलीयंतेमधूनिच ॥ गवाश्वमहिषीभार्यायुगलप्रसवेसति ॥ गवादित्रीणिविप्रेभ्योदानंकुर्याद्विशेषतः ॥मनुष्यादंतसहिताजा
यंतेपिनचांगकाः ॥ अजाश्वमहिषीगावःखरोष्ट्राद्याविशेषतः ॥विकृतायत्रजायंतेकंटकांगास्तथैवच ॥ हीनांगानिचसूयंतेअधिकांगास्तथैव

च ॥ स्थूलायांमुकुलंभार्यास्वस्तनंगौः पिबेद्यदि ॥ शुनकोगृहमारोहेत्प्रविशेद्वाशिवापुरम् ॥ शुनकानांकपोतानांदृश्यतेमैथुनंयदि ॥ दृश्य
तेमर्कटस्कंधेगोदुग्धेरुधिरंयदि ॥ एवमादीन्यसंख्यानिपार्थिवान्यद्भुतानिच ॥ कर्तुःश्रोतुश्चमंतुश्चद्रष्टुरादेष्टुरेवच ॥ उपदेष्टुश्चसर्वेषामुत्पा
तानांफलंसमम्॥गृहोद्यानेस्थितोत्पातस्तद्गृहस्यैवबाधकम् ॥ होमकुंडेस्थितोत्पातेतत्कर्तुश्चैवबाधकम् ॥त्रेताग्निकुंडजोत्पातेतद्राज्ञश्चैवबा
धकम्॥सभातलेस्थितोत्पातंपश्चाद्द्वारेचसंस्थितम्॥गोनिवासस्थितोत्पातंतद्ग्रामश्चैवबाधकम्॥स्वयंभूस्थानजोत्पातंतद्राज्ञश्चैवबाधकम् ॥
तद्राज्ञश्चैवराज्यस्यबाधकंपरिचक्षते॥गृहेपक्षिप्रवेशेचमृगश्चप्रविशेत्तथा॥तद्गृहान्निर्गतेसर्पेमासात्तत्प्रविशेन्नरः ॥ मासेतीतेततःपश्चाद्गृहशुद्धिं
चकारयेत्॥शांतिहोमंततःकुर्यात्प्रविशन्मंदिरंततः।एतेषांचफलंवक्ष्येसुयुक्तंशास्त्रनोदितम्।आत्मनोनिधनंयातिक्षिप्रमेवनसंशयः॥ वियोगः
पुत्रपत्न्याचक्षेत्रद्रव्यादिनाशनम्।तद्ग्रामेचैवतद्देशेअनावृष्टिर्भविष्यति।तत्स्थानचलनंवापिबंधनंशोकमाप्नुयात् ।एतेषांशमनार्थायहोमःका
र्योद्विजातिभिः।तस्मिन्नहनिकर्तव्यःशांतिहोमोयथाविधि॥तदैवमुख्यकालत्वाद्दिनशुद्धिमतःपरम्।अद्भुताहःसमारभ्यतत्पक्षेहोममाचरेत् ॥
चंद्रानुकूल्येदिवसेसुनक्षत्रेसमारभेत् ॥ अद्भुतेसतिदेशेचदक्षिणेवागृहोत्तरे ॥ दशद्वादशहस्तंवामंडपंकारयेच्छुभम् ॥ कुंडेवास्थंडिलेवापि
गोमयेनसवारिणा ॥ उपलिप्यस्थंडिलंतद्वंगमालिकमाचरेत् ॥ उत्तमेनवकुंभांश्चपंचकुंभांश्चमध्यमे ॥ द्विकुंभंतुकनिष्ठेवैजपकुंभांश्चकल्पये
त् ॥ होमस्यैशानदिग्भागेशांतिकुंभमथापरे ॥ देवतास्थापनार्थायकुंभमेकमथापरम् ॥ स्वर्णराजतताम्रैश्चकारयेन्मृण्मयेनवा ॥ सुस्निग्धा
निचकुंभानिअभिन्नान्यव्रणानिच ॥ धवलीकृतकुंभानिवेष्टयेत्सिततंतुभिः ॥कुंभानिवेष्टयेत्पश्चान्नवशुक्लांबरैःशुभैः॥गंधपुष्पाक्षतैरन्नैःकुंभा

निक्रमशोर्चयेत्॥पल्लवैश्च्छादयेच्चूतैर्यद्वाजंब्वादिकोमलैः॥प्रतिमांकारयेद्धीमान्जातरूपमयेनच॥ मषाविंशतिमानेनसुवर्णेनोत्तमेनच ॥
अष्टमाषेणवाकुर्याच्चतुर्माषेणवातथा॥माषद्वयप्रमाणेनमाषमात्रेणशक्तितः ॥ द्युर्निमित्तसूर्यरूपमाकाशेवायुमूर्तिजम् ॥ भूनिमित्तअग्निरूपं
लक्षणेनैवकारयेत् ॥तदभावेतुतन्मौल्यंनिधायाथप्रपूजयेत् ॥ आहूयमंत्रान्संपूज्यस्वस्तिवाचनपूर्वकम् ॥ आचार्यंवरयेत्पश्चाद्ब्राह्मणंवेदपा
रगम्॥ सर्वावयवसंपूर्णंकुलीनंचकुटुंबिनम् ॥ आचारज्ञंतंधर्मज्ञंसर्वलोकहितैषिणम्॥ शीललक्षणसंपूर्णंरूपौदार्यगुणान्वितम्॥सदासंतुष्टम
नसंरागद्वेषविवर्जितम् ॥ उत्पातशांतावेतस्यांत्वमाचार्योभवेतिच ॥ एवंकृत्वातथाचार्यंब्राह्मणंचतथाविधम्॥ःआचार्यवत्सदस्यंचसर्वज्ञंव
रयेत्ततः ॥ ऋत्विजोवरयेत्पश्चात्षोडशाष्टौचभक्तितः॥ वित्तानुरूपंवरयेद्द्वौवालक्षणलक्षितौ ॥ अन्यांश्चकर्मकार्यार्थंवरयेद्ब्राह्मणोत्तमान् ॥
देवतास्थापनार्थायहोमस्येशानदेशके ॥ पद्ममष्टदलंकुर्यादक्षतैर्व्रीहितंडुलैः ॥ कार्णिकाकेसरोपेतंसर्वशोभासमन्वितम् ॥ देवतास्थापनेकुं
भंपद्ममध्येनिधायच॥सजलौषधिसंयुक्तंवस्त्रगंधाद्यलंकृतम्॥वस्त्रंदेवासनार्थायकुंभवस्त्रेनिधायच ।सलिलौषधिसंयुक्तंकुंभंपुष्पादिभिर्यजेत्।
अन्वाधानाज्यभागांतंकुर्यात्तंत्रंयथाविधि ॥ होमंकुर्यात्ततःपश्चादाचार्योब्राह्मणैःसह ॥ सदस्योदेवतापूजांकुर्यान्मंत्रेणभक्तितः ॥ पंचामृते
नसंस्नाप्यस्थापयेत्कुंभमंतिके ॥ छादयेद्देवतारूपंनवशुक्लांबरेणच ॥ उद्यन्नद्येतिमंत्रेणतस्मिन्वायुंप्रपूजयेत् ॥ यस्मैत्वंसुकृतेत्येनपूजये
ज्जातवेदसम् ॥ रक्तगंधाक्षतैःपुष्पैर्धूपदीपोपहारकैः ॥ तांबूलंकल्पयेत्तस्मैस्नानवस्त्रादिभिर्यजेत् ॥ तन्मंत्रेणैवतंदेवंयजेदष्टोपचारकैः ॥
देवपूजोत्तरेकालेततःकुंभाभिमंत्रणम्॥ऋत्विग्भिरादशावृत्त्याकुंभंस्पृष्ट्वाभिमंत्रयेत् ॥ अपनश्शोशुचदघमष्टाभिश्चयथाक्रमम् ॥ यदंतियच्च

दूरकइत्यृचांसप्तकंतथा ॥ यद्भ्रह्मापवमानेतिऋग्भिष्षड्भिर्यथाक्रमम् ॥ उद्वयंतमसस्पर्यादित्प्रत्नस्यरेतसः ॥ देवाःकपोतसूक्तेनकपो
तादिप्रवेशनम् ॥ त्र्यंबकंजातवेदसेश्रीसूक्तेनाभिमंत्रयेत् ॥ उत्तमेचाष्टसाहस्रंमध्यमेशतसंख्यया ॥ अष्टाविंशतिसंख्यावातृतीयेतद
नंतरम् । पलाशीयैःसमिद्भिश्चघृताक्तैर्जुहुयादथ ॥ मृत्युंजयेनमंत्रेणहस्तेनाग्नौक्रमेणच ॥ तावंतोजुहुयादाज्यंजातवेदसइत्यृचा ॥ रक्त
चंदनसंयुक्तंपायसंघृतसंयुतम् ॥ तथैवजुहुयादग्नौसमिदाज्यप्रमाणतः ॥ ऋगादौप्रणवंचोक्त्वास्वाहाकारमृगंततः ॥ अपनश्शोशुचदि
तिनवविंशतिर्भिर्हुनेत् ॥ कुंभाभिमंत्रणोक्तश्चऋग्भिराभिश्चपायसम् ॥ शांत्यर्थंतिलहोमंचहुनेद्व्याहृतिभिस्त्रिभिः ॥ सौविष्टकृतमारभ्यहोमशे
षंसमापयेत् ॥ समुद्रादूर्मिसूक्तेनहुनेत्पूर्णाहुतिंततः ॥ पश्चिमेवोत्तरेपूर्वमग्नेरीशानदेशके ॥ यजमानाभिषेकार्थमासनंचनिधायच ॥ दारपुत्र
समेतस्ययजमानस्यऋत्विजः ॥ नादेयैःशांतिकुंभस्थैश्चान्यकुंभस्थितोदकैः ॥ अभिषिंचेत्ततःपश्चात्पल्लवैःकलशस्थितैः ॥ समुद्रज्येष्ठाइ
त्याद्यैस्त्रायंताइत्यृचेनच ॥ इमाआपस्तृचेनैवदेवस्यत्वेतिमंत्रतः ॥ भद्रंदशाक्षरेणैवधामंतेनाभिषेचयेत् । अभिषिक्तोहतंवस्त्रंपरिधायप्रभूषितः ॥
सशुक्लवस्त्रैःप्रत्येकमंगुलीयककुंडलैः ॥ गंधाक्षतैःपुष्पमाल्यैर्धूपदीपोपहारकैः ॥ आचार्यंपूजयेदादौब्रह्माणंतदन्तरम् ॥ सदस्यमृत्विजादींश्चयज
मानःप्रपूजयेत् ॥ सुवर्णंयत्समाख्यातंयजमानेनदक्षिणा ॥ आचार्यायचयादत्ताब्रह्मणेतुतदर्धकम् ॥ ब्रह्मवच्चसदस्यायययथावित्तानुसारतः ॥
अभिषेक्तृसुविप्रेभ्योदक्षिणांचप्रदापयेत् ॥ सर्वेभ्यश्चैवविप्रेभ्यस्तदानीमेवदापयेत् ॥ सहिरण्यांसवस्त्रांचसर्वाभरणभूषिताम् ॥ धेनुंपयस्विनीं
दद्यादाचार्यायसवत्सकाम् ॥ तत्तत्कुंभंचऋत्विग्भ्यःसहिरण्यंसवस्त्रकम् ॥ तत्रस्थेभ्यश्चविप्रेभ्योहेमवित्तानुसारतः ॥ यद्युक्तदक्षिणाभावे

प्यनुक्तेहोमकर्मणि ॥ हिरण्यंदक्षिणांदद्यात्तदानीमल्पिकामपि ॥ आह्याशीर्वचनंतेषांप्रणिपत्यक्षमापयेत् ॥ सहस्रंभोजयेद्विप्रान्छतंवादश
कंतथा ॥ घृताक्तैर्भक्ष्यभोज्यैश्चअभावेत्रिघृतान्नकैः ॥बंधुभिःसहभुंजीततथापुत्रादिभिःस्वयम् ॥एवंयःकुरुतेशांतिंतस्यायुर्वर्द्धतेसदा ॥ अद्भु
तोद्भवदोषाश्चनाशंयांतिनसंशयः ॥ दृष्टादृष्टाहिदोषाश्चनश्यंतेहिचसर्वदा ॥ आयुरारोग्यमैश्वर्यंप्राप्यकीर्तिंचविंदति ॥ स्त्रीणांचपुत्रपौत्रा
णांवर्द्धतेकल्पमायुषा ॥ सर्वान्कामानवाप्नोतिशौनकस्यवचोयथा ॥ वसिष्ठसंहितायाम् ॥ हस्तैःषोडशभिःकार्यंचतुरस्रंसमंततः ॥ मंडपंय
ज्ञियैर्वृक्षैरथवानवदारुभिः ॥ हस्तैश्चतुर्भिस्तन्मध्येकुंडंकार्यंसमंततः ॥ समंततश्चतुर्भिरित्यन्वयः ॥ तथाचक्षेत्रफलेनषोडशहस्तंकुंडम् ॥
खातंहस्तैश्चतुर्भिश्चवप्रत्रयसमन्वितम् ॥ षडंगुलोन्नतस्त्वाद्योद्वादशांगुलविस्तृतः ॥ दशांगुलोन्नतोमध्येअष्टांगुलस्तुविस्तृतः ॥ चतुर्दशां
गुलोत्सेधश्चतुरंगुलविस्तृतः ॥ तृतीयवप्रःकर्तव्योयोनिश्चैकातुपश्चिमे ॥ चतुर्दशांगुलैर्दीर्घाचोन्नताषोडशांगुलैः ॥ हीनाधिकानकर्तव्या
विस्तारःषड्भिरंगुलैः ॥ कुंडस्यलक्षणंत्वेकंकोटिहोमेतुसर्वदा ॥ ईशान्यांवेदिकाकार्यासार्द्धहस्तप्रमाणतः ॥ उन्नताविस्तृताकार्याप्रागुदक्प्र
वणाशुभा ॥ सर्वदेवमयीत्वाद्याशिवपूजापुरःसरम् ॥ ग्रहांस्तानर्चयेत्तत्रपूर्वोक्तविधिनाततः ॥ पालाशसमिदाज्यान्नैर्मुखांतेष्टशतंपृथक् ॥
अघोरमंत्रेणततोग्रहहोमंचकारयेत् ॥ तिलहोमंव्याहृतिभिर्घृताक्तंजुहुयात्ततः ॥ द्वारेषुजापकैःस्वस्ववेदपारायणंक्रमात् ॥ चमकंनमकं
सूक्तंपुरुषोक्तांगजापकैः ॥ होमंनवभिराचार्यैःकारयेद्ब्राह्मणैःसह । नैवेद्यांतंततःपश्चाच्छांतिवाचनपूर्वकम् ॥ ब्राह्मणान्भोजयेत्पश्चात्स्वयं
भुंजीतबंधुभिः ॥ शिवविष्णुकथालापैर्दिनशेषंनयेच्चतः ॥ एवंयावत्कोटिहोमस्तावत्कार्यमतंद्रितैः ॥ तदर्द्धंवातदर्द्धंवालक्षहोममथापिवा ॥



॥१२५॥

कार्यंदोषानुसारेणवित्तशाठ्यविवर्जितः ॥होमांतेदक्षिणांदद्याच्चतुर्विंशतिऋत्विजः॥ प्रतिद्विजमलंकारंसार्द्धनिष्कशतद्वयम्॥ तदर्धंवातदर्धं
वादोषवित्तानुसारतः॥ उक्तासाधारणीशांतिरुत्पातानामतःपरम्॥उत्पाताश्चैवतच्छांतिर्वक्ष्यतेत्रपृथक्पृथक् ॥ नारदसंहितायाम्॥देवालये
स्वगेहेवाईशान्यांपूर्वतोपिवा॥कुंडंलक्षणसंयुक्तंकल्पयेन्मेखलायुतम्॥ गृह्योक्तविधिनातत्रस्थापयेच्चहुताशनम् ॥ जुहुयादाज्यभागांतेपृथग
ष्टोत्तरंशतम् ॥ यतइंद्रभयामहेस्वस्तिदाघोरमंत्रकैः ॥ समिदाज्यचरुव्रीहितिलैर्व्याहृतिभिस्तथा॥कोटिहोमंतदर्द्धंवालक्षहोममथापिवा ॥
यथावित्तानुसारेणतन्न्यूनाधिककल्पना॥ एकविंशतिरात्रंवापक्षंपक्षार्द्धमेववा॥पंचरात्रंत्रिरात्रंवाहोमकर्मसमाचरेत् ॥ दक्षिणांचततोदद्यादः
चार्यायकुटुंबिने ॥ गणेशक्षेत्रपालार्कदुर्गाक्षोण्यंगदेवताः ॥तासांप्रीत्यैजपःकार्यःशेषंपूर्ववदाचरेत् ॥ ऋत्विग्भ्योदक्षिणांदद्यात्षोडशभ्या
स्वशक्तितः ॥ अद्भुतसागरेगर्गः ॥ सावित्र्यालक्षहोमंचशुभैरेवविशारदः ॥ गांभूमिंचहिरण्यंचधान्यंवस्त्रंतथैवच ॥ दद्याच्चगुरवेग्रामंधेनुंवा
वासोयुगंतथा॥अलंकारैश्चविविधैःप्रीणयेत्प्रीतमानसः ॥अनेनविधिनाभौममद्भुतंशमयेद्गुरुः ॥ एषएवविधिर्ज्ञेयअंतरिक्षाद्भुतेषुच ॥ विशेषो
ऽत्रसावित्र्यादशलक्षंतुहोमयेत् ॥ होमंसमाहितमनाःकुर्याच्चघृतकंबलम् ॥ धेनूनांद्वादशंदेयंशतनिष्कसमायुतम् ॥ गुरवेदीयमानंतुश
मयेदंबराद्भुतम् ॥ दिव्याद्भुतेषुकर्तव्यःकोटिहोमःसमाहितैः ॥ गोसहस्रंचदातव्यंगुरवेदक्षिणाविधौ ॥ एषप्रोक्तोविधिःसम्यग्दिव्यारिष्टवि
पत्करः ॥ कोटिहोमाशक्तौचअल्पफलदिव्योत्पातेअमृताख्यामहाशांतिःकर्तव्याअद्भुतसागरे ॥ प्रयतस्तेषुसर्वेषुदिव्येष्वद्भुतकेष्वपि ॥
महाशांतिंबुधःकुर्यादमृतंविश्वभेषजमिति गर्गोक्तेः ॥ अथर्वमुनिश्च ॥ अद्भुतेष्वपिसर्वेषुत्रिविधेषुनसंशयः ॥ दिव्यांतरिक्षभौमेषुअमृ

तासंस्मृताबुधैः ॥ विष्णुधर्मोत्तरे ॥ सर्वोत्पातप्रशमनीअमृताचाभयास्मृता ( इतिश्रीदिनकरभट्टकृतेशांतिसारेउत्पातशांतयः ) मदन
रत्नेमात्स्ये॥ दिव्यांतरिक्षभौमेषुशांतिरन्नाभिधीयते॥ विशेषेणतुभौमेषुशांतिःकार्यातथाभवेत् ॥ अभयाचांतरिक्षेषुसौम्यादिव्येषुपार्थिव॥
विजिगीषुःपरान्राजन्भूतिकामश्चयोभयेत् ॥ विजिहीर्षुःपरानेवमभियुक्तस्तथापरैः ॥ तथाभिचारशंकायांशत्रूणामपिनाशने ॥ भये
महतिवाप्राप्तेअ याशांतिरिष्यते ॥ राजयक्ष्माभिभूतस्यक्षयक्षीणस्यचाप्यथ ॥ सौम्याप्रशस्यतेशांतिर्यज्ञकामस्यचाप्यथ ॥ अतिवृष्ट्या
मनावृष्ट्यांशलभाखुभयेतथा ॥ प्रसक्तेषुचचोरेषुवैष्णवीशांतिरिष्यते ॥ पशूनांमारकेप्राप्तेनराणामपिदारुणे ॥ भूतेषुदृश्यमानेषुरौद्री
शांतिस्तथेष्यते ॥ वेदनाशेसमुत्पन्नेजननाशेचनास्तिके ॥ अपूज्यपूजनेजातेब्राह्मीशांतिस्तथेष्यते ॥ भविष्यत्यभिषेकेचपरचक्रभये
षुच ॥ स्वराष्ट्रभंगेभेदेचरौद्रीशांतिःप्रशस्यते ॥ त्र्यहातिरिक्तपवनेरूक्षेसर्वदिगुत्थिते ॥ वैकृतेष्वधिवातेचवायवीशांतिरिष्यते ॥ अभि
शापेभयेप्राप्तेभार्गवीस्यात्तथैवच ॥ जातप्रसववैकृत्येप्राजापत्यामहाभुज ॥ उपस्कराणांवैकृत्येत्वाष्ट्रीपार्थिवनंदन ॥ अश्वानांशांति
कामस्यतद्विकारेतथोत्थिते ॥ अश्वान्कामयमानस्यगांधर्वीशांतिरिष्यते ॥ गजानांशांतिकामस्यशांतिरांगिरसीमता ॥ पिशाचादि
भयेजातेनैर्ऋतेनैर्ऋतीस्मृता ॥ अपमृत्युभयेजातेदुःस्वप्नेपिमहाभुज ॥ याम्यांतुकारयेच्छांतिंसंप्राप्तेमारकेतथा ॥ धननाशेसमुत्पन्ने
कौबेरीशांतिरिष्यते ॥ वृक्षाणांतुतथार्चानांवैकृतेसमुपस्थिते ॥ भूमिकंपेतथाशांतिंपार्थिवींसंप्रयोजयेत् ॥ प्रथमेदिनयामेतुरात्र्यांवाम ॥१२६॥
नुजोत्तम ॥ प्रथमेयामइतिरात्र्यपिसंबध्यतेएवमुत्तरत्रापि ॥ हस्तेस्वात्यांचचित्रायामादित्येचाश्विभेतथा ॥ आर्यम्णसौम्यजातेषुवायव्ये

त्वद्भुतेषुच ॥ द्वितीयेदिनयामेतुरात्रौचरविनंदन ॥ पुष्याग्नेयविशाखासुपित्र्याजभरणीषुच ॥ आजंपूर्वाभाद्रपदा ॥ उत्पातायेतथाभाग्ये आग्नेयींतेषुकारयेत ॥ भाग्येपूर्वासु ॥ तृतीयेदिनयामेतुरात्रौचरविनंदन ॥रोहिण्यांवैष्णवीब्राह्मेवासवेवैश्वदेवते ॥ ज्येष्ठायांचयथामैत्रेयेभवं त्यद्भुताःक्वचित् ॥ ऐंद्रीतेषुप्रयोक्तव्याशांतीरविकुलोद्वह ॥ चतुर्थेदिनयामेचरात्रौचरविनंदन ॥ सार्पेपौष्णेतथार्द्रायामाहिर्बुध्न्येचवारु णे ॥ मूलेचजलदैवत्येयेभवंत्यद्भुतास्तथा ॥ वारुणीतेषुकर्तव्यामहाशांतिर्महीक्षिता ॥ मित्रमंडलवेलासुयेभवंत्यद्भुताःक्वचित् ॥ तत्रशां तिद्वयंकार्यंनिमित्तेसतिनान्यथा ॥ एताःशांतयआथर्वणेप्रसिद्धाः॥अथविशेषशांतयः॥तत्रदेवताविकारेहेमाद्रौगर्गः॥देवतार्चाःप्रनृत्यंतिवे पंतिप्रज्वलंतिच ॥आरटंतिचरोदंतिप्रस्विदंतिहसंतिच॥उत्तिष्ठंतिनिषीदंतिप्रधावंतिवमंतिच॥भजंतिविकृताश्चेष्टामानुषाणांभयावहाः ॥ अवाङ्मुखावातिष्ठंतिस्थानात्स्थानंभ्रमंतिच ॥ वमत्यग्नितथाधूमंस्नेहरक्तंतथावसाम्॥ एवमादीनिदृश्यंतेविकाराःसहजोत्थिताः ॥ लिंगा यतनचित्रेषुतत्रवासंनरोपयेत्॥ राज्ञोवाव्यसनंतत्रसचदेशोविनश्यति ॥ देवयात्रासुचोत्पातान्दृष्ट्वादेशभयंवदेत् ॥ देवतार्चाविकारेषुअं तेष्वेवपुरोहितः ॥ देवतार्चांतुगत्वावैस्नात्वाद्याच्छाद्यभूषयेत् ॥ पूजयेत्तांमहाभागगंधमाल्यान्नसंपदा ॥ मधुपर्केणविधिवदुपतिष्ठेदनंतर म् ॥तल्लिंगेनचमंत्रेणस्थालीपाकेयथाविधि ॥ पुरोधाजुहुयाद्वह्नौसप्तरात्रमतंद्रितः॥विप्राश्चपूज्यामधुरान्नपानैःसदक्षिणंसप्तदिनेनरेंद्र ॥ प्रा तेष्टमेह्निक्षितिगोप्रदानैःसकांचनैःशांतिमुपैतिपापात् ॥ अथाग्निविकारेगर्गः ॥ अग्निःप्रदीप्यतेयत्रराष्ट्रेभृशमनिंधनः॥यदीप्यतेचेंधनवांस्त द्राष्ट्रंपीडयतेनृप ॥ प्रासादतोरणद्वारनृपवेश्मसुरालयाः ॥ एतेचयत्रदह्यंतेतत्रराजभयंवदेत् ॥ विद्युतावाप्रदह्यंतेतत्रापिनृपतेर्भयम ॥ अ

नैशानितमांसिस्युर्विनापांसुरजांसिच ॥ धूमश्चानग्निजोयत्रतत्रविद्यान्महद्भयम् ॥ तडिद्विनाभ्रंगगनेभयंस्याद्वृष्टिवर्जिते ॥ दिवासतारेगगने
तथैवभयमादिशेत् ॥ ग्रहनक्षत्रवैकृत्येताराविकृतिदर्शने ॥ पुत्रवाहनदारेषुचतुष्पदगृहेषुच ॥ स्वभावाद्वापिहीयेतधेनुवत्सादिकंचयत् ॥
लोहायुधविकारःस्यात्तत्रसंग्राममादिशेत् ॥ त्रिरात्रोपोषितस्तत्रपुरोधाःसुसमाहितः ॥ समिद्भिःक्षीरवृक्षाणांसर्षपैश्चघृतेनच ॥ होमंकुर्या
दग्निमंत्रैर्ब्राह्मणांश्चैवभोजयेत् ॥ दद्यात्सुवर्णंचतथाद्विजेभ्योगांचैववस्त्राणितथाभुवंच ॥ एवंकृतेतत्क्षमुपैतिनाशंयदग्निवैकृत्यभयंद्विजेंद्र(अ
थवृक्षोत्पातशांतिः ) गर्गः ॥ पुरेषुयेषुदृश्यंतेपादपादैवचोदिताः ॥ रुदंतोवाहसंतोवावमंतोवारसान्भुवि ॥ अरोगाप्रसरोगावानित्यमेव
विचारयेत् ॥ अरोगावाविनावातंशाखांमुंचंतिपादपाः ॥ पुष्पंजलंतथाकाष्ठंदर्शयंतिचपादपाः ॥ पूर्वावस्थांदर्शयंतिफलंपुष्पमनार्तवे ॥
क्षीरंस्नेहंसुरांरक्तंमधुतोयंस्रवंतिवा॥शुष्यंत्यरोगाःसहसाशुष्कारोहंतिवापुनः ॥ उत्तिष्ठंतीहपतिताःपतंतिचतथोत्थिताः ॥ तत्रवक्ष्यामिते
ब्रह्मन्विपाकेफलमेवच ॥ रोदनेव्याधिरल्पेतिहसनेदेशविभ्रमः॥शाखाप्रपतनेकुर्यात्संग्रामंयोधपातनम् ॥ बालानांमरणंकुर्याद्बालानांफल
पुष्पतः ॥ स्वराष्ट्रभेदंकुरुतेफलपुष्पमनार्तवम् ॥ क्षीरंसर्वत्रगंभीरस्नेहंदुर्भिक्षलक्षणम्॥ वाहनापचयंमद्येरक्तेसंग्राममादिशेत् ॥ मधुस्रावेभ
वेद्व्याधिर्जलस्रावेणवर्षति॥अरोगशोषणंज्ञेयंब्रह्मन्दुर्भिक्षलक्षणम् ॥ शुष्केषुसंप्ररोहत्सुवीर्यमन्नंमहीपते॥ उत्थानेपतितानांचभयंभेदकरंभ
वेत्॥स्थानात्स्थानेतुगमनेदेशभंगेतथादिशेत् ॥ जलपत्स्वपिचवृक्षेषुस्वनत्स्वपिधनक्षयम् ॥ एतत्पूजितवृक्षेषुसर्वराजोपिपच्यते ॥ पुष्पैः
फलैर्वाविकृतेराज्ञोमृत्युंतथादिशेत् ॥ अन्येषुचैववृक्षेषुवृक्षोत्पातेष्वतंद्रितः ॥ आच्छादयित्वातंवृक्षंगंधमाल्यैर्विभूषयेत् ॥ वृक्षोपरितथाछत्रं

कुर्यात्पापप्रशांतये ॥ शिवमभ्यर्चयेद्देवंपशुंचास्मैनिवेदयेत् ॥ मूलेभ्यइतिवृक्षेषुहुत्वारुद्रंजपेत्ततः ॥ मध्वाज्ययुक्तेनतुपायसेनसंपूज्यविप्रां
श्चमुवंचदद्यात् । गीतेननृत्येनतथार्चयेत्तंदेवंहरंपापविनाशहेतोः ॥ अद्भुतसागरेऔशनसे ॥ अश्वत्थेपुष्पितेक्षिप्रंब्राह्मणास्तुह्युदुंबरे ॥
प्लक्षेवैश्यास्तुपीडचंतेन्यग्रोधेदस्यवस्तथा ॥ कदंबइक्षुर्वंशोवाफुल्लितश्चेत्कथंचन ॥ वसंतेपुष्पितेयत्रबाणजंबूर्धवस्तथा॥ शृंगवेरोथवायत्रमा
सैःषड्भिर्जनक्षयः॥कुसुमेकुसुमोत्पत्तिःपर चक्रागमंवदेत्॥औदुम्बराणांसमिधोजुहुयादयुतंततः॥महाव्याहृतिभिर्विप्रान्भोजयेद्वैसदक्षिणम्।
कदलीगर्भमूर्द्धन्यःप्ररोहंतिगृहेयदि॥अरण्यंसंभवेद्देशोगर्गस्यवचनंयथा॥सहिरण्यंवृषंदद्याद्द्विजायौदुम्बरीसमित्॥इमारुद्रेतिमंत्रेणहोतव्यं
चसहस्रधा ॥ इतिवृक्षोत्पातशांतिः॥अथवृष्टिवैकृतशांतिः ॥ गर्गः ॥ अतिवृष्टिरनावृष्टिर्दुर्भिक्षायोभयींमता ॥अनृतौतुदिवानंतावृष्टिर्व्या
धिभयायतु ॥ अनभ्रवैकृताश्चैवविज्ञेयाराजमृत्यवे ॥ अनभ्रवैकृतामेघमंतरेणजातगर्जितादयः ॥ शीतोष्णानांविपर्यासेऋतूनांरिपुजंभय
म् ॥ शोणितंवर्षतेयत्रतत्रशस्त्रभयंभवेत् ॥ फलंपुष्पंतथाधान्यंपरिणाहिभयायतु॥ पांसुजंतुफलानांचवर्षणेरोगजंभयम् ॥ छिद्रंवान्नप्रव
र्षणसस्यानामीतिवर्धनम् ॥ विरजस्केरवौव्यभ्रेयदाछायानदृश्यते ॥ दृश्यतेतुप्रतीपावातत्रदेशेभयंभवेत् ॥ प्रतीपाप्रतिकूलाछायाविपरी
तच्छायेत्यर्थः ॥ निरभ्रेवातथारात्रौश्वेतंयाम्योत्तरेणतु॥ इंद्रायुधंतथादृष्ट्वाउल्कापातंतथैवच ॥ दिग्दाहपरिवेषौचगन्धर्वनगरंतथा ॥ परच
क्रभयंविंद्याद्देशोपद्रवमेवच ॥ सूर्येन्दुपर्जन्यसमीरणानांयागस्तुकार्योविधिवद्द्विजेंद्रैः ॥ धान्यानिगोकांचनदक्षिणाश्चदेयाद्द्विजानामघनाश
हेतोः ॥ इतिवृष्टिवैकृतशांतिः ॥ अथजलाशयवैकृतशांतिः ॥ गर्गः ॥ नगरादपसर्पन्तेसमीपउपयांतिच ॥ नद्योनदप्रस्रवणानिरस्ताश्चैभ

वतिवा ॥ विवर्णकलुषंतत्तफेनावर्तंतुसंकुलम् ॥ क्षीरंस्नेहंसुरांरक्तंवहंतेव्याकुलोदकम् ॥ षण्मासाभ्यंतरेतत्रपरचक्रंभयंविदुः ॥ जलाशया
नदंतेचप्रज्वलंतिकथंचन ॥ विमुंचंतितथाब्रह्मन्ज्वालाधूमंरजांसिच ॥ अखातेवाजलोत्पत्तिःससत्त्वावाजलाशयाः॥संगीतशब्दाहृश्यंतेज
नमारभयंविदुः ॥ दिव्यंमहाभयंविद्धिमधुमात्रावसेचनम् ॥ जप्तव्यावारुणामंत्रास्तैश्चहोमोजलंभवेत्॥मध्वाज्ययुक्तंपरमान्नमत्रदेयंद्विजाना
मथभोजनार्थम् ॥ गावश्चदेयाःसितवस्त्रयुक्तास्तथोदकुंभाःसकलाघशांत्यै ॥ इतिजलाशयवैकृतशांतिः ॥अथोपस्करवैकृतशांतिः॥गर्गः॥
यांतियानान्ययुक्तानियुक्तान्यपिनयांतिचेत् ॥ चोद्यमानानितत्रस्यान्महद्भयमुपस्थितम् ॥ वाद्यमानानवाद्यंतेवाद्यंतेवाप्यनाहताः॥अच
लाश्चचलंत्येवनचलाश्चचलंतिच ॥ आकाशेतूपनादश्चगीतगंधर्वनिस्वनः ॥ काष्ठदर्वीकुठारादिविकारंकुरुतेयदि॥ गवलंशूलसंघाश्चस्त्रिय
स्त्रीवापिजायते ॥ उपस्करादिविकृतौघोरशस्त्रभयंभवेत् ॥ वायोस्तुपूजांद्विजसक्तुभिश्चकृत्वानियुक्तांश्चजपेच्चमंत्रान् ॥ दद्यात्प्रभूतंपर
मान्नमत्रसदक्षिणंतेनशमोस्यभूयात् ॥ इत्युपस्करवैकृतिशांतिः ॥ अथमृगपक्षिवैकृतशांतिः ॥ गर्गः ॥ प्रविशंतियदाग्रामानारण्यामृगप
क्षिणः ॥ अरण्यंयांतिवाग्राम्याःस्थलंयांतिजलोद्भवाः ॥ स्थलजावाजलंयांतिघोरावाशांतिनिर्भयाः ॥ राजद्वारेपुरद्वारेशिवाश्चाप्य
शिवप्रदाः ॥ दिवारात्रिचरावापिरात्रौवापिदिवाचराः ॥ ग्रामांस्त्यजंतिग्रामंवाशून्यतांतस्यनिर्दिशेत् ॥ दीप्तंवासंतिसंध्यासुमंडलानिच
कुर्वते ॥ वाशंतेविस्वरंयत्रतदाप्येतत्फलंलभेत् ॥ प्रदोषेकुक्कुटोवाशेद्धेमंतेवापिकोकिलः ॥ अर्कोदयेर्काभिमुखीशिवावापिभयंदिशेत् ॥
गृहेकपोतःप्रविशेत्क्रव्यादोमूर्ध्निलीयते ॥ मधुवामक्षिकाकुर्यान्मृत्युर्गेहपतेर्भवेत् ॥ क्रव्यादोगृध्रकाकादिः ॥ प्राकारद्वारगेहेषुतोरणा

पणवीथिषु ॥ केचिच्छत्रायुधाद्येषुक्रव्यादःसंश्रयेद्यदि ॥ जायतेवाथवल्मीकोमधुवादृश्यतेयदि ॥ सदेशोनाशमायातिराजा
वाम्रियतेतदा ॥ मूषिकाःशलभान्दृष्ट्वाप्रभूतक्षुद्भयंवदेत् ॥ काष्ठोल्मुकास्थिशृंगास्याःश्वानोमारकवेदना ॥ दुर्भिक्षवेदिनोज्ञेयाः
काकाधान्यमुषोयदि ॥ जनानभिभवंतश्चनिर्भयारण्यवेदनाः ॥ काकोमैथुनयुक्तश्चेच्छ्वेतःसयदिदृश्यते ॥ राजावाम्रियतेतत्रस
देशोवाविनश्यति ॥ उलूकोवासतेयत्रनिपतेद्वातथागृहे ॥ ज्ञेयोगृहपतेर्मृत्युर्धननाशस्तथैवच ॥ वासतेकुशब्दंकरोति ॥ मृगपक्षिविकारे
षुकुर्याद्धोमंप्रदक्षिणम् ॥ देवाःकपोतइतिचजप्तव्यंपंचभिर्द्विजैः ॥ वसुदेवन्निवेकेतदेयागावश्चदक्षिणाः ॥ जपेच्छकुंतसूक्तंच
सनोवेदशिरांसिच ॥ गावश्चदेयाविधिवद्द्विजानांसकांचनावस्त्रयुगोत्तरीयाः ॥ एवंकृतेशांतिमुपैतिपापंमृगैर्द्विजैर्वाविनिवेदितंयत् ॥ इति
मृगपक्षिवैकृतशांतिः ॥ अद्भुतसागरेनारदः ॥ मध्याह्नेवार्द्धरात्रेचउदयेऽस्तमयेथवा ॥ ग्राममध्येयदाविप्रफूत्कारंकुरुतेतदा ॥ ग्रामोत्सादो
भवेत्तत्रराज्ञोमरणमादिशेत् ॥ जुहुयात्पंचसाहस्रंजातवेदसमंत्रवित् ॥ धेनुंचदक्षिणांदद्यात्सुवर्णंधान्यमेववा ॥ अस्मिन्नाशुकृतेशांतिःशुभं
ग्रामस्यवैभवेत् ॥ अथाकस्मिकप्रासादपतनशांतिः । गर्गः ॥ प्रासादतोरणाट्टालद्वारप्राकारवेश्मनाम् ॥ अनिमित्तंतुपतनंदृढानांराजमृत्यवे ॥
जरसावाथधूमेनदिशोयत्रसमाकुलाः ॥ आदित्यचंद्रताराश्चवि र्णाभयवृद्धये ॥ राक्षसायत्रदृश्यंतेब्राह्मणाश्चविधर्मिणः ॥ ऋतवश्चविपर्य
स्ताअपूज्यंपूजयेज्जनः ॥ नक्षत्राणिवियोगानितन्महद्भयलक्षणम् ॥ केतूदयोपरागौचच्छिद्रंवाशशिसूर्ययोः ॥ ग्रहर्क्षविकृतिर्यत्रतत्रापिभयमा
दिशेत् ॥ स्त्रियश्चकलहायंतेबालानिघ्नंतिबालकान् ॥ क्रियाणामुचितानांचविच्छित्तिर्यत्रदृश्यते ॥ अग्निर्यत्रनदृश्येतधूमयानोथशाम्यति ॥

क्रव्यादावायसावाहायांतिचोत्तरतस्तथा ॥ पूर्णकुंभाःस्रवंतेचवह्निर्वाविप्रलुप्यते॥मांगल्यध्वनयोयत्रनश्रूयंतेसमंततः ॥ क्षवथुर्वाधतेवाथप्रो
त्साहेसतिनार्दितः॥नदैवतेषुवर्तन्तेयथावद्ब्राह्मणेषुच। मंदघोषाणिवाद्यानिवाद्यंतेविस्वराणिच।गुरुमित्रद्विषोयत्रशत्रुपूजारताजनाः। ब्राह्मणा
न्सुहृदोमान्यान्जनोयत्रावमन्यते।शांतिमंगलहोमेषुनास्तिक्यंयत्रमन्यते।राजावाम्रियतेतत्राथवादेशोविनश्यति। राज्ञोविनाशेसंप्राप्तेनिमि
त्तानिनिबोधमे।ब्राह्मणान्प्रथमंद्वेष्टिब्राह्मणांश्चविनिन्दति।ब्राह्मणस्वानिवादत्तेब्राह्मणांश्चजिघांसति। नतान्स्मरतिकृत्येषुयाचितांश्चान्वसूय
ति॥रमतेनिंदयावैतांप्रशंसांनाभिनंदति॥ अपूर्वंतुकरंलोभात्तथापातयतेजने।एतेष्वभ्यर्चयेत्सम्यक्सपत्नीकान्द्विजोत्तमान्। भोज्यानिचैव
कार्याणिसुराणांबलयस्तथा।गावश्चदेयाद्विजपुंगवेभ्योभुवस्तथाकांचनमंबराणि।होमश्चकार्योद्विजपूजनंचएवंकृतेशांतिमुपैतिपापम्॥मयूर
चित्रे॥ यदाकटकटायंतेभवनान्यायुधानिच ॥ मासाभ्यंतरमात्रेणतदासंग्राममादिशेत् ॥ दिव्यावैकादशीशांतिःकरणीयाविपश्चिता॥अथ
नानोत्पातशांतिः ॥ गर्गः ॥ औत्पातिकींमहाशांतिंतत्त्वतःशृणुमेऽधुना ॥ यत्रव्याधिरनावृष्टिःपरचक्रमुपस्थितम् ॥ दुर्भिक्षंजनमारीवा
राज्ञोमरणमेववा ॥ तत्रशांतिक्रमःप्रोक्तोमहाक्रतुमिहारभेत् ॥ पुनर्होमश्चकर्तव्योबृहस्पतिमतंयथा ॥ गावस्तथैवदातव्यास्तथैवायुर्विवर्ध
नीः ॥ राज्ञोभिषेकंकुर्वीततथैवचसऋत्विजः ॥ त्रिरात्रंसप्तरात्रंवाउपोष्यचपुरोहितः ॥ औदुंबरीणांविधिवत्समिधांचशतंदहेत् ॥ सावि
त्र्याकारयेत्कर्मततःपापंप्रशाम्यति॥ अत्युष्णमतिशीतंच अतिवर्षमनूदकम् ॥ आनर्तवंपुष्पफलमतिमात्रंचमारुतः ॥ भैरवंचातिमात्रंच
रुदंतिमृगपक्षिणः॥ विद्युत्स्तनितनिर्घोषमनभ्रेवातिवर्षणम् ॥ सिंहव्याघ्रस्येतराणांदर्शनंच चतुष्पथे ॥ ईदृशैर्लक्षणोत्पातैर्विनाशमभिलक्ष

येत् ॥ अन्योत्रजायतेराजातथाचान्यःपुरोहितः ॥ तत्रशांतिंप्रवक्ष्यामिपापप्रशमनींशुभाम् ॥ औदुंबरीणांसमिधांशतमष्टोत्तरंदहेत् ॥ सहस्री
रघृताक्तानांमहत्सूत्रगणैःशुभैः ॥ हुत्वाशतसहस्रंतुपरांशांतिमवाप्नुयात् ॥ यमलानिचजायंतेशुभानिनीचवाहनाः ॥ मुंडवक्रमुखाश्चैवकुटा
श्चकुणपास्तथा ॥ अमानुषामानुषाणांगजानांमृगपक्षिणाम् ॥ जायंतेउपरिदंताअश्वाश्वविकृताननाः ॥ बहुशीर्षमशीर्षंवाबहुवर्णमवर्ण
कम् ॥ एकशृंगमशृंगवाचतुर्भुजमथाभुजम् ॥ दीर्घकर्णमकर्णंवागजकर्णमुखंतथा ॥ व्यालव्याघ्रमुखाकारंबिडालमुखमुन्नतम् ॥ ईदृशा
निस्वरूपाणिदृश्यंतेयत्रगौतम ॥ तत्रसंग्रामतोब्रूयाद्भयक्षयकरंमहत् ॥ जनक्षयंचपौराणांराज्ञःश्रेणिवधंतथा ॥ तत्रशांतिंप्रवक्ष्यामिसर्व
पापप्रणाशिनीम् ॥ खदिराश्वत्थसमिधांसहस्राष्टोत्तरंदहेत् ॥ विरूपाक्षेणमंत्रेणविधिवत्सुसमाहितः ॥ विरूपाक्षेणअग्निर्मूर्द्धेत्यादिनातत्रहिवि
रूपाक्षऋषिः ॥ दद्याच्चकपिलांधेनुंहुतांतेशांतिमिच्छता ॥ ततस्तच्छाम्यतेपापंजातवेदोवचोयथा ॥ यत्राकार्याणिकार्यंतेअदंडयेदंडपा
तनम् ॥ अपूज्याश्चैवपूज्यंतेमान्यश्चैवावमन्यते ॥ अनड्वांश्चपिबेद्धेनुंचानड्वाहंपिबेद्यदि ॥ विधुनोतिचगौर्वत्संप्रजातंनाभिनंदति ॥ प्रजातंव
त्संगौरितिशेषः ॥ मैथुनंविपरीतंचअकालेमृगपक्षिणाम् ॥ ब्राह्मणाभिन्नमर्यादानतिष्ठंतिस्वकर्मसु ॥ ईदृशैर्लक्षणोत्पातैविन्द्याद्देशस्यविभ्रम
म् ॥ कलहंजायतेघोरंदुर्भिक्षंजनमारकम् ॥ राजामात्यविनाशंचपौराणांचमहद्भयम् ॥ तत्रशांतिंप्रवक्ष्यामिसर्वपापप्रणाशिनीम् ॥ प्रज्वा
ल्याश्वत्थसमिधःकृत्वासंस्तरणंमहत् ॥ औदुंबरीणांसमिधांसहस्राष्टोत्तरंबुधः ॥ जुहुयाद्विधिवद्धह्नौपरांशांतिमभीप्सता ॥ दासीदाससमायुक्तं
गृहंदद्याद्विजातये ॥ ततःप्रशाम्यतेपापंवसिष्ठस्यवचोयथा ॥ कृष्णापिपीलिकायत्रग्रामेषुनगरेषुच ॥ दृश्यंतेह्यतिमात्रंचेदूर्ध्वंवंशकृताल

याः ॥शांतिगृहेदेवगृहेतथाचनृपतेर्गृहे ॥ उपर्युपरिमात्रंतुदृश्यंतेवेश्मनस्तदा ॥ मक्षिकामशकादंशाअतिमात्रभयावहाः ॥ ईदृशैर्लक्षणो
त्पातैर्महाचोरभयंभवेत् ॥ द्रव्याणांहरणंब्रूयात्परचक्रस्यचागमम् ॥ तत्रशांतिंप्रवक्ष्यामिविश्वामित्रोपदर्शिताम् ॥ अश्वत्थसमिधश्चैवहुत्वा
चाष्टोत्तरंशतम् ॥पूर्णपात्राणिवैदद्याद्धुतांतेभूरिदक्षिणाम् ॥ दासीदाससमायुक्तंगृहंदद्याद्द्विजातये॥तिलपात्रंप्रदातव्यंतिलाञ्जुहुयात्संयतः ॥
अनग्निर्ज्वलतेयत्रविधूमेधूमदर्शनम् ॥ अलंयुक्तमयुक्तंवापुरंप्रविशतेतदा ॥ बालैःसहकुमाराश्चकलहंयत्रकुर्वते ॥ कलहंब्राह्मणानांचसेनाप
तिपरिग्रहम् ॥ गवाद्यानांभवेन्नित्यंयथाघोषनिवासिनाम् ॥ श्रेष्ठिनांसार्थवाहानांकलहोयत्रजायते ॥ राजामात्यविनाशश्चपौराणांचमह
द्भयम् ॥ तत्रशांतिंप्रवक्ष्यामिपितामहवचोयथा ॥ पालाशसमिधश्चाग्नौसहस्राष्टोत्तरंदहेत् ॥ ब्राह्मणान्भोजयेत्तत्रपरमान्नेनशांतये॥प्राका
रेनगरेद्वारगोपुराट्टालकेषुच ॥ रथ्याचतुष्पथेचैवदेवतायतनेषुच॥निवासंयत्रकुर्वंतिबकाःकाकाश्चकौशिकाः ॥ गृध्राःपरभृतश्चैवआरण्या
मृगपक्षिणः ॥ निरूहेत्कलहंघोरंसिद्धानांवचनंयथा ॥ निरुहेत्तर्कयेत् ॥ तत्रशांतिंप्रवक्ष्यामिनारदेनोपलक्षिताम् ॥ अश्वत्थसमिधांचैवघृ
ताक्तानांविभावसौ ॥ वायव्येनेहमंत्रेणनिवेद्यंचसुशोभितम् ॥ ततस्तुशाम्यतेपापंनारदस्यवचोयथा ॥ मृतःश्मशानंयोनीतउपर्जी
वतिमानवः ॥ गृहेयस्यप्रविष्टोसौतिष्ठेदथकदाचन ॥ अचिरान्मृत्युमायातिहृतामत्रपरिग्रहः ॥ सावित्र्याष्टसहस्रेणक्षीरशांतिंचकार
येत् ॥ क्षीरशांतिश्चरक्तानामेकवर्णानामित्यादिनावक्ष्यमाणा ॥ कपिलांतिलकांस्यंचहुतांतेभूरिदक्षिणाम् ॥ ततस्तच्छाम्यतेपापंधर्मराज
मतंयथा ॥ श्वासृगालोथवागृध्राःकाकोवायदिमानुषः॥ श्मशानान्मांसमादायपुरमध्येप्रवेशयेत् ॥ नगरंपत्तनंवापिग्रामंवायदिवागृहम् ॥

अचिरेणैवकालेनतच्छ्मशानंभविष्यति ॥ चौरमंडलपातंतुपरचक्रस्यचागमम् ॥ अनारोग्यमनावृष्टिर्दुर्भिक्षंजनमारकम् ॥ संग्रामशस्त्रसं
घातंक्षिप्रमेवविनिर्दिशेत् ॥ तत्रशांतिंप्रवक्ष्यामियथापापंप्रशाम्यति ॥ अश्वत्थसमिधश्चैवतिलांश्चमधुसंयुतान् ॥ विरूपाक्षेणमंत्रेणविरू
पाक्षान्सशोणितान् ॥ तिलपात्रोपहारंचक्षीरशांतिंचकारयेत् ॥ ततश्चशाम्यतेपापंप्रजापतिमतंयथा॥ सौत्रामणीपाकयज्ञःपशुबंधस्तथैव
च ॥ क्रतवश्चप्रवर्त्तन्तेअनधीत्यक्रतोदयाः ॥यस्मिंस्तथाप्रवर्त्ततेक्रोधलोभभयादपि ॥ अदत्त्वादक्षिणांसम्यग्महदुत्पातलक्षणम् ॥ अना
रोग्यमनावृष्टिर्दुर्भिक्षंजनमारकम् ॥ ज्वरःकासस्तथाश्वासकच्छूदद्रुविकोष्ठिकाः॥ शिरोरोगोक्षिरोगाश्चपांडुरोगोगलग्रहः। आधयश्चप्रवर्त्त
न्तेदुर्दुष्टैःस्वल्पलक्षणैः ॥ तत्रशांतिंप्रवक्ष्यामिबृहस्पतिमतंयथा॥त्रिरात्रोपोषितोभूत्वाहविष्याशीपुरोहितः॥ सक्षीराणांघृताक्तानांसमिधां
वैशतंदहेत् ॥ पलाशस्येतिविशेषः॥ततस्तच्छाम्यतेपापंबृहस्पतिमतंयथा॥इतिनानोत्पातशांतिः ॥ जथजनमारीशांतिः ॥हेमाद्रौगर्गः॥
रुद्रप्रकोपजोयस्माज्जनमारःप्रवर्तते ॥ तस्मात्प्रसादयेद्यत्नादेवदेवंमहेश्वरम् ॥ गाणपत्येनविधिनाअथर्वशिरसातथा ॥ यामलेनविधाने
नकुर्याद्देवप्रसाधनम् ॥ शिवसूक्तमुमासूक्तंजपेच्चशतरुद्रियम् ॥ बल्योपहारान्विविधांश्चत्वरेषुनिवेदयेत् ॥ आवाहयित्वासगणंरुद्रं
रात्रावहस्सुच ॥ ब्राह्मणान्भक्ष्यभोज्यैश्चदक्षिणाभिश्चतोषयेत् ॥ प्रसादितेततोरुद्रेजनमारीनिवर्तते ॥ उपोषितोनृपःस्नातःशुक्लवस्त्रःसमा
हितः ॥ आत्मरक्षांस्वयंकृत्वाततःशांतिंप्रयोजयेत् ॥ इतिजनमारीशांतिः ॥हेमाद्रौमदनरत्नेनृसिंहपुराणे॥ अनावृष्टिमहामारीज्वररोगभये
तथा ॥ नरसिंहंसमाराध्यब्राह्मणैर्वेदपारगैः ॥कारयेल्लक्षहोमंतुग्रामेयश्चनराधिपः ॥ नृसिंहमंत्रेणहोमः । सुश्रुते ॥ स्थानत्यागाज्जपाद्धो

मान्महामारीप्रशाम्यति ॥ आथर्वणेतुरौद्रीशांतिरुक्ता ॥ अथरविच्छिद्रशांतिः ॥ अद्भुतसागरेमयूरचित्रे ॥ तिलैर्दूर्वादिभिश्चैवपत्रैश्चैवय
वैस्तथा ॥ धान्यैरौदुंबरीभिश्चश्रीफलैराहुतिक्रिया ॥ समाप्तौभोजनंकृत्वानटप्रेक्षणमादिशेत् ॥ व्योममध्यगतंपश्येद्यदिसूर्यद्वयंनरः॥ द
धिक्षौद्रघृताक्तानांजुहुयादयुतंशुचिः ॥ उपोष्यार्कस्यसमिधोधेनुंदद्याद्विजातये ॥ अथापर्वग्रहणेशांतिः ॥ तत्रैव ॥ अपर्वणिशशांकार्कौ
त्विष्टोनाममहाग्रहः ॥ आवृणोतितमःश्यामःसर्वलोकविपत्तये॥ औदुंबरीःसहस्राणिचाष्टौचजुहुयाद्बुधः॥मध्वक्तानिचतान्यत्रजातवेदसमं
त्रवित् ॥ विप्रायदक्षिणांदद्याद्धेनुंचवृषभंतथा ॥ अथहस्तिनोऽकालमदेशांतिः ॥ ऊर्ध्वंविंशतिवर्षात्तुमदोभवतिवारणे॥ तदर्वाग्यदिमाद्ये
तस्वामिनोमरणंदिशेत् ॥ अद्भुतसागरे ॥ कारयेत्तत्रशांतिंचब्राह्मणांश्चापितर्पयेत् ॥ स्नानंपूर्वंनरेंद्राणांयथावदभिधीयते ॥ एकरात्रोषितः
स्नात्वाप्रियःप्रयतमानसः ॥ अष्टोत्तरसहस्रंतुमंत्रस्यापिजपेच्छुचिः ॥ ततोजपितमंत्रैस्तुसलिलंचाभिमंत्रयेत् ॥ गजानांगजतत्त्वज्ञःसर्वदो
पहरंशुभम् ॥ गजस्नानंप्रकुर्वीततद्दिनेतूर्यनिस्वनैः ॥ पूर्वाह्णेचाग्निकार्यंतुकृत्वाकुंभशतेनहि ॥ ततोहोमंप्रकुर्वीतविधिदृष्टेनहोमवित् ॥
अग्नयेस्वाहारुद्रायस्वाहागणपतयेस्वाहावरुणायस्वाहा० बृहस्पतयेस्वाहा० शुक्राय० इंद्राय०॥ ततःस्नानंप्रकुर्वीतमंत्रेणानेनचारभेत् ॥
स्नानंकुंभशतेनेहसर्वोपद्रवनाशनम् ॥ अमदोमदेनसहितोवर्धितजातश्चभवतिजातः ॥द्विजभोजनपूर्वंस्यात्पललंगुडमिश्रितंततःकृत्वा ॥
यवयावकसंयुक्तांपिंडंमधुनाथपूजयेद्बहुशः॥कृतपूजासंस्कारंगणाधिपंवंदयेत्तुर्णम् ॥ नैवेद्यमंत्रः॥ईश्वरस्यमहासंध्यमध्ललालाटसंभवम् ॥इदं
कृतोपनीतंतुनैवेद्यंभक्षयस्वनः ॥ अथहस्तिनीधेनुमदशांतिः ॥ अद्भुतसागरेराजपुत्रः ॥ मदंयदातुसुरभीविसृजेत्सूतिमेवच ॥ औत्पाति

कंतदा विद्याद्रूपैरेतैर्महीपतेः ॥ पुरे राष्ट्रे वनेवापि गृहेवा हस्तिनी यदि । मत्ता मूत्रपुरीषाणि यदा संग्राय तिष्ठति । तदा पुरे च राष्ट्रे च भवेद्घोरं महद्भयम् ॥ म
त्तया भज्यते युद्धे हस्तिन्याथ यदि वारणः ॥ महद्भयं तत्र भवेद्देशस्य नगरस्य च ॥ संग्राय निपतेन्नागं मत्ता यत्र च धेनुका ॥ तदा नाशं विजानीयाद्धा
न्यस्य च धनस्य च ॥ अस्मिन्नौत्पातिके शांतिमिमां कुर्यान्नराधिपः ॥ उपोष्य बांधवैस्तत्र सामात्यः सपुरोहितः ॥ ततोपि विधिवच्चैव धेनुकां तां
नवर्तयेत् ॥ हस्तिवत्कल्पितां तां तु विषाणाभ्यां च योजिताम् ॥ नीराजयित्वा तां रात्रौ धेनुकां कृतकौतुकाम् ॥ अथैनां हस्तिनीं नीत्वा शत्रुरा
ष्ट्रे विमोक्षयेत् ॥ इत्येवमेनां कुर्वीत रात्रौ वननिवासिनीम् ॥ तां विशिष्टबलिं होमानुपचारांश्च कारयेत् ॥ अन्यैश्च पेशलैर्विप्रान्दक्षिणाभिश्च तो
षयेत् ॥ अथवा पूर्ववत्कृत्वा शांतिं कृत्वा कटद्वयम् ॥ सुवर्णेन सुतप्तेन वनमेव प्रधावयेत् ॥ नागदंतभंगफलं विस्तरभीतेनोच्यते ॥ अथा
श्वदंष्ट्राभंगादिशांतिः ॥ मदनरत्ने शालिहोत्रे ॥ दंष्ट्राश्च तस्रो भज्यंते युगपद्यस्य वाजिनः ॥ सामात्यस्य सराष्ट्रस्य राज्ञस्तत्र भयं दिशेत् ॥ पतने
त्वेष एवं स्याद्दोषः स्पष्टतरस्ततः ॥ सुवर्णगोप्रदानैश्च द्विजानां तर्पणेन च ॥ शांतिपुण्याहघोषैश्च शमयेदशुभं तथा ॥ अथ लिंगादिभंगे अद्भु
तसागरे नारदः ॥ अत्र देवकुले वज्रं पतेद्गृध्रोथवा पुनः ॥ कंकोथ पतते चैव चूडायामग्निदर्शनम् ॥ लिंगं वा भिद्यते यत्र कंपते चानिमित्ततः ॥ चू
डाभंगो भवेद्यत्र प्रतिमा भिद्यते यदा ॥ ग्रामोत्सादो भवेत्तत्र स्वमिनो मरणं दिशेत् ॥ तत्र शांतिं प्रवक्ष्यामि येन संपद्यते शुभम् ॥ कुंडं कृत्वा विधा
नेन ततो होमं समाचरेत् ॥ चरुं च यमदेवत्यं साधयित्वा विधानतः ॥ सुसुवर्णेन हस्तेन ततः कर्म समारभेत् ॥ अष्टोत्तरशतं जुहुयाद्घृताक्तसमि
धां ततः ॥ माषैर्मुद्गैस्तिलैश्चैव घृतेन मधुना सह ॥ एभिः पंचसहस्राणि शक्तिबीजेन होमयेत् ॥ होमांते तर्पयेद्विप्रान्दक्षिणाभोजनादिभिः ॥ भू

मिंधेनुमनड्वाहंस्वर्णंधान्यंसदक्षिणम् ॥ पंचगव्यंततःकृत्वास्नायाद्देवालयेद्विजः ॥ बलिंदत्त्वाविधानेनकृसरैःपायसैस्तथा॥ ईशानंस्थापयेत्त
त्रबलिंदत्त्वाविधानतः॥एवंकृत्वाविधानंतुकृतकृत्योभवेन्नरः॥मंडपस्यतथाभित्तिश्चडादेवकुलस्यच ।अकस्मान्निपतेद्यत्रकंपतेवानिमित्ततः॥
दधिक्षौद्रघृताक्तानामश्वत्थसमिधांततः॥जुह्यादष्टशतंप्राज्ञइमारुद्रेतिमंत्रवित्।धेनुंचदक्षिणांदद्यात्तिलपात्रंसकांचनम्॥इतिलिंगादिभंगेशा
न्तिः॥अथदुःस्वप्नशांतिंवक्ष्येस्वप्नदर्शनविधिस्तत्फलानिचोच्यंते।अद्भुतसागरेपराशरः।दुकूलमुक्तामणिभिर्नरेन्द्राःसामंतदैवज्ञपुरोहिताश्च
तद्देवतागारमनुप्रविश्यप्रवेशतस्तत्रदिगीश्वरंच ॥ अभ्यर्च्यमंत्रैस्तुपुरोहितस्तुसंयम्यतस्यांभुविसंयतात्मा ॥ ब्राह्मीशपूर्वामथभागपुष्पंकृ
त्वोपधानंशिरसिक्षितीशः ॥ तथैकभुग्दक्षिणपार्श्वशायीस्वप्नंपरीक्षेतयथोपदेशम्॥नमःशंभोत्रिनेत्रायरुद्रायवरदायच ॥ वामनायविरूपा
यस्वप्नाधिपतयेनमः ॥ भगवन्देवदेवेशशूलभृद्वृषवाहन ॥ इष्टानिष्टंममाचक्ष्वस्वप्नेसुप्तस्यशाश्वतः ॥ एकवस्त्रःकुशास्तीर्णेसुप्तःप्रयतमान
सः ॥ निशांतेपश्यतेस्वप्नंशुभंवायदिवाऽशुभम् ॥ सत्याचार्यः॥आयुस्तृतीयभागेशेषेपतितःप्रकीर्तितःस्वप्नः ॥ पित्तेधिकेकांचनरत्नमा
ल्यदिवाकराग्निज्वलनानिपश्येत्॥श्लेष्माधिकश्चंद्रमशुक्लपुष्पसरित्सरोंभोनिधिलंघनानि ॥ यदन्यमध्यप्रथमेनिशांतेप्रावृट्शरन्माधव
संज्ञितेवा ॥ कालेमरुत्पित्तकफप्रकोपःसाधारणंस्याद्बलसन्निपातात्॥दृष्टश्रुतानुभूतंचपार्थिवंकथितंतथा ॥ भावितंदोषजंचैवस्वप्नंसप्तवि
धंविदुः ॥ तत्रपंचविधंपूर्वमफलंभिषगादिशेत् ॥ तत्रशुभस्वप्नमाहपराशरः ॥ स्वांगप्रज्वलनंपरोपशमनंशक्रध्वजालिंगकृत्संयुक्तोपिनरै
र्निपत्यचवियत्प्रक्षेपणंदिक्षुच ॥ बद्धोवानिगडैर्भ्रसेच्चदहनंनारीक्षितोबाहुनाछत्रंवाद्विरदादिरोहणविधौदिव्योपिचब्राह्मणः ॥१॥दिनकरश

शितारा भक्षणस्पर्शनानिविशरणमपिमूर्ध्नःसप्तपंचत्रिधावा ॥ वृषभगृहनरेंद्रश्वेतासहाधिरोहाग्रसनमुदधिभूमौभूमिराज्यप्रदानि ॥ २ ॥
विपुलरणविमर्दद्यूतवादैर्जयश्चपशुमृगमनुजानांलब्धिरध्यासनंवा ॥ विवसनपरिलोपोगम्यनारीगमोवास्वमरणशिखिलाभः सस्यसं
दर्शनंच ॥ ३ ॥ सितसुरभिमनोज्ञालेपमाल्यांबराणांद्विजसुरगुरुराज्ञांदर्शनंह्याशिषश्च ॥ मणिरजतसुवर्णाभोजपात्रेषुभुक्तेघृतदधिपरमान्नं
सर्वमेतच्छुभंच ॥ ४ ॥ योगयात्रायांवराहः ॥ वृश्चिकादिदशनमणिरत्नकांचनप्रदीपकिशोरवत्सहंसशशादयोर्भकलाभः पुत्रलाभाय ॥
पराशरः ॥ श्वेतसूक्ष्मविरक्तप्रशस्ताहतवसनशृंगारव्यजनासितचामरध्वजाभयद्विरदपायसदधिप्राशस्तसितकुसुमनवसस्यलाभोर्थला
भाय ॥ बृहद्यात्रायांवराहः ॥ शैलप्रसादनागाश्ववृषभारोहणंहितम् ॥ चंद्रतारार्कग्रसनंपरिमार्गणएवच ॥ भूम्यंबुधीनांग्रसनंशत्रूणां
चवधक्रिया ॥ जयोविवाहद्यूतेषुसंग्रामेषुतथाजयः ॥ भक्षणंचैवमांसानांमत्स्यानांपयसस्तथा ॥ दर्शनंरुधिरस्यापिस्नानंवारुधिरस्यच ॥
सुरारुधिरमद्यानांपानंक्षीरस्यपायसः ॥ अंत्रैर्वावेष्टितंभूमौनिर्मलंगगनंतथा ॥ मुखेनदोहनंशस्तंमहिषीणांतथागवाम् ॥ सिंहीनांहस्तिनीनां
चवडवानांतथैवच ॥ प्रसादोदेवविप्रेभ्योगुरुभ्यश्चतथाशुभः ॥ अंभसात्वभिषेकश्चज्ञेयंराज्यप्रदंहितत् ॥ राष्ट्रेभिषेकश्चतथाछेदनंशिरसो
पिच ॥ मरणंवह्निलाभश्चवह्निदाहोगृहादिषु ॥ तथोदकानांतरणंतथाविषमलंघनम् ॥ हस्तिनीवडवानांचगवांचप्रसवोगृहे ॥ आरोहणंगजें
द्राणांरोदनंचतथाशुभम् ॥ परस्त्रीणांतथालाभस्तथालिंगनमेवच ॥ निगडैर्बन्धनंचैतथाविष्ठानुलेपनम् ॥ जीवानांभूमिपालानांसुहृ
दामपिदर्शनम् ॥ शुभान्येतानिप्रोक्तानिराज्यलाभकराणिच ॥ विष्णुधर्मोत्तरे ॥ एकस्यांयदिवारात्रौशुभंवायदिवाशुभम् ॥ पश्चाद्दृश्ये

तयत्तत्रतस्यपाकंविनिर्दिशेत् ॥ तस्मात्तुशोभनःस्वप्नःपश्चाज्ज्ञेयोनसंशयः ॥ अथदुस्स्वप्नम् ॥ विष्णुमत्स्यपुराणेच ॥ मलिनां
बरधारित्वमभ्यंगंपंकदिग्धता ॥ उच्चात्प्रतपनंचैवदोलारोहणमेवच ॥ शक्रध्वजस्यपतनंपतनंशशिसूर्ययोः ॥ देवद्विजादिभूपानांप्रजानां
क्रोधएवच॥आलिंगनंकुमारीणांप्राणिनांचैवमैथुनम् ॥हानिश्चैवस्वगात्राणांवीरकंठमनप्रिय॥ दक्षिणाशाभिगमनंव्याधिनाभिभवस्तथा॥
फलापहारश्चतथाशाड्वलानांविशोधनम् ॥ ग्रहाणांचैवभंगश्चग्रहसंमार्जनंतथा ॥क्रीडापिशाचक्रव्यादवानराश्वतरैरपि ॥ काषायवस्त्रधारित्वं
तद्वत्क्रीडनकेतथा ॥ स्नेहपानावगाहौचरक्तमाल्यानुलेपनम् ॥एवमादीनिचान्यानिदुःस्वप्नानिविनिर्दिशेत्॥ पाराशरः॥कायास्यालेपनं
वाकलुषजलमसीगोमयस्नेहपंकैर्हग्जिह्वादंतबाहुप्रपतनमथवानर्थशोकप्रदानि॥ गीतक्रीडितभूषितप्रहसितप्रेताःपिशाचास्तथा वार्केन्द्र
ध्वजतारकानिपतनंविघ्नस्यहेतोस्ततः ॥ बृहद्यात्रायां वराहः॥हरिणारोहेभ्रमणंमृत्युर्नचिरेणसूकरारोहे॥उष्ट्रारोहेव्याधिर्वृद्धिःस्यात्कुंजरारो
हे ॥ मार्कंण्डेयः ॥ वात्यांमूत्रपुरीषंतुसुवर्णंरजतंतथा॥प्रत्यक्षमथवास्वप्नेजीवेतदशमासिकम् ॥ पराशरः ॥ रक्तगंधप्रलिप्तांगोरक्तमाल्योप
शोभितः ॥तैलाभ्यक्तोतिपीतश्चमुंडितोरक्तवस्त्रधृक् ॥ खरमारुह्यवेगेनदक्षिणांदिशमाव्रजेत्॥ स्वात्माचदृश्यतेस्वप्नेसयातियममंदिरम्॥
मार्कण्डेयः ॥ करालैर्विकटैःकृष्णैःपुरुषैरुद्यतायुधैः ॥ पाषाणैस्ताड्यतेस्वप्नेसद्योमृत्युर्भजेन्नरम् ॥ कलावत्याम् ॥ लोहदंडयुतं
कृष्णंनरंकृष्णपरिच्छदम् ॥ स्वप्नेचपार्श्वतोदृष्ट्वात्रिरात्रान्मृत्युमादिशेत् ॥ देवलः ॥ रक्तगंधांबरस्रग्वीगच्छेद्वादक्षिणामुखः ॥
खरोष्ट्रमहिषारोहेत्रिमासान्नाभिजीवति ॥ मार्कण्डेयः ॥ केशांगारंत[illegible]निर्जलांनदीम् ॥दृष्ट्वास्वप्नेदशाहाद्वामृत्युरेकादशदिने॥

॥ वायुलिंगपुराणयोः ॥ मुक्तकेशोहसंश्चैवगायतेनृत्यतेनरः ॥ याम्यांदिशमथोगच्छेत्तदंततस्यजीवितम् ॥ मार्कंडेयः ॥ रक्तकृ
ष्णांबरधरागायंतीचहसंतिच ॥ दक्षिणाशांनयेन्नारीस्वप्नेसोपिनजीवति ॥ यस्तुप्रावरणंशुक्लंस्वप्नेपश्यतिमानवः ॥ कृष्णरक्त
मपिस्वप्नेतस्यमृत्युरुपस्थितः ॥ देवलः ॥श्वभ्रेयोनिपतेत्स्वप्नेद्वारंचास्यपिधीयते ॥ नचोत्तिष्ठतियत्तस्मात्तदंततस्यजीवितम् ॥ अयो
ध्याकांडेभरतः ॥ दृष्टोमयाद्यस्वप्नेवैचंद्रमाःपतितःक्षितौ ॥ सीदतंचतथाद्राक्षंपंकेमग्नंमहागजम्॥ विशीर्यमाणःशैलेंद्रोभग्नश्चात्रमहाद्रुमः॥
स्वप्नेचाद्यमयादृष्टोनिपतंश्चमहाध्वजः ॥ सुंदरकांडेत्रिजटास्वप्नः ॥ कंठेबद्ध्वादशग्रीवंप्रमदारक्तवासिनी ॥ कालीकमलपत्राक्षीदिशंया
म्यांप्रकर्षति ॥ लंकाचेयंपुरीकृत्स्नासवाजिरथकुंजरा ॥ सागरेपतितादृष्टामयासपुरतोरणा ॥ नंदिपुराणेत्रिपुरवधे ॥ मयाद्यदृष्टःस्वप्नांतेपि
नाकीक्रोधमूर्च्छितः ॥ उदरेऽस्यपुरीकृत्स्नाविवेशयतिवेगतः ॥ पराशरः ॥ शुभाशुभस्वप्नविचारमुक्तमयुक्तमुक्तंचसमूह्यबुद्ध्या ॥ देशा
दिवर्णाकृतिसंपदश्चतत्तत्फलंसंपरिकल्पयेच्च॥पादद्विपादोत्तरपादवृद्ध्याचावर्षार्धमासत्रयमासकालाः ॥ निशाविभागेषुचतर्षदृष्टाःस्वप्नाअनि
त्सः ॥ मात्स्यविष्णुधर्मोत्तरयोः ॥ स्वप्नस्तुप्रथमेयामेसंवत्सरफलोभवेत् ॥ षड्भिर्मासैर्द्वियामेचत्रिभिर्मासैस्त्रियामकः ॥ चतुर्थेमासमात्रेण
फलंभवतिनान्यथा ॥ अथदुःस्वप्नशांतिः ॥ मात्स्ये ॥ स्तुतिश्चवासुदेवस्यतथातस्यचपूजनम् ॥ नागेंद्रमोक्षश्रवणंज्ञेयंदुस्वप्ननाशनम् ॥
पराशरः ॥ देवद्विजाग्निप्रतिपूजनानिमंत्रोपवासादिपवित्रमेव ॥ तिलान्नगोभूमिहिरण्यदानंदुःस्वप्नसंदर्शननाशनानि॥ अथांबुसंस्पर्शनमंत्र

होमतिलप्रदानंतपनंचभूयः ॥ शांतिर्जपोहोमगुडान्नदानंदुःस्वप्नहंतॄणिपयश्चगांगम् ॥ तिलानामयुतंतत्रजुहुयात्तुसमाहितः ॥ तिलोसीती
तिमंत्रेणधेनुंदद्यात्सदक्षिणाम् ॥ ब्राह्मणांस्तर्पयेत्तत्रदक्षिणाभोजनादिना ॥ दानंचविविधंदेयमशुभानांविनाशनम् ॥ षड्भिर्मासैस्तुसंपूर्णैर
न्यथामरणंभवेत् ॥ अत्रलक्षहोमश्चंडिकापाठादिशांतिरपिकार्या । शौनकः ॥ यदानिष्टफलंस्वप्नंपश्येत्तस्योच्यतेविधिः ॥ स्नात्वाप्रभाते
संध्यांचउपास्यतदनंतरम् ॥ अद्यानोदेवसवितरित्यृचापूर्वमेकया ॥ ततःपरंपरंयच्चगोषुदुःस्वप्नंपंचभिः॥ ऋग्भिःपरंयोमेराजन्युद्यइत्याद्यृ
चातथा॥ऋग्भिःसर्वाभिरेताभिरुपतिष्ठेतभास्करम्॥एवंकृतेतुदुःस्वप्नदर्शनंनिष्फलंभवेत्॥तत्रैव॥ अधःस्वप्नस्येतिजपन्प्रातःप्रातर्दिनेदिने
दुःस्वप्नंनुदतेकृत्स्नंनतस्माद्विंदतेभयम् ॥ पारिजातेशौनकः॥स्वप्नोत्पातेषुचैतेषुकालरात्र्यधिदेवता॥पूजाविधानंपूर्वोक्तंकुर्यादत्रापियत्नतः॥
रात्रिसूक्तंकल्पवदित्यर्थः ॥होमंकुर्यात्प्रयत्नेनरात्रावेवद्विजोत्तमः॥प्रत्यृचंपायसंहुत्वारात्रीव्यख्यदितिक्रमात् ॥ अष्टोत्तरशतंहुत्वासूक्तेनाने
नयत्नतः ॥ स्वप्नाधिपतिमंत्रेणहुनेदष्टोत्तरंशतम् ॥ कालरात्रेर्नाममंत्रेणेत्यर्थः ॥ गुरवेदक्षिणांदद्याद्वस्त्रहेमपशूनपि ॥ यद्युक्तेदक्षिणादाने
प्यशक्तोहोमकर्मणि ॥ हिरण्यंदक्षिणांदद्यात्तदानीमेववाबुधः ॥ वस्त्रकुंभादिसकलंतद्धोत्रेप्रतिपादयेत् ॥ याम्याशांतिश्चात्रोक्ताबह्वृचश्रुतौ॥
सपद्येतेषांकिंचित्पश्येदुपोष्यपायसंस्थालीपाकंश्रपयित्वारात्रिसूक्तेनप्रत्यृचंहुत्वान्येनान्नेनब्राह्मणान्भोजयित्वाचरुंस्वयंप्राश्नीयादिति ॥
इतिदिनकरभट्टकृतेशांतिसारेदुःस्वप्नशांतिः ॥ अथपर्जन्यशांतिः ॥ अथातः पर्जन्यसूक्तविधिंव्याख्यास्यामोब्राह्मणान्वेदपारगान्वरणपूर्व ॥१३४॥
कमभ्यर्च्यवरुणप्रतिमांपूजयित्वोदकमध्येस्थित्वावरुणंध्यात्वातत्सवितुरितिपच्छोर्धर्चशोनदीनदादीन्पति ॥ इमंमेवरुणेतिपंचर्चंसुदु

त्तमितिपडर्चमापउंदंतूदायुष। महांइंद्रोयओजसावाचामैंद्रियेणयोवैसप्तदशंमैत्रावरुणीमसौसौ।रिंवरुणंप्रजापतिर्वरुणाययावामेतद्वैहिरण्यव
र्णापवमानोवृषासोअर॰ शुःसि॰ हेसर्वेषुयोसौयोपामादिसर्वाननुवाकानसुवर्णसहस्रशीर्षाभ्यः आदित्योवैपृथिवीमिमिदित्यनुवाकाञ्जपित्वा
जलाद्बहिर्गत्वाचम्यपश्चिमाभिमुखोभूत्वापीवोअन्नामित्यनुवाकमेकादशवारंजपित्वाशुष्कवस्त्राणिधारयेत्॥ततोहोमंकरिष्यइतिसंकल्प्यवि
धिवदग्निंप्रतिष्ठाप्याज्यभागांतेक्षीराज्यवेतसमिद्भिराज्यमिश्रचरुभिःप्रत्येकमष्टोत्तरशतमष्टाविंशतिर्वापुरोवातोवर्षन्नितिजुहुयाद्वर्षायपुरोवा
तायेत्युद्देशत्यागस्ततोजपादीन्प्रायश्चित्ताहुतीर्जुहुयात्पूर्णाहुतिंहुत्वाशांतिपाठंकुर्याद्यावद्दीक्षादिनानितावद्ब्रह्मचर्यंचरेद्वेदविदेकुटुंबिनेशां
तायाचार्यायवस्त्रादिभिरलंकृत्यवरुणप्रतिमांदद्यादृत्विग्भ्योदक्षिणांदद्यादित्याहभगवान्बोधायनः ॥ ऋग्विधाने ॥ अच्छावदेतिसूक्तंतुवृ
ष्टिकामःप्रयोजयेत् ॥ निराहारःक्लिन्नवासाअचिरेणप्रवर्षति ॥ हुत्वायुतंवैतसीनांक्षीराक्तानांहुताशने ॥ महद्वर्षमवाप्नोतिसूक्तेनाच्छावदेन
हि॥इतिपर्जन्यशांतिः।अथराजाभिषेकः।सद्विधाप्रथमाभिषेकः।सांवत्सरिकश्चेति॥तत्राद्येपुरोहिताद्विनापितृकृतंराजप्रथमाभिषेकेरथसिंहा
सनासिच्छत्रचामरध्वजगजवाजिवस्त्रालंकारसांवत्सरचिकित्सपुरोहितादीन्युपयुक्तानिनोपयोजयेदितिगोपथब्राह्मणात्॥तत्रादौपुरोहितव
रणम् ॥तस्माद्गुरुंवेदरहस्ययुक्तंचतुर्विधेकर्मणिचाप्रमत्तम् ॥ शांतंचदांतंचजितेंद्रियंचकुर्यान्नरेंद्रःप्रियदर्शनंचेतिगोपथब्राह्मणात् ॥ वरणोत्त
रंकर्तव्यंचतत्रैवोक्तम् ॥ मधुपर्काद्येनसर्वार्थंसंपाद्यदक्षिणांदद्यात्कोटिमध्यात्तृतीयंभागंयथाभूमिप्रमाणेनवाहस्त्यश्वनरयानंदिव्यमाभरणमा
तपत्रंहिरण्यंक्षितिगोधनधान्यरत्नादिकंचगुरवेदद्याद्येनवातुष्यतेति ॥ ततोविनायकशांतिंकृत्वामंडपंकुंडंचविधायग्रहमखवदैंद्रीशांतिश्चका

येंत्याथर्वणसूत्रेउक्तम्॥विष्णुधर्मोत्तरेतुविनायकशांतिर्नोक्ता॥राज्याभिषेकेकालोविधिश्चवसिष्ठसंहितायाम्॥आधानजन्मेशदशाधिनाथर
वींदुभौमेज्यसितैर्बलिष्ठैः ॥ उत्पातदोषादिविवर्जितेषुधराधिपानामभिषेकइष्टः ॥ मूलत्रिकोणस्थगृहोच्चमित्रगृहस्थितैर्वापितदंशसंस्थैः ॥
शुभेविलग्नेसततंग्रहेंद्रादिशंतिलक्ष्मींविपुलांचकीर्तिम् ॥ स्वनीचवैरिगृहगैस्तदंशैरस्तंगतैर्वक्रमुपागतैर्वा ॥ पापोदयेशोकभयंत्वकीर्तिंदिशं
तिराज्ञांभृशमंबराटाः ॥ शीर्षोदयेचोपचयेग्रहोवास्वजन्मलग्नादथलग्नगेपि ॥ शुभग्रहैर्युक्तनिरीक्षितेवापदंस्थिरंस्यात्सततंचराज्ञाम् ॥
रिक्तावमायांबुधभौमवारवर्ज्येषुवारेषुदिनेषुचैव ॥ बलेर्दिनेन्द्रक्षनिशेशयोश्चननैधनेभेत्वभिषेकइष्टः ॥ पापग्रहैःस्वांत्यगतैश्चनिःस्वोरोगीवि
लग्नोपगतैर्भवेत्सः ॥ पदच्युतःसप्तचतुर्थगैस्तैःपुत्रस्थितैःसर्वसुखैर्विहीनः ॥ भ्रष्टोव्यमःकर्मगतैरनायुर्मृत्युस्थितैर्वीर्ययुतैश्चपापैः ॥ लग्नव्य
याष्टारिगतःशशांकःक्षितीश्वरंहंतितदाबलश्चेत् ॥ केंद्रत्रिकोणत्रिधनायसौम्यैस्त्रिषष्ठलाभोपगतैश्चपापैः ॥ षष्ठाष्टलग्नव्ययवर्जितेनचंद्रेण
राज्ञांशुभदोभिषेकः ॥ यस्याभिषेकेपुरुहूतमंत्रीलग्नेत्रिकोणेयदिवाभवेत्सः ॥ षष्ठेकुजःकर्मगतश्चशुक्रःसमोदतेविक्रमराजलक्ष्म्या ॥
दुश्चिक्यलाभारिगतोविनार्किंस्वस्थेमरेज्येयदिबंधुगेन्ज्ञे ॥ यस्यात्रयोगेक्रियतेभिषेकश्चिरायुषस्तस्यपदंस्थिरंस्यात् ॥ शुभेषुचंद्र
योगेषुस्वयोगेषुशुभेषुच ॥ राजयोगेषुयोराजात्वभिषिक्तःक्षितीश्वरः ॥ प्राग्भागेमंदिरस्याथगोमयेनतुकारयेत् ॥ मंडलंचतु
रस्रंतद्वर्णकैःसमलंकृतम् ॥ तत्रभद्रासनंसम्यग्रचयेत्सुमनोहरम् ॥ गंगातोयसुसंपूर्णपूर्णकुंभोदकैःसह ॥ दिग्विदिक्षुस्थितैःशुक्लगंधमाल्यां
बराचिंतैः ॥ शतौषधीमूलहेमरत्नसद्बीजपल्लवैः ॥ मृत्तिकांवृषशृंगंचगजदंतंवरोचनम् ॥ उत्पलंपद्मकंपद्ममुरारेणुककुंकुमम् ॥ राजसर्ष

पमुस्तंचदेवदारुसमन्वितैः ॥ देवस्यत्वेतिमंत्रेणआयुःपुष्टियशस्करैः ॥ अग्निलिंगैर्वेदमंत्रैश्चशुभलग्नेशुभान्विते ॥ भद्रासनेसनृपतेरभिषे
कंचकारयेत् ॥ नीराजनंचकर्तव्यंशंखवादित्रनिःस्वनैः॥आशिषोवाचनंकृत्वापूजयेच्चसुरान्पितॄन् ॥ आयुधानिचपट्टंचविप्रान्गंधादिनार्च
येत् ॥ शुक्लमाल्यांबरवृतःप्राङ्मुखस्यमहीपतेः॥पट्टंशिरसिबध्नीयात्सिंहासनगतस्यच ॥ विप्रेभ्योदक्षिणांदद्यान्मानयेन्मंत्रपूर्वकम्॥ब्रूया
त्प्रत्यङ्मुखोराजानमामित्वांधरेतिच ॥ प्राच्यांमामभिषिंचंतुवसवस्तेजसेश्रिये ॥ याम्यायामभिषिंचंतुमांरुद्राविजयायच ॥ आदित्या
स्त्वभिषिंचंतुप्रतीच्यांदिशिवृद्धये ॥ विश्वेदेवास्तथोदीच्यामभिषिंचंतुपुष्टये ॥ दिगीशास्त्वभिषिंचंतुमांसदाविजयायच ॥ साम्राज्यमि
तिमंत्रेणराजानंसम्यगर्चयेत् ॥ व्याघ्रचर्मण्यथासीनंनवालंकारभूषितम् ॥ छत्रचामरसंयुक्तंराजचिह्नसमन्वितम्॥पुरोहितश्चजुहुयात्सावि
त्र्याग्नौप्रयत्नतः ॥ उदुंबरसमिद्भिश्चआज्येनाष्टोत्तरंशतम्॥विद्वत्पुरोहितामात्यवृद्धबंधुसमन्वितः॥तदासंचिंत्यसप्तांगंप्रजाधर्मेणपालयेत्॥
एवंयःकुरुतेसम्यक्सराजावर्द्धतेचिरम् ॥ इतिविष्णुधर्मोक्तोराजाभिषेकः ॥ हेमाद्रौ ॥ अथसंभृतसंभारोराज्ञःसांवत्सरःस्वतः ॥ कालेभि
षेचनंकुर्यात्तत्कालंकथयाम्यहम् ॥ मृतेराजनिकालस्यनियमोत्रविधीयते ॥ तत्रास्यस्नपनंकार्यंविधिवत्तिलसर्षपैः ॥ घोषयित्वाजयंचास्य
सांवत्सरपुरोहितौ ॥ अन्यासनोपविष्टस्यदर्शयेत्तुजनंशनैः॥ ससांतयित्वातुजनंमुक्त्वाबंधनगांस्ततः ॥ अभयंघोषयित्वातुकालाकांक्षी
ततोभवेत्॥नाभिषिच्योनृपश्चैत्रेनाधिमासेचभार्गव॥नप्रसुप्तेतथाविष्णौविशेषात्प्रावृषिद्विज॥नचभौमदिनेरामचतुर्थ्यांचतथैवच॥नवम्यां
चाभिषेक्तव्यश्चतुर्दश्यांचभार्गव॥ध्रुवाणिवैष्णवंशाक्रंहस्तपुष्यौतथैवच॥नक्षत्राणिप्रशस्यंतेभूमिपालाभिषेचने । नागंचतुष्पदंविष्टिःकिंस्तु

ग्नंशकुनंतथा ॥करणानिनशस्यंतेव्यतीपातदितनंतथा ॥ नक्षत्रमुल्काभिहतमुत्पाताभिहतंचयत्॥सोमसूर्यकुजाक्रांतंपरिविद्धंचभार्गव॥
मुहूर्ताश्चोक्तनक्षत्रसमामानाहितप्रदाः ॥ कुजहोरातथानेष्टासर्वत्रकुलिकश्चहि ॥ वृषोथकीटःसिंहस्तुकुंभोलग्नप्रशस्यते ॥ एतेषांजन्मलग्ने
शात्स्यादप्युपचयेस्थितम् ॥ तारा द्वितीयाषष्ठीचचतुर्थीचाष्टमीतथा ॥ नवमीचतथाशस्ता अनुकूलश्चचंद्रमाः॥पापाश्चोपचयस्थानेशस्तो
लग्नेदिवाकरः ॥ सौम्याःकेंद्रगतालग्नाच्छुभाश्चैवत्रिकोणयोः ॥ लग्नेनवांशेक्षितिजस्यवर्ज्योवर्ज्यस्तथातस्यमहानुभावः ॥ सूर्यस्यवर्गः
सकलःप्रशस्तोराज्ञोभिषेकेसनृपोग्रहाणाम् ॥कार्यापौरन्दरीशांतिःप्रागेवास्यपुरोधसा॥सोष्णीषःश्वेतवसनःसितचंदनभूषितः।सितमाल्यो
पवीतश्चसर्वाभरणभूषितः ॥ वेदिमुल्लिख्ययंत्रेणकृत्वाचविधिवत्ततः॥जुहुयाद्वैष्णवान्मंत्रांस्तथाशाक्तान्विशेषतः॥सावित्रीवैश्वदेवाद्यान्सौ
म्यांश्चविधिवत्ततः।आशुःशर्मगणंचैवतथास्वस्त्ययनंगणम्॥आयुष्यमभयंचैवतथाचैवापराजितम्॥आशुःआशुःशिशानइतिसूक्तम्॥शर्म
वर्मगणइत्याथर्वणेप्रसिद्धः॥तथास्वस्त्ययनेपुष्पामयापराजितागणाः॥संपातवंतंकलशंतथाकुर्याच्चकांचनम्। स्नानंसमारभेद्राज्ञोहोमकाले
पुरोहितः॥आदौतुस्वेच्छयास्नातःपुनर्ऋग्भिःसमाचरेत् ॥ पर्वताग्रमृदातावन्मूर्धानंशोधयेन्नृपः ॥ वल्मीकाग्रमृदाकर्णौवदनंवैशिवालया
त् ॥ चंद्रालयमृदाग्रीवांहृदयंतुनृपाजिरात ॥ करिदंतोद्धृतमृदादक्षिणंतुतथाभुजम् ॥ सरोमृदातथापृष्ठमुदरंसंगमान्मृदा ॥ नदीकूलद्वयमृ
दापार्श्वौसंशोधयेत्तदा ॥ वेश्याद्वारमृदाराज्ञःकटिशौचंविधीयते ॥ गजस्थानमृदाचैवशोधयेज्जानुनीतथा ॥ अश्वस्थानात्तथाजं
घेराज्ञःसंशोधयेद्बुधः ॥ रथचक्रोद्धृतमृदातथैवचरणद्वयम् ॥ मृत्पूतःस्नापनीयःस्यात्पंचगव्यजलेनतु ॥ ततोभद्रासनगतंमुख्यामात्य

चतुष्टयम् ॥ बलिप्रदानंभूपालमभिषिंचेद्यथाविधि ॥ पूर्वतोहेमकुंभेनघृतपूर्णेनवाडवः ॥ वाडवोब्राह्मणः ॥ दक्षिणेक्षीरपूर्णेनरौप्यकुंभेनबा
हुजः ॥ दध्नाचताम्रकुंभेनवैश्यःपश्चिमतोद्विजः ॥ नादेयेनजलेनोदक्शूद्रामात्योभिषेचयेत् ॥ ततोभिषेकंनृपतेर्बह्वृचप्रवरोद्विजः ॥ कुर्वीत
मधुनारामच्छंदोगश्चकुशोदकैः ॥ संपातवंतंकलशंततोगत्वापुरोहितः ॥ विधायवह्निरक्षांतुसदस्येषुयथाविधि ॥ राजसूयाभिषेकेतुयेमंत्राः
परिकीर्तिताः ॥ तैस्तुदद्यान्महाभागब्राह्मणानांस्वरेणतु ॥ ततःपुरोहितोगच्छेद्वेदिमूलंतदैवतु॥ विभूषितंतुराजानंसर्वतोभद्रआसने ॥ शत
च्छिद्रेणपात्रेणसौवर्णेनयथाविधि॥ अभिषिंचेतधर्मज्ञःसम्यग्वेदविशारदः ॥ याओषधीरोषधिभिःस्तुतिभिःसुसमाहितः ॥ रथेतिष्ठतिगंधै
श्चआब्रह्मन्ब्राह्मणस्तथा ॥ बीजैःपुष्पैस्तथाचैनंरामपुष्पवतीतिच॥ तेनैवचैवमंत्रेणफलैस्तमभिषेचयेत् ॥ आशुःशिशानमित्येवसर्वमंत्रैश्च
भार्गव ॥ येदेवाःपुरःसदेतिकुशोदैःपरिमार्जयेत ॥ ऋग्वेदवित्तथाराज्ञश्चंदनेनयथाविधि ॥ मूर्द्धानंचतथाकंठंगंधद्वारेतिसंस्पृशेत ॥ ततो
ब्राह्मणमुख्याश्चक्षत्रियाश्चविशस्तथा ॥ शूद्राश्चवारमुख्याश्चनानातीर्थसमुद्भवैः ॥ नादेयैःसारसैःकौपैर्नानाकलशसंस्थितैः॥ चतुःसागरजै
र्लाभादलाभाद्द्विजकल्पितैः ॥ गंगायमुनयोश्चैवनिर्झरैश्चतटोद्भवैः ॥ छत्रपाणिर्भवेत्कश्चित्केचिच्चामरपाणयः ॥ अमात्यमुख्यास्तत्कालं
केचिद्वेत्रधरास्तथा ॥ शंखभेरीनिनादेनबंदिनादस्वनेनच ॥ गीतवादित्रघोषेणद्विजकोलाहलेनच ॥ राजानमभिषिंचेयुःसमेत्यसहिता
जनाः ॥ सर्वलोकाभिषिक्तस्यसंमिश्रजलसंयुतम् ॥ मंत्रौषधियुतंपुण्यंसर्वगन्धयुतंतथा ॥ रत्नबीजसमायुक्तंचंदनैःकुसुमैस्तथा ॥ रक्तबीज
समायुक्तफलबीजयुतंतथा ॥ पूजितंसितवस्त्रेणवेष्टितग्रीवमेवच ॥ श्वेतवस्त्रावकांतैश्चसंवीतंशुचिभूषितम् ॥ क्षीरवृक्षलताच्छन्नंसुदृढंकांचनं

नवम्॥ आदायकलशंराज्ञः स्वयंसांवत्सरस्तदा ॥ मंत्रावसानेस्नपनंकुर्याद्भृगुकुलोद्वह ॥ ततः पश्येन्मुखंराजादर्पणेचाथसर्पिषि ॥ सोष्णी
षंसितवस्त्रंचमंगलालंभनंचरेत् ॥ ततः संपूजयेद्विष्णुंब्रह्माणंशंकरंतथा ॥ लोकपालान्ग्रहांश्चैवनक्षत्राणिचभार्गवम् ॥ ततः स्वपूजांकुर्वीतश
यनीयंततोव्रजेत् ॥ व्याघ्रचर्मोत्तरंरम्यंसितवस्त्रोत्तरच्छदम् ॥ पुरोधामधुपर्केणतत्रस्थंतंसमर्चयेत् ॥ राजाचैवार्चयेत्तत्रसांवत्सरपुरोहितौ ॥
मधुपर्केणधर्मज्ञस्ततस्तस्यसदैववित् ॥ पट्टबंधंप्रकुर्वीतततोमुकुटबंधनम्॥ततः संबद्धमुकुटंकालेपूर्वमयोदिते॥पराध्यास्तरणोपेतेपंचचर्मोत्त
रच्छदे ॥ ध्रुवाद्यौरितिमंत्रेणसोपवेश्यः पुरोधसा ॥ वृषस्यवृषदंशस्यद्वीपिनश्चमृगूत्तम॥ तेषामुपरिसिंहस्यव्याघ्रस्यचततः परम् ॥ तत्रोपवि
ष्टस्यतदाप्रतीहारः प्रदर्शयेत् ॥ अमात्यांश्चतथापौरान्नैगमांश्चापणेश्वरान् ॥ तथाप्रकृतयश्चान्यायथावदनुपूर्वशः ॥ ततोग्रहारवस्त्रैश्चतुरंग
कनकोत्तमैः ॥ गोजाविगृहदानैश्चसांवत्सरपुरोहितौ ॥ पूजयित्वाततः पश्चात्पूजयेद्ब्राह्मणत्रयम् ॥ अनेनैवविधानेनयेनराजाभिषेचितः ॥
ततः सदस्यान्संपूज्यसांवत्सरपुरोधसः ॥ ततोब्राह्मणमुख्यानांपूजनंतुसमारभेत ॥ गोरौप्यतिलवस्त्रान्नफलकांचनगोरसैः ॥ मोदकैः श्वेतपु
ष्पैश्चमहादानैश्चसुव्रत ॥ मंगलालंभनंकृत्वागृहीत्वासशरंधनुः ॥ वह्निंप्रदक्षिणंकृत्वाप्रणिपत्यतथागुरून् ॥ पृष्ठतोवृषमालभ्यगांसवत्सांच
पार्थिव ॥ पूजयित्वाचतुरगंमंत्रितंचाभिषेचितम् ॥ मंत्रितेदक्षिणेकर्णेस्वयंदैवविदाततः ॥ आरुह्यराजमार्गेणस्वपुरंचपरिभ्रमेत् ॥ मुख्या
मात्यैः सममंत्रैः सांवत्सरपुरोहितैः ॥ सहितः कुंजरारूढोअभिगच्छेच्चदेवताः ॥ तासांसंपूजनंकृत्वानगरंयोभिवेष्टितः ॥ प्रविश्यांतर्गृ
हंराजाप्रविष्टनरवाहनः ॥ दानमानादिसत्कारैर्गृह्णीयात्सकृतिंततः ॥ संपूजितास्ताविसृजेद्द्वितीयेस्वकेगृहेस्यान्मुदितोमहा

त्मा ॥ विधानमेतत्समवाप्यराजाकृत्स्नांचधात्रींवशगांविदध्यात् ॥ इतिविष्णुधर्मोत्तरेराजाभिषेकविधिः ॥बौधायनेनाभिषेकांते विशेषउ
क्तः ॥ अथरथमारुह्यग्रामंप्रदक्षिणीकृत्यदुंदुभिशब्देनस्वस्तिसूक्तेनेति ॥ हेमाद्रावाथर्वणगोपथब्राह्मणे ॥ अथराज्ञामभिषेकविधिंव्याख्या
स्यामोबिल्वप्रभृतीन्संभृत्यषोडशकलशान्षोडशबिल्वानिवल्मीकस्यचमृत्तिकाः॥सर्वान्नंसर्वरसान्सर्वबीजानितत्रचत्वारःसौवर्णाश्चत्वारो
राजताश्चत्वारस्ताम्राश्चत्वारोमृन्मयास्तान्ह्रदेसरसिवाद्धौतुतौवनांवएताआपइत्युदकेनपूरयित्वावेदिपृष्ठेसंस्थाप्यबिल्वमेकैकं दद्यात्सर्वान्नं
सर्वरसान्सर्वबीजानिचप्रभावैरपराजितैरापुण्यैःस्वस्त्ययनैः सौवर्णेषुसंपातान्संस्राव्यसोमाग्नीयैश्चराजतेषुभैषज्यांहोममुच्चैस्ताम्रेषुमंवेत्ससं
सर्गात्यांशांततीयैःप्राणसूक्तेनचमृन्मयेषुततस्तान्कलशाञ्श्रोत्रियैःपवित्रैरभियसन्मुखमभिषेचयेत् ॥ भूमिमिंद्रियंवर्धयक्षत्रियंमइतिसिंहा
सनमभिमंत्रयेत्॥एवमभिषिक्तस्तुरसान्प्राश्नीयात्॥ विप्रेभ्यश्चदद्याद्गोसहस्रंसदस्येभ्यःक्षेत्रंग्रामंचविपुलांपृथ्वींयशःप्राप्नोतिभुंक्तेधरांजित
शत्रुःसदाभवेदिति ॥ अथाभिषेकमंत्राः ॥ हेमाद्रौविष्णुधर्मोत्तरे ॥ शृणुष्वावहितोमंत्रंरामकल्मषनाशनम् ॥ येनाभिषिक्तोनृपतिश्चिरंयश
सितिष्ठति ॥ राज्ञोभिषिक्तशब्दांतेदैववित्कुशवारिणा ॥ कुंभादभ्युक्षणंकुर्यान्मंत्रांतेकलशंन्यसेत् ॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहे
श्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥
वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा ॥ रुद्रोधर्मोमरुदक्षोरुचिःश्रद्धाचपार्थिव ॥भृगुरत्रिर्वसि
ष्ठश्चसनकश्चसनंदनः ॥ सनत्कुमारश्चतथाभगवानपिनांगिराः ॥पुलहश्चपुलस्त्यश्चमरीचिःकश्यपःप्रभुः ॥ एतेत्वामभिषिंचंतुप्रजाध्यक्षाः

समागताः ॥ प्राभाकराबर्हिषदोअग्निष्वात्तास्तथैवच ॥ क्रव्यादाश्चोपहूताश्चआज्यपाश्चसुकालिनः ॥ एतेत्वामभिषिंचंतुपितरश्चाग्निभिः
सह ॥ लक्ष्मीर्वेदीसतीक्षांतिरनुसूयातथास्मृतिः ॥ संभूतिःसंततिश्चैवक्षमाप्रीतिस्तथैवच॥स्वाहास्वधाचतेराजन्नभिषिंचंतुमातरः ॥ कीर्तिं
र्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिस्तुष्टिःसिद्धिश्चपार्थिव ॥ एतास्त्वामभिषिंचंतुधर्मपत्न्यःसमागताः ॥ अरुं
धतीवसुर्यामीलंबाभानुर्मरुत्वती ॥ संकल्पाचमुहूर्ताचसाध्याविश्वातथैवच ॥ धर्मपत्न्योदशान्यास्त्वामभिषिंचंतुपार्थिव ॥ अदितिर्दिति
र्दनुस्ताम्राह्यरिष्टानायुषामुनिः ॥ कद्रूःक्रोधवशाप्राचीविनतासुरभिस्तथा ॥ एतास्त्वामभिषिंचंतुकश्यपस्यप्रियाःस्त्रियः॥ कृत्तिकारोहि
णीदेवीइलारौद्रीतथैवच ॥ पुनर्वसुश्चपुष्यश्चतथाश्लेषाचपार्थिव ॥ मघाचफाल्गुनीपूर्वातथैवोत्तरफाल्गुनी ॥ हस्तश्चित्रातथास्वातीविशा
खाचतथानृप॥ अनुराधातथाज्येष्ठामूलंचवसुधाधिप ॥ आषाढाचतथापूर्वातथाचान्योत्तराह्वया ॥ अभिजिच्चश्रुतिश्चैवधनिष्ठाचतथैवच॥
तथाशतभिषक्चैवपूर्वाभाद्रपदाचया ॥ उत्तरारेवतीराजन्नश्विनीभरणीतथा ॥ एतास्त्वामभिषिंचंतुसोमपत्न्यःसमागताः ॥ महाकल्पश्च
कल्पश्चमन्वंतरयुगानिच ॥ संवत्सराणिसर्वाणितथाचैवायनद्वयम् ॥ ऋतवश्चतथामासाःपक्षयरात्र्यहनीतथा ॥ संध्याश्चतिथयश्चै
वमुहूर्ताःकरणानिच ॥ एतेत्वामभिषिंचंतुकालस्यावयवाःशुभाः ॥ आदित्यश्चंद्रमाभौमोबुधोजीवःसितार्कजौ ॥ ग्रहास्त्वामभि
षिंचंतुराहुःकेतुश्चपार्थिव ॥ स्वायंभुवोमनोःपुत्रोमनुःस्वारोचिषस्तथा ॥ वैवस्वतोथसावर्णिर्दक्षब्रह्मसुताबुभौ ॥ धर्मपुत्रोरुद्रपुत्रोरौ
च्योभौत्यश्चयोमनुः ॥ एतेत्वामभिषिंचंतुमनवश्चचतुर्दश ॥ नासत्यौदेवभिषजौभवेतांविजयायते ॥ धरोध्रुवश्चसोमश्चआपश्चैवा

तेनसर्वत्रशूद्राणांवैदिकोनिषेधःअमंत्रकोनाम्नाकार्यः । अथशूद्रस्यदेवपूजायाविशेषः तच्चसर्वस्वे । यस्तुपूजयतेलिंगेदेवादिंमांजगत्पतिं ।
ब्राह्मणःक्षत्रियोवैश्यः शूद्रोवामत्परायणः ॥ तस्यप्रीतःप्रदास्यामिशुभांल्लोकाननुत्तमान् । लैंगे । अथरुद्रो महादेवोमंडलस्थउवाचह ।
पूज्योहंब्राह्मणानांचक्षत्रियाणांविशेषतः ॥ वैश्यनांचैवशूद्राणांशुश्रूष्यःपूजकस्यच । स्त्रीणाचैवाधिकारोस्तिपूजादिषुनसंशयः ॥ सूतसंहितायां
नमोंतेनशिवेनैवस्त्रीणांपूजाविधीयते । विरक्तानाचशूद्राणामेवंपूजाप्रकीर्तिता । अन्येषामपिसर्वेषानराणांमुनिपुंगवाः । पूजादेवालयंदृष्ट्वाप्र-
णामस्तस्यकीर्तितः ॥ एवंपूजाकृतायेनसफलंतस्यजीवितं । नारदीये ॥ यदाप्रतिष्ठितंलिंगंमंत्रविद्भिर्यथाविधि ॥ तदाप्रभृतिशूद्रश्चयोषिद्वा-
पिनसंस्पृशेत् । नूतनंलिंगार्चाशालग्रामादौतुस्पर्शरहितापूजाशूद्राद्यैःकार्या । तदुक्तंस्कांदे । स्त्रीणामनुपनीतानांशूद्राणाचजनेश्वर । स्पर्शे-
नेनाधिकारोस्तिविष्णोर्वाशंकरस्यचइति । वाराहेपि शालग्रामंनस्पृशेत्तुहीनवर्णोवसुंधरे ॥ स्त्रीशूद्रकरसंस्पर्शोवज्रस्पर्शाधिकोमतः ॥ १ ॥
मोहाद्यःसंस्पृशेच्छूद्रोयोषिद्वापिकदाचन । सपतेन्नरकेघोरेयावदाभूतसंप्लवं ॥ २ ॥ यदिभक्तिर्भवेत्तस्य स्त्रीणांवापिवसुंधरे । दूरादेवास्पृश-
न्पूजांकारयेत्सुसमाहितः ॥ ३ ॥ अथग्रंथालंकारः ॥ देशेमरुधवीनकेन्वभूव बकाजिनामानृपतिःपुराहि ॥ तस्यैवनाम्नाखलुराजधानी
लोकेविकानेर इतिपृथांगता ॥ १ ॥ ॥ तदन्तरेलेखपुरोपमेपुरे श्रीरत्नदुर्गेनृपदुर्गमेशुभे ॥ विद्यासदाचारयुतैश्चविप्रैर्वैश्यैर्धनाढ्यैर्बहु-
भिश्चमण्डिते ॥ २ ॥ आसीद्वसिष्ठान्वयगौडविप्रः माध्यन्दिनीयोबुधजीवराजः ॥ विवृद्धमानोविदुषांसमाजे सुज्ञैर्नरैःसर्वसमृद्धिभाजः
॥ ३ ॥ तस्यात्मजाबाण ५ मितास्तुसद्गुणाः सुवेदविद्याध्ययनेचनैपुणाः ॥ आयातयातद्विजशुद्धचाङ्गणावीर्येणसन्ताडितवैरिदुर्गणाः ॥ ४ ॥

एतेषुमध्येगुरुरामकृष्णःज्ञानेनस्वल्पीकृतसर्वतृष्णः ॥ स्वबुद्धितःखण्डितवैरिप्रश्नःसुभक्तिसंतर्पितदेवकृष्णः ॥ ५ ॥ तस्याभवन्नामभिताः सुपुत्राः स्वधर्मयायिस्वकलत्रमित्राः ॥ गृहेषुसंलेखितरम्यचित्राः श्रीकान्तपूजानिरताः पवित्राः ॥ ६ ॥ इमानिनामानिभवन्तितेषाचतुर्भुजाख्योविबुधोहिज्येष्ठः ॥ कस्तूरिचन्द्राभिधसज्जनोपरोऽपरोगुणैर्मण्डितज्येष्ठरामः ॥ ७ ॥ तत्रस्थितामध्यमपङ्क्तिपादेकस्तूरिचन्द्राख्यमहत्सुशीलाः ॥ तेषांसुपुत्रावनवद्यवंद्यविद्याचितौद्वौनितरामभूताम् ॥ ८ ॥ चातुर्थीलालाख्यगुरुमुखाख्यौ सुज्ञौगुणेनार्दितदुष्टदर्पौ ॥ तत्रापिज्येष्ठः खलुपण्डिताग्रणीःश्रीशंभुपादाब्जविलग्नचित्तः ॥ ९ ॥ षट्शास्त्रवेत्ताषट्कर्म्मतत्परः परोपकारीबहुग्रंथकर्ता ॥ दातावदान्योद्विजदेवभक्तःहुतावशिष्टान्नसदानुरक्तः ॥ १० ॥ एतादृशोगौडकुलेशताब्दौ निबंधकर्त्तानबभूवकश्चित् ॥ येनापि ग्रंथारचिताहि द्वादशभवानीशंभोरर्चाप्रसादतः ॥ ११ ॥ प्रतिष्ठा[1]शान्ति[2]श्राद्धानां[3]ज्यो[4]तिषोत्सर्ग[5]कर्मणाम् ॥ अनु[6]ष्ठानविधेश्चापि संस्का[7]राणांविधेस्तथा ॥ १२ ॥ प्रा[8]यश्चित्तस्यशुद्धे[9]श्चवैद्यं[10]कोद्या[11]पनस्यच ॥ तथासं[12]द्धर्मणांग्रंथारचिताद्वादशाइमे ॥ १३ ॥ तत्रायंप्रथमोग्रंथः पूर्णतामगमच्छुभः ॥ अनेनप्रीयताशंभुर्भवान्यासहसर्वदा ॥ १४ ॥ बाणवेदाङ्कचंद्रे १९४५ ब्देविक्रमादित्यभूभुजः ॥ माधवेशुक्लपंचम्यांग्रंथःपूर्णोभवच्छिवः ॥ १५ ॥ इतिश्रीमन्महाराजाधिराजक्षत्रियकुलार्कमरुदेशाधिपतिश्रीगंगासिंहवर्म्मणःश्रीवीकानेरविषयान्तर्गतश्रीरत्नगढनिवासिनागौडवंशोद्भव-

---

१ प्रतिष्ठाप्रकाश. २ शान्तिप्रकाश. ३ श्राद्धप्रकाश. ४ मुहूर्तप्रकाश. ५ उत्सर्गप्रकाश. ६ अनुष्ठानप्रकाश. ७ संस्कारप्रकाश. ८ प्रायश्चित्तप्रकाश. ९ शुद्धिप्रकाश. १० चिकित्साप्रकाश. ११ उद्यापनप्रकाश. १२ सनातनधर्मप्रकाश.

वासिष्ठगोत्रश्रीरामकृष्णअमरचंद्रशर्मणापौत्रेण श्रीकस्तूरिचंद्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तमाध्यंदिनवाजसनेयिना नानानिबंधकर्तृणा पण्डितश्रीचतुर्थीलाल ( चौथमल्ल ) शर्म्मणाविरचिते चातुर्थीलालभास्करे महानिबंधे सर्वदेवप्रतिष्ठाप्रकाशाख्ये प्रथमग्रंथेऽष्टमः परिच्छेदः समाप्तः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इदं पुस्तकं ( न्यग्रोध ) वलसाडपुरनिवासिना शुक्लावटंककल्याणजीतनुजनुषा वल्लभरामशर्मणा संशोधितम् ॥
तच्च श्रीयुतभगीरथात्मजेन हरिप्रसादशर्मणा " निर्णयसागर " मुद्रणालये मुद्रयित्वा प्रकाशितम् ॥
संवदब्दाः १९६७. शकाब्दाः १८३३. ॥

Printed by B. R. Ghanekar at the Nirnayasagar Press, 23, Kolbhat lane, Bombay.

Published by Hariprasad Bhagiratha, Ramwadi No. 331, Bombay.

विक्र०

॥ १३२ ॥

# विक्रयार्थ प्रस्तुत.

| नाम. | कीं० | डा०म० |
|---|---|---|
| उपाकर्मपद्धति–( यजुर्वेदी श्रावणी ) .... .... | ०–८ | ०–२ |
| विवाहपद्धति बडा अक्षर (पंजाबियोंके लिये) .... | ०–५ | ०–१ |
| पञ्चमहायज्ञविधि भाषाटीका .... .... .... | ०–४ | ०–१ |
| पार्वणश्राद्ध भाषाटीका .... .... .... | ०–४ | ०–१ |
| संस्कारभास्कर यजुर्वेदी सब संस्कारोंकी विधि, प्रयोग, मंत्रसहित | ३–० | ०–६ |
| गायत्रीपञ्चाङ्ग सपुरश्चरण ग्लेजकागज .... .... | ०–१२ | ०–२ |
| ” ” तथा रफ कागज .... .... .... | ०–१० | ०–२ |
| दशकर्मपद्धति ( दशो संस्कार ) .... .... | ०–६ | ०–२ |
| लम्बोदरीहोमपद्धति .... .... .... | ०–४ | ०–१ |
| वासिष्ठीहवनपद्धति .... .... .... | ०–४ | ०–१ |
| श्राद्धविवेक ( इसमें सर्व श्राद्धोंकी विधिका निर्णय है ).... | ०–१२ | ०–२ |
| दानचन्द्रिका .... .... .... .... | ०–८ | ०–२ |

| नाम. | कीं० | डा०म० |
|---|---|---|
| प्रतिष्ठामयूख .... .... .... .... | ०–५ | ०–१ |
| शिवार्चनपद्धति वेदोक्त .... .... .... | ०–४ | ०–१ |
| स्वस्तिवाचन ( पुण्याहवाचन ) .... .... .... | ०–१ | ०–॥ |
| कर्मकाण्डसमुच्चय .... .... .... .... | ०–४ | ०–१ |
| कर्मविपाक भाषाटीकासहित–ग्लेजकागज .... | १–४ | ०–३ |
| धनिष्ठापञ्चकशान्ति .... .... .... | ०–२ | ०–॥ |
| अन्त्येष्टि वडी ( एकादशादि संस्कारक्रियापद्धति ) ( जिसें १३२ विषय हैं ) .... .... | २–८ | ०–५ |
| वेदोक्तवास्तुपद्धति .... .... .... .... | ०–६ | ०–१ |
| यज्ञोपवीतपद्धति ( जनोई संस्कार ) मूल .... .... | ०–२ | ०–॥ |
| उपनयनपद्धति भाषाटीका ( जनोई संस्कार ) .... | ०–८ | ०–२ |
| ऋग्वेदीयसन्ध्या भाषाटीका .... .... .... | ०–२ | ०–॥ |

हरिप्रसाद भगीरथजीकी पुस्तकालय, रामवाडी, मुंबई.

॥ १३२ ॥

णोत्सर्गानंदात्मनेऔंनेत्रत्रयायवौषट् । ॐयंरंलंवंशंसंहंक्षंअंमनोबुद्ध्यहंकारचित्तात्मनेअःअस्त्रायफट् । एवमात्मनिदेवेच यभोज्यादर्शा-
जपेत् । ॐआं-ह्रींक्रौंयंरंलंवंशंषंसंहंसः देवस्यप्राणाइहप्राणाः । ॐआं-ह्रींक्रौंयंरंलंवंशंषंसंहंसः देवस्यजीवइहस्थितः । ॐ ञ्यायां
वंशंषंसंहंसःदेवस्यसर्वेन्द्रियाणि० ॐआं-ह्रींक्रौंयंरंलंवंशंषंसंहंसःदेवस्यवाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणइहागत्यस्वस्तयेसुखेनसुचिरंतिष्ठ्य० ३
ततः प्रतिमायाःहृद्यंगुष्ठंदत्वाजपेत् ॐअस्यैप्राणाः प्रतिष्ठंतु अस्यैप्राणाश्चरंतुच । अस्यैदेवत्वमर्चायैमामहेतिचकश्चन ॥ १ ॥ ततोदे ॥
णैंगायत्रींजप्त्वापुरुषसूक्तेनस्तुत्वापादनाभिशिरःस्पृष्ट्वा प्रार्थयेत् । स्वागतंदेवदेवेशमद्भाग्यात्त्वमिहागतः । प्राकृतंत्वमदृष्ट्वामांबालवत्परि-
पालय ॥ १ ॥ धर्मार्थकामसिद्ध्यर्थंस्थिरोभवशिवायनः । सान्निध्यंतुमहावीरस्वार्चायांपरिकल्पय ॥ २ ॥ यावच्चंद्रावनीसूर्यास्तिष्ठंत्यप्रति-
घातिनः । तावत्त्वयात्रदेवेशस्थेयंभक्तयानुकंपया ॥ ३ ॥ इतिप्रार्थ्यषोडशोपचारैःसंपूज्य सिंदूरादिनासुशोभितंकृत्वानारिकेलंसमर्प्यरक्तपता-
कांध्वजंचोच्छ्रयेत् । ततः पूर्णाहुतिंहुत्वाकर्मशेषंसमाप्यदेवान्विसृज्य आचार्यादिभ्योदक्षिणांदद्यात् ततोब्राह्मणभोजनं अन्यत्सर्वंपूर्ववत् ॥
इतिश्रीहनुमत्प्रतिमास्थापनप्रयोगः समाप्तः ॥ ॥ ॥ ॥

अथअग्न्यानयनप्रकारः ॥ तत्रादावाहरणपक्षोहरिहरभाष्ये यजमानः पत्न्यासहाहतेवाससीपरिधाय । अग्न्याधानदेशेस्थंडिलमुपलिप्य-
पंचभूसंस्कारान्कृत्वातंदेशंवस्त्रेपिधायब्रह्मणासहसमृदंस्थालीमादायब्राह्मणैःपरिवृतोवेदघोषमंगलगीतवाद्यादिभिर्जनितोत्साहोवैश्यस्यबहु-
पशोर्गृहात् बहुयाजिनोब्राह्मणस्यगृहाद्वह्वन्नपाकाद्ब्राह्मणमहानसाद्वास्थाल्यामग्निंगृहीत्वातथैवगृहमागत्यपरिसमूहनादिपंचभूसंस्कारसं-

स्कृतेस्थंडिलेप्राङ्मुखउपविश्यआत्माभिमुखमग्निंनिदध्यात् इत्याहरणपक्षः । आरणेयपक्षेतु यजमानः पुण्येहनि अश्वत्थोयःशमीगर्भः प्रशस्तोर्वीसमुद्भवः ॥ तस्यायाप्राङ्मुखीशाखाउदीचीचोर्ध्वगापिवा । अरणीस्तन्मयीज्ञेयातन्मध्येचोत्तरारणिः ॥ सारवद्दारवंचात्रमोविलीचप्रशस्यते । संसक्तमूलोयःशम्यासशमीगर्भउच्यते ॥ अभावेत्वशमीगर्भादाहरेदविलंबितः । चतुर्विंशत्यंगुलादीर्घाविस्तारेणषडंगुला ॥ चतुरंगुलमुत्सेधाअरणिर्याज्ञिकैः स्मृता । मूलादष्टांगुलंत्यक्त्वाअग्राच्चद्वादशांगुलं ॥ अंतरंदेवयोनिःस्यात्तत्रमथ्योहुताशनः । तत्रयोजायतेवन्हिः सकल्याणकृदुच्यते ॥ गोवालैःशणसंमिश्रैस्त्रिवृद्वृतमनंशुकं । व्याममप्रमाणंनेत्रंस्यात्तेनमथ्योहुताशनः ॥ इत्युक्तलक्षणमरण्यादिकंसंपाद्यउक्तकालेस्नानादिपूर्वकंसंकल्पादिमातृपूजाभ्युदयिकश्राद्धब्रह्मवरणाहतवासःपरिधानादिकृत्वाशालायांयजमानउपविशति । तस्यदक्षिणांगेपत्नी । अथब्रह्माअरणीमादाय अधरारणिंपत्न्यै । उत्तरारणिंयजमानायदद्यात् ततोऽग्न्याधानदेशेशंकुंद्वादशांगुलंखादिरं चतुरंगुलमस्तकंनिखायतत्ररज्जुपाशंक्षिप्त्वासार्द्धत्रयोदशांगुलरज्ज्वंतंशंक्वंतरालेसंवेष्टयप्रदक्षिणपरिभ्रामणेनपरिलिख्य तत्रपरिसमूहनादिकं५ पंचसंस्कारान् कृत्वा आच्छाद्यमंथनमारभेत् । तद्यथा प्राग्ग्रीवमुत्तरलोमकृष्णाजिनमास्तीर्यतत्रयोदगग्रामधरारणिंनिधायतत्पूर्वं ०—१ रारणिंचअधरारण्यां उक्तलक्षणमंथनप्रदेशेप्रमंथमूलंनिधाय चात्राग्रेचोविलीमुदगग्रांचनेत्रेणचात्रंत्रिर्वेष्टयित्वागाढंधृत्वापश्चिम ०—॥ ८ ०—२ पविष्टयापत्न्यामंथयेत् यावदग्नेरुत्पत्तिः पत्न्यामंथनासामर्थ्ये अन्येब्राह्मणाः शुचयोमंथयंति ॥ एवंयजमानासामर्थ्येअन्य ०—२ ०—॥ ततोजातमग्निंमृन्मयेपात्रेशुष्कगोमयपिंडचूर्णोपरिनिहितततूलेसपुरीषंप्रक्षिप्यसंधुक्ष्यप्रज्वाल्य पूर्वसंस्कृतेदेशेआदध्यात् [illegible]ाडी, मुंबई.

देवताभिधानपर्युक्षणांतंकृत्वापूर्ववद्धोमंकुर्यात इत्यारणेयपक्षः । अथषोडशोपचारपूजनमंत्राः । ॐसहस्रशीर्षापुरु ... पात् ॥ सभूमिं सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् । इत्यावाहनम् ॥ १ ॥ ॐपुरुषऽएवेदं सर्वंयद्भूतंयच्चभाव्यम् ॥ उता ... स्यभोज्यादर्शा- यदन्नेनातिरोहति ॥ इत्यासनं ॥ २ ॥ ॐएतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ... शय्यायां द्यम् ॥ ३ ॥ ॐत्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ इत्यर्घ्यम् ॥ ४ ॥ य० ३ द्विराडजायतविराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ इत्याचमनं ॥ ५ ॥ ॐतस्माद्यज्ञात्सर्वहुतः सम्भृ ... पृषदाज्यम् ॥ पशूंस्तांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ इतिस्नानं ॥ ६ ॥ ॐतस्माद्यज्ञात्सर्वहुतऽऋचःसामानिजज्ञिरे ॥ छंदांसिज- ज्ञिरेतस्माद्यजुस्तस्मादजायत इतिवस्त्रम् ॥ ७ ॥ ॐतस्मादश्वाऽअजायन्तयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः इतियज्ञोपवीतं ॥ ८ ॥ ॐतंयज्ञंबर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेनदेवाऽअयजन्तसाध्याऽऋषयश्चये ॥ इतिगंधं ॥ ९ ॥ ॐयत्पुरु- षंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासीत्किंबाहूकिमूरूपादाऽउच्येते ॥ इतिपुष्पाणि ॥ १० ॥ ॐब्राह्मणोस्यमुखमासीद्बाहूरा- जन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोऽअजायत ॥ इति धूपं ॥ ११ ॥ ॐचंद्रमामनसोजातश्चक्षोःसूर्योऽअजायत ॥ श्रोत्राद्वा युश्चप्राणश्चमुखादग्निरजायत ॥ १२ ॥ इतिदीपं ॥ ॐनाभ्याऽआसी दंतरिक्षं शीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथा- लोकाँ २ अकल्पयन् ॥ इतिनैवेद्यम् ॥ १३ ॥ ॐयत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसन्तोस्यासीदाज्यंग्रीष्मऽइध्मःशर-

ॐतेजोसिशुक्रमसीतिमंत्रेणच ॐनमोभगवतेहनुमतेनमः । इतिदक्षिणसव्येनेत्रेमंत्रावृत्त्यालिखेत् तत अंजनेनाजयित्वाभक्ष्यभोज्यादर्शा-
दिदर्शयेत् ( तदाऽग्रेकोपिनतिष्ठेत् ) ततः पुरुषसूक्तेनस्तुत्वादेवंनीराजयित्वा । रुद्रायनमइतिचतुष्पथेबलिंदद्यात् ततोदेवं उत्थाप्य शय्यायां
आसनेवानिधाय न्यासंकुर्यात् ॥ अथपुरुषसूक्तन्यासः ॥ ॐसहस्रशीर्षा० १ ॐपुरुषऽएवे० २ इतिकरयोः ॥ १ ॥ ॐएतावानस्य० ३
त्रिपादूर्ध्व० ४ इति जान्वोः ॥ २ ॥ ततोविराड० तस्माद्यज्ञात्सर्वहुतः ६ इतिकट्योः ॥ ३ ॥ तस्माद्यज्ञात्० ७ इति नाभौ ॥ ४ ॥
तस्मादश्वा० ८ इतिहृदि ॥ ५ ॥ तंयज्ञं० ९ इतिकंठे ॥ ६ ॥ यत्पुरुषं० १० ब्राह्मणोस्य० ११ इतिबाह्वोः ७ चंद्रमामनस० १२ नाभ्या-
ऽआसीत्० १३ इतिनासयोः ॥ ८ ॥ यत्पुरुषेण० १४ सप्तास्या० १५ इतिअक्ष्णोः ॥ ९ ॥ यज्ञेनयज्ञं० १६ इतिशिरसि ॥ १० ॥
इतिन्यासंकृत्वा ॐनमोभगवतेवासुदेवायइतिशतवारंदशवारंवाजलमभिमंत्र्यदेवशिरसि अभिषिच्य । ॐउत्तिष्ठब्रह्मणस्पतेइत्युत्थाप्य ।
सुमुहूर्ते मुख्यमंदिरे पुरुषसूक्तेनगायत्र्याध्रुवसूक्तेनवाअर्चायांप्रतिष्ठाप्यप्राणप्रतिष्ठांकुर्यात् । यथा । अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुरुद्रा-
ऋषयः ऋग्यजुःसामानिछंदांसि क्रियामयवपुःप्राणाख्यादेवताआंबीजंक्रौंशक्तिः प्राणप्रतिष्ठायांविनियोगः । ॐब्रह्मविष्णुरुद्रऋषिभ्योनमः
शिरसि । ॐऋग्यजुःसामछंदोभ्योनमः मुखे । ॐप्राणाख्यदेवतायैनमोहृदि । ॐआंबीजायनमोगुह्ये । ॐक्रौंशक्तयेनमः पादयोः ।
ॐकंखंगंघंअंपृथिव्यप्तेजोवाय्वाकाशात्मने आंहृदयायनमः । ॐचंछंजंझंञंइं शब्दस्पर्शरूपरसगंधात्मने ईंशिरसेस्वाहा । ॐटंठंडंढंणं उँश्रो-
त्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊंशिखायैवषट् । ॐतंथंदंधंनंएं वाक्पाणिपादपायूपस्थात्मनेऐंकवचायहुँ । ॐपंफंबंभंमं ॐवचनादानविहर-

ह्नुविः ॥ इतिनमस्कारः ॥ १४ ॥ ॐसप्तास्यांसन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवा यद्यज्ञन्तन्वाना ऽअबध्नन्पुरुषंपशुम् ॥ इतिप्रदक्षिणा
॥ १५ ॥ ॐयज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानः सचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः ॥ इतिमंत्रपु-
ष्पांजलिम् ॥ १६ ॥ इतिषोडशोपचाराः समाप्ताः ॥ अथशूद्राणांदेवस्थापनेविचारः कल्पतरौदेवीपुराणे । वर्णाश्रमविभेदेनदेवाःस्थाप्या-
स्तुनान्यथा ॥ ब्रह्मातुब्राह्मणैःस्थाप्योगायत्रीसहितःप्रभुः ॥ १ ॥ चतुर्वर्णैस्तथाविष्णुः प्रतिष्ठाप्यःसुखार्थिभिः । भैरवोपिचतुर्वर्णैरंत्यजानां-
तथामतः ॥ २ ॥ मातरःसर्वलोकैस्तुस्थाप्यः पूज्याःसुरोत्तमाः । लिंगंगृहीयतिर्वापिसंस्थाप्यतुयजेत्सदा ॥ ३ ॥ त्रिस्थलीसेतौतु स्त्रीणामनु-
पनीतानांशूद्राणांचनरेश्वर ॥ स्थापनेनाधिकारोस्तिविष्णोर्वाशंकरस्यच १ बृहन्नारदीयेस्कांदे यःशूद्रसंस्कृतंलिगंविष्णुंवापिनमेन्नरः । इह-
वात्यंतदुःखानिपश्यत्यामुष्मिकेकिमु ॥१॥ शूद्रोवानुपनीतोवास्त्रियोवापतितोपिवा । केशवंवाशिवंवापिस्पृष्ट्वानरकमश्नुते ॥ चतुर्वर्णैरितिपूर्व-
वचनाद्विष्णवादिप्रतिष्ठायांशूद्रस्यविकल्पइतितुयुक्तं अतएवस्पर्शनेनाधिकारोस्तीत्यन्यत्रपाठः । व्यासजातूकर्ण्यौ । अधिकारीभवेच्छूद्रःपू-
र्तेधर्मैनवैदिकेइति । पूर्तमाहतुःअत्रिजातूकर्ण्यौ । वापीकूपतडागादिदेवतायतनानिच । अन्नप्रदानमारामःपूर्तमित्यभिधीयते । स्मृति-
संग्रहे नाममंत्रेणशूद्रस्यकुर्याद्धोमादिकंबुधइति । अमंत्रस्यतुशूद्रस्यविप्रोमंत्रेणगृह्यतइतिवाराहोक्तेः ॥ पाराशरौ दक्षिणार्थंतुयोविप्रः
शूद्रस्यजुहुयाद्धविः । ब्राह्मणस्तुभवेच्छूद्रःशूद्रस्तुब्राह्मणोभवेत्इति । अत्रमाधवाचार्यः । योविप्रः शूद्रदक्षिणामादायतदीयंहविः । शांति-
पुष्ट्यादिसिद्धयेवैदिकैर्मंत्रैर्जुहोतितत्रविप्रस्यैवदोषः । शूद्रस्तुहोमफलंलभेतैवेतिव्याचचक्षेएतच्चास्माभिः सनातनधर्मप्रकाशेसविस्तरमुक्तं । ॥१३०॥

मेचविनियोगः ॐइमम्मेंव्वरुणश्श्रुधीहवंमुद्द्याचंमृडय ॥ त्वामंवस्युराचंकेस्वाहा इदंवरुणाय ॥ १ ॥ तत्वायामीतिशुनःशेपऋषिस्त्रिष्टु-
प्छंदः वरुणोदेवतावरुणप्रीतयेआज्यहोमेउदुंबरसमिद्धोमेचविनियोगः ॥ ॐतत्त्वांयामिब्रह्मंणावंदमानुस्तदाशांस्तेयजंमानोहुविर्भिः ॥
अहेंडमानोव्वरुणेहबोद्ध्युरुंशःसमानुऽआयुःप्रमोंषीःस्वाहा इदंवरुणाय ॥ २ ॥ त्वन्नोऽअग्ने सत्वन्नोऽअग्न इतिवामदेवऋषिस्त्रिष्टुप्छंदः
अग्निवरुणौदेवतेवरुणप्रीतयेआज्यहोमेउदुंबरसमिद्धोमेचविनियोगः ॥ ॐत्वन्नोंऽअग्नेव्वरुंणस्यव्विद्वान्देवस्यहेडोऽअवंयासिसीष्ठाः ॥ यजिं-
ष्ठोव्वह्नितमःशोशुंचानोव्विश्श्वाद्वेषांᳫंसिप्प्रमुमुग्ध्युस्मत्स्वाहा इदं० ॥ ३ ॥ ॐसत्वन्नोंऽअग्नेवमोभंवोतीनेदिंष्ठोऽअस्याउषसोव्युष्टौ ॥ अवं-
यक्ष्वनोव्वरुंणःरराणोव्वीहिमृंडीकःसुहवोंनऽएधिस्वाहा इदं० ॥ ४ ॥ अयाश्चाग्नइतिप्रजापतिर्ऋषिः पङ्क्तिश्छंदअग्निर्देवतावरुणप्रीतये० ॥
ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्वमयाऽअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजᳫंस्वाहा इदं० ॥ ५ ॥ येतेशतमितिशुनःशेपऋ-
षिस्त्रिष्टुप्छंदः वरुणसवितविष्णुविश्वेमरुत्स्वर्कादेवताः वरुणप्रीतये० । ॐयेतेंशुतंव्वुरुणयेसुहस्रंयुज्ञियाः पाशांव्वितुतामहांतः ॥ तेभिंर्न्नोंऽ-
अुद्यसंवितोतव्विष्णुर्व्विश्वेंमुंचंतुमरुतंःस्वुर्कांःस्वाहां इदं० ॥ ६ ॥ अदित्यास्त्वगसीतिप्रजापतिर्ऋषिस्त्रिष्टुप्छंदःवरुणप्रीतयेआज्यहोमे० ।
ॐअदिंत्यास्त्वगुस्यदिंत्यैसदुऽआसींद ॥ अस्तंभ्नाद्यांवृषुभोऽअुन्तरिंक्षममिंमीतव्वरिमाणंम्पृथिव्व्याः । आसींदुव्विश्वाभुवंनानिसुम्म्राड्वि
श्श्वेत्तानिव्वरुंणस्यव्व्रतानिंस्वाहा इदं० ॥ ७ ॥ वनेषुवीतिप्रजापतिर्ऋषिस्त्रिष्टुप्छंदोवरुणोदेवता० ॥ ॐव्वनेंषुव्व्युन्तरिंक्षन्ततानुव्वाजुमर्व्वं-
त्सुपयंऽउस्रियांसु ॥ हृत्सुक्रतुंव्वरुंणोव्विक्ष्वग्निन्दिविसूर्य्यमदधात्सोममद्रौस्वाहा इदंवरुणाय० ॥ ८ ॥ उदुत्तमंइतिशुनःशेपऋषिस्त्रिष्टु-

पृछंदोव्वरुणोदेवतावरुणप्रीतये० ॐउदुत्तमंव्वरुणपाशमुस्मदवाधमंव्विमध्यमᳯंश्रथाय ॥ अथाव्वयमादित्यव्व्रतेतवानागसोऽअदितयेस्या-
मस्वाहा० इदं ॥ ९ ॥ व्वरुणस्योत्तमितितपनऋषिःजगती छंदःवरुणोदेवतावरुणप्रीतये० । ॐव्वरुणस्योत्तम्भनमसिव्वरुणस्यस्कम्भसर्ज्जनी-
स्त्योव्वरुणस्यऽऋतसदन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणऽऋतसदनमासीदस्वाहा इदं० ॥ १० ॥ निषसादेतिशुनःशेपऋषिर्गायत्रीछंदो-
वरुणोदेवतावरुणप्रीतये० ॐनिषसादधृतव्रतोव्वरुणःपस्त्यास्वा ॥ साम्म्राज्यायसुक्रतुः स्वाहा इदंवरुणाय० ॥ ११ ॥ घृतवतीतिभर-
द्वाजऋषिःजगतीछंदःवरुणोदेवतावरुणप्रीतयेआज्यहोमेउदुंबरसमिद्धोमेचविनियोगः । ॐघृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघे-
सुपेशसा ॥ द्यावापृथिवीव्वरुणस्यधर्म्मणाव्विष्कभितेऽअजरेभूरिरेतसास्वाहा इदंवरुणाय० ॥ १२ ॥ हस्तेजलमादायानेनहोमेनवरुणः
प्रीयतामित्युत्सृजेत् ( एतेषांद्वादशमंत्राणांनववारावृत्त्याष्टोत्तरशतसंख्यासंपत्तिः ) पुनः ग्रहादिविश्वकर्मांतहोमःकार्यः । अथानंतरंसु-
मुहूर्तेयूपस्थापनंकुर्यात् ( यूपस्थापनंपूर्ववत् ) ततोयजमानःसुलग्नेजलाशयजलेकनकशृंगादिभूषितांगांयथाशक्तिसंपूज्य ॐइरावतीधेनुम-
तीहिभूतᳯसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीव्विष्णवेतेदाधर्त्थपृथिवीमभितोमयूखैःस्वाहाइतिमंत्रेणावतारयेत् ( वापीकूपोत्सर्गे-
तुत्रिरुपरिभ्रामयेत् ) तरंतीतामनुमंत्रयेत्तत्रमंत्रः ॐइदंसलिलंपवित्रंकुरुष्वशुद्धाःपूताअमृताःसंतुनित्यंमांतरयंतीसर्वतीर्थाभिषेकं । लोका-
ल्लोकंतरतेतीर्यतेचइति ततोगुरुणान्वारब्धस्तत्पुच्छेलग्नोजलेगच्छेन्नेवमंत्रद्वयंपठेत् तच्च ॐसमुद्रादूर्मिम्मधुमाँ उदारदुपाᳯंशुनासममृ-
तत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥ ॐयेवामीरोचनेदिवोयेवासूर्यस्यरश्मिषु ॥ येषामप्सुसदस्कृ-

तंतेभ्यः सुपर्णेभ्योनमः ॥ २ ॥ ततोजलएवेशान्यामुत्तराभिमुख्यागोःपुच्छंगृहीत्वाजलेस्थित्वायजमानोयवकुशादिभिर्देवमनुष्यपितृतर्पणं-
स्वशाखोक्तवेदमंत्रैःकुर्यात् । तत्रसव्येनप्राङ्मुखोदेवान्० कंठीकृत्वाउदङ्मुखोऋषीन् । अपसव्येनदक्षिणाभिमुखःपितॄंस्तर्पयेत् । अथपौ-
राणीयतर्पणम् उत्सर्गपद्धतौ । पितापितामहश्चैवतथैवप्रपितामहः । स्वस्वपत्नीसमेताश्चप्रीयंतांजलतर्पणात् ॥ १ ॥ अजातदंतायेके-
चिद्येचगर्भेव्यवस्थिताः । तेषामुद्धरणार्थायतडागोदकतर्पणं ॥ २ ॥ पितृव्यकाश्चयेस्माकंभ्रातरश्चसहोदराः । गुरवोमातुलाः पुत्रा आचार्य-
सखिबांधवाः ॥ ३ ॥ तेषांपुत्राश्चपत्न्यश्चश्वशुरायेसपुत्रकाः । एतेषांक्रीडनार्थायतडागोदकतर्पणं ॥ ४ ॥ बंधुवर्गाश्चयेकेचित्गोत्रनामवि-
वर्जिताः । स्वगोत्रापरगोत्रावातेभ्यश्चेदंतिलोदकं ॥ ५ ॥ उद्बंधेनमृतायेचसिंहव्याघ्रहताश्चये । दंष्ट्रिभिः शृंगिभिश्चैव तेभ्यश्चैव तिलोदकं ॥
॥ ६ ॥ असुरादेवपत्न्यश्चमातरश्चंडिकातथा । दिक्पालालोकपालाश्चग्रहदेवाधिदेवताः ॥ ७ ॥ तेषामुद्धरणार्थायतडागोदकतर्पणं । अग्नि-
दग्धाश्चयेकेचिन्नाग्निदग्धास्तथापरे ॥ ८ ॥ विद्युच्चोरहतायेचतेभ्योपीदंतिलोदकं । रौरवेचांधतामिस्रेकुंभीपाकेचयेगताः ॥ ९ ॥ अनेक
यातनासंस्थाःप्रेतलोकेषुयेगताः । पच्यंतेसंयमन्यांयेनीतायेयमकिंकरैः ॥ १० ॥ असिपत्रवनेघोरेतेभ्योपीदंतिलोदकं । विश्वेदेवास्तथासा-
ध्याआदित्याश्चमरुद्गणाः ॥ ११ ॥ क्षेत्रपीठोपपीठानिनद्यश्चैवससागराः । पातालेनागपत्न्यश्चनगाश्चैवसपर्वताः ॥ १२ ॥ पिशाचागुह्यकाः
प्रेतागणगंधर्वराक्षसाः । पृथिव्यापश्चतेजश्चवायुराकाशमेवच ॥ तेसर्वेतृप्तिमायांतुतडागोदकतर्पणात् ॥ १३ ॥ आब्रह्मणोयेपितृवंशजाता-
मातुस्तथावंशभवामदीयाः । वंशद्वयेस्मिन्ममदासभूताभृत्यास्तथैवाश्रितसेवकाश्च ॥ १४ ॥ मित्राणिसख्यःपशवश्चवृक्षाहष्टाश्चस्पृष्टाश्चकृ-

तोपकाराः । जन्मांतरेयेममसंगताश्चतेभ्यस्तडागोदकमेतदस्तु ॥ १५ ॥ (वापीकूपयोस्तुतडागपदस्थानेतत्पदप्रक्षेपः) ततस्तर्पणांतेयज-
मानः पुच्छलग्नएव आपोअस्मानित्यनेनपठन्नीशान्यांउत्तीर्य ॐआपोऽअस्मान्मातरः शुंधयन्तुघृतेननोघृतप्वः पुनंतु ॥ विश्वꣳहिरिप्रम्प्र-
वहंन्तिदेवीरुदिदाभ्यःशुचिरापूतएमिइति । ॐसूयवसाद्भगवतीहिभूयाअथोवयंभगवंतःस्याम । अद्धितृणमघ्न्येविश्वदानींपिबशुद्धमुदकमा-
चरंतीत्यनेनजलान्निष्कास्य ईशान्यांदिशिउत्थापयेत् यदिहिंकुर्यात्तदा हिंकृण्वतीवसुमतीवसूनांवत्समिच्छंतीमनसाभ्यागात् ॥ दुहामश्वि-
भ्यांपयोअघ्न्येयंसावर्द्धतांमहतेसौभगायेत्यनुमंत्रयेत् ॥ ततःकृतवस्त्रपरिधानोयजमानस्तांसंपूज्यसामगायप्रतिपादयेत् ॥ ततः कुंकुमाक्तेन-
त्रिवृतासूत्रेणजलाशयंवेष्टयित्वातत्समीपेउपविशेत् । आचार्यस्तुप्रागासादितांकूर्ममकरादियुतांहेमपात्रींपंचरत्नसहितांदध्यक्षतमहानदीजल-
युतामादायोदङ्मुखैश्चतुर्भिर्ऋत्विग्भिःसहस्वयंप्राङ्मुखःस्थित्वाऽगाधेजलेसौवर्णौकूर्ममकरौप्रागाग्नेयभागयोः । प्रत्यङ्मुखौराजतौमत्स्यडुंडु-
भौदक्षिणनैर्ऋत्यभागयोः । उदङ्मुखौताम्रौकुलीरमंडूकौपश्चिमवायव्ययोः ॥ प्राङ्मुखौआयसंशिशुमारंउत्तरदक्षिणाभिमुखंवारुणैर्मंत्रैःप्र-
क्षिपेत् ॥ ततःशन्नोदेवीत्यनेनआपोहिष्ठेतितृचेनचोदङ्मुखस्तांपात्रींन्युब्जीकुर्यात् पात्रीस्थपदार्थान्जलेप्रक्षिप्यद्विराचामेयुः । ततोयजमानः
प्राङ्मुखोजलाशयोत्सर्गंकुर्यात् तत्रकुशजलयवतिलानादायदेशकालसंकीर्तनांते ममसर्वपापक्षयपूर्वकरुद्रालयगमनानंतरबहुकल्पकालाव-
धिकद्युलोकभोगानुभवपूर्वकपरार्द्धद्वयकालावच्छिन्नमहस्तपःप्रभृतिलोकगमनादिहतल्लोकभोगोत्तरकालसद्योगबलप्राप्यवैष्णवपदप्राप्ति-
कामोहमिमंतडागादिजलाशयंवरुणदेवताकंस्नानपानावगाहनाद्यर्थंसर्वेभ्योभूतेभ्यउत्सृजेइत्युक्त्वाजलाशयंनिरीक्ष्यजलंभूमौनिक्षिपेत्॥सर्वे-

भूतेभ्यउत्सृष्टंमयैतज्जलमूर्जितं । रमंतांसर्वभूतानिस्नानपानावगाहनैः ॥ १ ॥ सामान्यंसर्वभूतेभ्योमयादत्तमिदंजलं । रमंतांसर्वभूतानि-
स्नानपानावगाहनैः ॥ २ ॥ ततोमंडपमागत्यप्रागादिदिक्ष्विंद्रादिभ्यःपूर्ववत्माषभक्तबलिंदद्यात् । अथाचारप्राप्तंनागयष्ट्यारोपणं । तत्रगु-
रुरष्टसुचूतपत्रेष्वनंतवासुकितक्षककर्कोटकपद्मशंखमहापद्मकुलिकानांनामानिप्रत्येकंलिखित्वा प्राक्स्थापितसजलकलशेप्रक्षिप्यालोड्यतत्रव-
रुणंपूजयित्वाएकंचूतपत्रमाकृष्यतत्पत्रलिखितनामानंनागंतीर्थजलाप्लुतायायज्ञियवृक्षोद्भवायाजलाशयाल्पत्वाद्यनुसारतोद्वादशपंचदशविंश-
त्यन्यतमारत्निमितायांयष्ट्यां अमुकनागइहागच्छइहतिष्ठेत्यावाह्यस्थापयित्वा अनेननागेनास्यजलाशयस्यरक्षाकार्या इतिजनेभ्यःश्रावयित्वा-
तंनागंयष्टौ अमुकनागायनमइति नाममंत्रेणयथाशक्तिपूजयेत् । ततो यष्टिसंबंधिवर्तुलमस्तकोपरिशूलेलोहमयंचक्रमारोपयंति । ततोज-
लमध्येप्रागेव यष्ट्यर्थंकृतखातसमीपेअर्चितायष्टिंनयेत् ततः खातेदधिमध्वक्षतकुशतीर्थजलपंचरत्नानिप्रक्षिप्य ध्रुवाद्यौरितिमंत्रेणयष्टिंस-
मारोपयेत् इदंयष्ट्यारोपणंकूपवाप्योर्नकार्यमितिरूपनारायणीये इतिनागयष्टिरोपणं । ततोयजमानोगंगादितीर्थजलंजलाशयेप्रक्षिप्य प्राङ्मु-
खउपविश्यपठेत् । कुरुक्षेत्रंगयांगंगांप्रभासःपुष्कराणिच । एतानिपंचतीर्थानितडागेनिवसंतुमे ॥ १ ॥ वितस्ताकौशिकीसिंधुः सरयूच-
सरस्वती । एतानिपंचतीर्थानितडागेनिवसंतुमे ॥ २ ॥ दशार्णामुरलासिंधुरथावतीदृषद्वती ॥ एतानिपंचतीर्थानितडागेनिवसंतुमे ॥ ३ ॥
यमुनानर्मदारेवाचंद्रभागाचवेदिका । एतानिपुण्यतीर्थानितडागेनिवसंतुमे ॥ ४ ॥ गोमतीवाह्नतीशोणोगंडकीसागरस्तथा । एतानि-
पंचतीर्थानितडागेनिवसंतुमे ॥ ५ ॥ इतिपठित्वाजलंस्पृष्ट्वा आपोहिष्ठेतितृचंजपन्नविच्छिन्नदुग्धधारयाजलाशयंत्रिः प्रदक्षिणीकुर्यात् ।

ततएकं ब्राह्मणं यथेष्टदुग्धंपाययेत् । गुरुर्दिनत्रयंस्थापितदेवानापूजनंकृत्वाऽऽत्विग्भिःसहस्वेस्वेकुंडेवारुणप्रभृतिविश्वकर्मांतंहोमंकुर्याततद-
तेउत्तरांगंनिर्वर्त्यस्वेस्वेकुंडेसर्वेस्विष्टकृद्धोमंव्याहृतिहोमंपंचवारुणप्रजापतिहोमंचकृत्वाबलिदानंकुर्यात् ॥ ततःपूर्णाहुतिहोमंकुर्युः (दरिद्रो-
यजमानएकाग्निविधानेनगुरुणैवसर्वंकारयेदितिमदनादयः) ततश्चतुर्थदिनेद्वितीयदिनेवा इमंमेवरुणेत्यनेनचतुर्थीकर्मांगपूर्णाहुतिंकुर्यात् ।
ततःसंस्रवप्राशनंपवित्राभ्यांमार्जनंअग्नौपवित्रप्रतिंप्रणीतान्युब्जीकरणंब्रह्मणेपूर्णपात्रदानंचकुर्यात् ॥ ततोग्निपूजात्र्यायुषादिकरणंततोग्निवि-
सर्जनं ॥ ततोगुर्वादिऋत्विग्भ्योहिरण्यंदद्यात्यजमानस्याभिषेकः । पुनः पूजनं । ग्रहादीनांयांतुदेवगणाइतिविसर्जनम् । ततोयज्ञोपकरणादि-
कमृत्विग्भ्योहेमपात्रींशय्यांचगुरवेमंडपंचसर्वेभ्योविभज्यदद्यात् । ततो ब्राह्मणसहस्रमष्टोत्तरशतं पंचाशतंविंशतिंवाशक्त्यनुरूपंभोजयि-
त्वाभूयसींदत्वा यस्यस्मृत्या० प्रमादात्कुर्वतांकर्मेत्युक्त्वाविष्णुंस्मरेत् । (विस्तरेणतुमत्कृतेउत्सर्गप्रकाशेद्रष्टव्यं) इतिजलाशयोत्सर्गः ॥
अथ वाप्यादिशुद्धिः ॥ उत्सर्गमयूखे वापीकूपतडागादिष्वल्पतोयेषुश्वमार्जारखरवानरसूकरादिमृतकाद्युपघातेसर्वोदकोद्धरणेनशुद्धिः ।
बहुजलेषुकुंभशतमुद्धृत्यपंचगव्यप्रोक्षणं क्षुद्रप्राणिपातेषष्टिकुंभोद्धारेपंचगव्यप्रक्षेपः । अत्यल्पोपघातेसूर्यचंद्ररश्मिसंबंधाद्वायुस्पर्शाच्चशुद्धिः ।
तथाअतिगंभीरवापीकूपतडागनद्यादिषुचांडालाद्यशुचिस्पर्शेयत्रैवस्थलेस्पर्शस्तदेवस्थलंपरिवर्ज्याऽन्यत्रशुद्धिः । वापीकूपतडागेषुमानुषमृ-
तकेप्रक्षिप्तेसर्वजलोद्धारात् घटशतजलोद्धरणपूर्वकपंचगव्यप्रक्षेपाद्वाशुद्धिः । वापीकूपतडागजलेमनुष्यमरणेजलस्याहोरात्रमाशौचं ततः
प्रागुक्ताशुद्धिः एवंमूत्रपुरीषचर्मरुधिरादिधातुप्रक्षेपेत्रिंशतकुंभजलोद्धारपूर्वकगोमूत्रादिप्रक्षेपादिकंमार्जनं ॥ इतिवाप्यादिशुद्धिः ॥ अथ-

सामान्यतोहनुमत्प्रतिमास्थापनविधिः ॥ शुचौदेशेमंडपस्थंडिलादिकंकृत्वा । सुमुहूर्तेनित्यकार्यंसमाप्यशिल्पिस्थानाद्देवंतत्रानीयासनेनि-
धायआचांतःप्राणानायम्य अद्येत्यादिदेशकालौसंकीर्त्य० ममदीर्घायुर्लक्ष्मीसर्वकामसमृद्ध्यर्थंअस्यांमूर्तौदेवकलासान्निध्यार्थंहनुमत्प्रतिष्ठां-
करिष्यइति । तदंगत्वेनगणेशपूजनंस्वस्तिवाचनंनवग्रहपूजनमाचार्यादिवरणंचकरिष्येइति संकल्प्य ॐसुमुखश्चेत्यादिनागणेशपूजांविधा-
यपुण्याहवाचनंनवग्रहपूजनंआचार्यादिवरणंचकृत्वा कुंडेस्थंडिलेवापंचभूसंस्कारान्कुर्यात् तत्र । अग्निंप्रतिष्ठाप्यपरिस्तरणादि कर्मसमा-
प्याऽऽघारावाज्यभागौहुत्वाग्रहेभ्यस्तिलहोमंचकृत्वाप्रधानदेवहोमंकुर्यात् । तद्यथा । ॐनमोभगवते रामचंद्रायस्वाहा इदंविष्णवे० ।
ॐहनुमतेस्वाहाइदंहनुमते० इत्येताभ्यामष्टोत्तरशतंचरुणाहुत्वासहस्रशीर्षाइतिपुरुषसूक्तेनतिलाहुतींस्तैरेवजुहुयात् । ततः ॐअग्नयेस्विष्ट-
कृतेस्वाहा इदमग्नयेस्विष्टकृते० इतिस्विष्टकृतंव्याहृतिहोमंपंचवारुणप्रजापतिहोमंचहुत्वादिक्पालेभ्योबलीन् दद्यात् । ततोदेवंनत्वा ।
स्वागतंदेवदेवेशविश्वरूपनमोस्तुते ॥ इतिप्रार्थ्य ॐउत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयन्तुमरुतं ÷ सुदानंवइंद्रंप्राशूर्भवासचा । इति
सर्विगाचार्योदेवमुत्थाप्य यज्ञियकाष्ठपीठेनिधाय पंचगव्यैःपंचामृतैश्चपृथक्पृथक्तत्तन्मंत्रैःसंस्नापयेत् । ततः ॐशन्नोदेवीतिशुद्धोदकेनसं-
स्नाप्य घृताभ्यंगमुद्वर्तनमुष्णोदकेनक्षालनंचकृत्वापुनश्चतुर्भिःकलशैर्वारुणमंत्रैरभिषिच्य ( वारुणमंत्रा इमंमेइत्याद्याः पूर्वोक्ताः ) पुनःस-
र्वौषधिजलेनगंगोदकेनच ॐआपोहिष्ठामयोभुवइतितिसृभिः पावमानसूक्तेनचसंस्नाप्य वाससीपरिधाप्योपवीतंदत्वागंधपुष्पधूपदीपैः संपू-
ज्यनीराजनंचकृत्वा सुवर्णादिपात्रेमधुघृतंगृहीत्वाहिरण्यशलाकया । ॐचित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ इत्यर्धर्चेन

ॐतेजोसिशुक्रमसीतिमंत्रेणच ॐनमोभगवतेहनुमतेनमः । इतिदक्षिणसव्येनेत्रेमंत्रावृत्त्यालिखेत् तत अंजनेनांजयित्वाभक्ष्यभोज्यादर्शा-
दिदर्शयेत् ( तदाऽग्रेकोपिनतिष्ठेत् ) ततः पुरुषसूक्तेनस्तुत्वादेवंनीराजयित्वा । रुद्रायनमइतिचतुष्पथेबलिंदद्यात् ततोदेवं उत्थाप्य शय्यायां
आसनेवानिधाय न्यासंकुर्यात् ॥ अथपुरुषसूक्तन्यासः ॥ ॐसहस्रशीर्षा० १ ॐपुरुषऽएवे० २ इतिकरयोः ॥ १ ॥ ॐएतावानस्य० ३
त्रिपादूर्ध्व० ४ इति जान्वोः ॥ २ ॥ ततोविराड० तस्माद्यज्ञात्सर्वहुतः ६ इतिकट्योः ॥ ३ ॥ तस्माद्यज्ञात्० ७ इति नाभौ ॥ ४ ॥
तस्मादश्वा० ८ इतिहृदि ॥ ५ ॥ तंयज्ञं० ९ इतिकंठे ॥ ६ ॥ यत्पुरुषं० १० ब्राह्मणोस्य० ११ इतिबाह्वोः ७ चंद्रमामनस० १२ नाभ्या-
ऽआसीत्० १३ इतिनासयोः ॥ ८ ॥ यत्पुरुषेण० १४ सप्तास्या० १५ इतिअक्ष्णोः ॥ ९ ॥ यज्ञेनयज्ञं० १६ इतिशिरसि ॥ १० ॥
इतिन्यासंकृत्वा ॐनमोभगवतेवासुदेवायइतिशतवारंदशवारंवाजलमभिमंत्र्यदेवशिरसि अभिषिच्य । ॐउत्तिष्ठब्रह्मणस्पतेइत्युत्थाप्य ।
सुमुहूर्ते मुख्यमंदिरे पुरुषसूक्तेनगायत्र्याभुवसूक्तेनवाअर्चायांप्रतिष्ठाप्यप्राणप्रतिष्ठांकुर्यात् । यथा । अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुरुद्रा-
ऋषयः ऋग्यजुःसामानिछंदांसि क्रियामयवपुःप्राणाख्यादेवताआंबीजंक्रौंशक्तिः प्राणप्रतिष्ठायांविनियोगः । ॐब्रह्मविष्णुरुद्रऋषिभ्योनमः
शिरसि । ॐऋग्यजुःसामछंदोभ्योनमः मुखे । ॐप्राणाख्यदेवतायैनमोहृदि । ॐआंबीजायनमोगुह्ये । ॐक्रौंशक्त्यैनमः पादयोः ।
ॐकंखंगंघंङंपृथिव्यप्तेजोवाय्वाकाशात्मने आंहृदयायनमः । ॐचंछंजंझंञं शब्दस्पर्शरूपरसगंधात्मने ईंशिरसेस्वाहा । ॐटंठंडंढंणं उँश्रो-
त्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊंशिखायैवषट् । ॐतंथंदंधंनं वाक्पाणिपादपायूपस्थात्मनेऐंकवचायहुँ । ॐपंफंबंभंमं ॐवचनादानविहर-

चंदनंप्रतिगृह्यतामितिकुंकुमकर्पूरकस्तूरीयुक्तंचंदनं । मणिमुक्ताप्रवालाद्यैःस्वर्णपुष्पैर्मयाकृता ॥ पूजातुदेवदेवेशप्रसादाद्भवतस्तव ॥ इतिपु-
ष्पपत्रतुलसीदलानिनिवेदयेत् । वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः ॥ आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां इतिधूपं । त्वंचंद्रस्त्वंरविर्वि-
ष्णुस्त्वंरत्नानिहुताशनः ॥ त्वमेवसर्वज्योतींषिदीपोयंप्रतिगृह्यतां इतिदीपं । नैवेद्यंगृह्यतांदेवमेभक्तिंह्यचलांकुरु ॥ ईप्सितंचवरंदेहि परत्र-
चपरांगतिं इतिनैवेद्यम् । ततोऽशीत्याचत्वारिंशतावादीपैर्निराजनंकृत्वाभूषणानिसमर्प्य पूर्वकृतंहोमंनिवेद्यप्रार्थयेत् । यन्मयाभक्तियुक्ते-
नपत्रंपुष्पंफलंजलं ॥ आवेदितंचनैवेद्यंतद्गृहाणानुकंपया ॥ १ ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर ॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे
॥ २ ॥ इति । ततःपुनरष्टोत्तरसहस्रंशतंवाप्रधानदेवमंत्रेणहुत्वा ॐप्रजापतयेस्वाहा इदंप्रजापतये० ॥ ॐअग्नयेस्विष्टकृतेस्वाहा इदमग्नये-
स्विष्टकृते० ॥ इतिस्विष्टकृदंतंहुत्वा व्याहृतिहोमंत्वन्नोऽअग्नेइत्यादिपंचवारुणहोमंचकृत्वा पूर्णाहुतिंकुर्यात् । ॐमूर्द्धानंदिवोअरतिंपृथिव्यावै-
श्वानरमृतऽआजातमग्निम् ॥ कविꣳसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाःस्वाहा ॥ इतिपूर्णाहुतिः ॥ ततोदेवागातुइतिमंत्रेणब-
र्हिहोमंकुर्यात् ततः संस्रवप्राशनंआचमनंच । ॐसुमित्रियानइतिपवित्राभ्यांप्रणीताजलेनशिरःसंमृज्य पवित्रेअग्नौप्रक्षिप्य ॐदुर्मित्रिया-
रितीशान्यांप्रणीतान्युब्जीकरणं ततोब्रह्मणेपूर्णपात्रदानंब्रह्मग्रंथिविमोकश्चततःस्रुवेणभस्मानीयदक्षिणानामिकाग्रगृहीतभस्मना ॐत्र्यायुषं-
जमदग्नेःइतिललाटे । ॐकश्यपस्यत्र्यायुषमितिग्रीवायां । ॐयद्देवेषुत्र्यायुषंइतिदक्षिणांसे । तन्नोऽअस्तुत्र्यायुषं इति हृदये । इत्यग्निकर्म ।
ततः स्वस्तिवाचनंकारयित्वा इंद्रादिभ्योमाषभक्तबलिंदत्वाचम्यशेषंसमापयेत् ॥ इतिचतुर्थीकर्म ॥ ततः शिवप्रतिष्ठायां चंडकीर्तिमुखस्था-

पनम् । चतुर्थीकर्मदिनेदिनांतरेवा प्रासादाद्बहिर्गर्भगृहार्धसूत्रांतरालेईशान्यांचंडंस्थापयेत् तद्यथा । आचम्यप्राणानायम्यदेशकालौसं-
कीर्त्य० अमुकालिंगप्रतिष्ठांगतयाचंडप्रतिष्ठांकरिष्ये इतिसंकल्प्य पीठादौचंडमूर्तिसंस्थाप्यतीर्थोदकेनसंस्नाप्यपूजयेत् । तत्रध्यानंरुद्राग्नेःप्रभवं-
चंडंकज्जलाभंभयानकं ॥ शूलदंडधरंरौद्रंचतुर्वक्त्रंचतुर्भुजं ॥ मुखोद्गीर्णमहाज्वालंरक्तद्वादशलोचनं ॥ जटामुकुटखंडेंदुमंडितंफणिकंकणं ॥
व्यालयज्ञोपवीतंचसाक्षसूत्रकमंडलुं ॥ श्वेतपद्मासनासीनंभक्तिप्रह्वार्तिनाशनमित्येवंध्यात्वा । ॐचंडासनायनमः । ॐचंडमूर्तयेनमः ।
ॐधुनिचंडेश्वरायनमः । इत्यावाह्य न्यासंकुर्यात् ॐचंडंहृदयायहुंफट्नमः । ॐचंडंशिरसेहुंफट्नमः । ॐचंडंशिखायैहुंफट्नमः । ॐचंडं-
कवचायहुंफट्नमः । ॐचंडंअस्त्रायहुंफट्करयोस्त्रं । ॐचंडंसद्योजातायहुंफट् । ॐचिंवामदेवायहुंफट् । ॐचुंअघोरायहुंफट् । ॐचेंत
त्पुरुषायहुंफट् । ॐचोंईशानायहुंफट् । इतिन्यासंकृत्वाषोडशोपचारमंत्रैः पूजयेत् ॥ अथप्रार्थना ॥ यावत्तिष्ठतिकालेस्मिन्देवदेवोमहेश्वरः ।
तावत्कालंत्वयादेवस्थातव्यंशिवसन्निधौ ॥ १ ॥ ततोदिग्बलिंदत्वा । ॐयावत्कालंमहादेवोलिंगमाश्रित्यतिष्ठति ॥ तावत्कालंतुरक्षार्थंयूयंतिष्ठ-
तसर्वदा ॥ इतिभूतानिविज्ञापयेत् ततः प्रासादाद्बहिर्द्वारदेशेकीर्तिस्तंभंस्थापयेत् ॥ तदुक्तंपद्मपुराणे ॥ ईश्वरउवाच त्वंकीर्तिमुखसंज्ञोहि-
भवमद्द्वारिगःसदा ॥ त्वदर्चायेनकुर्वंतिनैवतेमत्प्रियंकराः ॥ १ ॥ तदाप्रभृतिदेवस्यद्वारेकीर्तिमुखःस्थितः । नार्चयंतीहयेपूर्वंतेषामर्चावृथा-
भवेत् ॥ २ ॥ तत्रप्रयोगः देशकालौसंकीर्त्य श्रीसदाशिवप्रीतयेकीर्तिमुखस्थापनं करिष्यइतिसंकल्प्यपूर्ववत् चंडविधिनास्थापयेत् ततो
भद्रासनेयजमानमुपवेश्याभिषिंचेत् ( तत्र ॐदेवस्यत्वा० ॐशन्नोदेवि० सुरास्त्वामित्यादयोमंत्राः ) यजमानोमहाजलाशये अवभृथ-

स्नानंकृत्वा मंडपमागत्यगुर्वादीन्संपूज्यगुर्वेर्त्विग्भ्योहिरण्यं दद्यात् सोपस्करापयस्विनींगांचगुरवे दद्यात् ततोगुरुः समस्तजगदुत्पत्तिस्थि-
त्यनुग्रहकारकः ॥ शिवः सानुचरः साङ्गः सर्वदासर्वकामद इतिमंत्रेणाशिषोदद्यात् । यथाशक्त्या ब्राह्मणभोजनम् कर्मपूर्तिकामोविष्णुं
स्मरेत् । कचिच्चंडोनास्तीतित्रिविक्रमः । सिद्धांतशेखरेतथा । बाणलिंगेचलोहेचसिद्धलोहेस्वयंभुवि ॥ प्रतिमासुचसर्वासुनचंडोधिकृतोभवेत्
॥ १ ॥ धराहिरण्यगोरत्नताम्ररौप्यांशुकादिकान् ॥ विहायशेषंनिर्माल्यंचंडेशायनिवेदयेत् ॥ २ ॥ अन्यदन्नादिपानीयंतांबूलंगंधपुष्पकं ॥
दद्याच्चंडायनिर्माल्यंशिवभुक्तंतुसर्वशः ॥ ३ ॥ आचार्यशिवचंडानामाज्ञाभंगेतुलक्षकं ॥ धनस्यभक्षणेतेषांपादोनंलक्ष्मीरितम् ॥ ४ ॥
निर्णयसिंधौ लिंगेस्वयंभुवेबाणेरत्नजेरसनिर्मिते ॥ सिद्धप्रतिष्ठितेचैवनचंडाधिकृतिर्भवेत् ॥ यत्रचंडाधिकारोस्तितद्भोक्तव्यंनमानवैः ॥ चंडा-
धिकारोनोयत्रभोक्तव्यंतत्रभक्तितः ॥ ६ ॥ इतिचंडेशकीर्तिमुखस्थापनप्रयोगः समाप्तः । ॥ ॥ ॥
अथसंक्षेपेणतडागवापीकूपप्रतिष्ठाप्रयोगः । ( तत्रकालनियमोमंडपादिकरणंचमत्कृतेउत्सर्गप्रकाशेज्ञेयः ) अधिवासनदिनपूर्वदिनेकृतहविष्य
भोजनोऽधिवासनदिनेप्रातरुत्थायतीर्थादौस्नात्वाप्रायश्चित्तधेनुंदत्वापुनःस्नात्वामंडपमागत्यस्वासनेउपविश्याचम्यप्राणानायम्य देशकालौ-
संकीर्त्य ममेहजन्मनिजन्मांतरेवा कृतकायिकवाचिकमानसिकसांसर्गिकदोषपरिहारार्थंमंतेसकलकलुषक्षयपूर्वकरुद्रालयगमनानंतरब-
हुकल्पकालावधिकद्युलोकभोगपूर्वकपरार्द्धकालावच्छिन्नमहस्तपःप्रभृतिलोकांगनासहिततल्लोकगतभोगोत्तरवैष्णवपदप्राप्तिकामोऽमुकज-
लाशयोत्सर्गेनाहंयक्ष्ये इति । तदंगत्वेन गणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धमाचार्यादिवरणंचकरिष्यइतिसंकल्प्य गणे-

शपूजास्वस्तिवाचनमातृवसोर्धारापूजावृद्धिश्राद्धगुर्वर्त्विग्वरणानिपूर्वोक्तप्रयोगरीत्या कुर्यात् । ततोमंडपप्रवेशदिग्रक्षणप्रोक्षणवास्तुपूज-
नमंडपपूजाग्निस्थापनोत्तरंमध्यवेदिलिखितवारुणमंडलमध्यस्थेपद्मेग्रहान्पूजयेत् ( एतत्सर्वंपूर्ववत्ज्ञेयं ) ततोग्रहपूजनानंतरंमंडलमध्ये ।
पंचरत्नसौवर्णकर्ममकरराजतमत्स्यडुंडुभताम्रकुलीरमंडूकलोहशिशुमारयुतासुवर्णपात्रीं । ॐइमम्मेवरुणश्रुधीहवमद्याचमृडय ॥
त्वामवस्युराचके ॥ इतिमंत्रेणस्थापयेत् । ततः प्रतिकुंडसमीपेईशान्यांकलशस्थापनंकृत्वा ॐनमस्ते विश्वगुप्तायनमोविष्णोअपांपते ।
सान्निध्यंकुरुमेदेवसमुद्रादिहशांतये । इतिवरुणंन्यस्यषोडशोपचारैः पूजयेत् । ( कूपप्रतिष्ठायांत्वत्र कूपस्यचतुर्दिक्षुधान्योपरिसित-
वस्त्रयुक्तच्छन्नानुक्तलक्षणान्कलशान्स्थापयेत् ) तत आचार्यऋत्विजश्चस्वेस्वेकुंडेस्वगृह्योक्तविधिना ( पूर्वोक्तविधिना ) ग्निप्रणयनानं-
तरंभाविकर्मकुर्युः । ततः कुंडदक्षिणतोयजमानउपविश्यजलमादाय । ॐअस्मिन्कर्मणि इदंहविःसूर्यादिग्रहेभ्यईश्वराद्यधिदेवताभ्यो-
ऽग्न्यादिप्रत्यधिदेवताभ्योगणेशादिपंचलोकपालेभ्य इंद्रादिदिक्पालेभ्योब्रह्मादिविश्वकर्मांतेभ्योवरुणाग्निवायुसूर्यप्रजापतिस्विष्टकृदादिपूर्वो-
त्तरांगदेवताभ्योनममेतित्यजेत् । इतिप्रतिकुंडंद्रव्यत्यागंकुर्यात् ( बहुभिर्होतृभिर्होमेक्रियमाणेप्रत्याहुतित्यागस्यैकेनकर्तुमशक्तेः ) ततः
परिस्तरणादिसमिद्धोमांतंकर्मसमाप्ययवमयचरुंश्रपयित्वाआज्यभागांते ग्रहादिविश्वकर्मांतानांप्रत्येकमष्टाविंशतिसमिदाज्या-हुतीर्जुहुयात्-
( ग्रहमंत्राःपूर्वमुक्ताएव ) अथ प्रधानदेवहोमोयजुर्वेदिनां । तत्रवारुणमंत्रैर्द्वादशभिर्नववारावृत्त्याष्टोत्तरशतमाज्याहुतीस्तावतीरेवौदुं- ॥ १२५ ॥
बरसमिदाहुतीश्चजुहुयात ॥ तत्रमंत्राः ॥ इमम्मेवरुणेतिशुनःशेपऋषिर्गायत्रीछंदोवरुणोदेवतावरुणप्रीतयेआज्यहोमेउदुंबरसमिद्धो-

तेजोसीतिघृतेन । ॐतेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवानामनाधृष्टंदेवयजनमसि ॥ ४ ॥ मधुवातेतिमधुना । ॐमधु-
व्वाताऽऋतायतेमधुक्षरन्तिसिंधवः ॥ माध्वीर्न्नःसंत्वोषधीः । ४ । देवस्यत्वेतिपुष्पोदकेन । ॐदेवस्यंत्वासवितुःप्प्रसवेश्विनोर्ब्बा-
हुभ्यांम्पूष्णोहस्ताभ्याम ॥ सरस्वत्यैव्वाचोयन्तुर्य्यंत्रेणाग्नेःसाम्राज्येनाभिषिंञ्चामि ॥ ५ ॥ परिवाजपतिरितिरत्नोदकेन । ॐपरिवाज-
पतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ६ ॥ देवस्येतिकुशोदकेन ॥ ७ ॥ अग्नआयाहीतिफलोदकेन । ॐअग्नआयाहिव्वी-
तयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ ८ ॥ समुद्रज्येष्ठा इतिशीतजलेन । ॐसमुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविश-
मानाः ॥ इंद्रोयावज्रीवृषभोरराद्ताआपोदेवीरिहमामवंतु ॥ ९ ॥ वसोःपवित्रमसीतिसहस्रधाराकुंभेन । ॐव्वसोःपवित्रमसिशतधारंवसोः
पवित्रमसिसहस्रधारं ॥ देवस्त्वासवितापुनातुव्वसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ १० ॥ इतिमंत्रस्नानं । ततस्तूर्ष्णींस्नपनम् ततः
अंधस्थांधोवोइतिपंचवर्णसूत्रेणनीराज्यबलिंहरेत् । ॐअंधस्त्थान्धोवोभक्षीयमहस्त्थमहोवोभक्षीयोर्ज्जस्थोर्ज्जंव्वोभक्षीयरायस्पोषस्त्थरायस्पो-
षंव्वोभक्षीय ॥ ११ ॥ मुंचंतुमाशपथ्यादितिकौतुकंविमुच्य । ॐमुंचंतुमाशपत्थ्याद्थोवरुण्याद्त ॥ अथोयमस्यपड्वीशात्सर्व्वस्माद्देवकि-
ल्बिषात् ॥ सूक्ष्मवस्त्रेणपंचनद्यइतिदेवंपरिमार्ष्टि । ॐपंचनद्यःसरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित् । १ ।
तत ॐमंदाकिन्यास्तुयद्वारिसर्वपापहरंशुभं ॥ तदिदंकल्पितंदेवसम्यगाचम्यतांत्वया ॥ इत्याचमनीयंनिवेदयेत् । ॐदेवसूक्तसमायुक्तेसर्व-
यज्ञसमन्विते ॥ सर्ववर्णप्रदेदेववाससीप्रतिगृह्यतां ॥ इतिवस्त्रयुग्मंनिवेदयेत् । शरीरंतेनजानामिचेष्टांनैववचनैवच ॥ मयानिवेदितंभक्त्या-

समागताः ॥ प्राभाकराबर्हिंपदोअग्निष्वात्तास्तथैवच ॥ क्रव्यादाश्चोपहूताश्चआज्यपाश्चसुकालिनः ॥ एतेत्वामभिषिंचंतुपितरश्चाग्निभिः
सह ॥ लक्ष्मीर्वेदीसतीक्षांतिरनुसूयातथास्मृतिः ॥संभूतिःसंततिश्चैवक्षमाप्रीतिस्तथैवच॥स्वाहास्वधाचतेराजन्नभिषिंचंतुमातरः ॥ कीर्ति
र्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिस्तुष्टिःसिद्धिश्चपार्थिव ॥ एतास्त्वामभिषिंचंतुधर्मपत्न्यःसमागताः ॥ अरुं
धतीवसुर्यामीलंबाभानुर्मरुत्वती ॥ संकल्पाचमुहूर्ताचसाध्याविश्वातथैवच ॥ धर्मपत्न्योदशान्यास्त्वामभिषिंचंतुपार्थिव ॥ अदितिर्दिति
र्दनुस्ताम्राह्यारिष्टानायुषामुनिः ॥ कद्रूःक्रोधवशाप्राचीविततासुरभिस्तथा ॥ एतास्त्वामभिषिंचंतुकश्यपस्यप्रियाःस्त्रियः॥ कृत्तिकारोहि
णीदेवीइलारौद्रीतथैवच ॥ पुनर्वसुश्चपुष्यश्चतथाश्लेषाचपार्थिव ॥ मघाचफाल्गुनीपूर्वातथैवोत्तरफाल्गुनी ॥ हस्तश्चित्रातथास्वातीविशा
खाचतथानृप॥ अनुराधातथाज्येष्ठामूलंचवसुधाधिप ॥ आषाढाचतथापूर्वातथाचान्योत्तराह्वया ॥ अभिजिच्चश्रुतिश्चैवधनिष्ठाचतथैवच॥
तथाशतभिषक्चैवपूर्वाभाद्रपदाचया ॥ उत्तरारेवतीराजन्नश्विनीभरणीतथा ॥ एतास्त्वामभिषिंचंतुसोमपत्न्यःसमागताः ॥ महाकल्पश्च
कल्पश्चमन्वंतरयुगानिच ॥ संवत्सराणिसर्वाणितथाचैवायनद्वयम् ॥ ऋतवश्चतथामासाःपक्ष्यरात्र्यहनीतथा ॥ संध्याश्चतिथयश्चै
वमुहूर्ताःकरणानिच ॥ एतेत्वामभिषिंचंतुकालस्यावयवाःशुभाः ॥ आदित्यश्चंद्रमाभौमोबुधोजीवःसितार्कजौ ॥ ग्रहास्त्वामभि
षिंचंतुराहुःकेतुश्चपार्थिव ॥ स्वायंभुवोमनोःपुत्रोमनुःस्वारोचिषस्तथा ॥ वैवस्वतोथसावर्णिर्दक्षब्रह्मसुताबुभौ ॥ धर्मपुत्रोरुद्रपुत्रोरौ
च्योभौत्यश्चयोमनुः ॥ एतेत्वामभिषिंचंतुमनवश्चचतुर्दश ॥ नासत्यौदेवभिषजौभवेतांविजयायते ॥ धरोध्रुवश्चसोमश्चआपश्चैवा

निलानलौ ॥ प्रत्यूषश्चप्रभासश्चवसवोष्टौमहाप्रभाः ॥ एतेत्वामभिषिंचंतुदेवमुख्याःसमागताः ॥ धातामित्रोर्यमापूषाशक्रेशो
वरुणोभगः ॥ त्वष्टाविवस्वान्सविताविष्णुर्द्वादशमस्तथा ॥ एतेत्वामभिषिंचंतुकश्यपादितिसंभवाः ॥ एकज्योतिर्द्विज्योतिश्च
त्रिचतुर्ज्योतिरेवच ॥ एकशक्रोद्विशक्रश्चत्रिशक्रश्चमहाबलः ॥ इंद्रश्चगत्यादृश्यंतेततःप्रकृतिसत्तथा ॥ मितश्चसंमितश्चैवअमितश्च
महाबलः ॥ ऋतजित्सत्यजिच्चैवसुषेणःश्येनजित्तथा ॥ अतिमित्रोह्यमित्रश्चपुरुजिच्चपराजितः ॥ ऋतश्चऋतवान्धातावरुणोविधृतो
ध्रुवः ॥ विधारणोमहातेजावासवस्यपरःसखा ॥ ईदृशाश्चान्यदृक्षाश्चएतादृगमिताशनाः ॥ क्रीडनश्चतथाशक्तिःसरभश्चमहायशाः॥ धातु
रुग्रोमुनिर्भौमअतिमुक्तःक्षिपःसहः ॥ द्युतिर्वसुरनाधृष्टोवासःकामोजयोविराट्॥ एतेत्वामभिषिंचंतुमरुतश्चसमागताः ॥देवाह्येकोनपंचाश
न्महाबलपराक्रमाः ॥ चित्रांगदश्चित्ररथश्चित्रसेनश्चवीर्यवान् ॥ पूर्णायुरनघश्चैवउग्रसेनश्चवीर्यवान् ॥ धृतराष्ट्रश्चसोमश्चसूर्यवर्णस्तथैवच ॥
उराधस्तृपणःकार्ष्णिर्नंदश्चित्रस्तथैवच ॥ कलिश्चामिगिराराजन्पर्जन्योनारदस्तथा ॥ वृषपर्वात्रहंसश्चतथाचैवहाहाहूहूः ॥ विश्वावसुस्ताम्र
कश्चतथावसुरुपश्रियः ॥ एतेत्वामभिषिंचंतुगंधर्वाःपृथिवीपते ॥ अनवद्यामत्तकामामनूनामरुणीत्रिया॥ अनुत्तमासुकेशीचसुरूपाचमनो
वती॥ मेनकासहजन्याचपूर्णाशापुंजिकस्थली॥ ऋतुस्थलाघृताचीचविश्वाचीपूर्वचित्त्यपि॥ प्रम्लोचाचाप्यनुम्लोचारंभाचैवोर्वशीतथा ॥
पंचचूडासामनतीचित्रलेखाचपार्थिव ॥ मिश्रकेशीसुगंधिश्चविद्युत्पर्णात्रिलोचनी ॥ आवृकालक्ष्मणाक्षेमाअसिकारुचिकातथा॥सुव्रताच
सुबाहूश्चसुबोधासुवपुस्तथा ॥ पुंडरीकासुधाराचसुराधासुरसातथा ॥ हेमासरस्वतीचैवकमलासूनृतालवा ॥ सुमुखीहंसपादीचवारुणील

तिलालसा ॥ एतास्त्वामभिषिंचंतुराजन्नप्सरसस्तथा ॥ प्रह्लादश्चमहातेजास्तथाराजन्विरोचनः ॥ धन्वीबाणस्तथान्येचदितिपुत्राःसमा
गताः ॥ अभिषिंचंतुदैत्याश्चदिव्येनाप्यंभसास्वयम् ॥ विप्रचित्तिमुखाःसर्वेदानवास्त्वांसमागताः ॥ अभिषिंचंतुराजानंराज्यंकर्तुंसुसत्वराः ॥
हेत्यश्चैवप्रहेत्यश्चसलिलेंद्रस्तथैवच ॥ सुकेशीपौरुषेयश्चयज्ञहापुरुषोदरः ॥ विद्युत्सूर्यस्तथाव्यासोवधश्चरसनास्तथा ॥ एतेत्वामभिषिंचं
तुसमागम्याद्यराक्षसाः ॥ सिद्धोथोमणिभद्रश्चसुमनोनंदनस्तथा ॥ कद्रूतिःपंचमश्चैवमणिमान्वसुगस्तथा ॥ सर्वानुभूतःशंखश्चापिंगाक्षश्चतु
रस्तथा ॥ यमोनंदरसोभीमःपद्मश्चंद्रःप्रभाकरः ॥ मेघवर्णश्चभव्यश्चप्रद्योतश्चमहायशाः ॥ भूतिमान्केतुमांश्चैवमौलिनिश्चसुदर्शनः ॥ श्वेत
श्चविपुलश्चैवप्रद्युम्नश्चजयावहः ॥ पद्माक्षोपिंगलाक्षश्चकुमुदश्चबलाहकः ॥ पद्मनाभःसुगंधश्चसुवीरोविजयाकृतिः ॥ पूर्णमासीहिरण्याक्षःसित
जिह्वश्चवीर्यवान् ॥ एतेत्वामभिषिंचंतुराजवृद्धाश्चसत्तमाः ॥ शंखःपद्मश्चराजेंद्रमकरःकश्यपस्तथा ॥ महापद्मश्चनीलश्चवर्चःकुंदोमुकुंदकः ।
एतेत्वामभिषिंचंतुनिधयस्तुसमागताः ॥ छागलाश्चैववक्राश्चयेचसूरीमुखानृप ॥ दुःपूरणविशादाश्चज्वलनांगारकस्तथा ॥ कुंभपात्रः
प्रमुंजश्चउपवीताउलूखलाः ॥ अकर्णाश्चकतुंडाश्चतथायेपात्रपाणयः ॥ पांसवश्चवितुंडाश्चनिपुणाःस्कंदनास्तथा ॥ एतास्त्वामभि
षिंचंतुपिशाचानांचजातयः ॥ ब्रह्मचर्येस्थितादांताःसर्वज्ञाःसर्वदर्शिनः ॥ नानाप्रकाररचनानानाबाहुशिरोधराः ॥ चातुःपथसुरादालं
शून्यालयनिकेतनाः ॥ त्रिपुरारिंभवेदेवंयेगतामनुजेश्वर ॥ एतेत्वामभिषिंचंतुगणाभूतपतेःस्वयम् । महाकालंपुरस्कृत्यनरसिंहंचमातरः ॥
सर्वास्त्वामभिषिंचंतुराजराज्येनराधिप ॥ ग्रहःस्कंदोविषादश्चनैगमेषस्तथैवच ॥ अभिषिंचंतुराजंस्त्वांसर्वेस्कंदग्रहाःशुभाः ॥ डाकिन्यो

याश्चयोगिन्यःखेचर्योभेदरीस्तथा ॥ सर्वास्त्वामभिषिंचंतुसमेत्यमनुजेश्वर॥ गरुडश्चारुणश्चैवआरुणिश्चमहाखगः॥संपातिर्विनयश्चैवविष्णु
गंधकुमारकाः ॥ एतेत्वामभिषिंचंतुसुपर्णाःपृथिवीपते ॥ अनंतश्चमहानागोवासुकिःशेषतक्षकौ ॥ सुपर्णारिश्चकुंभश्चवामनोथांजनोत्तमः॥
ऐरावतोमहापद्मःकंबलाश्वतरावुभौ ॥ पद्मपत्रश्चशंखश्चकर्कोटकधनंजयौ ॥ महाकर्णोमहानीलोधृतराष्ट्रबलाहकौ ॥ कुमारःपुष्प
दंतश्चगन्धर्वश्चमनस्विकः ॥ नहुषःखररोमाचशंखपालस्तथैवच ॥ पद्मश्चकुलिकश्चैवपाणिरित्येवमादयः ॥ नागास्त्वामभिषिंचंतुराज
राज्येचपार्थिव ॥ कुमुदैरावतौपद्मःपुष्पदंतोथवामनः ॥ सुप्रतीकोंजनोनीलःपातुत्वांसर्वतोनृप ॥ पैतामहस्तथाहंसोवृषभःशांकरस्तथा॥
उच्चैःश्रवाश्चाश्वपतिस्तथाधन्वंतरिर्नृप ॥ कौस्तुभःशंखराजश्चपातुत्वांसर्वतःसदा ॥ चक्रंत्रिशूलंवज्रश्चनंदकोस्त्राणिचाप्यथ ॥ सर्वा
भिषेकंदत्त्वाचदिशंतुविजयंध्रुवम् ॥ धर्मश्चवृद्धशाखश्चसत्यंदानंतपस्तथा ॥ यशोयज्ञास्तथैवायुर्ब्रह्मचर्यंदमःशमः ॥ एतेत्वामभिषिंचं
तुचित्रगुप्तश्चपार्थिव ॥ दंडःपिंगलकश्चैवमृत्युकालावुभौतथा ॥ वालखिल्यास्तथासर्वेभवंतुविजयायते ॥ दिग्धेनवश्चतस्त्रस्त्वां
सुरभिश्चतथानृप ॥ अभिषिंचंतुसर्वाभिर्गोभिःसार्द्धंनरेश्वर ॥ वेदव्यासश्चवाल्मीकिःशंबरोथपराशरः ॥ देवलःपर्वतश्चैवदुर्वासाभा
गुरिःशुचिः ॥ याज्ञवल्क्यःसजाबालिर्जमदग्निःशुचिश्रवाः ॥ विश्वामित्रःशूलकच्छुवर्धनोत्रिर्विदूरथः ॥ एकलश्चद्विदश्चैवत्रितोगौ
तमगालवौ ॥ शांडिल्यश्चभरद्वाजोमौद्गल्योवेदवाहनः ॥ बृहदश्वःकुटिमठोजपजानुर्घटोदरः ॥ यवक्रीतोथरैभ्यश्चआत्मधामश्चजै
मिनिः ॥ ऋषिःसारंगवश्चैवतथागस्त्योमहातपाः ॥ अदुर्मूर्दोमृदुश्चैवइद्धबाहुर्महोदयः ॥ कात्यायनश्चकण्वश्चबलाकःश्वेतनंदनः ॥

एतेत्वामभिषिंचंतुमुनयःपार्थिवोत्तम ॥ पृथुर्दिलीपोभरतोदुष्यंतःशत्रुजिद्बली ॥ मनुःककुत्स्थश्चानेनायुवनाश्वोजयद्रथः ॥ मांधातामुचुकुंदश्चतथाराजापुरूरवाः ॥ इक्ष्वाकुश्चयदुःश्वेतःपूरुर्भूरिश्रवास्तथा ॥ अंबरीषश्चनाभागोवृहदश्वोमहाहनुः ॥ प्रद्युम्नश्चाप्रसुम्नश्च संजयश्चतथार्जुनः ॥ एतेचान्येचराजानस्तवराजन्दिवंगताः ॥ समायांत्वभिषेकायविजयायतथाश्रिये ॥ पुरुषश्चाप्रमेयात्मामहाभूतानियानिवा ॥ पृथिवीवायुराकाशमापोज्योतिस्तथैवच ॥ मनोबुद्धिस्तथैवात्माअव्यक्तश्चमहीपते ॥ एतेत्वामभिषिंचंतुसमेतावसुधाधिप ॥ भूर्लोकोथभुवर्लोकःस्वर्लोकोथमहाजनः ॥ तपःसत्यश्चराजेंद्रविजयायभवंतुते॥जंबूःशाकःकुशःक्रौंचःशाल्मलीद्वीपएवच ॥गोमेदःपुष्करश्चैवस्वसाम्यंप्रदिशंतुते ॥ उत्तराःकुरवःपुण्यारम्याहैरण्मयास्तथा ॥ भद्राश्वःकेतुमालश्चवर्षश्चैवइलावृतः ॥ हरिवर्षःकिंपुरुषोवर्षोभारतसंज्ञकः ॥ एतेत्वामभिषिंचंतुसमेत्यवसुधाधिप ॥ इक्षुद्वीपःकुसेरुश्चताम्रपर्णोगभस्तिमान् ॥ नागद्वीपस्तथासौम्योगंधर्वोवरुणस्तथा ॥ अयंचनवमस्तेषांस्वसाम्यंप्रदिशंतुते ॥ हिमवान्हेमकूटश्चनिषधोनीलएवच ॥ श्वेतशृंगस्तथामेरुर्माल्यवद्गंधमादनौ ॥ महेंद्रोमलयःसह्यःशक्तिमानृक्षवांस्तथा ॥ विंध्यश्चपारियात्रश्चसर्वएवमहीधराः ॥ समागम्याभिषिंचंतुत्वामद्यवसुधाधिप ॥ ऋग्वेदोथयजुर्वेदःसामवेदस्तथैवच ॥ अथर्ववेदोवेदास्त्वामभिषिंचंतुपार्थिव ॥ इतिहासोधनुर्वेदोगांधर्वश्चायुःसंज्ञितः ॥ सत्तोपवेदाश्चतथाविजयायभवंतुते ॥ शिक्षाकल्पोव्याकरणंनिरुक्तंछंदसांगतिः ॥ छंदोविवृतिषष्ठानिविजयंप्रदिशंतुते ॥ अंगानिवेदाश्चत्वारोमीमांसान्यायविस्तरः ॥ धर्मशास्त्रंपुराणंचविद्याह्येताश्चतुर्दश ॥ सांख्ययोगःपंचरात्रंवेदाःपाशुपतंतथा ॥ कृतांतपंच

कंचैवशास्त्राणिविविधानिच ॥ गायत्रीपापशमनीमार्गादेवीमहाशिवा ॥ गांधारीचतथाविद्याविजयंप्रदिशंतुते ॥ देवदानवगंधर्वायक्षराक्षस
पन्नगाः॥ऋषयोमनवोगावोदेवमातरएवच॥देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच॥औषधा
निचरत्नानिकालस्यावयवाःशुभाः॥स्थानानिचसमस्तानिपुण्यान्यायतनानिच।जीमूतानिचसर्वाणितद्विकाराश्चसर्वतः॥उक्तानिचाप्यनु
क्तानिविजयायभवंतुते ॥ लवणक्षीरतोयौचघृतमंडोदकस्तथा॥दधिमंडोदकश्चैवसुरोदश्चनराधिप ॥ तथैवेक्षुरसोदश्चतथास्वादूदकश्चयः ॥
गर्भोदकश्चतोयैस्त्वामभिषिंचंतुपार्थिव ॥ चत्वारःसागराश्चैवश्वेततोयेनपार्थिव॥त्वामागम्याभिषिंचंतुविजयंप्रदिशंतुते ॥ पुष्करश्चप्रया
गश्चप्रभासोनैमिषस्तथा ॥तथाब्रह्मसरःपुण्योगयाशीर्षश्चपार्थिव॥ कालोदकोनंदिकुंडस्तथैवोत्तरमानसः ॥ स्वर्गमार्गनदश्चैवतथापंचनद
श्चयः ॥ भृगुतीर्थंप्रभासश्चतथैवामरकंटकः ॥ आश्रमःकालिकायाश्चनारायणसरस्तथा ॥तृणाबिंदोस्तथातीर्थंतीर्थंचावंतिखंडके ॥ महास
रस्तथागस्त्यःकुमारीतीर्थमेवच॥गंगाद्वारंकुशावर्त्तोबिल्वकोनीलपर्वतः ॥ वाराहःपर्वतश्चैवतीर्थंकनखलंतथा॥ कालिंजरःसकेदारोरुद्रको
टिस्तथैवच ॥ महालयश्चराजेन्द्रबदर्याश्रमएवच ॥ नंदाचसूर्यतीर्थंचसोमतीर्थंशतक्रतोः ॥ अश्विनोर्वरुणस्याथवायोर्वैश्रवणस्यच॥ब्रह्मण
श्चैवशर्वस्ययमस्यव्ययनस्यच ॥ विरूपाक्षस्यधर्मस्यतथाचाप्सरसांनृप ॥ ऋषीणांचवसूनांचसाध्यानांमरुतांतथा ॥ आदित्यानां
चरुद्राणांतथाचांगिरसांनृप ॥ ऋषीणांचवसूनांचतथान्येषांचमानद ॥ प्लक्षप्रस्रवणंचैवसुषुम्णंचनराधिप ॥ शालग्रामसरश्चैववाराहोमानव
स्तथा॥कामाश्रमस्त्रिकूटश्चचित्रकूटस्तथैवच॥सपूर्वःक्रतुसारश्चतथाविष्णुपदंसरः ॥ कपिलस्यतथातीर्थंवासुकेस्तीर्थमेवच ॥ सिंधूत्तमस्त

पोंड्राराप्यथसूर्यारकुंभकः॥ पौंडरीकश्चराजेंद्रगंगासागरसंगमः॥सिंधुसागरयोश्चैवसगमःसुमनोहरः॥ तथाकुंभाचसुंधश्चमानसंचतथासरः
॥ तथाबिंदुसरःपुण्यसरःस्वच्छोदकंतथा ॥ धर्मारण्यंफल्गुतीर्थमविमुक्ततथैवच ॥ लोहितश्चतथापुण्योबदरीपावनंशिवः ॥ तीर्थं
सप्तऋषीणांचवह्नितीर्थंचपार्थिव ॥ एतेचान्येचबहवःपुण्यसंकीर्तनाःशुभाः ॥ तोयैस्त्वामभिषिंचंतुसर्वपातकनाशनैः ॥ गंगानदीमहा
पुण्याह्लदिनीह्लादिनीतथा ॥ पावनीचतथाशीताचक्षुःसिंधुःसनर्मदा ॥ सुप्रभाकांचनाक्षीचविशालामानसीन्हदा ॥ सरस्वतीघनोदाचसु
वंशाविमलोदका ॥ क्षिप्राशोणश्चतर्षश्चशरयूर्गण्डकीतथा ॥ अच्छोदाचविभागाचचंद्रभागाइरावती ॥ वितस्तादेविकारंभाकौशी
देवह्रदाशिवा ॥ तथाचेक्षुमतीपुण्याकौशिकीयमुनातथा ॥ गोमतीधूतपापाचबहूदाचसरस्वती ॥ निर्विन्ध्याचतृतीयाचलौ
हित्यश्चमहानदः ॥ वेदस्मृतिर्वेदमातावेदायुर्वरदातदा ॥ गोवर्णाचंदनाचैवसदानीराकुमुद्वती ॥ पीताचर्मण्वतीधूपाविदर्भावेणुमत्यपि ॥
अवंतीचतथाकुंतीसुरसाचपलाशिनी ॥ मंदाकिनीदशार्णाचसिंधूरेवाकुमुद्वती ॥ तपनीपिप्पलाश्येनीकरतोयापिशाचिका ॥
चित्रोत्पला।चित्रवर्णामंजुलावालुकावती ॥ शुक्तिमतीसिनीवालीमंडणीनृपकाकयूः ॥ तापीपयोष्णीनिर्विंध्या।सिताचनिषधावती ॥ वेणा
वैतरणीभौमानंदराचतथाकुहूः ॥तोयाचैवमहागौरीदुर्गामतिविलातथा॥ गोदावरीभीमरथीकृष्णावेणीभयंकरा ॥ तुंगभद्रासुप्रकारावह्या
कावेरिरेवच ॥ कृतमालाताम्रपर्णीपुष्पभद्रोत्पलावती॥[illegible]त्रिदिवालया ॥ लांगूलिनीवंशधरीजांबूश्चसुकलावती॥

ऋषिका चखगा चैवदमगा मंदवाहिनी॥कंपना चविशल्या चकरतोयासुवाजिनी॥ताम्रारुणावेत्रवतीसुभद्राचाश्ववत्यपि ॥ अद्रिकाचइमाचैव
सुप्रकाराहिरण्मयी॥आपगालोतसाभासीसंध्याचवडवादिनी॥महेंद्रवाणीशालाचमालिकामलपावनी ॥ नीलोद्धतकराचैवबाहुदाचमहा
नदी॥नंदाचापरनंदाचसुदाचवसुवाहिनी ॥एताश्चान्याश्वराजेंद्रनद्यस्त्वांविविधोदकैः ॥ सर्वपापप्रशमनाः सर्वलोकस्यमातरः ॥ श्वेतो
दपूर्णकलशैरभिषिंचंतुपार्थिव ॥ एतैर्यथोक्तैर्नृपराजराज्येकृतोभिषेकः पृथिवींसमग्राम् ॥ ससागरांभुंक्ष्वचिरंचजीवधर्मेचतेबुद्धिरतीव
चास्तु ॥ऋग्विधाने॥ राजानमभिषिंचेततिष्येणश्रवणेनवा ॥ पौष्णसावित्रसौम्याश्विरोहिण्यामुत्तरासुच ॥ हुत्वाग्निंयज्ञलिंगाभिःसावि
त्र्याप्रयतःशुचिः॥ महाव्याहृतिभिश्चैवसंपाताभिहुतोभवेत्॥सर्वौषधिरसैःश्लक्ष्णैर्नदीनांसलिलेनच॥ व्याघ्रचर्मण्यथासीनमासंद्यामभिषि
च्यतम्।तिष्ठन्प्रत्यङ्मुखोब्रूयाज्जयत्वंपृथिवीपते।धर्मस्तेनिखिलोराजन्वर्धतांपालयन्प्रजाः॥धर्मस्यचश्रियैपुष्ट्यैजयायाभ्युदयायच। राजा
तुसंततौगोत्रेततोप्रतिरथंजपेत्॥२१॥ वैय्याघ्रंतुभवेच्चर्मसमिदौदुंबरीभवेत्॥त्रिरेनमभिषिच्यैवंदुंदुभीनभिमंत्रयेत्॥ प्राच्यांत्वांदिशिवसवो
ह्यभिषिंचंतुतेजसे॥दक्षिणस्यांत्वांदिशिरुद्राअभिषिंचंतुवृद्धये॥प्रतीच्यांत्वांदिश्यादित्याविश्वेदेवाउदग्दिशि ॥ अभिषिच्यचराजानमाशी
र्भिरभिसंयुजेत् ॥ आत्वाहर्षमंतरेधीत्यथैनमभिमंत्रयेत्।अभिषेकफलमुक्तंबौधायनेन।दशपूर्वान्दशपरानात्मानंचैकविंशतिम् । पुनातिपुत्र
पौत्रैश्चस्वर्गलोकेमहीयते ॥षष्टिंवर्षसहस्राणिब्रह्मसायुज्यमाप्नुयात् ॥ इति ॥ अथप्रतिवर्षाभिषेकः॥ गोपथब्राह्मणे॥अथपुष्पाभिषेकस्यवि

धिंवक्ष्यामिसांप्रतम् ॥धर्मार्थकामसंयुक्तंराजाकुर्यात्पुरोहितम् ।सौवर्णैराजतैस्ताम्रैः कलशैः पार्थिवैरपि।सहस्रेणशतेनाथतोयग्रहणमिष्यते॥
चतुर्णांसागराणांतुनदीनांचशतस्यतु ॥ अभिषेकायराज्ञस्तुतोयमाहृत्ययत्नतः ॥ एकद्वित्रिचतुर्वर्णावासागस्त्यतुपंचमम् ॥ औषधी
स्तेषुसर्वेषुकुंभेषुपरिकल्पयेत् ॥ सहाचसहदेवीचबलाचातिबलातथा॥ दमयंतीवचाश्वेताव्याघ्रदंतीसुमंगला ॥ १ ॥ शतावरीजयं
तीचशतपुष्पासचंदना ॥ प्रियंगूरोचनोशीरमभृताचससारिका ॥ अश्वत्थप्लक्षबिल्वानांन्यग्रोधपनसस्यच ॥ शिरीषाम्रकपि
त्थानांपल्लवैःसमलंकृतान् ॥ हेमरत्नौषधीबिल्वपुष्पगंधाभिवासिताम् ॥ आच्छादितान्सितैर्वस्त्रैरभिमंत्र्यपुरोहितः ॥ सावि
त्र्युभयतःकुर्याच्छन्नोदेवीतथवच ॥ हिरण्यवर्णासूक्तंचअनुवाकाद्यमेवच ॥ धरणीपादपीठस्यदूर्वामूलान्कुशान्शुभान् ॥ तस्यो
परिभवेत्पीठंहैमंरौप्यमथापिवा ॥ २ ॥ अनडुद्व्याघ्रसिंहानांमृगस्यचयथाक्रमम् ॥ चत्वारिचर्माण्येतानिपूर्वादारभ्यविन्यसेत् ॥
चातुर्होत्रविधानेनजुहुयाच्चपुरोहितः ॥ चतुर्दिक्षुस्थितैर्विप्रैर्वेदवेदांगपरागैः ॥ बिल्वाहारःफलाहारःपयसावापिवर्त्तयेत् ॥ सप्तरा
त्रंघृताशीवाततोहोमंप्रयोजयेत् ॥ गव्येनपयसाकुर्यात्सौवर्णेनस्रुवेणतु ॥ वेदानामादिभिर्मंत्रैर्महाव्याहृतिपूर्वकैः ॥ शर्मवर्मागणेश्चैवतथा
स्यादपराजितः ॥ आयुष्यश्चाभयश्चैवतथास्वस्त्ययनोगणः ॥ ३ ॥ एतान्पंचगणान्हुत्वावाचयेत्तु द्विजोत्तमान् ॥ हिरण्येनाक्षतार्द्धेनत्वन्यै
श्चमधुसर्पिषा ॥ पुण्याहंवाचयित्वास्यद्वारंभंकारयेद्बुधः ॥ तिथिनक्षत्रसंयुक्तेमुहूर्तेकरणेशुभे ॥ उच्चैर्घोषइतितूर्याण्यभिमंत्र्यपुरोहितः ॥

सर्वतूर्यनिनादेनह्यभिषिक्तोह्यलंकृतः ॥ सिंहासनंसमारुह्यपीठकंचयथाक्रमम् ॥ चामरच्छत्रसंयुक्तंप्रतीहारविभूषितम् ॥ मत्तद्विपचतुष्कं
चचतुर्दिक्षुप्रकल्पयेत् ॥ उपतिष्ठंस्ततोराजाप्रजानांकारयेद्धितम् ॥ आकराब्राह्मणागावःस्त्रीबालजडरोगिणः ॥ ४ ॥ ततस्तुदर्शनंदेयंब्रा
ह्मणानांनृपेणतु ॥ श्रेणीप्रकृतिमुख्यानांस्त्रीजनंचनमस्करोत् ॥ आशिषस्तेहिशस्यंतितुष्टाजनपदाभुवि ॥ एवंप्रजानुषज्येतपृथिवीचवशा
भवेत् ॥ पुरोहितंमंत्रिणंचसेनाध्यक्षंतथैवच ॥ अश्वाध्यक्षंगजाध्यक्षंकोष्ठागारपतिंतथा॥भांडागारपतिंवैद्यंदैवज्ञंचयथाक्रमम् ॥ यथार्हेणच
योगेनसर्वान्संपूजयेन्नृपः ॥ राज्यंपुरोहितेन्यस्यशेषाणांचयथाक्रमम ॥ स्थानांतराणिचान्यानिदत्त्वासुखमवाप्नुयात् ॥ दूर्वासिद्धार्थकान्स
र्पिःशमींव्रीहियवौतथा ॥ शुक्लानिचैवपुष्पाणिमूर्ध्निदद्यात्पुरोहितः ॥ अथवाभिहितोह्येषविधिःपुष्पाभिषेचने॥राजाजातोमहींभुक्तेशक्रलो
कंचगच्छति ॥ इतिपुष्पाभिषेकः॥ अयंचाभिषेकःप्रतिवर्षमहानवम्यांकर्तव्यः ॥ पुष्पाभिषेकोमहानवम्यामिंद्रोत्सवोजन्मदिनेप्रतिवर्षेवृषो
त्सर्गः ॥ कार्तिक्यांप्रतिवर्षमित्याथर्वणसूत्रात् ॥ अथसिंहासनच्छत्रलक्षणंवास्तुमंजर्याम्॥सिंहासनंचोत्तममंगुलानांषष्ट्यादशोनंचपरंवद
न्ति ॥ दशांशवस्वंशमतोविहीनंव्यासेनदैर्घ्यार्धसमुच्छ्रयंस्यात् ॥ मुनिभिरथशरैर्वाभद्रभागत्रयंस्यादुदयइहविभागैर्भावितेपीठमष्टौ ॥
कणिशमपिरसांशंसप्तधाग्रासपट्टीशिवमुनिनवरतैर्दन्तिवाहौनृवंद्यौ ॥ छाद्यंस्याद्रसभागमेवतिथितोभागेनकक्षाशतैर्युक्तंस्तंभयुगेनतोरण
युतंरत्नैःशुभैराजितम् ॥ कर्तव्यंनृपवल्लभंमुनिभृतंज्येष्ठंचसिंहासनंकर्तव्यंचयशोभिवर्धनमिभैःसिंहैर्नृकक्षासनम्॥छत्रंज्येष्ठमशीतिवेद

सहितंद्वासप्ततिर्मध्यमंषष्ट्याकल्प्यसमंगुलैर्नरपतेर्दैवंशतार्द्धंसमम् ॥ विष्णुधर्मोत्तरे ॥भद्रासनंनरेन्द्रस्यक्षीरवृक्षान्नकारयेत् ॥ उच्छ्रायश्चत
थातस्यअध्यर्द्धंतुसमंभवेत् ॥ हस्तत्रयंतथाविष्वग्विस्तारेणचकारयेत् ॥ आयामश्चास्यकर्तव्योविस्तारेणैवसंमितः ॥ चतुरस्रंतुकर्तव्यंरा
ज्ञोभद्रासनंतथा ॥ नास्राष्टंनतथावृत्तंनचदीर्घंभृगूत्तम ॥ सुवर्णरूप्यताम्रैश्चचित्रंकार्यंविशेषवत् ॥ प्रशस्तैश्चतथारत्नैश्चत्वारःप्र
तिरूपकैः ॥ चत्वारःपुरुषास्तत्रविन्यस्ताभृगुनंदन ॥ द्विगुणाश्चतथासिंहास्तत्रकार्याभृगूत्तम ॥ हंसपक्षैर्विरचितंमयूरस्यशुकस्यवा ॥
पक्षैरथबलाकायाश्छत्रंराज्येप्रशस्यते ॥ मिश्रपक्षैर्नकर्तव्यंहीनंपरिमितंतथा ॥ चतुरस्रंतुकर्तव्यंब्राह्मणस्यभृगूत्तम ॥ वृत्तंराज्ञः
प्रशस्तंस्याच्छुक्लवस्त्रविभूषितम् ॥ अथदुर्गविधिः ॥ राज्ञासहायसंयुक्तंप्रभूतप्रसवंधनम् ॥ रम्यमापोन्नसंपन्नंमध्यदेशंसमाश्र
येत् ॥ तत्रदुर्गंनृपःकुर्यात्षण्णामेकतमंबुधः ॥ नवदुर्गंमहीदुर्गंनरदुर्गंतथैवच ॥ वार्क्षंचैवाश्वदुर्गंचगिरिदुर्गंचभार्गव ॥ सर्वेषामे
वदुर्गाणांगिरिदुर्गंप्रशस्यते ॥ दुर्गंचपरिखोपेतंपुराट्टालकसंयुतम् ॥ शतघ्नीयंत्रमुख्यैश्चशतशोथसमावृतम् ॥ गोपुरंसर्ववाटंचतत्र
स्यात्सुमनोहरम् ॥ सपताकोगजारूढोयेननराजाविशेत्पुरम् ॥ सुशोभाश्चतथातत्रकार्याश्चापणवीथयः ॥ एकस्मिंस्तत्रवीथ्यग्रेदे
ववेश्मभवेद्दृढम् ॥ वीथ्यग्रेचद्वितीयेचराजवेश्मविधीयते ॥ धर्माधिकरणंकार्यंवीथ्यग्रेचतृतीयके ॥ चतुर्थेचैववीथ्यग्रेगोपुरंतुविधीय
ते ॥ आयतंचतुरस्रंवावृत्तंवाकारयेत्पुरम् ॥ अर्द्धचंद्रप्रकारंचवज्राकारंतुकारयेत् ॥ अर्धचंद्रंप्रशंसंतिनदीतीरेचतद्भवेत् ॥ अन्यत्रतुनक

र्तव्यंप्रयत्नेनविजानता ॥ राज्ञःशोकगृहंकार्यंदक्षिणेराजवेश्मनः ॥ तस्यापिदक्षिणेभागेगजस्थानंविधीयते ॥ गजानांप्राङ्मुखीशालाकर्त
व्यावाप्यवाङ्मुखी ॥ आग्नेयेचतथाभागेआयुधागारमिष्यते ॥ महानसंचधर्मज्ञकर्मशालातथापरा ॥ गृहंपुरोधसःकार्यंवामतोराजवेश्म
नः ॥ मंत्रवेदविदोश्चैवचिकित्साकर्तुरेवच ॥ तस्यैवचतथाभागेकोष्ठागारंविधीयते ॥ गवांस्थानंतथैवात्रतुरंगाणांतथैवच ॥ उत्तराभिमु
खाश्रेणीतुरंगाणांविधीयते ॥ दक्षिणाभिमुखावाथपरिशेषाविगर्हिता ॥ तुरंगास्तुतथाधार्याः प्रदीपैःसार्वसत्रिकैः ॥ कुक्कुटान्वानरांश्चैव
मर्कटांश्चनराधिपः ॥ धारयेदश्वशालासुसवत्सांधेनुमेवच ॥ अजाश्चधार्यायत्नेनतुरंगाणांहितैषिणा ॥ गोगजाश्वादिशालासुतत्पुरीषस्य
निर्गमः ॥ अस्तंगतेनकर्तव्योदेवदेवेदिवाकरे ॥ योगिनांशिल्पिनांचैवसर्वेषामपिशेषतः ॥ दद्यादावसथंदुर्गेमंत्रकालविदःशुभम् ॥ गोवै
द्यानश्ववैद्यांश्चराजवैद्यांस्तथैवच ॥ आहरेतभृशंराजादुर्गेहिप्रबलारुजः ॥ देवीपुराणे ॥ पूर्वादीन्कारयेद्द्वारान्महापद्मेषुचोत्तमान् ॥ रा
जस्थानसमायुक्तान्वातायनसमन्वितान् ॥ मत्तवारणदेवाद्यान्ध्वजकरुपशोभितान् ॥ गजव्यालकृतापीडान्पद्मपत्रमनोहरान्॥दुर्गेषुकार
येद्दुर्गांमहिषासुरघातिनीम् ॥ द्वारस्थंगजवक्त्रंवाधनदंवाथपद्मजम्॥शिलान्यासेबलिःकार्यःप्रासादोक्तोयथाविधि ॥ अयंचाग्निपुराणेउक्तः॥
हेमकूर्मंसरत्नंचशाखाधःसन्निवेशयेत् ॥ पूतनाशकुनीतत्रजंभादीन्पूजयेद्ग्रहान् ॥ देवान्यक्षान्ग्रहान्नागान्पूजयित्वायथाविधि ॥ दैवज्ञा
न्सूत्रधारांश्चवसुहेमस्रगादिभिः ॥ ब्राह्मणान्स्वस्तिवाच्याथपशुंशांत्यैनिपातयेत ॥ कारयेत्सर्वदानानिउत्सवंविविधंपुरे ॥ शाखोच्छ्रयंत

थाङ्कार्यंछत्रंश्वेतपताकिनम् ॥ एवंसमुच्छ्रयेच्छाखांसर्वद्वारेषुबुद्धिमान् ॥ पूजयित्वाहरंदुर्गांग्रहान्मातृविनायकान् ॥ प्रासादोक्तवि
धानेनबलिंदत्त्वापुरंकुरु ॥ इतिश्रीदिनकरभट्टकृतेशान्तिसारेदुर्गविधिः ॥ श्रीरामेश्वरसूरिसूनुरुदभूद्योभट्टनारायणःक्षोणीपंडितमान
खंडनजयःश्रीरामकृष्णस्ततः ॥ मीमांसानयतत्त्वविद्दिनकरस्तस्मादभूत्तत्कृतिःसेयंशांतिकतंत्रसारविषयारामायदद्यान्मुदम् ॥ इति
श्रीमद्रामेश्वरभट्टसूरिसूनुश्रीमन्नारायणभट्टसुतश्रीमद्रामकृष्णभट्टात्मजदिनकरभट्टकृतःशांतिसारःसमाप्तः ॥ श्रीरस्तु ॥ छ ॥ ॥ छ ॥

इदं पुस्तकं क्षेमराज-श्रीकृष्णदासश्रेष्ठिना मुम्बय्यां ( खेतवाडी ७ वीं गली खम्बाटा लैन. )
स्वकीये " श्रीवेङ्कटेश्वर " ( स्टीम् ) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम्।
संवत् १९६७, शके १८३२.

# विक्रेयपुस्तकानि-( कर्मकाण्डग्रन्थाः )

| नाम. | की. रु. आ. |
|---|---|
| प्रतिष्ठासंग्रह-प्रतिष्ठा करानेके लिये यह ग्रन्थ बहुतही उत्तम है .... .... .... | ३-० |
| संस्कारभास्कर-(शुक्लयजुर्वेदीय गर्भाधानादिसे लेके सब प्रकारके संस्कारोंकी विधि प्रयोग और मंत्रसहित ) .... | २-१२ |
| शान्तिप्रकाश-इसमें पहिले गणपत्यादिपूजन पुण्याहवाचन कलशस्थापनादि और विनायकादि ३० शान्ति प्रयोग वास्तुशान्तिप्रयोगादि समंत्रकहैं .... .... .... | १-६ |

| नाम. | की. रु. आ. |
|---|---|
| गौडीयश्राद्धप्रकाश महानिबंध-इसमें श्राद्धस्वरूप श्राद्धमें ब्राह्मण लक्षण महालयादि निर्णय और श्राद्धप्रयोग क्षयाहश्राद्ध संकलपश्राद्ध हेमश्राद्ध एकादशाहादिश्राद्ध मासिकश्राद्ध मघादिश्राद्ध नांदीश्राद्धादि बहुतसे श्राद्ध और विष्णवादिपूजन पितृतर्पणादि अपूर्व संग्रह है चारोंवर्णोंको उपयोगी है | ३-० |
| ग्रहशान्ति-( शुक्लयजुर्वेदोक्त ) यज्ञोपवीत विवाहादि शुभकर्ममें बहुत उपयोगी है .... | ०-८ |

| नाम. | की. रु. आ. |
|---|---|
| श्राद्धप्रयोगावली-( शुक्लयजुर्वेदीय ) गुर्जर और दाक्षिणात्यलोगोंको अत्यन्तोपयोगी | ०-१४ |
| नवग्रहविधानपद्धतिः-मनुष्यको ग्रह अरिष्ट होनेपर प्रत्येक ग्रहके स्तोत्र पाठादि पढनेको अवश्य लेना चाहिये .... | ०-४ |
| पूजापंकजभास्कर-( पांचोंदेवताओंके वैदिकमंत्रोंसे यथोपचार पूजा प्रकरण है ) .... | २-० |
| श्राद्धविवेक-सब प्रकारके श्राद्धकी विधि प्रमाणयुक्त है .... .... .... | ०-१२ |
| श्राद्धमयूख .... .... .... | ०-८ |

संपूर्ण पुस्तकोंका "बडासूचीपत्र" आगलहै, मँगालीजिये विनादाम भेजाजाताहै।

पुस्तक मिलनेकाठिकाना-खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम्-प्रेस, खेतवाडी ७ वीं गली खंबाटा लैन-मुंबई.

वान्साध्यान्मरुद्गणगंधर्वाप्सरसश्च पितृगणपुण्यतीर्थानि स्कंददुर्गाक्षेत्रपालादींश्चयथावकाशंसंपूज्यदेवपार्षदेभ्योनमइत्युच्चार्यसाष्टांगंप्रण-
मेत् । अत्ररात्रौजागरणं । गीतवादित्रप्रेक्षणादिनाकुर्यात् । ततः आचार्यःस्वकुंडसमीपमागत्यक्रमेण पलाशोदुंबराश्वत्थापामार्गसमिधां-
प्रत्येकंद्वादशसहस्रंषट्त्रीण्यष्टसहस्रमष्टशतंवा हिरण्यगर्भ इतिकुंडसमीपेसंस्थाप्य शांतिकपौष्टिकैर्मंत्रैर्यथाविभागंजुहुयात् । पंचकुंडीपक्षेतु
ऋत्विजःप्रतिकुंडंजुहुयुः ॥ अथशांतिकमंत्राः । ॐशन्नोवातः पवता ँशन्नस्तपतुसूर्य्यः ॥ शन्नःकनिक्रदद्देवःपर्जन्योऽअभिवर्षतु ॥ १ ॥
ॐशन्नऽइन्द्राग्नीभवतामवोभिःशन्नऽइन्द्रावरुणारातहव्या ॥ शन्नऽइन्द्रापूषणावाजसातौशमिन्द्रासोमासुवितायशंयोः ॥ २ ॥ ॐशन्नो-
देवीरभिष्टयऽआपोभवंतुपीतये शंय्योरभिस्रवन्तुनः ॥ ३ ॥ ॐद्यौःशांतिरंतरिक्षं० । शांतिरेधि ॥ ४ ॥ इतिशांतिकमंत्राः । अथपौष्टिक-
मंत्राः ॐपुष्टिर्नरण्वाक्षितिर्नपृथ्वीगिरिर्नभुज्मक्षोदोनशम्भुः । अत्योनाज्मन्सर्गप्रतक्तःसिंधुर्नक्षोदः कईंवराते ॥ १ ॥ ॐशिवोनामा-
सिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिंसीः ॥ निवर्त्तयाम्यायुषेऽन्नाद्यायप्रजननायरायस्पोषायसुप्रजास्त्वायसुवीर्याय ॥ ॐअयमग्निः
पुरीष्यो० ॥ २ ॥ ॐगयस्फानो अमीवहावसुवित्पुष्टिवर्धनः ॥ सुमित्रः सुमनोभव ॥ गयस्फानः प्रतरणःसुवीरहोवीरहाप्रचरासोमदु-
र्य्यान् ॥ ३ ॥ ॐइहपुष्टिंपुष्टिपतिर्दधात्विहप्रजा ँरमयतुप्रजापतिः ॥ अग्नयेग्रहपतयेरयिमतेपुष्टिपतयेस्वाहा ॥ ४ ॥ ॐत्र्यंबकंयजामहेसुग-
न्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ त्र्यंबकंयजामहेसुगंधिम्पतिवेदनम् ॥ उर्व्वारुकमिवबंधनादितोमुक्षीय-
मामुतः ॥ ५ ॥ इतिपौष्टिकमंत्राः । अथपूर्वकुंडे ॥ अग्निमीळे इतिपलाशसमिधामष्टसहस्रमष्टशतंवातिलैर्यवैर्जुहुयात् ॥ ॐअग्निमीळे-

पुरोहितंयज्ञस्यदेवमृत्विजम् ॥ होतारंरत्नधातमम् ॥ १ ॥ इषेत्वेतिमंत्रेणदक्षिणकुंडेजुहुयात् ॥ ॐइषेत्वोर्जेत्वावायवस्थदेवोवः सविता-
प्रार्प्पयतुश्रेष्ठतमायकर्म्मणऽआप्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशꣳसोध्रुवाऽअस्मिन्गोपतौस्या-
तबह्वीर्यजमानस्यपशून्पाहि ॥ २ ॥ पश्चिमकुंडे । ॐअग्नऽआयाहिवीतयेगृणानोहव्यदातये । निहोतासत्सिबर्हिषि ॥ ३ ॥ शन्नोदेवीत्यु-
त्तरकुंडे ॥ ॐशन्नोदेवीरभीष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ ४ ॥ एवंतुपंचकुंडीपक्षेज्ञेयं । यदा अष्टौकुंडानितदा । वौषट्
इतिमंत्रेण आग्नेयकुंडे । दशप्रणवयुक्तयागायत्र्यानैर्ऋते ॥ २ ॥ जातवेदस इतिवायव्ये ॥ ३ ॥ नमो ब्रह्मणे इतिईशानकुंडे ॥ ४ ॥ ततः
शतांते ॐमूर्द्धानंदिवइतिपूर्णाहुतिंजुहुयुः आहुतिसंपाताःशांतिकलशेकुंडसमीपेपातयेयुः । ततोऽष्टसुपूर्वादिकुंडेषुमूर्तिपलोकपालेभ्यः समि-
द्भिःघृतेनतिलैर्वाऽष्टसहस्रमष्टशतंवाजुहुयात् । तेषांमंत्रावक्ष्यमाणाः । स्योनापृथिवीतिपृथिवीमूर्तेः ॥ १ ॥ ॐअघोरेभ्योइतिमूर्तिपतेःशर्वस्य
॥ २ ॥ इंद्रायेंदुमितिइंद्रस्य ॐइंद्रायेंदुꣳसरस्वतीनराशꣳसेननग्नहुम् ॥ अधातामश्विनामधुभेषजंभिषजासुते ॥ ३ ॥ ॐअग्निंदूतमितिअग्नेः
॥ ४ ॥ पशूनित्यग्निमूर्तिपतेःपशुपतेः ॥ ५ ॥ अग्नआयाहीत्यग्नेः ॥ ६ ॥ असिहीवीरेतियजमानमूर्तेः ॐअसिहिवीरसेन्योसिभूरिपरा-
ददिः ॥ असिदभ्रस्यचिद्वृधोयजमानायशिक्षसिसुन्वतेभूरितेवसु ॥ ७ ॥ तमिन्द्रमितियजमानमूर्तिपतेःरुद्रस्य ॥ ८ ॥ यमायसोममिति-
यमस्य ॥ ॐयमायसोमꣳसुनुतयमायजुहुताहविः ॥ यमꣳहयज्ञोगच्छत्यग्निदूतोअरंकृतः ॥ ९ ॥ उदुत्यमितिसूर्यमूर्तेः ॥ १० ॥ आवोराजान-
मितिसूर्यमूर्तिपतेःरुद्रस्य ॥ ११ ॥ असुन्वंतमितिनिर्ऋतेः ॥ १२ ॥ आपोहिष्ठेतिजलमूर्तेः ॥ १३ ॥ विभूषमितिजलमूर्तिपतेर्भवस्य ॥

ॐविभूर्धनन्नसुभयाँअनुव्रताद्रूतोदेवानांरजसीसमीयसेयत्तेधीतिंसुमतिमावृणीमहेधस्मानस्त्रिवरूथःशिवोभव ॥ १४ ॥ इमंमेवरुण इतिवरुणस्य ॥ १५ ॥ वातआवात्वितिवायुमूर्तेः ॥ १६ ॥ तमीशानमितिवायुमूर्तिपतेरीशानस्य ॥ १७ ॥ आनोनियुद्भिरितिवायोः ॥ १८ ॥ वयꣳसोमेतिसोमसूर्ययोः ॥ १९ ॥ इंद्रंतंशुभ्रेतिसोममूर्तिपतेर्महादेवस्य ॥ २० ॥ आदित्प्रत्नस्येतिस्वमूर्तेः ॥ २१ ॥ मृगोनभीम० इतिस्वमूर्तिपतेः भीमस्य ॥२२॥ अभित्यंदेवंसवितारमितीशानस्य ॥२३॥ ( एतेसर्वेमंत्राःऋग्वेदेद्रष्टव्याः ) एककुंडीपक्षेतुआचार्यःस्वकुंडेजुहुयात् । ततोष्टसहस्राष्टशतान्यतमसंख्ययामहाव्याहृतिभिस्तिलयवव्रीहिचर्वाज्यैःक्रमेणप्रत्येकंजुहुयुः । ततोगुरुःस्थाप्यलिंगकेनमंत्रेण घृतेनतिलैर्वाऽष्टसहस्रमष्टशतंवाहुत्वापूर्णाहुतिंहुत्वा देवस्यदक्षिणेकर्णेहोमंनिवेद्य । पूर्वकुंडे घृताहुत्यष्टकंमूलमंत्रेणहुत्वादेवपादौस्पृशेत् । मूलमंत्रेणपूर्वोक्तसंख्ययायाम्यकुंडेदधिहुत्वादेवनाभिंस्पृशेत् । वारुणकुंडेक्षीरंहुत्वाहृदिस्पृशेत् । सौम्यकुंडे मध्वाहुतीर्हुत्वामूर्द्धानंस्पृशेत् । वरुणकुंडेमिश्रंघृतादि चतुष्टयंहुत्वातेनैवपूर्णाहुतिंहुत्वासर्वांगंस्पृशेत् । एवंप्रतिमायांन्यासादिकंकृत्वा कूर्मशिलाब्रह्मशिलापिंडिकावाहनानिपरिचारकदेवांश्चवैदिकैर्मंत्रैर्नाममंत्रैर्वासंपूज्यपरिवारदेवांश्च मुख्यप्रतिमायावामेऽधिवासयेत् ॥ परिवारदेवता यथा । विष्णोः चंडप्रचंडादि । महादेवस्य नंदीमहाकालगणेशभृंगिचंडमातृवृषस्कंदादयः ॥ सूर्यस्यदंडिपिंगलादयः ॥ एतानिमधुघृतेनाभ्यज्य शुद्धजलैः प्रक्षाल्य संपूज्य वस्त्रेणाच्छाद्य प्रधानप्रतिमापिंडिकायाः स्वमंत्रन्यासंकुर्यात् ॥ तत्रविष्णुश्चेत्स्थाप्यस्तदा ॐघंङंपंभंफं लक्ष्म्यैनमः ॥ एतानिपंचाक्षराणि इच्छिरः शिखाकवचनेत्रसंज्ञिकानिहुंफडितिवचनसमुदायः इति पिंडिकायांपंचांगानिन्यस्य तत्रतत्रमूर्तिपांश्चपूर्ववद्विन्यसेत् ॥ ॐह्रींश्रीह्रांक्षः

परब्रह्मणेसर्वाधारायनमः ॥ ॐह्रां श्रींह्रींदिव्यतेजोधारिण्यैसुभगायैनमः । इतिमंत्राभ्यामधिवासयेत् । इत्यधिवासनं । अथप्रासादोपिचे-
न्नूतनस्तस्याप्यधिवासनं । तत्रप्रासादाग्रेएकाशीतिपदमंडलमक्षतैःकृत्वातेषुपदेषुनवधान्यपुंजान्कृत्वाजलपूर्णानेकाशीतिकुंभानाहृत्यतत्र-
नवनवकानांमध्येमध्यमंकोष्ठंज्ञात्वातेषुधान्यपुंजेषुकुंभान्मध्यपूर्वादिक्रमेणन्यस्य मध्यकुंभे शम्युदुंबराश्वत्थचंपकाशोकपलाशप्लक्षन्यग्रोधक-
दंबाम्रबिल्वार्जुनवृक्षसंभवंपल्लवद्वादशकंसोमायवनस्पत्यंतर्गतायनमइतिनिक्षिपेत् ॥ ततःपद्मकरोचनादूर्वांकुरदर्भपिंजूलश्वेतपीतसर्षपसि-
तरक्तचंदनजातीकुसुमनंद्यावर्त्तमितिदशकंपूर्वे । यवव्रीहितिलसुवर्णरजतसमुद्रगामिनीकूलमृत्तिका ( गंगामृत्तिका ) भूम्यसंस्पृष्टगोमय-
मितिसप्तकमाग्नेये । सहदेवीविष्णुक्रांताभृंगराजमहौषधीशमीशतावरीगुडूचीश्यामाकमित्यष्टकंयाम्ये । कदलीपूगीफलनारिकेलबिल्वना-
रिंगमातुलिंगबदरामलकमितिफलाष्टकंनिर्ऋते । मंत्रसाधितंपंचगव्यंवारुणे । शम्युदुंबराश्वत्थन्यग्रोधपलाशकषायपंचकंवायव्ये । शंखपु-
ष्पीसहदेवीबलाशतावरीकुमारीगुडूचीवचाव्याघ्रीतिमूलाष्टकंसौम्ये । वल्मीकादिसप्तमृत्तिकाईशानकुंभेनिधाय ॥ हिरण्यवर्णांहरिणींसुव-
र्णरजतस्रजां । चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह इतिमध्यकुंभानभिमंत्र्य ॥ शेषान् गंधोदकेनपूरयित्वा मूलमंत्रेणाभिमन्त्र्य सूत्रे-
णावेष्ट्यांतर्बहिरधस्तादूर्ध्वंचप्रासादंपंचगव्येनसंप्रोक्ष्य मूर्धानंदिव० इतिवल्मीकमृदाविलिंपयेत् ॐमूर्द्धानंन्दिवोऽअरतिम्पृथिव्यावै-
श्वानरमृतऽआजातमग्निम् ॥ कविᳪसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ ततः समुद्रादूर्मिरितिमंत्रेणसमुद्रज्येष्ठाइत्यनेनवा
ईशानदिक्स्थेनमृत्तिकाकुंभेनस्नपयेत् ॥ ॐसमुद्रादूर्मिर्मधुमाँ २ उदारदुपाᳪशुनासमम्मृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवाना-

समृतंस्यनाभिः ॥ १ ॥ यज्ञायज्ञेतिवायव्येनकषायकुंभेन ॐयज्ञायज्ञावोऽअग्नयेगिरागिराचदक्षसे ॥ प्रप्रवयममृतंजातवेदसम्प्रियम्मि-
त्रन्नशꣳसिषम् ॥ २ ॥ पयःपृथिव्यामितिवारुणेनपंचगव्यकुंभेन । ॐपयःपृथिव्याम्पयओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीःप्र-
दिशः सन्तुमह्यम् ॥ ३ ॥ याःफलिनीरितिनैर्ऋतेनफलकुंभेन ॥ ॐयाःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूता-
स्तानोमुंचन्त्वꣳहसः ॥ ४ ॥ हꣳसःशुचिषदितिसौम्यस्यमूलाष्टककुंभेन । ॐहꣳसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृष-
द्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ ५ ॥ विष्णोरराटमसीतिपूर्वेणकुंभेन । ॐविष्णोरराटमसिविष्णोःश्नप्त्रे-
स्त्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ ६ ॥ सोमꣳराजानमित्याग्नेयकुंभेन । ॐसोमꣳराजानमवसेग्निमन्वार-
भामहे ॥ आदित्यान्विष्णुꣳसूर्य्यम्ब्रह्माणञ्चबृहस्पतिꣳस्वाहा ॥ ७ ॥ विश्वतश्चक्षुरितियाम्यदिक्स्थेनकुंभेन । ॐविश्वतश्चक्षुरुतविश्वतोमुखो-
विश्वतोबाहुरुतविश्वतस्पात् ॥ सम्बाहुभ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ ८ ॥ नमोस्तुसर्प्पेभ्यइतिमध्यकुंभेन । ॐनमोऽस्तु-
सर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यःसर्प्पेभ्योनमः ॥ ८ ॥ इदमापःप्रवहतेत्यष्टभिः पूर्वादिक्रमेणप्रासादंसशिखरंस्नाप-
येत् ॐइदमापःप्रवहतावद्यञ्चमलञ्चयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातस्मादेनसःपवमानश्चमुञ्चतु ॥ १ ॥ एकाशी-
तिकुंभासंभवेतुगंधोदकपूरितैर्नवकलशैरेकेनकलशेनवा ॐदैव्यायकर्म्मणेशुन्धध्वन्देवयज्यायैयद्वोशुद्धाःपराजघ्नुरिदम्वस्तच्छुन्धामि इति-
मंत्रेणसम्प्रोक्ष्यसूत्रेणावेष्टयस्तात्रैर्नाममंत्रैर्वासंपूज्यपरिवारदेवांश्चमुख्यप्रतिमायावामेऽधिवासयेत् ( परिवारदेवतायथा ) विष्णोः चंडप्रचं-

डादि । महादेवस्य नंदीमहाकालगणेशभृंगिचंडमातृवृषस्कंदादयः । सूर्यस्य दंडिपिंगलादयः । एतानिमधुघृतेनाऽभ्यज्यशुद्धजलैःप्रक्षाल्य
संपूज्यवस्त्रेणाच्छाद्यप्रधानप्रतिमापिंडिकायाः स्वमंत्रन्यासंकुर्यात् । तत्रविष्णुश्चेत्स्थाप्यस्तदा ॐघंङंपंफंभंलक्ष्म्यैनमः । एतानिपंचाक्षराणि-
हृच्छिरःशिखाकवचनेत्रसंज्ञिकानिहुंफडितिवचनसमुदाय इतिपिंडिकायांपंचांगानिन्यस्यतत्रतत्रमूर्तिपांश्चपूर्ववद्विन्यसेत् । ॐह्रींश्रींह्रांक्षः
परब्रह्मणेसर्वाधारायनमः । ॐह्रांस्थापयित्वा देवरूपं प्रासादं चिन्तयित्वापताकादिनाशोभयित्वा गंधादिनापूजयित्वा तस्याप्यधस्ताद्देवं-
संचिन्त्यवक्ष्माणमंत्रेणप्रासादमधिवासयेत् । तत्रमंत्रः । ॐह्रींसर्वदेवमयाचिन्त्यसर्वरत्नोज्वलाकृते ॥ यावच्चंद्रश्चसूर्यश्चतावदत्रस्थिरोभव
इत्यधिवास्य । ॐरक्षोहणंबलगुहनंवैष्णवीमिदमुहंतमित्यादिपूर्वोक्तरक्षोघ्नसूक्तेन । अपसर्पंतुतेभूता येभूताभूमिसंस्थिताः ॥ येभूताविघ्न-
कर्त्तारस्तेनश्यंतुशिवाज्ञया ॥ १ ॥ भूतानिराक्षसावापियत्रतिष्ठंतिकेचन ॥ तेसर्वेप्यपसर्पंतु विष्णोर्यागंकरोम्यहं ॥ २ ॥ इतिमंत्राभ्यांभू-
तसंघंश्वेतसर्षपैर्निःसार्य्य । ॐवास्तुपुरुषायनमः इतिवास्तुंसंपूज्य । पूर्वस्थापितपंचकषायपचामृतपंचपल्लवपंचगव्यपंचरत्नसर्वौषधी-
कलशजलेन कुशैः सर्वतः प्रासादंप्रोक्ष्य प्रासादंस्पृष्ट्वाप्रासादेन्यासंकुर्यात् । तद्यथा । ॐह्रांपृथिवीतत्वायनमः । ॐह्रांपृथिवीतत्वाधिप-
तयेश्रीकूर्मायनमः । ( ॐह्रांनमःसर्वत्र ) अप्तत्वायनमः अप्तत्वाधिपतयेजलेशायनमः । ॐतेजस्तत्वाय० तेजस्तत्वाधिपतयेत्विषां-
निधिपतयेनमः । ॐवायुतत्वाय० वायुतत्वाधिपतयेमातरिश्वनेनमः। ॐआकाशतत्वाय० आकाशतत्वाधिपतयेसूक्ष्मायनमः । इतिप्रासा-
दपादेषु। ॐरूपतन्मात्राधिपतयेभानुमतेनमः। रसतन्मात्राय० रसतन्मात्राधिपतये जलदायनमः। ॐगंधतन्मात्राय० गंधतन्मात्राधिपतयेगं-

धाक्षायनः। ॐस्पर्शतन्मात्राय० स्पर्श तन्मात्राधिपतयेबलतत्वायनमः। ॐशब्दतन्मात्राय० शब्दतन्मात्राधिपतये सूक्ष्मनादायनमः। इतिप्रासादजंघयोः। अथकटिप्रदेशे। ॐवाक्तत्वाय० वाक्तत्वाधिपतयेदुंदुभये०। ॐपाणितत्वाय० पाणितत्वाधिपतयेसमादानाय०। ॐपादतत्वाय० पादतत्वाधिपतयेसंक्रमाय०। ॐपायुतत्वाय० पायुतत्वाधिपतये विसर्गायनमः। ॐउपस्थतत्वाय० उपस्थतत्वाधिपतयेआनंदायनमः। अथप्रासादनाभौ। ॐ=हांश्रोत्रतत्वाय० =हांश्रोत्रत्वाधिपतयेव्योमायनमः। ॐ=हांत्वक्तत्वाय० त्वक्तत्वाधिपतयेसर्वाङ्गायनमः। ॐचक्षुस्तत्वाय० चक्षुस्तत्वाधिपतयेआकाशायनमः। ॐरसनायै० रसनातत्वाधिपतयेमहावक्रायनमः। ॐघ्राणतत्वाय० घ्राणतत्वाधिपतयेविलुंठायनमः। अथ प्रासादकंठे॥ ॐमनस्तत्वाय० मनस्तत्वाधिपतयेसंकल्पायनमः। ॐबुद्धितत्वाय० बुद्धितत्वाधिपतयेबुद्धयेनमः। ॐअहंकारतत्वाय० अहंकारतत्वाधिपतयेअहंकृतयेनमः। ॐचित्ततत्वाय० चित्ततत्वाधिपतयेमनसेनमः॥ अथद्वारमध्ये। ॐप्रकृतितत्वाय० प्रकृतितत्वाधिपतयेपितामहायनमः। प्रासादमध्ये। हृदयेपुरुषतत्वाय० पुरुषतत्वाधिपतयेविष्णवेनमः। (वक्त्रे) ॐकलातत्वाय० कलातत्वाधिपतयेक्रतुध्वजाय०। ॐविद्यातत्वाय० विद्यातत्वाधिपतयेविष्णवेनमः। (कलशे) ॐसदाशिवतत्वाय० सदाशिवतत्वाधिपतये अजेशायनमः। (कलशोपरि) ॐचक्रायुधचिन्हेभ्योनमः। ॐ=हांसंसत्वाय० रंरजसे तंतमसे मंवन्हिमंडलाय० ॐसोममंडलाय० ॐअर्कमंडलायनमः इतिसंपूज्यप्रणवेनव्याहृतिभिरुपचारानथाचरेत्। इतिप्रासादन्यासंकृत्वा ऋत्विग्भिः सह कुंडेतत्वहोमंकुर्यात्। तत्वहोमस्तु ॐ=हांपृथिवीतत्वायस्वाहा पृथिवीतत्वाधिपतयेश्रीकूर्मायस्वाहा। इत्यादिपूर्वोक्तप्रासादन्यासमंत्रैस्तत्वहोमं

कुर्यात् । होमांतेअनेनकृतेनतत्वहोमेन तदधिष्टातृदेवताः प्रीयंता इतिदेवायनिवेदयेत् । ततोबहिर्दिगीशेभ्योऽघोरमंत्रेणमाषान्नबलिंदत्वा-
क्षेत्रपालायभूतेभ्यश्चदत्वाआचम्यमंडपं प्रविशेत् । अथदेवालयशिखरकलशप्रतिष्ठाउच्यते । आचार्योमंडपोत्तरभागेस्वस्तिकमंडलंलि-
खित्वा यजमानशिल्पिऋत्विक्सहितोयत्रकुड्याशिल्पिभिः कलशसंघट्टनंकृतंतत्रगत्वा पंचभिःकलशैःशिखरकलशंसंस्नाप्य तत्रैव ॐमनो-
जूतिर्जुषताइतिप्रतिष्ठाप्यलोकपालेभ्योबलिंदत्वाआचम्य कलशंतैलेनाभ्युक्ष्यचंदनादिभिरभ्यर्च्यत्रिसूत्र्यावेष्टयरथमारोप्य वामहस्तेगृही-
त्वाशांतिमंगलतूर्यघोषेणस्नानमंडपमानयेत् । आनीयस्वस्तिकोपरिभद्रासनंतस्योपरिस्थापयेत् तस्यपुरतःपुण्याहवाचनंकृत्वा ॐघृतंघृत-
पावान० इतिमंत्रेणघृतेनाभ्यज्य ॐद्रुपदादिवमुमुचान० इतियवमसूरहरिद्रापिष्टेनोद्वर्त्य । उष्णोदकेनप्रक्षाल्य ॐमूर्द्धानंदिव० इतिवल्मी-
कमृत्तिकयाउपलिप्य ॐयादिव्याऽआप० इतिगंधोदकेन स्नापयेत् । वेदिकोणस्थैः कलशैश्चतुर्भिः ॐमानस्तोके० इतिप्रथमेन । ॐविष्णो-
रराटमसीतिद्वितीयेन । ॐसोमꣳराजानमवसेग्निमन्वारभामहे ॥ आदित्यान्विष्णुꣳसूर्यंब्रह्माणंचबृहस्पतिꣳ स्वाहा इतितृतीयेन ।
ॐविश्वतश्चक्षुरितिचतुर्थेन । ॐपयःपृथिव्यामितिशुद्धोदकेनस्नापयित्वा द्वादशाक्षरेणमूलेनवाअर्चयित्वा गंधाद्यैः सम्पूज्य वस्त्रैराच्छाद्य
शान्तिपाठंपठित्वा ॐस्वस्तिनऽइन्द्रेति उत्थाय मण्डपदेवालयप्रादक्षिण्येन मण्डपमानीय पश्चिमद्वारेणप्रविश्य देवसमीपेभद्रासने निवेश्य
गंधादिनासंपूज्य भक्ष्यभोज्यादिनापरिपूर्य्य ॐविश्वतश्चक्षुरिति पठित्वा संकलीकृत्य आचार्यः घृतदधिक्षीरमधुभिःपृथक्पृथक् ॐत्र्यंबकंय-
जामहे इतिमंत्रेणाष्टोत्तरशतंहुत्वा शांतिकलशेसंस्रवंनिक्षिप्यतेनोदकेनपादनाभिहृदाक्षिशिरांसिकलशस्यक्रमेणस्पृशेत् कलशेपुरुषसूक्तंवि-

न्यस्यकलशंगंधादिनासंपूज्यबलिंदत्वा प्रासादमारुह्यशातिमंगलतूर्यजयस्वनैः कलशंप्रासादमस्तकमानीयक्षणंविश्राम्य सुमुहूर्तेप्रासादे द्वादशाक्षरेण ॐआजिघ्रकलशंमुह्यात्वाविशन्त्विन्दवः ॥ पुनरूर्जानिवर्त्तस्वशानः सहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः । इतिमंत्रेणप्रतिष्ठाप्य तदुपरिवस्त्रेणावेष्टय अस्त्रेणहुंफट् इतिमंत्रेणतस्योपरिन्यसेत् । तस्मिन्कलशेचक्रं हिरण्मयंवाताम्रमयंस्थापनीयं सूर्यलक्ष्मीविरंचीनांपद्मंशंकरस्यत्रिशूलं भूतादिनिवारणार्थमायुधानिविन्यसेत् शिल्पितंकलशंस्थिरीकृत्यशुभवारिणासंस्नाप्य गंधपुष्पैःपूजयित्वा प्रासादादुत्तीर्यभूमौसाष्टांगंप्रासादंप्रणम्यपुनरारुह्यगंधादिनाप्रपूज्यशुक्लवस्त्राणिकलशेनिबध्यईशानभागेभूमिंस्पृशेत् । ततआचार्यादिभ्योब्राह्मणेभ्यश्चशिल्पिभ्योवस्त्रालंकारादिकंहिरण्यंवारजतंदेयं ततोद्वादशब्राह्मणभोजनं ॥ इतिप्रासादोपरिकलशस्थापनं ॥ अथकलशसमीपेमानस्तंभोध्वजस्तंभस्तत्प्रतिष्ठाउच्यते । वृक्षसारमयोऽश्मसारमयो लोहमयो वा मानस्तंभोध्वजदंडघटनाचितोवर्तुलोवाप्रासादप्रमाणस्तदधिकोवा यथोचितविस्तारोवाभवति अथ च अष्टौ ८ चत्वारो ४ वा तेमानस्तंभाभवंति । एकश्चेदीशान्यांविधिनातंगंधपुष्पधूपदीपादिभिः संपूज्यक्षुद्रघंटाभिः शोभितं कृत्वाप्रतिष्ठांचकृत्वा पताकांस्तंभोपरिनिवेश्ययजमानमभिषिंच्य दक्षिणांदत्वाब्राह्मणान् भोजयेत् ॥ मानस्तंभोभवेदेवं ध्वजोदेवोच्यतेसदा ॥ तयोःप्रतिष्ठाकथिताऽश्वमेधफलदायिनी ॥ १ ॥ इतिमानस्तंभरोपणम् कलशप्रतिष्ठानंतरंतद्दिने महात्मना ध्वजारोपः कार्य्यः तस्यविधिः संक्षेपतउक्तएव ॥ अथमहिमाउच्यते । असुरायातुधानाश्चपिशाचोरगराक्षसाः ॥ ध्वजहीनेतुप्रासादेवस्तुमिच्छंतिनित्यदा ॥ तस्माद्ध्वजविहीनंतुनकुर्यात्सुरमंदिरं ॥ १ ॥ यावंतस्तंतवस्तस्यध्वजस्यवरवर्णिनि ॥ तावद्वर्षसहस्राणिकर्तास्वर्गे-

णचाष्टोत्तरशतंवाहुत्वा । चतस्त्रोधेनवोमंडपस्यदक्षिणद्वारे उदङ्मुखीःस्थापयित्वासंपूज्य ॐनारायणायविद्महेवासुदेवायधीमहि ॥ तन्नोविष्णुःप्रचोदयादितिविष्णुगायत्र्यादुग्ध्वातत्क्षीरेण । ॐतत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् इतिरुद्रगायत्र्याचरुंश्रपयित्वादेवायनिवेद्यमंडपस्योत्तरे द्वादशब्राह्मणान्भोजयित्वा ॐविष्णुःप्रीयतामितिनिवेदयेत् । ततआचार्यायचतस्त्रोधेनूर्दद्यात् । ऋत्विगादिभ्यश्चतस्त्रांगुलीयकादिदक्षिणांदत्वारात्रौजागरणंगीतवादित्रनानोत्साहेनकुर्यात् । ( अत्रज्येष्ठकनिष्ठानांप्रतिमानां सप्तरात्रंपंचरात्रंत्रिरात्रमेकरात्रंसद्योवाबल्यंतमधिवासयेत् ॥ इतिसर्वदेवप्रासादाधिवासनविधिः ॥ अथाधिवासनानंतरंप्रातराचार्यः स्नात्वानित्यकार्यंकृत्वा यागमण्डपेप्रविश्यमूर्त्तिपान्वितो द्वारपालान् तत्रस्थदेवांश्चसंपूज्य वास्तुमण्डलस्थान्देवान् सामान्यतोऽभ्यर्च्यस्वकुंडेवास्तोष्पते० इतिमंत्रेणाष्टोत्तरशतंहुत्वा मूलमंत्रेणच हुत्वा पूर्णाहुत्यंतंसर्वंकृत्वादिक्पालेभ्योबलिंदत्वादेवसमीपमागत्ययथाशक्तिसुवर्णादिकंदत्वादेवायाऽऽत्मानंनिवेदयेत् । ततो मंडपादुत्तरतः पूर्वकल्पितैःशांतिकलशादिजलैः सपरिकरंयजमानमभिषिंचेयुः । ततोगुरुर्मूर्तिपब्रह्मणस्थपत्यादीन् परितोष्यप्रासादोत्सर्गंकुर्यात् ॥ अथप्रासादोत्सर्गः ॥ तत्रमासपक्षाद्युल्लिख्य इमंशिलेष्टकादार्वादिनिर्मितंवलभीजगतीप्राकारपरिखागोपुरपरिवारदेवतालयसंयुतं तत्तद्देवतालोककामः कुलद्वयानुग्रहायामुकदेवताप्रीतयेऽहमुत्सृजामि । इतिकुशयवजलानिभूमौक्षिप्त्वादेवंनत्वा ब्राह्मणान्भोजयेत् ॥ इतिप्रासादोत्सर्गः ॥ अथाऽचलप्रतिष्ठायाः कर्म । ततः आचार्योमूर्त्तिपैःसार्द्धं अधिवासितादेवताधारभूताकूर्म्मशिलां ब्रह्मशिलांपिंडिकांच ॐत्रातारमिंद्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिंद्रम् ॥ ह्वयामिशक्रं पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः । इतिमंत्रे

णगृहीत्वा । शांतिघोषैः प्रदक्षिणंप्रासादमानीय द्वारदेशेस्थापयित्वा ॐअस्त्रायफट् इतिमंत्रेणसर्षपैर्विघ्नोत्सारणंकृत्वा पुष्पोदकधारयाप्रासादगर्भमभ्युक्ष्य । ॐमहाँऽइन्द्रोवज्रहस्तःषोडशीशर्मयच्छतु । हन्तुपाप्मानं योस्मान्द्वेष्टि । उपयामगृहीतोसिमहेंद्रायत्वैषतेयोनिर्म्महेन्द्रायत्वा । इतिदर्भेणोल्लिख्य ॐहुंफट्इतिअस्त्रपूतेनजलेनप्रोक्ष्य । देवालयस्यसूत्रपातेनमध्यंसमीचीनतयाकृत्वामध्येयत्सूत्रंतस्मात्यवप्रमाणेनवायवार्द्धप्रमाणेनउत्तराश्रितां स्नानादिसंस्कृतांकूर्मशिलांप्रणवेनपंचरत्नोपरिनिधायतच्छ्रेसौवर्णकूर्मंद्वारसंमुखंनिधायतदुपरिरत्नानिनिधायषट्त्रिंशद्गर्तयुतांपंचचत्वारिंशद्गर्तयुतावाब्रह्मशिलामधिवासितानिदध्यात् ॥ ॐनमोव्यापिनिस्थिरेअचलेध्रुवे ॐह्रींलंस्वाहेतिमंत्रेणयथाशक्तिसंपूज्यप्रार्थयेत् ॥ त्वमेवपरमाशक्तिस्त्वमेवासनधारिका ॥ शिवाज्ञयात्वयादेविस्थातव्यमिहसर्वदेतिप्रार्थ्यततआसनशिलायांपूजयेत् । वर्णाध्वनेनमः । पदाध्वनेनमः । मंत्राध्वनेनमः । भुवनाध्वनेनमः । तत्वाध्वनेनमः । सकलाध्वनेनमः । इतिआसनस्थानस्थांकूर्म्मशिलांसंपूज्यपुष्पांजलित्रयंदत्वाप्रणमेत् इतिशिलांस्थिरीकृत्यशिलाग्रेस्थंडिलंकृत्वाअग्निंस्थाप्याघारावाज्यभागौहुत्वाइदंविष्णुरितिहुत्वासकलमध्वानंतदारूढंध्यायेत् । ततःपुण्याहवाचनंकृत्वामूलमंत्रेणाष्टोत्तरशतंहुत्वाषट्त्रिंशत्सुपंचचत्वारिंशत्सुवाब्रह्मशिलागर्तेषुप्रादक्षिण्येनसहस्राहस्तेनरत्नन्यासंकुर्यात् । श्वभ्ररहितेब्रह्मशिलोपरिभागेसश्वभ्रापिंडिकापूर्वपश्चिमाननेप्रासादेसौम्यप्रणालींदक्षिणोत्तराननेपूर्वप्रणालींध्रुवसूक्तेननिधायदेवपत्नीलिंगकेनमंत्रेणपिंडिकायांदेवपत्नींस्थापयेत् । तत्रविष्णुश्चेत्स्थाप्यस्तदाश्रीश्चतेलक्ष्मीरितिपठेत् । यदारुद्रस्तदा ॐआयंगौःपृश्निरक्रमीद० ॐगौरीर्मिमाय सलिलानितक्षत्येकपदीद्विपदीसा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरापरमे-

व्योमन् । जातवेदसे इत्यादिमंत्रान्पठेत् । ब्रह्मा चेत्गायत्रीमंत्रेण तदा गायत्र्यादीन् । सूर्यश्चेत्तदा ॐउषस्तच्चित्रमाभरास्मभ्यंवाजिनीवति ॥ येनतोकञ्चतनयञ्चधामहे इतिमंत्रेणप्रभांस्थापयेत् ततस्तत्वन्यासंकुर्यात् । तद्यथा । आत्मतत्वायनमः आत्मतत्वाधिपत्यैक्रियाशक्त्यैनमः । विद्यातत्वायनमः विद्यातत्वाधिपत्यैज्ञानशक्त्यैनमः इतिविष्णौ । शिवेतुशिवतत्वायनमः शिवतत्वाधिपत्यैइच्छाशक्त्यैनमः ॥ इतितत्वन्यासः । प्रतितत्वंमूर्तिमूर्तिदलोकपालान्विन्यसेत् । ततःआधारशक्त्यैनमः इतिन्यस्यअनंतासनादिवह्नितत्वांतंनिर्वर्त्य आसनशक्तिभ्योनमइत्युक्त्वाभ्यर्च्यप्रार्थयेत् ॥ ॐसर्वदेवमयीशानित्रैलोक्याह्लादकारिणि ॥ त्वांप्रतिष्ठापयाम्यत्रमंदिरेविश्वनिर्मिते ॥ १ ॥ यावच्चंद्रश्चसूर्यश्चयावदेषावसुंधरा ॥ तावत्त्वंदेवदेवेशिमंदिरेस्मिन्स्थिराभव ॥ २ ॥ पुत्रानायुश्चलक्ष्मींचअचलामजरामरां ॥ अभयंसर्वभूतेभ्यः कुरुदेविनमोस्तुते ॥ ३ ॥ इतिपार्वतींलक्ष्मींचप्रार्थ्यदेवंप्रार्थयेत् ॥ प्रबुध्यस्वमहाभागदेवदेवजगत्पते । मेघश्यामगदापाणेबुध्यस्वकमलेक्षण । बुध्यस्वभूधरानंतवासुदेवनमोस्तुते ॥ ॐनृसिंहायउग्ररूपायज्वलज्वलप्रज्वलस्वाहाइतिप्रार्थ्यप्रणवंश्वभ्रेतद्बाह्येषोडशस्वरान् तेषांपरितोव्यंजनानिन्यस्यश्वभ्रांतःरत्नादीन्विन्यसेत् ॥ तद्यथा । बाह्यपरिधौ यवव्रीहिनिष्पावप्रियंगुतिलमाषनीवारशालिसिद्धार्थकान् वज्रमौक्तिकवैडूर्यशंखस्फटिकपुष्परागचंद्रकांतेंद्रनीलपद्मरागान् मनःशिलाहरितालांजनश्यामाजनकासीससौराष्ट्रीरोचनागैरिकपारदान् सौवर्णरौप्यताम्रआयसत्रपुसीसकांस्यारकूटतीक्ष्णलोहानि श्वेतरक्तचंदनागरुअर्जुनोशीरवैष्णवीसहदेवीलक्ष्मणाचेति । तत्रबीजानामभावेयवान् । रत्नानामभावेवज्रं । धातूनामभावेहरितालं ॥ ताम्राद्यभावेसुवर्णं । औषधीनामभावेसहदेवींन्यसेत् । एवंन्यस्तानांरत्नानांदिक्पालमंत्रैरालंभ-

नंपूर्वादिक्रमेणकुर्यात् पूर्वे ॐत्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ १ ॥ आग्नेय्यां ॐअग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ २ ऽआसादयादिह ॥ २ ॥ याम्यां । ॐयमायत्वामखायत्वासूर्य्यस्यत्वातपसे ॥ देवस्त्वासवितामध्वानक्तुपृथिव्याꣳसꣳस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ३ ॥ निर्ऋतौ । ॐअसुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ४ ॥ वारुण्यां । ॐपंचनद्यःसरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ ५ ॥ वायव्यां । ॐवायोयेतेसहस्रिणोरथासस्तेभिरागहि ॥ नियुत्वान्सोमपीतये ॥ ६ ॥ उत्तरे । ॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ७ ॥ ईशान्यां । ॐतमीशानंजगतस्तस्थुषस्पतिंधियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ८ ॥ एवंरत्नादिन्यासंकृत्वा पृथ्वीमेरुकूर्मवाहनानि सौवर्णानिद्वारोन्मुखानि पारदंचतस्मिन्मध्यश्वभ्रेनिधाय गुग्गुलरसेनरत्नादिकंस्थिरीकृत्यमधुपायसेनश्वभ्रमनुलिप्यवस्त्रेणाच्छाद्यहुंइतिकवचेनावगुंठ्य ॐअस्त्रायफट् इत्यस्त्रमंत्रेणसंरक्ष्य ॐमनोजूतिर्जुषतामितिप्रासादमभिषिंच्यइंद्रादिभ्योबलिंदत्वाचामेत् ॥ एवंपिंडिकांप्रतिष्ठाप्यप्रासादाद्बहिः समंतात् प्रादक्षिण्येनभुवंपंचगव्येनसंप्रोक्ष्यदर्भपिंजूलैःसंमार्ज्य पूर्वाद्यष्टदिक्षुवालुकयाऽष्टौस्थंडिलानिचतुरस्राणिवितस्तित्रयसंमितानिकृत्वातत्तत्स्थंडिलानामीशानादिभागेषुकलशान् वारिपूर्णान्पुष्पफलपंचपल्लवादियुतान् सूत्रवेष्टितान्संस्थाप्य तेषुस्थंडिलेषुपंचभूसंस्कारान् संपाद्याग्निंप्रणीयप्रतिस्थंडिलंपलाशसमिधामष्टोत्तरशतंमूलमंत्रेणहुत्वाततआज्येन ॐनारायणायविद्महेवासुदेवायधीमहि ॥ तन्नोविष्णुःप्र-

चोदयादितिमंत्रेणाष्टोत्तरशतमष्टाविंशत्यष्टौवाहुत्वा आचार्यःताम्रपात्रेऽष्टदिक्संस्थेभ्यःकुंभेभ्यस्तोयमादाय मूलमंत्रेणशतवारमभिमंत्र्यप्र-
तिमासमीपंगत्वा सर्वतीर्थमयमिदंजलमितिध्यायन् देवमूर्ध्न्यभिषिंचेत् हुंफट्इतिनरसिंहमंत्रेणदेवस्यदिग्बंधनंकृत्वामूर्तिपैर्युक्तःशंखतूर्यादि-
नादेवंप्रार्थयेत् । ॐप्रबुध्यस्वमहाभागदेवदेवजगत्पते ॥ मेघश्यामगदापाणेप्रबुद्धकमलेक्षण ॥ १ ॥ प्रबुध्यस्वधरानंतवासुदेवनमोस्तुते ॥
इतिप्रार्थ्य । शंखेजलक्षीरकुशाग्रतिलतंडुलादिकृत्वा शंखमुद्रयादेवायार्घ्यंदत्वा ॐउत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतः
सुदानवइन्द्रप्राशूर्भवासचा ॥ १ ॥ इतिमंत्रेणदेवमुत्थाप्य ॐरथेतिष्ठन्नयतिवाजिनः पुरोयत्रयत्रकामयतेसुषारथिः ॥ अभीशूनाम्महि-
मानम्पनायतमनः पश्चादनुयच्छंतिरश्मयः ॥ २ ॥ इतिरथमुपवेश्य देवस्यपुरतोगुरुः पृष्ठतोयजमानःपुत्रकलत्रबंधुयुक्तःपार्श्वयोर्मूर्त्तिपा
स्तूर्यघोषेणशांतिपाठेनमंगलघोषेणचग्रामस्यप्रासादस्यवाप्रदक्षिणमेत्यप्रासादमानीयरथादवतार्य प्रासादद्वारसन्मुखंदेवंलिंगंवाकृत्वाप्रासा-
दंप्रवेशयेत् ततःसयजमानोगुरुर्देवंपिंडिकायास्थापयेत् ॥ तद्यथा ॥ सुमुहूर्तेसुस्थिरेलग्नेशुभग्रहैरीक्षिते ईश्वरंभावयन् श्वभ्रन्यासद्रव्यसहितं
सौवर्णपद्मंपिंडिकायाःश्वभ्रेनिधाय । ॐप्रधानपुरुषौयावद्यावच्चंद्रदिवाकरौ । तावत्त्वमनयाशक्त्यायुक्तोत्रैवस्थिरोभव इत्युक्त्वा । ध्रुवाद्यौ-
ध्रुवापृथिवीध्रुवंविश्वमिदंजगत् ॥ ध्रुवाशमेनगाःसर्वेध्रुवाःपतिकुलेस्त्रियइतिसूक्तंपठित्वा यवंयवार्द्धंवोत्तराश्रितमीशानाश्रितंवादेवंपिंडिकाश्व-
भ्रेनिधाय स्थिरोभवशाश्वतोभवेत्युक्त्वापिंडिकालिंगयोरंतरालंवालुकासीसकादिभिर्दृढंपूरयित्वापुनर्नचालयेत् ॥ इतिअचलप्रतिष्ठाक्रमः ॥
ततोदेवस्यवामभागेपत्नींन्यसेत् तत्रमंत्राः ॥ विष्णोर्वामभागे ॐश्रीश्चतेलक्ष्मीश्चेतिलक्ष्मींस्थापयेत् ॐश्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वे-

नक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मंइषाणसर्वलोकम्मंइषाण ॥ १ ॥ शंकरस्यवामे ॐआयंगौरितिगौरीं । ब्रह्मणोवामेगायत्री-
मंत्रेणसावित्रीं । सूर्यस्यवामे ॐउषस्तच्चित्रेतिप्रभांस्थापयेत् ॐउषस्तच्चित्रमाभरास्मभ्यंवाजिनीवति ॥ येनतोकञ्चतनयञ्चधामहे ॥ १ ॥ ततः ॥
ॐविश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ सम्बाहुभ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ इतिमंत्रेणदेवस्यमूर्ध्निह-
स्तंनिधायपरंदेवंध्यात्वारुद्रसूक्तैरेवतसामनीजप्त्वापुनःप्राणप्रतिष्ठांकुर्यात् ॥ तद्यथा ॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुरुद्राऋषयः
ऋग्यजुःसामानिछंदांसिक्रियामयवपुःप्राणाख्यादेवताआंबीजंक्रौंशक्तिःप्राणप्रतिष्ठायांविनियोगः । ब्रह्मविष्णुरुद्रऋषिभ्योनमःशिरसि ।
ऋग्यजुःसामछंदोभ्योनमोमुखे । प्राणाख्यदेवतायैनमोहृदि । आंबीजायनमो गुह्ये । क्रौंशक्त्यैनमःपादयोः ॥ ॐकंखंगंघंङं आंपृथिव्य-
प्तेजोवाय्वाकाशात्मने ॐहृदयायनमः । ॐचंछंजंझंञं इंशब्दस्पर्शरूपरसगंधात्मनेईंशिरसेस्वाहा । ॐटंठंडंढंणं ॐश्रोत्रत्वक्चक्षुर्जिह्वाघ्रा-
णात्मनेऊंशिखायैवषट् । ॐतंथंदंधंनंएंवाक्पाणिपादपायूपस्थात्मनेऐंकवचायहुम् । ॐपंफंबंभंमं औंवचनादानविहरणोत्सर्गानंदात्मने
औंनेत्रत्रयायवौषट् । ॐयंरंलंवंशंषंसंहंळंक्षं अंमनोबुद्ध्यहंकारचित्तात्मने अःअस्त्रायफट् । एवंआत्मनिदेवेचन्यासंकृत्वादेवंस्पृष्ट्वाजपेत् ।
ॐआंह्रींक्रौंयंरंलंवंशंषंसंहंळंक्षंसः देवस्यप्राणाइहप्राणाः । ॐआंह्रीं० हंसःदेवस्यजीवइहस्थितः । ॐआंह्रीं० हंसः० देवस्यसर्वेन्द्रियाणि० ।
ॐआंह्रीं० हंसःदेवस्यवाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाइहागत्यस्वस्तयेसुखेनसुचिरंतिष्ठंतुस्वाहा ॥ अर्चांहृद्यंगुष्ठंदत्वाजपेत् । ॐअस्यैप्राणाः
प्रतिष्ठंतु अस्यैप्राणाश्चरंतुच । अस्यैदेवत्वमर्चायैमामहेतिचकश्चन ॥ १ ॥ प्रणवेनसन्निरुध्यसजीवंध्यात्वा । ध्रुवाद्यौरितिपूर्वोक्तंजप्त्वाकर्णे-

गायत्रींदेवमंत्रंचजप्त्वा ॐसहस्रशीर्षाइत्यादिपुरुषसूक्तेनोपस्थायपादनाभिशिरःस्पृष्ट्वाइहैवैधीतित्रिर्जपेत् ॥ ततः स्वागतंदेवदेवेशमद्भाग्यात्त्व-
मिहागतः ॥ प्राकृतंत्वमदृष्ट्वामांबालवत्परिपालय ॥ १ ॥ धर्मार्थकामसिद्ध्यर्थंस्थिरोभवशिवायनः ॥ सान्निध्यंतुमहादेवस्वार्चायांपरि-
कल्पय ॥ २ ॥ यावच्चंद्रावनीसूर्यास्तिष्ठंत्यप्रतिघातिनः ॥ तावत्त्वयात्रदेवेशस्थेयंभक्तानुकंपया ॥ ३ ॥ इतिप्रार्थयेत् । तत्रविष्णुश्चेत् । ॐअ-
तसीपुष्पसंकाशंशंखचक्रगदाधरं ॥ संस्थापयामिदेवेशंदेवोभूत्वाजनार्दनं ॥ १ ॥ रुद्रस्य । त्र्यक्षंचदशबाहुंचचंद्रार्द्धकृतशेखरम् ॥ गणेशं
वृषभस्थंचस्थापयामित्रिलोचनं ॥ २ ॥ ब्रह्मणः । ऋषिभिःसंस्तुतंदेवंचतुर्वक्त्रंजटाधरं ॥ पितामहंमहाप्राज्ञंस्थापयाम्यंबुजोद्भवम् ॥ ३ ॥
सूर्यस्य । सहस्रकिरणंशांतमप्सरोगणसेवितं ॥ पद्महस्तंमहाबाहुंस्थापयामिदिवाकरं ॥ ४ ॥ इतिपठित्वादेवस्यहृदयंस्पृशन् जपेत् ।
तद्यथा । विष्णोःपुरुषसूक्तं । रुद्रस्यरौद्रं । ब्रह्मणोब्राह्मं । रवेःसौरं । अन्येषांतत्तत्प्रकाशकान् मंत्रान्जपित्वाप्रणवव्याहृतिशिरःसहिता
गायत्रींप्राणसूक्तंचजपित्वासान्निध्यंकुर्यात् ॐनमस्तेत्यक्तसंगायसंतोषपरमात्मने ॥ ज्ञानविज्ञानरूपायब्रह्मतेजोनुशालिने ॥ १ ॥ गुणाति
क्रांतवेगायपुरुषायमहात्मने ॥ अव्यक्तायपुराणायविष्णोसन्निहितोभव ॥ २ ॥ भगवन्देवदेवेशत्वंपितासर्वदेहिनां ॥ त्वयाव्याप्तमिदंसर्वंजग
त्स्थावरजंगमम् ॥ ३ ॥ त्वमिंद्रःपावकश्चैवयमोनिर्ऋतिरेवच ॥ वरुणोमारुतःसोमईशानःप्रभुरव्ययः ॥ ४ ॥ येनरूपेणभगवन्व्याप्तंचभु-
वनत्रयम् ॥ तेनरूपेणदेवेशअर्चायाःसन्निधौभव ॥ ५ ॥ सर्वमंत्रादिदेवेशलोकानुग्रहकाम्यया ॥ अत्रार्चायांमहादेवभवसन्निधिमान्सदा ॥
॥ ६ ॥ सूर्याचंद्रमसौयावद्यावत्तिष्ठतिमेदिनी ॥ तावत्त्वयात्रदेवेशस्थातव्यंस्वेच्छयाप्रभो ॥ ७ ॥ यावच्चंद्रोयमःसूर्यस्तिष्ठंत्यप्रतिघातिनः ॥

तावदत्रतुदेवेशस्थेयंसर्वानुकंपया ॥ ४ ॥ इतिप्रार्थ्यस्थापितंदेवंप्रधानंकृत्वातस्यपरितःपरिवारदेवताःस्थापयेत् । अथपरिवारदेवताः । शिवस्य । नंदिमहाकालवृषभभृंगिरिटिस्कंदोमाविनायकविष्णुब्रह्मजयंतइंद्राग्नियमनिर्ऋतिवरुणवायुसोमेशानाप्सरोगणगंधर्वगुह्यकविद्याधरादीन् । ब्रह्मणो विष्णवादयःपरिवारदेवताः । विष्णोःब्रह्मादयः । एवंचंडीविनायकादीनामपिपरिकल्पनीयम् एवंप्रासादेदेवंप्रतिष्ठाप्य मंडपमेत्य । ततःकुंडेष्वंगहोमःशांतिद्रव्येणकार्यः । तद्यथा पूर्वकुंडे ॐहृदयायस्वाहा इतिमंत्रेणाज्याहुतिर्विंशतिकं ॥ १ ॥ दक्षिणकुंडे ॐशिरसेस्वाहा इतिशिरोमंत्रेण ॥ १ ॥ पश्चिमेशिखायैवषट्इतिमंत्रेण ॥ ३ ॥ उत्तरेकवचायहुंस्वाहाइतिमंत्रेण ॥ ४ ॥ आचार्यकुंडेनेत्रत्रयायवौषट्इतिमंत्रेण ॥ ५ ॥ पुनःपूर्वकुंडेअस्त्रायफट्स्वाहाइतिमंत्रेणजुहुयात् । ततः ॐसर्वायुधेभ्यःस्वाहाविमलादिनवपीठशक्तिभ्यःस्वाहा सर्वेभ्योऽग्निभ्यःस्वाहा सपरिवारदेवताभ्यः० सर्वदिगाशेभ्यःस्वाहा ॥ ततोऽघोरमंत्रेणाष्टोत्तरशतहोमःइतिआयुधमंत्रैर्हुत्वादेवंप्रार्थयेत् । ॐलोकानुग्रहहेतवर्थंस्थिरीभवसुखासने । सान्निध्यंहिमयादेवमत्यहंपरिवर्तय ॥ १ ॥ माभूत्पूजाविरामोऽस्मिन्यजमानःसमृध्यताम् ॥ संपादयसतांराष्ट्रंसर्वोपद्रववर्जितं ॥ क्रमेणवृद्धिमतुलांसुखमक्षय्यमश्नुताम् ॥ २ ॥ इतिसंप्रार्थ्य विधिनाषोडशोपचारैर्देवंसांगंसमर्चयेदिति । ततः प्रासादद्वारदेशेदक्षेविष्णोःचंडंस्थापयामि । वामेप्रचंडंस्थापयामि शिवस्य नंदिमहाकालगणेश्वरभृंगीचंडउमावृषभस्कंदादीन् स्थापयामिपूजयामि इतिसंपूज्यबहिरागत्ययथाशक्तिप्रासादपूजाविधेया पताकाहरिद्रासिंदूरादिस्वस्तिकादिभिः शोभयेत् पुनःप्रासादंप्रविश्यप्रासादाग्रमंडपे एतान्देवान्स्थापयेत् अग्रिममंडपस्य पूर्वे इंद्रंअंबिकां । अग्निकोणे विष्णुं अग्निं । दक्षिणेवरुणं समुद्रान्सरितः । वायौ वायुंदु-

गाँफणींद्रान्गणपतिं । उत्तरे यक्षान्उमांस्कंदंसोमं । ईशान्ये शिवंस्थापयामिपूजयामि । द्वारदक्षिणे कुबेरं वामेश्रियं दिक्षु इंद्रादींस्तत्त-
द्दिक्षुतत्तन्मंत्रैःस्थापयेत् । अथशिवस्यप्रधानभूतस्यावाहनादिपूजा ॥ यस्यसिंहारथेयुक्ताव्याघ्रीभूतास्तथोरगाः ॥ ऋषयोलोकपालाश्चसो-
मोविष्णुःपितामहः ॥ १ ॥ नागयक्षाःसगंधर्वायेचदिव्यानभश्चराः ॥ तमहंत्र्यक्षमीशानंशिवंरुद्रमुमापतिं ॥ २ ॥ आवाहयामिसगणंस-
पत्नीकंवृषध्वजं ॥ आगच्छभगवन्रुद्रानुग्रहायशिवोभव ॥ ३ ॥ शाश्वतोभवपूजांमेगृहाणत्वंनमोस्तुते ॥ ॐस्वागतमनुस्वागतमनुस्वागतं-
भगवतेनमोनमः । सोमायसगणायसपरिवारायप्रतिगृह्णातु ॐभगवान्मंत्रपूतमिदमर्घ्यंपाद्यमाचमनीयमासनंब्रह्मणाभिहितंनमोनमः
स्वाहा ॥ इतिसंपूज्यप्रणम्यब्रह्मघोषेणस्नापयेत् । तद्यथा । आप्यायस्वेतिक्षीरेण । आप्यायस्वसमेतुतेविश्वतः॑सोमवृष्ण्यँ ॥ भवावाजस्यसं-
गथे ॥ दधिक्राव्णो इतिदध्ना ॥ २ ॥ घृतंघृतमितिघृतेन ।३। मधुव्वाताइतिमधुना । ४ । ॐआयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरं-
च्चप्रयन्त्स्वः॑इतिशर्करया । ५ । एवंदुग्धदधिघृतमधुशर्कराख्यैःसमंत्रैर्मध्येसुगंधजलयुतैःसंस्नाप्य । ॐततोविराडजायत० । १ । सहस्र-
शीर्षा० । २ । अभित्वाशूरनोनुमोदुग्धाइवधेनवः॑ ॥ ईशानमस्यजगतःस्वर्दृशमीशानमिन्द्रतस्थुषः॑ ॥ ३ ॥ पुरुषऽएवेद० । ४ । नत्वावाँ-
अन्योदिव्योनपार्थिवोनजातोनजनिष्यते ॥ अश्वायन्तोमघवन्निन्द्रवाजिनोगव्यन्तस्त्वाहवामहे ॥ ५ ॥ इतिमंत्रान्जपेत् । प्रतिमंत्रंजलेनदे-
वस्यपादौनाभिंवक्षःशिरश्चालभेत । ततोलिंगमंत्रैःप्रार्थयित्वा भगवन्देवदेवेशधर्मकामार्थमोक्षद ॥ विद्याविद्येश्वरैरुद्रैर्गणेशैर्लोकपालकैः
॥ १ ॥ देवदानवगंधर्वैर्यक्षैश्चसहकिन्नरैः ॥ अस्मिन्लिंगेमहादेवसर्वदावसवैप्रभो ॥ २ ॥ पुंसामनुग्रहार्थायपृथिव्यांस्वेच्छयाप्रभो ॥ परावरे-

णभावेनस्थातव्यंसर्वथात्वया ॥३॥ सर्वविघ्नहरः पुंसांसर्वदुःखहरःसदा ॥ सर्वदा यजमानस्यइच्छासंपत्करोभव ॥४॥ नमस्तेसर्वधर्मायसंतोष-
विजितात्मने ॥ ज्ञानविज्ञायतृप्तायब्रह्मतेजोभिशालिने ॥ ५ ॥ नमस्तेशुद्धदेहायपुरुषायमहात्मने ॥ स्थापकानांमूर्तिपानांशिल्पिनांचवि-
भोसदा ॥ ६ ॥ ग्रामदेशनृपाणांचशांतिर्भवतुसर्वदा ॥ पूजकाराधकानांचभक्तानांभक्तवत्सल ॥ ७ ॥ सर्वेषांचजगन्नाथस्वेच्छासिद्धिप्र-
दोभव ॥ चंद्रार्कावनिपर्यंतंलिंगेस्मिन्परमेश्वर ॥ ८ ॥ स्थातव्यमुमयासार्धंसर्वलोकानुकंपया ॥ यावच्चंद्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनी ॥ ९ ॥
तावत्त्वयात्रदेवेशस्थातव्यंस्वेच्छयाविभो ॥ इतिशिवस्थापनायां ॥ विष्णुश्चेद्यदि अस्यांमूर्तौमहाविष्णोस्सान्निध्यंसर्वदाकुरु ॥ चंद्रार्कावनि-
पर्यंतंमूर्त्तावस्यांरमेश्वर ॥ ॐसहस्रशीर्षेत्यादिपुरुषसूक्तेनविष्णुंषोडशोपचारैःसंपूज्यपुराणमंत्रैरन्यैस्तोत्रादिभिःस्तुत्वाक्षमस्वेत्युक्त्वादेवंप्रा-
र्थयेत्। ज्ञानतोज्ञानतोवापियावद्विधिरनुष्ठितः ॥ ससर्वस्त्वत्प्रसादेनसमग्रोभवतान्ममेति ॥ शिवस्य। ज्ञानतोज्ञानतोवापिभगवन्यत्कृतंमया ॥
तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादान्महेश्वरइतिप्रार्थ्य ॥ ततःकर्तृनामयुतंदेवनामकुर्यात् सर्वदाव्यवहारार्थं तद्यथा विष्णोरमुकस्वामी अमुक-
नारायणइतिवा । शिवस्य अमुकेश्वरः । सूर्यस्यअमुकादित्यः । देव्याःअमुकेश्वरी । गणपतेरमुकविनायक इत्यादिनामविदध्यात् ॥ ततः
नैमित्तकेदोषेप्रायश्चित्तं तत्रस्थाप्यमानदेवार्चालिंगंवायांयांदिशमुपाश्रयेत्तत्तद्दिगीशमंत्रेणाष्टोत्तरशतसंख्ययाशमीपलाशान्यतमसमिद्धोमंति-
लहोमंचकृत्वापूर्णाहुत्यंतंकुर्यात् ॥ दिगीशमंत्रास्तुत्रातारमिंद्रमित्यादयःप्रसिद्धाः अत्राचार्यदक्षिणा । गजोमेषोमहिषोजःशक्तिर्मुक्ताफ-
लंतथा ॥ वस्त्रयुग्माऽविकाधेनुवृषभश्चविधानतः ॥ १ ॥ तदभावेसुवर्णप्रतिकृतयःराजतोवावृषभइति । ततःस्थाप्यमानेदेवेशब्दोत्थाने-

श्वभ्रांतेस्फुटितेवाशांत्यर्थंमूलमंत्रेणाष्टोत्तरशतंहुत्वाप्रतिष्ठाहोमंकुर्यात् । ॐशिवायस्थिरोभवस्वाहा । ॐशिवायाप्रमेयोभवस्वाहा । ॐशि-
वायविबोधोभवस्वाहा । ॐशिवायनित्योभवस्वाहा । ॐशिवायसर्वगोभवस्वाहा । ॐशिवायअविनाशोभवस्वाहा । ॐशिवायकृतोभव-
स्वाहा । अथसर्वशांत्यर्थंअघोरमंत्रेणाष्टोत्तरशतंहुत्वा ततोऋत्विग्भिःसहस्वेस्वेकुंडेसर्वैपूर्णाहुतिहोमंकुर्युः । अथपूर्णाहुतिः । तत्रादौदेश-
कालौस्मृत्वाकृतस्यकर्मणःसांगतासिद्ध्यर्थंवसोर्धारासमन्वितंपूर्णाहुतिहोममहंकरिष्ये । इतिसंकल्प्य तत्रतावत्आज्याधिश्रयणंआज्योद्वा-
सनंअवेक्षणंउत्पवनंस्रुक्स्रुवप्रतपनं सूत्रेणवेष्टितंचतुर्गृहीतेनाज्यग्रहणंतदुपरिघृतेनाहुतौनारिकेलस्यनिधानंतस्यपूजनंयजमानःसपत्नीको
गुरोर्दक्षिणस्कंधंस्पृशन्तांबूलपूगफलाक्षतघृतंस्रुवेकृत्वाजुहुयात् ॥ तत्रमंत्राः । ॐसमुद्रादूर्मिर्मधुमाँ २ उदारदुपाᳪशुनासमंमृतत्वमा-
नट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृ-
णवच्छस्यमानंचतुःशृंगोवमीद्गौरऽएतत् ॥ २ ॥ चत्वारिशृंगात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदे-
वोमर्त्यां २ आविवेश ॥ ३ ॥ त्रिधाहितंपणिभिर्गुह्यमानंगाविदेवासोघृतमन्वविंदन् ॥ इन्द्रऽएकᳪसूर्यऽएकंजजानवेनादेकᳪस्वधयानि-
ष्टतक्षुः ॥ ४ ॥ एताऽअर्षंतिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् ॥ ५ ॥
सम्यक्स्रवंतिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्मयोघृतस्यमृगाऽइवक्षिपणोरीषमाणाः ॥ ६ ॥ सिंधोरिवप्राध्वने-
शूघनासोवातप्रमियःपतयन्तियह्वाः ॥ घृतस्यधाराऽअरुषोनवाजीकाष्ठाभिन्दन्नूर्मिभिःपिन्वमानाः ॥ ७ ॥ अभिप्रवंतसमनेवयोषाःक-

स्याण्यु÷स्वंयमानासोऽअग्निम् ॥ घृतस्युधारांःसुमिधोंनसंततांजुषाणोहंर्य्यतिजातवेंदाः ॥ ८ ॥ कुन्याऽइवव्वहतुमेतवाऽउंऽअंज्यंजानाऽअ-
भिचांकशीमि ॥ यत्रसोमं÷ सूयतेयत्रंयुज्ञोघृतस्युधारांऽअभितत्पवंते ॥ ९ ॥ अभ्यर्षतसुष्टुतिंगव्यंमाजिमस्मासुंभद्राद्रविंणानिधत्त ॥ इमं-
युज्ञन्नंयतदेवतांनोघृतस्युधारामधुंमत्पवंते ॥ १० ॥ धामंतेविश्वंभुवंनमधिंश्रितमंतःसंमुद्रेहृद्युंतरायुंषि ॥ अपामनींकेसमिथेयऽआभृंत-
स्तमंश्यामुमधुंमंतंतऽऊर्मिम् ॥ ११ ॥ ॐमूर्द्धानंदिवोअंरतिंपृंथिव्यावैश्वानुरमृतआजातमुग्निम् ॥ कुविःसंम्राजमतिंथिंजनांनामासन्ना-
पात्रंजनयन्तदेवाः ॥ १२ ॥ सप्ततेंऽअग्नेसमिधं÷ सप्तजिह्वाःसप्तऽऋषंयःसप्तधामंप्रियाणिं ॥ सप्तहोत्राःसप्तधात्वांयजन्तिसप्तयोनीरापृं-
णस्वाघृतेनस्वाहां ॥ १३ ॥ शुक्रज्योतिश्चचित्रज्योंतिश्चसत्यज्योतिश्चज्योतिंष्मांश्च ॥ शुक्रश्चंऽऋतपाश्चात्यंःहाः ॥ १४ ॥ ईदृङ्चांन्यादृङ्-
सदृङ्प्रतिंसदृङ् ॥ मितश्चसम्मिंतश्चसभंराः ॥ १५ ॥ ऋतश्चंसत्यश्चंध्रुवश्चंधरुणंश्च ॥ धर्त्ताचंविधर्त्ताचंविधारयः ॥ १६ ॥ ऋतजिच्चंसत्य-
जिच्चंसेनजिच्चंसुषेणंश्च ॥ अंतिमित्रश्चदूरेऽअंमित्रश्चगणः ॥ १७ ॥ ईदृक्षांसऽएतादृक्षांसऽऊषुण÷ सदृक्षांसःप्रतिंसदृक्षासऽएतंन ॥ मिता-
संश्चसम्मिंतासोनोऽअद्यसभंरसोमरुतोयुज्ञेऽअस्मिन् ॥ १८ ॥ स्वतंवांश्चप्रघासीचंसांतपनश्चंगृहमेधीचं ॥ क्रीडीचंशाकीचोंज्जेषि ॥ १९ ॥
उग्रश्चंभीमश्चध्वान्तश्चधुनिंश्च ॥ सासुहाँश्चांभियुग्वाचंविक्षिपःस्वाहां ॥ २० ॥ पुनंस्त्वादित्यारुद्राव्वसंवःसमिंधतांपुनंर्ब्रह्माणोंव्वसुनीथ-
युज्ञैः ॥ घृतेनत्वंतन्वंवर्द्धयस्वसत्याःसंन्तुयजंमानस्यकामाः ॥ २१ ॥ व्वसोंःपवित्रंमसिशतधांरंव्वसोंःपवित्रंमसिसुहस्रंधारं ॥ देवस्त्वां-
सवितापुनांतुवसोंःपवित्रेणशतधारेंणसुप्वाकामंधुक्षः ॥ २२ ॥ पूर्णादंर्व्विपरांपतसुपूंर्णापुनरापंत ॥ वस्नेवव्विक्रींणावहाऽइषमूर्ज्जंःशतक्र-

तोस्वाहा ॥ २३ ॥ इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवेअद्भ्यश्चनमम ॥ इतिपूर्णाहुतिः ॥ तत ॐश्रद्धांमेधांयशःप्रज्ञांविद्यांपुष्टिं-
श्रियंवलं ॥ तेजआयुष्यमारोग्यंदेहिमेहव्यवाहनइत्यग्निंप्रार्थ्य । ततस्त्र्यायुषकरणं ॥ ॐत्र्यायुषञ्जमदग्नेरितिललाटे । कश्यपस्यत्र्यायुषमि-
तिग्रीवायां । यद्देवेषुत्र्यायुषमितिबाहुमूले । तन्नोऽअस्तुत्र्यायुषमितिहृदि ततः । संस्रवप्राशनंआचमनंचकुर्यात् ततःपवित्राभ्यांमार्जनं ।
अग्नौपवित्रप्रतिपत्तिः । ब्रह्मणेपूर्णपात्रदानं । तद्यथा । अद्येत्यादिदेशकालौस्मृत्वाअद्यकृतैतदमुकदेवप्रतिष्ठाहोमकर्मणि ब्रह्मकर्म्मप्रतिष्ठार्थ-
मिदंपूर्णपात्रंप्रजापतिदैवतंसदक्षिणाकममुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणेतुभ्यमहंसंप्रददे । ॐस्वस्तीतिप्रतिवचनम् । ततोब्रह्मग्रंथि-
विमोकः । तत ॐसुमित्रियानऽआपऽओषधयः संत्वितिपवित्राभ्यांप्रणीताजलेनयजमानशिरः संमृज्य पवित्रेअग्नौप्रक्षिप्य । ॐदुर्मित्रि-
यास्तस्मैसंतुयोऽस्मान्द्वेष्टियंचवयंद्विष्मः इतिईशान्यांप्रणीतान्युब्जीकुर्यात् तत आस्तरणक्रमेणबर्हिरुत्थाप्याज्येनाभिघार्य्य । ॐदेवागातु-
विदोगातुंवित्त्वागातुमित ॥ मनसस्पतऽइमंदेवयज्ञꣳस्वाहावातेधाःस्वाहा ॥ १ ॥ इतिमंत्रेणहस्तेनएवजुहुयात् । इत्यग्निकर्मसमाप्य
आघारादिपूर्णाहुतिपर्यंतंयत् यद्द्रव्यं यावत्यावत्संख्याकेनयेनयेनमंत्रेण यस्यैयस्यैदेवतायैययायायाकामनयाहुतं तस्यै तस्यै देवतायैसासा-
देवताप्रीयतां । तेदेवाःशांतिदाः तुष्टिदाःपुष्टिदावरदाःभवंतु । इतिप्रार्थ्य ईशानेबलिंदत्वाचामेत् । ततःउदङ्मुखआचार्यस्तिष्ठन् सर्वैऋ-
त्विजश्चशुभासनेयजमानंपत्नीपुत्रादियुतंप्राङ्मुखमुपवेश्यग्रहशांतिकलशोदकंसुवर्णादिपात्रेसमादायकुशदूर्वाम्रपल्लवैर्वेदमंत्रैःपौराणिकैश्चगी-
तवाद्यादिपुरःसरमभिषिंचेत् । तथाहि ॥ ॐआपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ १ ॥ योवःशिवतमोरसस्तस्य

भाजयतेहनः॥ उशतीरिवमातरः ॥ २ ॥ तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ॥ आपोजनयथाचनः ॥ ३ ॥ ॐत्रातारमिन्द्रम-
वितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ ४ ॥ ॐवरुणस्योत्तम्भनमसिव्व-
रुणस्यस्कम्भसर्ज्जनीस्स्थोव्वरुणस्यऽऋतसदन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद ॥ ५ ॥ भगप्प्रणेतर्भगसत्यराधोभगे-
मान्धियमुदवाददन्नः ॥ भगप्प्रनोजनयगोभिरश्वैर्भगप्प्रनृभिर्नृवन्तः स्याम ॥ ६ ॥ इदमापःप्रवहतावद्यञ्चमलञ्चयत ॥ यच्चाभिदुद्रो-
हानृतंयच्चशेपेऽअभीरुणम ॥ आपोमातस्मादेनसःपवमानश्चमुञ्चतु ॥ ७ ॥ ॐपुनन्तुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूता-
निजातवेदःपुनीहिमा ॥ ८ ॥ आप्प्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवाव्वाजस्यसङ्गथे ॥ ९ ॥ ॐपयःपृथिव्यांपयऽओषधीषुपयोदि-
व्यन्तरिक्षेपयोधाः ॥ पयस्वतीःप्रदिशःसन्तुमह्यम ॥ १० ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम ॥ सरस्वत्यैवाचोयन्तु-
र्य्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्ज्येनाभिषिञ्चाम्यसौ ॥ ११ ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम ॥ सरस्वत्यैवाचोयन्-
तुर्य्यन्त्रेणाग्नेःसाम्राज्ज्येनाभिषिञ्चामि ॥ १२ ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम ॥ अश्विनोर्भैषज्ज्येनतेजसेब्रह्मवर्च-
सायाभिषिञ्चामि सरस्वत्यैभैषज्ज्येनवीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेभिषिञ्चामि ॥ १३ ॥ पालाशंभवतितेन-
ब्राह्मणोभिषिञ्चति ॥ ब्रह्मवैपलाशोब्रह्मणैवैनमेतदभिषिञ्चति ॥ १४ ॥ सर्वेषांवाऽएषवेदानाꣳरसोयत्सामसर्वेषामेवैनमेतद्वेदानाꣳरसे-
नाभिषिञ्चति ॥ १ ॥ यदेवकुल्पाज्जुहोतिप्राणावैकुल्पाऽअमृतमुपवैप्राणाऽअमृतेनैवैनमेतदभिषिञ्चति ॥ १६ ॥ दीर्घायुत्वायबलायवर्चसे-

सुप्रजास्त्वासहसाऽअथोजीवशरदःशतम् ॥ १७ ॥ द्यौःशांतिरन्तरिक्षꣳशांतिः पृथिवीशांतिरापःशांतिरोषधयःशांतिः ॥ वनस्पतयःशा-
न्तिर्विश्वेदेवाःशांतिर्ब्रह्मशांतिःसर्वꣳशांतिःशांतिरेवशांतिःसामाशांतिरेधि ॥ १८ ॥ ततःसमुद्रज्येष्ठा इत्यादिभिर्मंत्रैःपवमानःसुवर्जनइत्य-
नुवाकेनचइमंमेवरुणेतिपूर्वोक्तैर्वारुणैर्मंत्रैराचार्यादयोऽभिषिंचेयुः ॥ अथपौराणिकमंत्राः । सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासु-
देवोजगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ २ ॥ वरुणः
पवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धि-
र्लज्जावपुःशांतिस्तुष्टिःकांतिश्चमातरः ॥ ४ ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥
ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताः ॥ ५ ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमनवोगावोदेवमातरएवच ॥ ६ ॥ देवप-
त्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ ७ ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ सरितः
सागराःशैलास्तीर्थानिजलदानदाः ॥ ८ ॥ एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ ९ ॥ आदित्यावसवोरुद्राविश्वेदेवामरुद्गणाः ॥ अभि-
षिंचंतुतेसर्वेधर्मकामार्थसिद्धये ॥ १० ॥ अमृताभिषेकोस्तुइत्यभिषेकः ॥ ततोऽभिषेकानंतरंसर्वौषधीरनुलिप्यशुद्धोदकेनस्नात्वाउभयोः
स्नानवस्त्रत्यागः । शुक्लमाल्यांबरधरोधृतमंगलतिलकः सपत्नीकोयजमानःस्वासनेउपविश्यआचम्यआज्यावलोकनंकुर्यात् । ॐरूपेण-
वोरूपमभ्यागांतुथोवोविश्ववेदाविभजतु ॥ ऋतस्यपथाप्रेतंचन्द्रदक्षिणाविस्वःपश्यव्यन्तरिक्षंयतस्व सदस्यैः ॥ १ ॥ इत्याज्येमुखमवलो-

क्यब्राह्मणायदद्यात् ॥ अथाचार्यपूजनं ॥ तच्चयजमानआचार्यमासने उपविश्यसत्कृत्यग्रामंगोशतंतदर्धंवावृषभैकादशकंपंचकंसालंकृतं
वाअश्वंदासीदासंव्यजनचामरछत्रवितानयानासनवस्त्राणियथाशक्तिसन्निधायगंधपुष्पमालादिभिः संपूज्य कुंकुमैरनुलिप्य दक्षिणहस्ते
सौवर्णांगुलीयकं विन्यस्यहारकंकणकेयूरकुंडलादिभिर्भूषणैर्भूषयित्वा देशकालौसंकीर्त्य देवप्रतिष्ठासिद्ध्यर्थमिमांदक्षिणांतुभ्यमहमाचार्या-
यसंप्रददे ब्रह्मार्पणमस्तु नममेत्युक्त्वातद्धस्तेगोपुच्छादिसतिलयवकुशतुलसीसहितंजलंक्षिपेत्। प्रार्थयेच्च ॥ भगवन्सर्वधर्मज्ञशिवशास्त्रपरायण
सर्वशास्त्रार्थतत्त्वज्ञसर्वधर्मविशारद ॥ १ ॥ अनादिजन्मसंतानेह्यप्रमेयेभवार्णवे ॥ अद्यमेह्युत्तमंजन्मअद्यमेसफलंधनं ॥ २ ॥ अद्यमेज-
ननोच्छित्तिरद्यमेपरमंपदं ॥ मोचितोहंत्वयानाथदुश्छेद्याद्भवबंधनात् ॥ ३ ॥ ईशत्रातस्त्वयायस्मादप्रमेयाद्भवार्णवात् ॥ मुक्तोहंमर्त्यसं-
सारात्प्रपन्नोहंतवांतिकं ॥ ४ ॥ ज्ञानतोऽज्ञानतोवापियद्यन्न्यूनंकृतंमया ॥ तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादात्क्षमस्वमे ॥ ५ ॥ इत्याचार्यप्रा-
र्थना ॥ एवंब्रह्मणेऋत्विगादिभ्यश्चदक्षिणांदद्यात् ततःआचार्यो ॐसमस्तजगदुत्पत्तिस्थितिसंहारकारकः ॥ शिवःशिवःसानुचरःसर्वदासर्व-
कामदः ॥ १ ॥ द्रव्यहीनंचयत्किंचिद्विधिहीनंतुयद्भवेत् ॥ तत्सर्वंपूर्णमेवास्तुप्रसादात्कारणस्यतु ॥ २ ॥ स्थापकस्यमूर्तिपानांशिल्पिनांव-
र्णिनांतथा ॥ सराष्ट्रपार्थिवानांचशांतिर्भवतुसर्वदा ॥ २ ॥ भृत्यपुत्रकलत्रैश्चस्वमित्रबलवाहनैः ॥ कारणस्यप्रसादेनसर्वलोकेश्वरोभवेत्यु-
क्त्वादेवंनत्वायजमानायाशिषंदद्यात् ॥ ॐस्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृह-
स्पतिर्दधातु ॥ १ ॥ ॐश्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानम्महीयते ॥ धान्यंधनंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥ २ ॥

पुनस्त्वादित्यारुद्रावसवुः समिंधताम्पुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतन्वंवर्द्धयस्वसत्याऽसंतुयजमानस्यकामाः ॥३॥ मंत्रार्थाः सफलाः स-
न्तुपूर्णाः सन्तुमनोरथाः ॥ शत्रूणांबुद्धिनाशोस्तुमित्राणामुदयस्तव ॥ ४ ॥ व्यासवाल्मीकवचनात् पराशरवसिष्ठयोः ॥ गर्गगौतमधौम्या-
त्रिवासिष्ठांगिरसांस्तथा ॥ वाक्याच्चनारदादीनांपूर्णंभवतुतेकृते ॥ ततः स्थापितदेवतानामुत्तरपूजनंकृत्वाक्षमापयेत् ॥ अथाग्निपूजनंप्रार्थना-
विसर्जनंच । गच्छत्वंभगवन्नग्नेस्वस्थानेकुंडमध्यतः ॥ हुतमादायदेवेभ्यः शीघ्रंदेहिप्रसीदमे ॥ १ ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥
यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥ २ ॥ ततोनवग्रहादीन्विसर्जयेत् ॥ अक्षतानादाय ॥ ॐयांतुदेवगणाः सर्वेपूजामादायमामकीं ॥
इष्टकामसमृद्ध्यर्थंपुनरागमनायच ॥ ३ ॥ ॐउत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुमरुतः सुदानवइन्द्रप्राशूर्भवासचा ॥ ४ ॥
ॐयज्ञयज्ञंगच्छयज्ञपतिंगच्छस्वांयोनिंगच्छस्वाहा । एषतेयज्ञोयज्ञपतेसहसूक्तवाकः सर्ववीरस्तज्जुषस्वस्वाहा ॥ ५ ॥ एवंग्रहादिदेवान्विसृ-
ज्ययज्ञोपकरणादिकमृत्विग्भ्योदत्वागुर्वादीन्संपूज्यकरौसंपुटीकृत्य । मयायत्कृतंदेवप्रतिष्ठायज्ञंतत्कालहीनंभक्तिहीनंश्रद्धाहीनंद्रव्यहीनंच-
भवतांब्राह्मणानांवचनात् श्रीविष्णोः प्रसादाच्चसर्वंविधेः परिपूर्णतास्तु । ततस्तेब्राह्मणाः सर्वंकर्मसंपूर्णमच्छिद्रमस्त्वितिवदेयुः । ततोब्राह्म-
णसहस्रमष्टोत्तरशतंपंचाशतंविंशतिंवाशक्त्यनुरूपंभोजयित्वाभूयसींदत्वा ॐयस्यस्मृत्याचनामोक्त्यातपः पूजाक्रियादिषु ॥ न्यूनंसंपूर्णतांया-
तिसद्योवंदेतमच्युतं ॥ १ ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोः संपूर्णंस्यादितिश्रुतिः ॥ २ ॥ चतुर्भिश्चचतुर्भि-
श्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांतस्मैयज्ञात्मनेनमः ॥ ३ ॥ इत्युक्त्वात्रिर्विष्णुंस्मृत्वाकुटुंबजनैः परिवृतः स्वयंभोजनंकुर्यात ॥ एवं-

देवप्रतिष्ठायज्ञंकृत्वाआत्मानंकृतार्थंमन्येत । तत्रसद्यःपक्षेतुमधुकुंकुमादिसर्वद्रव्यैस्तद्दिनएवदेवंलेपयेत् । सर्वलेपनद्रव्येषुकपिलाघृतमिश्रणं-
ज्ञेयं ॥ इतिश्रीसर्वदेवप्रतिष्ठाप्रकाशेदेवस्थापनप्रकारःसमाप्तः ॥ ॥ ॥ ॥ ॥

अथ संक्षेपेणचलप्रतिष्ठाप्रयोगः । तत्रादौशुचौदेशेपूर्ववन्मंडपकुंडादिकंकृत्वाप्रतिष्ठादिनेनित्यकर्मसमाप्यशिल्पिस्थानाद्देवंतत्रानीय आसने
निधाय आचांतःप्राणानायम्य । मासाद्युल्लिख्य । अस्यांमूर्तौलिंगेवादेवकलासान्निध्यार्थं दीर्घायुर्लक्ष्मीसर्वकामसमृध्यक्षय्यसुखकामोऽमु-
कदेवमूर्तिप्रतिष्ठांकरिष्येइतिसंकल्प्य गणपतिपूजनं पुण्याहवाचनं मातृकापूजनंनांदीश्राद्धंचकृत्वागुरुमष्टौचतुरोवाऋत्विजश्चवृत्वापूजयेत् ।
ततोगुरुः मंडपप्रतिष्ठामग्निस्थापनंवास्तुपूजनंचकृत्वाग्रहयज्ञंविधायसर्वतोभद्रमंडलेब्रह्मादिमंडलदेवताआवाह्यसंपूज्यस्थाप्यदैवत्यंनैवारंचरुं
श्रपयित्वाज्यभागांतेग्रहहोमंकृत्वापलाशसमिद्भिः प्रत्येकंसहस्रमष्टशतंवाप्रतिदैवतंलोकपालमंत्रैर्व्याहृतिभिर्वाजुहुयात् तावत्संख्याकमाज्य-
होमंचकृत्वा स्थापितदेवतानांक्रमेणसमित्तिलाज्यानांप्रतिद्रव्यंदशाहुतीर्हुत्वाअष्टसहस्रमष्टशतंवाप्रधानदेवतामंत्रेणजुहुयात् । ततोगुरुर्देवं-
नत्वा । स्वागतंदेवदेवेशविश्वरूपनमोस्तुते । शुद्धेपित्वदधिष्ठानेशुद्धिंकुर्मःसहस्वतामितिप्रार्थ्य । ॐउत्तिष्ठब्रह्मणस्पते० इतिसर्विगुत्थाप्य
वेद्यांनिधायपंचगव्यैःपंचामृतैश्चपृथक्तत्तन्मंत्रैःसंस्नाप्य ( लिंगंचेन्नमस्तेरुद्रइत्यष्टाभिःसंस्नाप्य ) ॐशन्नोदेवीतिसंस्रवकलशेनसंस्नाप्य ।
घृताभ्यंगमुद्वर्तनमुष्णोदकेनक्षालनंचकृत्वापुनश्चतुर्भिःकलशैःसमुद्रज्येष्ठाइत्यादिअभिषेकमंत्रैःचतुर्भिःक्रमेणाभिषिच्य औदुंबरादिपीठेदेव-
मुपवेश्यपरितोऽष्टदिक्षुसजलकुंभान्पूर्वादिक्रमेणसंस्थाप्यतेषुगंधपुष्पदूर्वाःक्षिप्त्वा । प्रथमकुंभेसप्तमृदः ॥ १ ॥ द्वितीयेपल्लवान् ॥ २ ॥

तृतीयेसप्तधान्यंकुशांश्च ॥ ३ ॥ चतुर्थेपंचरत्नंशांत्युदकंच ॥ ४ ॥ पंचमेफलपुष्पाणिप्रवणोदकंवा ॥ ५ ॥ षष्ठेयवान् ॥ ६ ॥ सप्तमेसंपातो-
दकं ॥७॥ अष्टमेसर्वौषधीःनिक्षिप्य ॥८॥ ॐआपोहिष्ठामयोभुवइतितिसृभिः । ॐहिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोयास्विन्द्रः ॥
अग्निंयागर्भंदधिरेविरूपास्तानऽआपःशꣳस्योनाभवंतु ॥ १ ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानाम् ॥ मधुश्चुतःशुच-
योयाःपावकास्तानआपःशꣳस्योनाभवंतु ॥ २ ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तान-
आपःशꣳस्योनाभवंतु ॥ ३ ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वाꣳअग्नीꣳरप्सुषदोहुवेवोमयिवर्चोबलमोजो-
निधत्त ॥ ४ ॥ इतिचतुष्टयेनच । पवमानः सुवर्जनइत्यनुवाकेनपूर्वोक्तेनसंस्नाप्य वाससीपरिधायोपवीतंदत्वा गंधपुष्पधूपदीपैःसंपूज्य ।
ॐहिरण्यगर्भइत्यष्टाभिःपिष्टदीपैर्नीराज्य सुवर्णादिपात्रेमधुघृतंगृहीत्वाहिरण्यशलाकया ॐचित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः॥
इत्यर्धेन ॐतेजोसिशुक्रमस्यमृतमसिधामनामासि प्प्रियंदेवानामनाधृष्टंदेवयजनमसि ॥ इतिमंत्रेणच । ॐनमोभगवतेतुभ्यंशिवायहरये-
नमः ॥ हिरण्यरेतसेविष्णोविश्वरूपायतेनम इतिच ॥ दक्षिणसव्येनेत्रेमंत्रावृत्त्यालिखेत् । तत ॐअंजंतित्वामध्वरइतिअंजनेनअंजयित्वा
पुनःमधुघृतशर्कराभिः । ॐदेवस्यंत्वासवितुःप्रसवे० इतिमंत्रेणांजयेत् । अंजनेनपुनरंजयेत् । ततोभक्ष्यभोज्यादर्शादिदर्शयेत् ( तदाऽग्रेको-
पिनतिष्ठेत् ) अत्रकर्ताचार्यादिभ्योदक्षिणांदद्यात् ततःपुरुषसूक्तेनस्तुत्वा वंशपात्रेपंचवर्णान्वितमन्नंप्रक्षिप्यदेवंनीराजयित्वारुद्रायचतुष्पथे-
दद्यात् ॥ मंत्रस्तु ॐनमोरुद्रायसर्वभूताधिपतयेदीप्तशूलधरायोमादयितायविश्वाधिपतयेरुद्रायवैनमोनमः शिवमगाहितंकर्मास्तुस्वाहा

अश्वत्थपर्णेभूतेभ्योनमः ॥ इतिबलिंदत्वाचामेत् ॥ ततोमंडलस्थदेवान्गंधादिभिःसंपूज्य मंडलमध्येसुप्रतिष्ठितोभवेतिदेवंनिवेश्यगंधाद्यैः संपूज्य ॥ कुंडेमंडलदेवानांनामभिस्तिलाज्येनदशदशाहुतीर्हुत्वापुष्पांजलिंसमर्प्यनत्वा मंडलादुत्तरतः स्वस्तिकेमंचकंतदुपरिशय्यांकृत्वा । ॐउत्तिष्ठब्रह्मणस्पते इतिदेवमुत्थाप्यमंगलघोषैः शय्यायामुपवेश्य । ॐसहस्रशीर्षाइत्यादिपुरुषसूक्तेन । उत्तरनारायणेनचस्तुत्वादेवेन्यासंकुर्यात् ॥ तद्यथा । पुरुषात्मनेनमः । प्राणात्मनेनमः । प्रकृतितत्वायनमः । बुद्धितत्वायनमः । अहंकारतत्वायनमः । मनस्तत्वायनमः । इतिसर्वांगेषु । प्रकृतितत्वायनमोहृदि । रसतत्वायनमोबस्तौ । गंधतत्वायनमः पादयोः । श्रोत्रतत्वायकर्णयोः । त्वक्तत्वायसर्वशरीरे । चक्षुस्तत्वायचक्षुषोः । जिह्वातत्वायजिह्वायां । घ्राणतत्वायघ्राणे । वाक्तत्वायवाचि । पाणितत्वायपाण्योः । पादतत्वायपादयोः । पायुतत्वायपायौ । उपस्थतत्वायोपस्थे । पृथ्वीतत्वायपादयोः । अप्तत्वायबस्तौ । तेजस्तत्वायहृदि । वायुतत्वायघ्राणे । आकाशतत्वायशिरसि । रजस्तत्वायतमस्तत्वायसत्वतत्वाय देहतत्वाय इतिदेहे ॥ इति तत्वन्यासंकृत्वापुरुषसूक्तन्यासंकुर्यात् ॥ ॐसहस्रशीर्षापुरुषः ॥ १ ॥ ॐपुरुषऽएवेदं ॥ २ ॥ इतिकरयोः । एतावानस्य० ॥ ३ ॥ त्रिपादूर्ध्वेतिपादयोः ॥ ४ ॥ ततोविराडजायत० ॥ ५ ॥ तस्माद्यज्ञात्सर्वहुतःइतिजान्वोः ॥ ६ ॥ तस्माद्यज्ञात्सर्वहुतऽऋचः ॥ ७ ॥ तस्मादश्वेतिकट्योः ॥ ८ ॥ तंयज्ञमितिनाभौ ॥ ९ ॥ यत्पुरुषंव्यदधुः० हृदि ॥ १० ॥ ब्राह्मणोस्येतिकंठे ॥ ११ ॥ चंद्रमामनस० ॥ १२ ॥ नाभ्याऽआसीदिति० बाह्वोः ॥ १३ ॥ यत्पुरुषेणेतिमुखे ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिरित्यक्ष्णोः ॥ १५ ॥ यज्ञेनयज्ञमितिशिरसि ॥ १६ ॥ इतिपुरुषसूक्तन्यासंकृत्वा ततःसुखशायीभवेतिश-

य्यायांदेवंस्थापयित्वासंपूज्यांधिवासयेत् ॥ (ततोमंडलशय्ययोर्मध्येनगंतव्यम्) ततोमंडलदेवतानामुपहारनिवेदनंकुर्यात् । तत्रब्रह्मणेसर्वान्नं । इंद्रायघृतान्नंसोदकं । अग्नयेआज्यान्नं । यमायमाषान्नं । निर्ऋतयेकृष्णव्रीह्यन्नंसघृतं । वरुणायनवनीतौदनं । वायवेयवौदनं । कुबेरायप्रैयंगवं । ईशानायपायसं । सर्वेभ्योवापायसं । ततः (शय्याप्रवेशे) नैवारंचरुंस्थापयित्वातेनमंडलदेवताभ्योबलीन्दत्वारात्रिंनयेदित्यधिवासनं । ततःप्रातररुणोदयेदेवमुत्थाप्य मूलमंत्रेणोपस्थायचरुंश्रपयित्वाघृतेनाभिघार्यप्रधानदेवमंत्रेणाष्टोत्तरसहस्रमष्टशतंवाहुत्वा । अग्नयेस्वाहा । सोमायस्वाहा । धन्वंतरयेस्वाहा । कुह्वैस्वाहा । अनुमत्यैस्वाहा । प्रजापतयेस्वाहा । परमेष्ठिने० । ब्रह्मणे० अग्नयेसोमाय० । अग्नयेऽन्नाय० । अग्नयेऽन्नपतये० । प्रजापतये० । विश्वेभ्योदेवेभ्यः । सर्वेभ्योभूतेभ्यः । भूर्भुवःस्वःअग्नये स्विष्टकृतेस्वाहा । इतिजुहुयुः ॥ उदितेसूर्येगुरुर्वैद्यामेवदेवमभिमुखंकृत्वा रत्नपुष्पमूलफलौषध्यादिदर्शयित्वा ताम्रपात्रे शांतिजलमादायप्रधानदेवमंत्रेणशतवारंदशवारंवाभिमंत्र्य देवशिरसि अभिषिच्य ॥ ॐउत्तिष्ठब्रह्मणस्पतेइत्युत्थाय ॥ ॐविश्वतश्चक्षुरित्युपस्थायदेवस्यपुरस्तात् जपेत् ॥ ॐब्रह्मविष्णुरुद्रेभ्योनमः । दिक्पालेभ्योनमः । वसुभ्योनमः । रुद्रेभ्योनमः । आदित्येभ्योनमः । अश्विभ्यांनमः । मरुद्भ्योनमः । कुबेरायनमः । गंगादिमहानदीभ्योनमः । अग्नीषोमाभ्यांनमः । द्यावापृथिवीभ्यांनमः । इंद्राग्निभ्यांनमः । धन्वंतरयेनमः । सर्वेशायनमः । विश्वेभ्योदेवेभ्योनमः । ब्रह्मणेनमः । इतिजपित्वा देवस्यपुरतोयजमानमभिषिच्यदेवमंत्रंजप्त्वादेवंध्यात्वा । प्रतिष्ठितपरमेश्वरायनमइतिपुष्पांजलिंदत्वा ध्रुवसूक्तेनप्रधानदेवमंत्रेणपुरुषसूक्तेनगायत्र्यान्याहृतिभिर्देवअर्चायांप्रतिष्ठाप्यप्राणप्रतिष्ठांकुर्यात् । यथा । अस्यश्रीप्राणप्रतिष्ठामंत्र-

स्यब्रह्मविष्णुरुद्राऋषयःऋग्यजुःसामानिछंदांसिक्रियामयवपुः प्राणाख्यादेवताआंबीजं क्रोंशक्तिः प्राणप्रतिष्ठायांविनियोगः । ब्रह्मविष्णु-रुद्रऋषिभ्योनमःशिरसि । ऋग्यजुःसामछंदोभ्योनमःमुखे । प्राणाख्यदेवतायैनमोहृदि । आंबीजायनमोगुह्ये । क्रोंशक्त्यैनमःपादयोः । ॐकंखंगंघंङं आंपृथिव्यप्तेजोवाय्वाकाशात्मने आंहृदयायनमः । ॐचंछंजंझंञं इंशब्दस्पर्शरूपरसगंधात्मने ईंशिरसेस्वाहा । ॐटंठंडंढंणं उंश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊंशिखायैवषट् । ॐतंथंदंधंनं एंवाक्पाणिपादपायूपस्थात्मने ऐंकवचायाहुं । ॐपंफंबंभंमं ओंवचना-दानगतिविसर्गानंदात्मने औंनेत्रत्रयायवौषट् । ॐयंरंलंवंशंषंसंहंळंक्षं ॐमनोबुद्ध्यहंकारचित्तात्मने अःअस्त्रायफट् । एवमात्मनिदेवे-चकृत्वा । देवंस्पृष्ट्वाजपेत् । ॐआंह्रींक्रोंयंरंलंवंशंषंसंहंसःदेवस्यप्राणाइहप्राणाः । ॐआंह्रींक्रोंयंरंलंवंशंषंसंहंसःदेवस्यजीवइहस्थितः । ॐआंह्रींक्रोंयंरंलंवंशंषंसंहंसःदेवस्यसर्वेन्द्रियाणि० । ॐआंह्रींक्रोंयंरंलंवंशंषंसंहंसःदेवस्यवाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाइहागत्यस्वस्तयेसुखे-नसुचिरंतिष्ठंतुस्वाहा ॥ प्रतिमायाःलिंगस्यवाहृद्यंगुष्ठंदत्वाजपेत् । अस्यैप्राणाःप्रतिष्ठंतुअस्यैप्राणाश्चरंतुच । अस्यैदेवत्वमर्चायैमामहेतिचक-श्चन ॥ १ ॥ प्रणवेन सन्निरुद्ध्यसजीवंध्यात्वा ॥ ॐध्रुवाद्यौर्ध्रुवापृथिवीध्रुवंविश्वमिदंजगत् ॥ ध्रुवाश्चेमेनगाःसर्वेध्रुवाःपतिकुलेस्त्रियइत्यृचंज-प्त्वा कर्णेगायत्रींदेवमंत्रंचजप्त्वापुरुषसूक्तेनस्तुत्वापादनाभिशिरःस्पृष्ट्वाप्रार्थयेत् ॥ स्वागतंदेवदेवेशमद्भाग्यात्त्वमिहागतः ॥ प्राकृतंत्वमदृ-ष्ट्वामांबालवत्परिपालय ॥ १ ॥ धर्मार्थकामसिद्ध्यर्थंस्थिरोभवशिवायनः ॥ सान्निध्यंतुमहादेवस्वार्चायांपरिकल्पय ॥ २ ॥ यावच्चंद्रावनी-सूर्यास्तिष्ठंत्यप्रतिघातिनः ॥ तावत्त्वयात्रदेवेशस्थेयंभक्तानुकंपया ॥ ३ ॥ भगवन्देवदेवेशत्वंपितासर्वदेहिनां ॥ येनरूपेणभगवंस्त्वयाव्याप्तं

चराचरं ॥ तेनरूपेणदेवेशअर्चायासन्निधोभवेतिनमेत् ॥ ततःपुरुषसूक्तेनषोडशोपचारैःसंपूज्य कंकणंविसृज्यप्रतिमायांनिजवाहनायुधपरि-
वारादिकंध्यात्वापुनः पूजयित्वामुद्रांप्रदर्श्यमूलमंत्रमष्टोत्तरशतंजपित्वास्तुत्वानत्वाचम्य स्विष्टकृदादिपूर्णाहुतिपर्यंतकर्मसमाप्याचार्यायद्वाद-
शतिस्रएकांवागांदत्वाऋत्विग्भ्योदक्षिणांदत्वाशतंविंशतिंवाविप्रान्भोजयेत् ॥ अन्यत्सर्वंपूर्ववज्ज्ञेयं ॥ इतिचलप्रतिष्ठाप्रयोगः अथजीर्णोद्धा-
रविधिः । यजमानःशुभदिनेउद्धार्याद्दक्षिणस्यामीशान्यांवापश्चिमद्वारैकतोरणंमंडपंविधाय तन्मध्यभागेवर्तुलांचतुरस्रांवावेदींतत्पश्चिमेवा-
स्तुपीठमुत्तरेवालुकायाःस्थंडिलंचकृत्वा । देशकालौसंकीर्त्य अमुकशर्माऽहंईश्वरप्रीतिकामोजीर्णादिदोषदुष्टलिंगस्यप्रतिमायावाजीर्णोद्धारं-
करिष्य इतिसंकल्प्य । गणेशपूजास्वस्तिवाचनमातृकापजननांदीश्राद्धादिनूतनप्रतिष्ठावत्कृत्वा ॥ तद्वदेवाचार्यादीन्वृत्वावस्त्रालंकारमधु-
पर्कादिभिस्तान्पूजयित्वा मंडपप्रतिष्ठांवास्तुपूजनंसर्वतोभद्रादिदेवान्संस्थाप्य पीठादौप्रणवेनासनपूजनंकृत्वा ॥ ॐव्यापकेश्वरायएह्येहिनमः ।
ॐव्यापकेश्वरायहृदयायनमः । ॐव्यापकेश्वरायशिरसेस्वाहा । ॐव्यापकेश्वरायशिखायैवषट् । ॐव्यापकेश्वरायकवचायहुं । ॐव्यापके-
श्वरायअस्त्रायफट् । इतिमंत्रैःशिवंपूजयेत् । अन्यदेवतोद्धारेमूलमंत्रेणार्चयेत् । अघोरेतिमंत्रमष्टोत्तरशतंजप्त्वा । अग्निंसंस्थाप्याज्यभागांतं
हुत्वा । लिंगचालनार्थंलिंगमंत्रेण अघोरेणचतिलाहुतिसहस्रंहुत्वा मंडलदेवताहोमंकृत्वा इंद्रादिभ्योनाम्नाबलिंदत्वा जीर्णंदेवंप्रणवेनसं-
पूज्यप्रार्थयेत् ॥ जीर्णभग्नमिदंदेवसर्वदोषावहंनृणां ॥ अस्योद्धारेकृतेशांतिःशास्त्रेस्मिन्कथितात्वया ॥ जीर्णोद्धारविधानंचनृपराष्ट्रविवर्धनं ॥
तदत्राधिष्ठितंदेवंप्रोद्धरामितवाज्ञया ॥ इतिदेवस्यजीर्णदोषंश्रावयित्वा ॥ क्षीराज्यमधुदूर्वासमिद्भिर्देवमंत्रेणाष्टोत्तरशतंहुत्वातिलैःसहस्रंपायसे-

नशतंचहुत्वालिंगंप्रार्थयेत् ॥ लिंगरूपंसमागत्ययेनेदंसमधिष्ठितं ॥ यायास्त्वंसंमितंस्थानंसंत्याज्यैवशिवाज्ञया ॥ १ ॥ अत्रस्थानेचयाविद्या-
सर्वविद्येश्वरैर्युता ॥ शिवेनसहसंतिष्ठेतिमंत्रितजलेनाभिषिच्यविसर्जयेत् ॥ शिल्पियुतःशिवंसांगंविसृज्य । सौवर्णखनित्रेणखात्वालिंगमा-
दायरथमारोप्यवामदेवायनमइतिनद्यादौक्षिपेत् ॥ प्रतिमांतुप्रणवेनक्षिपेत् ॥ दारुजंमधुनाभ्यज्याघोरेणदहेत् । हेमादिमयंयोग्यंकृत्वातद्देव-
पूर्ववत्स्थापयेत् । प्रासादेत्वयंविशेषः । प्रासादंमंत्रवत्खड्गेनछूरिकयावासंयोज्यनूतनप्रासादसिद्धिपर्यंतंखड्गादिकमर्चयित्वा प्रासादेसिद्धे
खड्गादिमंत्रान्यथास्थानंप्रतिष्ठाकालेन्यस्ययजमानमभिषिंच्य। ततोलिंगंप्रतिमांवातत्रैवविधिनासंस्थाप्य ध्रुवाद्यौरित्यादिमंत्रान्पठित्वास्थिरी-
कृत्यबहुसंपूज्यप्रार्थयेत् ॥ भगवन्भूतभव्येशलोकनाथजगत्पते ॥ जीर्णलिंगसमुद्धारःकृतस्तेचाज्ञयामया ॥ १ ॥ अग्निनादारुजंदग्धंक्षि-
प्तंशैलादिकंजले ॥ प्रायश्चित्तायदेवेशअघोरास्त्रेणतर्पितम् ॥ २ ॥ ज्ञानतोऽज्ञानतोवापियथोक्तंनकृतंयदि ॥ तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादान्म-
हेश्वर ॥ ३ ॥ कर्तूराज्ञःप्रजानांचशांतिर्भवतुसर्वदा ॥ अस्माकंशिल्पिनांचैवसुप्रीतोभवसर्वदा ॥ ४ ॥ इतिनत्वा ॥ पूर्णाहुत्यंतंसमाप्याचा-
र्यादिभ्योदक्षिणांदत्वादेवान्विसृज्यब्राह्मणान्भोजयेत् । एषसंक्षेपतःप्रोक्तोजीर्णोद्धारविधिस्तव ॥ सर्वेषामेवदेवानामेषसाधारणःस्मृतः ॥ १ ॥
योजीर्णविधिनाबिंबंसंस्कुर्यान्मानवोभुवि ॥ फलंदशगुणंतस्यमूलान्नास्त्यत्रसंशयः ॥ २ ॥ वापीकूपतडागानांसुरधाम्नांसदानघ ॥ प्रति-
मानांसभानांचसंस्कर्तायोनरोभुवि ॥ ३ ॥ पुण्यंशतगुणंतस्यभवेन्मूलान्नसंशयः ॥ संशयोत्रनकर्तव्योजीर्णसंस्कारकर्मणि ॥ ४ ॥ मूलाद्द-
शगुणंप्रोक्तंपुण्यंकूपेप्रतिष्ठिते ॥ प्रतिमायांशतगुणंकूपादेःपरिकीर्तितं ॥ प्रतिमादेर्दशगुणंजीर्णसंस्करणाद्भवेत् ॥ स्फुटितविशीर्णश्वपचसेवि-

तानालिंगानांतादृशीनांबाहुपादशिरःकर्णनासास्यहीनांविध्युक्तप्रकारेणचालनंजलादौप्रतिपादनंचकृत्वानूतनप्रकारेणतस्मिन्नेवस्थानेपूर्वस-
जातीयद्रव्यनिर्मितंतन्मानंतदाकारंलिंगंतादृशींप्रतिमांचस्थापयेत् ॥ निषिद्धदूषितनिषिद्धजलमद्यस्पृष्टविप्रक्षतजदूषितपतिताद्यर्चितश्लेष्म-
विण्मूत्रादिदूषितानांस्वस्थानस्थितानामेवपुनःसंस्कारोनोद्धारोनापिप्रतिपत्तिः । ताम्रादिधातुमूर्तीनांचोरचांडालादिस्पर्शेताम्रादिधातुशुद्धिं
कृत्वापुनःप्रतिष्ठा । अर्चाभंगादौतद्दिनेउपवासः॥इतिजीर्णोद्धारविधिः॥अनेनमहेशःप्रीयतां॥इति श्रीप्रतिष्ठाप्रकाशेसप्तमपरिच्छेदःसमाप्तः७।
श्रीगणेशायनमः ॥ अथसर्वदेवप्रतिष्ठाङ्गभूतंचतुर्थीकर्म । तच्चतुर्थदिनेद्वितीयदिनेवाकुर्यात् ॥ तत्र आचार्योमूर्तिपयजमानद्वारपालादिभिः
सह मंडपंपश्चिमद्वारेणप्रविश्यस्नानसंभारादिकमुपकल्प्यगणपत्यादिस्मरणंविधायाऽग्निस्थापनंकुर्यात् । तत्रक्रमः कुंडंस्थंडिलंवाकुशैः परिस-
मूह्यतान्कुशानैशान्यांपरित्यज्य गोमयोदकेनोपलिप्यस्फ्येनस्रुवेणवाप्रागग्रप्रादेशमात्रंत्रिरुत्तरोत्तरक्रमेणोल्लिख्य उल्लेखनक्रमेणाऽनामि-
काङ्गुष्ठाभ्यांमृदमुद्धृत्यजलेनाभ्युक्ष्य तत्र ॐअग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ २ आसादयादिहेतिमंत्रेणाग्निंस्वाभिमुखंनिदध्यात्
ततः पुष्पचंदनतांबूलवस्त्राण्यादाय । ॐअद्यकर्त्तव्यचतुर्थीहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः
पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेनत्वामहंवृणे इतिब्रह्माणंवृणुयात् एवंहोतारमपिवृणुयात् ॐवृतोस्मीतिप्रतिवचनं । यथाविहितंकर्मकुर्वि-
तियजमानोक्तेः । करवाणीतिब्राह्मणोवदेत् ततोग्नेर्दक्षिणतः शुद्धमासनंदत्त्वा तदुपरिप्रागग्रान् कुशानास्तीर्य उदङ्मुखंब्राह्मणं तदभावे-
पंचाशाकुशनिर्मितमुपवेशयेत् ॥ ततः प्रणीतापात्रंपुरतः कृत्वावारिणापरिपूर्यकुशैराच्छाद्यब्रह्मणोमुखमवलोक्याग्नेरुत्तरतःकुशोपरिनिद-

ध्यात् । ततः परिस्तरणं । बर्हिषश्चतुर्थभागमादाय आग्नेय्यादीशानांतं ब्रह्मणोग्निपर्यंतं नैर्ऋत्याद्वायव्यात । अग्नितःप्रणीतापर्यंतं । ततो-ऽग्नेरुत्तरतः पश्चिमदिशिपवित्रछेदनार्थंकुशत्रयं पवित्रकरणार्थंसाग्रमनंतर्गर्भंकुशपत्रद्वयंप्रोक्षणीपात्रं । आज्यस्थालीचरुस्थाली । संमार्जन-कुशत्रयं । उपयमनार्थंवेणीरूपकुशत्रयं । समिधस्तिस्रः । स्रुवः । आज्यं । तंडुलपूर्णपात्रं । एतानिपवित्रछेदनकुशानांपूर्वंपूर्वंदिशिक्रमे-णासादनीयानि । ततः पवित्रछेदनकुशैः पवित्रेछित्वाप्रादेशमितपवित्रकरणं ततः सपवित्रकरेणप्रणीतोदकंत्रिःप्रोक्षणीपात्रेनिक्षिप्यत्रिरु-त्पवनं ततः प्रोक्षणीपात्रस्यसव्यहस्तकरणं पवित्रेणत्रिरुद्दिंगनं प्रणीतोदकेनप्रोक्षणीप्रोक्षणं । प्रोक्षणीजलेनयथासादितवस्तुसेचनं । ततो-ग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रंनिधाय । आज्यस्थाल्यामाज्यनिर्वापः । ततोधिश्रयणं । ततोज्वलत्तृणादिनाहविर्वेष्टयित्वा प्रदक्षिणक्रमेण-पर्यग्निकरणं ततोऽधोमुखस्यस्रुवस्यप्रतपनं । संमार्जनकुशानामग्रैरंतरतः । मूलैर्बाह्यतः स्रुवसंमार्जनं प्रणीतोदकेनाभ्युक्ष्यपुनःप्रतप्य-स्रुवंदक्षिणतोनिदध्यात् । तत आज्यस्याग्नेरवतारणं तत आज्यं प्रोक्षणीवदुत्पवनं अवेक्ष्यसत्यपद्रव्येतन्निरसनं पुनः प्रोक्षण्युत्पवनं उप-यमनकुशान्वामहस्तेकृत्वाउत्तिष्ठन्प्रजापतिंमनसाध्यात्वा तूष्णीमग्नौघृताक्ताःसमिधस्तिस्रःक्षिपेत् तत उपविश्य प्रोक्षणीजलेनाग्निंपर्यु-क्ष्यपवित्रंप्रणीतापात्रेन्निधायब्रह्मणान्वारब्धः पातितदक्षिणजानुर्जुहुयात् ( तत्राघारादारभ्याहुतिचतुष्टयेतत्तदाहुत्यनंतरंस्रुवावस्थिताज्यंप्रो-क्षणीपात्रेक्षिपेत् ) ॐप्रजापतयेस्वाहा इदंप्रजापतये० ( इतिमनसा ) ॐइंद्रायस्वाहा इदमिंद्राय० ( इत्याघारौ ) ॐअग्नयेस्वाहा इदमग्नये० ॐसोमायस्वाहा इदंसोमाय० । ( इत्याज्यभागौ ) हुत्वा स्थापितदैवत्यचरुणा पंचब्रह्मभिरंगसहितैः सहस्राहुतिहोमंकुर्यात् । ( शिवप्र-

तिष्ठायांब्रह्ममंत्रायथा ) ॐईशानःसर्वविद्यानामीश्वरःसर्वभूतानाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेऽअस्तुसदाशिवोमस्वाहा
इदंशिवाय ॥ १ ॥ ॐतत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् स्वाहा इदंशिवाय ॥ २ ॥ ॐअघोरेभ्योथघोरेभ्योघोर-
घोरतरेभ्यः ॥ सर्वेभ्यःसर्वसर्वेभ्योनमस्तेऽअस्तुरुद्ररूपेभ्यः स्वाहा इदं शिवाय० ॥ ३ ॥ ॐवामदेवायनमोज्येष्ठायनमः श्रेष्ठायनमोरुद्रा-
यनमः कालायनमः कलविकरणायनमो बलविकरणायनमः स्वाहा इदंशिवाय० ॥ ४ ॥ ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः ।
भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः स्वाहा इदंशिवाय० ॥ ५ ॥ इतिपंचब्रह्ममंत्राः ॥ अथांगमंत्रा । ॐअद्भ्यःसंभृतःपृथिव्यैरसा-
च्चविश्वकर्मणःसमवर्त्तताग्रे । तस्यत्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्वमाजानमग्रेस्वाहा इदंशिवाय० ॥ १ ॥ ॐवेदाहमेतम्पुरुषम्म-
हान्तमादित्यवर्णन्तमसःपरस्तात् ॥ तमेवविदित्वातिमृत्युमेतिनान्यःपंथाविद्यतेयनाय स्वाहा इदंशिवाय० ॥ २ ॥ ॐप्रजापतिश्चरति-
गर्भेअन्तरजायमानोबहुधाविजायते ॥ तस्ययोनिम्परिपश्यन्तिधीरास्तस्मिन्हतस्थुर्भुवनानिविश्वास्वाहा ॥ इदं० ॥ ३ ॥ ॐयोदेवेभ्य-
आतपतियोदेवानाम्पुरोहितः ॥ पूर्वोयोदेवेभ्योजातोनमोरुचायब्राह्मये स्वाहा इदं० ॥ ४ ॥ ॐरुचंब्राह्मञ्जनयन्तोदेवाऽअग्रेतदब्रुवन् ॥
यस्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवाऽअसन्वशेस्वाहा इदंशिवाय० ५ ( इत्यंगमंत्राः ) ततोघृतेनतिलैर्वागौरीर्मिमायेतिमंत्रेणाष्टोत्तरशतंतत्प-
त्न्यैजुहुयात् । ॐगौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीपभूवुषीसहस्राक्षरापरमेव्योमन् स्वाहा १
इदंगौर्यै १०८ ( इतिशिवस्यचतुर्थीकर्म ( एवमन्यदेवविषयेपिपर्ववत्स्थापितदेवानांयंत्रंस्थापयित्वास्वमंत्रैः पत्नीमंत्रैश्चसहस्रमष्टोत्तरशतं- ॥१२१॥

वाहोमंकुर्यात् तद्यथा । विष्णुप्रतिष्ठायां । ॐइदम्विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳪसुरेस्वाहा इदंविष्णवे० १ ॐविष्णो-
रराट० । २ ॐनारायणायविद्महे वासुदेवायधीमहि तन्नोविष्णुःप्रचोदयात् स्वाहा इदंविष्णवे० ॥ ३ ॥ (अंगमंत्राःपूर्वोक्ताः) पत्नीमं
त्रस्तु ॐश्रीश्चतेलक्ष्मीश्चेति० । इदंलक्ष्म्यै० (सूर्यप्रतिष्ठायांतु) ॐआकृष्णेनरजसाइत्यादिभिः । पत्नीमंत्रस्तु ॐउषस्तच्चित्रमाभरास्म-
भ्यंवाजिनीवति ॥ येनतोकञ्चतनयञ्चधामहेस्वाहाइदं प्रभायै० इति । (गणेशप्रतिष्ठायां) ॐगणानांत्वा० नमोगणेभ्योगणपति० गणे-
शगायत्र्या० (इत्यादिभिः) (अंगमंत्रास्तुसर्वेषांपूर्वोक्ताएव) ततोहोमांतेगुरुः शालितोयेनमूर्तिंसिक्त्वानिर्माल्यमपसार्य पुनः पूज-
यित्वा एकाशीतिघटान् अष्टौचतुरोवासौवर्णान्राजतान्ताम्रान् सर्वाभावेमृन्मयान्वोपकल्प्य तेषु ॐशन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥
शंय्योरभिस्रवंतुनः ॥ १ ॥ ॐआपोहिष्ठामयोभुवस्तानऽऊर्जेदधातन ॥ महेरणायचक्षसे १ ॐयोवःशिवतमोरसस्तस्यभाजयतेहनः ॥
उशतीरिवमातरः ॥ २ ॥ ॐतस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ ३ ॥ एभिर्मंत्रैरुद्धृतंतीर्थजलंप्रक्षिप्य ।
मृन्नोमयक्षीरदधिमधुघृतशर्करौषधिपुष्पफलकुशरत्नगंधपंचगव्यादिकंप्रक्षिपेत् । ततः ॐसमुद्रंवःप्रहिणोमिस्वांयोनिमधिगच्छतअरिष्टास्मा-
कंवीरामापरासेचिमत्पयइतिमंत्रेणदेवायार्घ्यंसमर्प्यस्नापयेत् तद्यथा । पंचनद्यइतिपंचगव्येन ॐपंचनद्यःसरस्वतीमपियन्तिसस्रोतसः ॥
सरस्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ १ ॥ दधिक्राव्णइतिदध्ना । ॐदधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखा-
करत्प्रणऽआयूᳪषितारिषत् ॥ १ ॥ आप्यायस्वेतिक्षीरेण । ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ ३ ॥

तेजोसीतिघृतेन । ॐतेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवानामनाधृष्टंदेवयजनमसि ॥ ४ ॥ मधुवातेतिमधुना । ॐमधु-
व्वाताऽऋतायतेमधुक्षरन्तिसिंधवः ॥ माध्वीर्न्नःसंत्वोषधीः । ४ । देवस्यत्वेतिपुष्पोदकेन । ॐदेवस्यत्वासवितुःप्प्रसवेश्विनोर्ब्बा-
हुभ्यांम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैव्वाचोयन्तुर्य्यंत्रेणाग्नेःसाम्राज्येनाभिषिंचामि ॥ ५ ॥ परिवाजपतिरितिरत्नोदकेन । ॐपरिवाज-
पतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधुद्रत्नानिदाशुषे ॥ ६ ॥ देवस्येतिकुशोदकेन ॥ ७ ॥ अग्नआयाहीतिफलोदकेन । ॐअग्नआयाहिव्वी-
तयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ ८ ॥ समुद्रज्येष्ठा इतिशीतजलेन । ॐसमुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविश-
मानाः ॥ इंद्रोयावज्रीवृषभोरराद्ताआपोदेवीरिहमामवंतु ॥ ९ ॥ वसोःपवित्रमसीतिसहस्रधाराकुंभेन । ॐव्वसोःपवित्रमसिशतधारंवसोः
पवित्रमसिसहस्रधारं ॥ देवस्त्वासवितापुनातुव्वसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ १० ॥ इतिमंत्रस्नानं । ततस्तूष्णींस्नपनम् ततः
अंधस्थांधोवोइतिपंचवर्णसूत्रेणनीराज्यवलिंहरेत् । ॐअंधस्त्थान्धोवोभक्षीयमहस्त्थमहोवोभक्षीयोर्ज्जस्त्थोर्ज्जंव्वोभक्षीयरायस्प्पोषस्त्थरायस्प्पो-
षंव्वोभक्षीय ॥ ११ ॥ मुंचंतुमाशपथ्यादितिकौतुकंविमुच्य । ॐमुंचंतुमाशपत्थ्यादथोवरुण्यादुत ॥ अथो यमस्यपड्वीशात्सर्वस्माद्देवकि-
ल्बिषात् ॥ सूक्ष्मवस्त्रेणपंचनद्यइतिदेवंपरिमार्ष्टि । ॐपंचनद्द्यःसरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित् । १ ।
तत ॐमंदाकिन्यास्तुयद्वारिसर्वपापहरंशुभं ॥ तदिदंकल्पितंदेवसम्यगाचम्यतांत्वया ॥ इत्याचमनीयंनिवेदयेत् । ॐदेवसूक्तसमायुक्तेसर्व-
यज्ञसमन्विते ॥ सर्ववर्णप्रदेदेववाससीप्रतिगृह्यतां ॥ इतिवस्त्रयुग्मंनिवेदयेत् । शरीरंतेनजानामिचेष्टांनैवचनैवच ॥ मयानिवेदितंभक्त्या-

चंदनंप्रतिगृह्यतामितिकुंकुमकर्पूरकस्तूरीयुक्तंचंदनं । मणिमुक्ताप्रवालाद्यैःस्वर्णपुष्पैर्मयाकृता ॥ पूजातुदेवदेवेशप्रसादाद्भवतस्तव ॥ इतिपु-
ष्पपत्रतुलसीदलानिनिवेदयेत् । वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः ॥ आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां इतिधूपं । त्वंचंद्रस्त्वंरविर्वि-
ष्णुस्त्वंरत्नानिहुताशनः ॥ त्वमेवसर्वज्योतींषिदीपोयंप्रतिगृह्यतां इतिदीपं । नैवेद्यंगृह्यतांदेवमेभक्तिंह्यचलांकुरु ॥ ईप्सितंचवरंदेहि परत्र-
चपरांगतिं इतिनैवेद्यम् । ततोऽशीत्याचत्वारिंशतावादीपैर्निराजनंकृत्वाभूषणानिसमर्प्य पूर्वकृतंहोमंनिवेद्यप्रार्थयेत् । यन्मयाभक्तियुक्ते-
नपत्रंपुष्पंफलंजलं ॥ आवेदितंचनैवेद्यंतद्गृहाणानुकंपया ॥ १ ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर ॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे
॥ २ ॥ इति । ततःपुनरष्टोत्तरसहस्रंशतंवाप्रधानदेवमंत्रेणहुत्वा ॐप्रजापतयेस्वाहा इदंप्रजापतये० ॥ ॐअग्नयेस्विष्टकृतेस्वाहा इदमग्नये-
स्विष्टकृते० ॥ इतिस्विष्टकृदंतंहुत्वा व्याहृतिहोमंत्वन्नोऽअग्नेइत्यादिपंचवारुणहोमंचकृत्वा पूर्णाहुतिंकुर्यात् । ॐमूर्द्धानंदि॒वोअ॑र॒तिंपृ॑थि॒व्या वै॑-
श्वान॒रमृ॒तऽआजा॒तम॒ग्निम् ॥ क॒विꣳसं॒म्राज॒मति॑थिं॒जना॑नामा॒सन्नापात्रं॑जनयंतदे॒वाः॑स्वाहा ॥ इतिपूर्णाहुतिः ॥ ततोदेवागातुइतिमंत्रेणब-
र्हिहोमंकुर्यात् ततः संस्रवप्राशनंआचमनंच । ॐसुमित्रियानइतिपवित्राभ्यांप्रणीताजलेनशिरःसंमृज्य पवित्रेअग्नौप्रक्षिप्य ॐदुर्मित्रिया-
रितीशान्यांप्रणीतान्युब्जीकरणं ततोब्रह्मणेपूर्णपात्रदानंब्रह्मग्रंथिविमोकश्चततःस्रुवेणभस्मानीयदक्षिणानामिकाग्रगृहीतभस्मना ॐत्र्या॒यु॒षं-
ज॒मद॑ग्नेःइतिललाटे । ॐक॒श्यप॑स्यत्र्यायु॒षमितिग्रीवायां । ॐयद्दे॒वेषु॑त्र्यायु॒षंइतिदक्षिणांसे । तन्नो॑ऽअस्तुत्र्यायु॒षं इति हृदये । इत्यग्निकर्म ।
ततः स्वस्तिवाचनंकारयित्वा इंद्रादिभ्योमाषभक्तबलिंदत्वाचम्यशेषंसमापयेत् ॥ इतिचतुर्थीकर्म ॥ ततः शिवप्रतिष्ठायां चंडकीर्तिमुखस्था-

॥१२३॥ पनम् । चतुर्थीकर्मदिनेदिनांतरेवा प्रासादाद्बहिर्गर्भगृहार्धसूत्रांतरालेईशान्यांचंडंस्थापयेत् तद्यथा । आचम्यप्राणानायम्यदेशकालौसं-
कीर्त्य० अमुकलिंगप्रतिष्ठांगतयाचंडप्रतिष्ठांकरिष्ये इतिसंकल्प्य पीठादौचंडमूर्तिसंस्थाप्यतीर्थोदकेनसंस्नाप्यपूजयेत् । तत्रध्यानंरुद्राम्नेःप्रभवं-
चंडंकज्जलाभंभयानकं ॥ शूलदंडधरंरौद्रंचतुर्वक्रंचतुर्भुजं ॥ मुखोज्जीर्णमहाज्वालंरक्तद्वादशलोचनं ॥ जटामुकुटखंडेंदुमंडितंफणिकंकणं ॥
व्यालयज्ञोपवीतंचसाक्षसूत्रकमंडलुं ॥ श्वेतपद्मासनासीनंभक्तिप्रह्वार्तिनाशनमित्येवंध्यात्वा । ॐचंडासनायनमः । ॐचंडमूर्त्तयेनमः ।
ॐधुनिचंडेश्वरायनमः । इत्यावाह्य न्यासंकुर्यात् ॐचंडंहृदयायहुंफट्नमः । ॐचंडंशिरसेहुंफट्नमः । ॐचंडंशिखायैहुंफट्नमः । ॐचंडं-
कवचायहुंफट्नमः । ॐचंडंअस्त्रायहुंफट्करयोस्त्रं । ॐचंडंसद्योजातायहुंफट् । ॐचंवामदेवायहुंफट् । ॐचुंअघोरायहुंफट् । ॐचेंत
त्पुरुषायहुंफट् । ॐचोंईशानायहुंफट् । इतिन्यासंकृत्वाषोडशोपचारमंत्रैः पूजयेत् ॥ अथप्रार्थना ॥ यावत्तिष्ठतिकालेस्मिन्देवदेवोमहेश्वरः ।
तावत्कालंत्वयादेवस्थातव्यंशिवसन्निधौ ॥ १ ॥ ततोदिग्बलिंदत्वा । ॐयावत्कालंमहादेवोलिंगमाश्रित्यतिष्ठति ॥ तावत्कालंतुरक्षार्थंयूयंतिष्ठ-
तसर्वदा ॥ इतिभूतानिविज्ञापयेत् ततः प्रासादाद्बहिर्द्वारदेशेकीर्तिस्तंभंस्थापयेत् ॥ तदुक्तंपद्मपुराणे ॥ ईश्वरउवाच त्वंकीर्तिमुखसंज्ञोहि-
भवमद्वारिगःसदा ॥ त्वदर्चायेनकुर्वंतिनैवतेमत्प्रियंकराः ॥ १ ॥ तदाप्रभृतिदेवस्यद्वारेकीर्तिमुखःस्थितः । नार्चयंतीहयेपूर्वंतेषामर्चावृथा-
भवेत् ॥ २ ॥ तत्रप्रयोगः देशकालौसंकीर्त्य श्रीसदाशिवप्रीतयेकीर्तिमुखस्थापनं करिष्यइतिसंकल्प्यपूर्ववत् चंडविधिनास्थापयेत् ततो ॥१२३॥
भद्रासनेयजमानमुपवेश्याभिषिंचेत् ( तत्र ॐदेवस्यत्वा० ॐशन्नोदेवि० सुरास्त्वामित्यादयोमंत्राः ) यजमानोमहाजलाशये अवभृथ-

स्नानंकृत्वा मंडपमागत्यगुर्वादीन्संपूज्यगुर्वेर्त्विग्भ्योहिरण्यं दद्यात् सोपस्करापयस्विनींगांचगुरवे दद्यात् ततोगुरुः समस्तजगदुत्पत्तिस्थि-
त्यनुग्रहकारकः ॥ शिवः सानुचरः साङ्गः सर्वदासर्वकामद इतिमंत्रेणाशिषोदद्यात् । यथाशक्त्या ब्राह्मणभोजनम् कर्मपूर्तिकामोविष्णुं
स्मरेत् । क्वचिच्चंडोनास्तीतित्रिविक्रमः । सिद्धांतशेखरेतथा । बाणलिंगेचलोहेचसिद्धलोहेस्वयंभुवि ॥ प्रतिमासुचसर्वासुनचंडोधिकृतोभवेत्
॥ १ ॥ धराहिरण्यगोरत्नताम्ररौप्यांशुकादिकान् ॥ विहायशेषंनिर्माल्यंचंडेशायनिवेदयेत् ॥ २ ॥ अन्यदन्नादिपानीयंतांबूलंगंधपुष्पकं ॥
दद्याच्चंडायनिर्माल्यंशिवभुक्तंतुसर्वशः ॥ ३ ॥ आचार्यशिवचंडानामाज्ञाभंगेतुलक्षकं ॥ धनस्यभक्षणेतेषांपादोनंलक्षमीरितम् ॥ ४ ॥
निर्णयसिंधौ लिंगेस्वयंभुवेबाणेरत्नजेरसनिर्मिते ॥ सिद्धप्रतिष्ठितेचैवनचंडाधिकृतिर्भवेत् ॥ यत्रचंडाधिकारोस्तितद्भोक्तव्यंनमानवैः ॥ चंडा-
धिकारोनोयत्रभोक्तव्यंतत्रभक्तितः ॥ ६ ॥ इतिचंडेशकीर्तिमुखस्थापनप्रयोगः समाप्तः । ॥ ॥ ॥
अथसंक्षेपेणतडागवापीकूपप्रतिष्ठाप्रयोगः । ( तत्रकालनियमोमंडपादिकरणंचमत्कृतेउत्सर्गप्रकाशेज्ञेयः ) अधिवासनदिनपूर्वदिनेकृतहविष्य
भोजनोऽधिवासनदिनेप्रातरुत्थायतीर्थादौस्नात्वाप्रायश्चित्तधेनुंदत्वापुनःस्नात्वामंडपमागत्यस्वासनेउपविश्याचम्यप्राणानायम्य देशकालौ-
संकीर्त्य ममेहजन्मनिजन्मांतरेवा कृतकायिकवाचिकमानसिकसांसर्गिकदोषपरिहारार्थमंतेसकलकलुषक्षयपूर्वकरुद्रालयगमनानंतरब-
हुकल्पकालावधिकद्युलोकभोगपूर्वकपरार्द्धकालावच्छिन्नमहस्तपःप्रभृतिलोकांगनासहिततल्लोकगतभोगोत्तरवैष्णवपदप्राप्तिकामोऽमुकज-
लाशयोत्सर्गेनाहंयक्ष्ये इति । तदंगत्वेन गणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धमाचार्यादिवरणंचकरिष्यइतिसंकल्प्य गणे-

शपूजास्वस्तिवाचनमातृवसोर्धारापूजावृद्धिश्राद्धगुर्वर्त्विग्वरणानिपूर्वोक्तप्रयोगरीत्या कुर्यात् । ततोमंडपप्रवेशदिग्रक्षणप्रोक्षणवास्तुपूज-
नमंडपपूजाग्निस्थापनोत्तरंमध्यवेदिलिखितवारुणमंडलमध्यस्थेपञ्चग्रहान्पूजयेत् ( एतत्सर्वंपूर्ववज्ज्ञेयं ) ततोग्रहपूजनानंतरंमंडलमध्ये ।
पंचरत्नसौवर्णकर्ममकरराजतमत्स्यडुंडुभताम्रकुलीरमंडूकलोहशिशुमारयुतासुवर्णपात्रीं । ॐइमम्मेवरुणश्रुधीहवमद्याचमृडय ॥
त्वामवस्युराचके ॥ इतिमंत्रेणस्थापयेत् । ततः प्रतिकुंडसमीपेईशान्यांकलशस्थापनंकृत्वा ॐनमस्ते विश्वगुप्तायनमोविष्णोअपांपते ।
सान्निध्यंकुरुमेदेवसमुद्रादिहशांतये । इतिवरुणंन्यस्यषोडशोपचारैः पूजयेत् । ( कूपप्रतिष्ठायांत्वत्र कूपस्यचतुर्दिक्षुधान्योपरिसित-
वस्त्रयुक्तच्छन्नानुक्तलक्षणान्कलशान्स्थापयेत् ) तत आचार्यऋत्विजश्चस्वेस्वेकुंडेस्वगृह्योक्तविधिना ( पूर्वोक्तविधिना ) अग्निप्रणयनानं-
तरंभाविकर्मकुर्युः । ततः कुंडदक्षिणतोयजमानउपविश्यजलमादाय । ॐअस्मिन्कर्मणि इदंहविःसूर्यादिग्रहेभ्यईश्वराद्यधिदेवताभ्यो-
ऽग्न्यादिप्रत्यधिदेवताभ्योगणेशादिपंचलोकपालेभ्य इंद्रादिदिक्पालेभ्योब्रह्मादिविश्वकर्मांतेभ्योवरुणाग्निवायुसूर्यप्रजापतिस्विष्टकृदादिपूर्वो-
त्तरांगदेवताभ्योनममेतित्यजेत् । इतिप्रतिकुंडंद्रव्यत्यागंकुर्यात् ( बहुभिर्होतृभिर्होमेक्रियमाणेप्रत्याहुतित्यागस्यैकेनकर्तुमशक्तेः ) ततः
परिस्तरणादिसमिद्धोमांतंकर्मसमाप्ययवमयचरुंश्रपयित्वाआज्यभागांते ग्रहादिविश्वकर्मांतानांप्रत्येकमष्टाविंशतिसमिदाज्या-हुतीर्जुहुयात्-
( ग्रहमंत्राःपूर्वमुक्ताएव ) अथ प्रधानदेवहोमोयजुर्वेदिनां । तत्रवारुणमंत्रैर्द्वादशभिर्नववारावृत्त्याष्टोत्तरशतमाज्याहुतीस्तावतीरेवौदुं- ॥ १२४ ॥
बरसमिदाहुतीश्चजुहुयात् ॥ तत्रमंत्राः ॥ इमम्मेवरुणेतिशुनःशेपऋषिर्गायत्रीछंदोवरुणोदेवतावरुणप्रीतयेआज्यहोमेउदुंबरसमिद्धो-

मेचविनियोगः ॐइमम्मेंवरुणश्श्रुधीहवमुद्द्याचमृडय ॥ त्वामवस्युराचकेस्वाहा इदंवरुणाय ॥ १ ॥ तत्वायामीतिशुनःशेपऋषिस्त्रिष्टु-
प्छंदःवरुणोदेवतावरुणप्रीतयेआज्यहोमेउदुंबरसमिद्धोमेचविनियोगः ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥
अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीःस्वाहा इदंवरुणाय ॥ २ ॥ त्वन्नोऽअग्ने सत्वन्नोऽअग्ने इतिवामदेवऋषिस्त्रिष्टुप्छंदः
अग्निवरुणौदेवतेवरुणप्रीतयेआज्यहोमेउदुंबरसमिद्धोमेचविनियोगः ॥ ॐत्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजि-
ष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा इदं० ॥ ३ ॥ ॐसत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याउषसोव्युष्टौ ॥ अव-
यक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनऽएधिस्वाहा इदं० ॥ ४ ॥ अयाश्चाग्नइतिप्रजापतिर्ऋषिः पङ्क्तिश्छंदअग्निर्देवतावरुणप्रीतये० ॥
ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्वमयाऽअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजꣳस्वाहा इदं० ॥ ५ ॥ येतेशतमितिशुनःशेपऋ-
षिस्त्रिष्टुप्छंदः वरुणसविताविष्णुविश्वेमरुत्स्वर्कादेवताः वरुणप्रीतये० । ॐयेतेशतंवरुणयेसहस्रंयज्ञियाः पाशाविततामहान्तः ॥ तेभिर्नोऽ-
अद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काःस्वाहा इदं० ॥ ६ ॥ अदित्यास्त्वगसीतिप्रजापतिर्ऋषिस्त्रिष्टुप्छंदःवरुणप्रीतयेआज्यहोमे० ।
ॐअदित्यास्त्वगस्यदित्यैसदऽआसीद ॥ अस्तभ्नाद्द्यांवृषभोऽअन्तरिक्षममिमीतवरिमाणम्पृथिव्याः । आसीदद्विश्वाभुवनानिसम्राड्वि
श्वेत्तानिवरुणस्यव्रतानिस्वाहा इदं० ॥ ७ ॥ वनेषुवीतिप्रजापतिर्ऋषिस्त्रिष्टुप्छंदोवरुणोदेवता० ॥ ॐवनेषुव्यन्तरिक्षन्ततानवाजमर्व-
त्सुपयऽउस्रियासु ॥ हृत्सुक्रतुंवरुणोविक्ष्वग्निन्दिविसूर्यमदधात्सोममद्रौस्वाहा इदंवरुणाय० ॥ ८ ॥ उदुत्तमंइतिशुनःशेपऋषिस्त्रिष्टु-

पृछंदोवरुणोदेवतावरुणप्रीतये० ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोऽअदितयेस्या-
मस्वाहा० इदं ॥ ९ ॥ वरुणस्योत्तमितितपनऋषिः जगती छंदः वरुणोदेवतावरुणप्रीतये० । ॐवरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनी-
स्त्योवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणऽऋतसदनमासीदस्वाहा इदं० ॥ १० ॥ निषसादेतिशुनःशेपऋषिर्गायत्रीछंदो-
वरुणोदेवतावरुणप्रीतये० ॐनिषसादधृतव्रतोवरुणःपस्त्यास्वा ॥ साम्म्राज्यायसुक्रतुः स्वाहा इदंवरुणाय० ॥ ११ ॥ घृतवतीतिभर-
द्वाजऋषिः जगतीछंदः वरुणोदेवतावरुणप्रीतयेआज्यहोमेउदुंबरसमिद्धोमेचविनियोगः । ॐघृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघे-
सुपेशसा ॥ द्यावापृथिवीवरुणस्यधर्म्मणाविष्कभितेऽअजरेभूरिरेतसास्वाहा इदंवरुणाय० ॥ १२ ॥ हस्तेजलमादायानेनहोमेनवरुणः
प्रीयतामित्युत्सृजेत् ( एतेषांद्वादशमंत्राणांनववारावृत्त्याष्टोत्तरशतसंख्यासंपत्तिः ) पुनः ग्रहादिविश्वकर्मांतहोमःकार्यः । अथानंतरंसु-
मुहूर्तेयूपस्थापनंकुर्यात् ( यूपस्थापनंपूर्ववत् ) ततोयजमानः सुलग्नेजलाशयजलेकनकशृंगादिभूषितांगांयथाशक्तिसंपूज्य ॐइरावतीधेनुम-
तीहिभूतꣳसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतेदाधर्त्थपृथिवीमभितोमयूखैःस्वाहा इतिमंत्रेणावतारयेत् ( वापीकूपोत्सर्गे-
तुत्रिरुपरिभ्रामयेत् ) तरंतीतामनुमंत्रयेत्तत्रमंत्रः ॐइदंसलिलंपवित्रंकुरुष्वशुद्धाःपूताअमृताःसंतुनित्यंमांतरयंतीसर्वतीर्थाभिषेकं । लोका-
ल्लोकंतरतेतीर्यतेचइति ततोगुरुणान्वारब्धस्तत्पुच्छेलग्नोजलेगच्छेन्नेवमंत्रद्वयंपठेत् तच्च ॐसमुद्रादूर्मिर्म्मधुमाँ उदारदुपाꣳशुनासममृ-
तत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ १ ॥ ॐयेवामीरोचनेदिवोयेवासूर्यस्यरश्मिषु ॥ येषामप्सुसदस्कृ-

तंतेभ्यः सुपर्वेभ्योनमः ॥ २ ॥ ततोजलएवेशान्यामुत्तराभिमुख्यागोःपुच्छंगृहीत्वाजलेस्थित्वायजमानोयवकुशादिभिर्देवमनुष्यपितृतर्पणं-
स्वशाखोक्तवेदमंत्रैःकुर्यात् । तत्रसव्येनप्राङ्मुखोदेवान्० कंठीकृत्वाउदङ्मुखोऋषीन् । अपसव्येनदक्षिणाभिमुखःपितृंस्तर्पयेत् । अथपौ-
राणीयतर्पणम् उत्सर्गपद्धतौ । पितापितामहश्चैवतथैवप्रपितामहः । स्वस्वपत्नीसमेताश्चप्रीयंतांजलतर्पणात् ॥ १ ॥ अजातदंतायेके-
चिद्येचगर्भेव्यवस्थिताः । तेषामुद्धरणार्थायतडागोदकतर्पणं ॥ २ ॥ पितृव्यकाश्चयेस्माकंभ्रातरश्चसहोदराः । गुरवोमातुलाः पुत्रा आचार्य-
सखिबांधवाः ॥ ३ ॥ तेषांपुत्राश्चपत्न्यश्चश्वशुरायेसपुत्रकाः । एतेषांक्रीडनार्थायतडागोदकतर्पणं ॥ ४ ॥ बंधुवर्गाश्चयेकेचित्गोत्रनामवि-
वर्जिताः । स्वगोत्रापरगोत्रावातेभ्यश्चेदंतिलोदकं ॥ ५ ॥ उद्बंधेनमृतायेचसिंहव्याघ्रहताश्चये । दंष्ट्रिभिः शृंगिभिश्चैव तेभ्यश्चैव तिलोदकं ॥
॥ ६ ॥ असुरादेवपत्न्यश्चमातरश्चंडिकातथा । दिक्पालालोकपालाश्चग्रहदेवाधिदेवताः ॥ ७ ॥ तेषामुद्धरणार्थायतडागोदकतर्पणं । अग्नि-
दग्धाश्चयेकेचिन्नाग्निदग्धास्तथापरे ॥ ८ ॥ विद्युच्चोरहतायेचतेभ्योपीदंतिलोदकं । रौरवेचांधतामिस्रेकुंभीपाकेचयेगताः ॥ ९ ॥ अनेक
यातनासंस्थाःप्रेतलोकेषुयेगताः । पच्यंतेसंयमन्यांयेनीतायेयमकिंकरैः ॥ १० ॥ असिपत्रवनेघोरेतेभ्योपीदंतिलोदकं । विश्वेदेवास्तथासा-
ध्याआदित्याश्चमरुद्गणाः ॥ ११ ॥ क्षेत्रपीठोपपीठानिनद्यश्चैवससागराः । पातालेनागपत्न्यश्चनगाश्चैवसपर्वताः ॥ १२ ॥ पिशाचागुह्यकाः
प्रेतागणगंधर्वराक्षसाः । पृथिव्यापश्चतेजश्चवायुराकाशमेवच ॥ तेसर्वेतृप्तिमायांतुतडागोदकतर्पणात् ॥ १३ ॥ आब्रह्मणोयेपितृवंशजाता-
मातुस्तथावंशभवामदीयाः । वंशद्वयेस्मिन्ममदासभूताभृत्यास्तथैवाश्रितसेवकाश्च ॥ १४ ॥ मित्राणिसख्यःपशवश्चवृक्षाहष्टाश्चस्पृष्टाश्चकृ-

तोपकाराः । जन्मांतरेयेममसंगताश्चतेभ्यस्तडागोदकमेतदस्तु ॥ १५ ॥ ( वापीकूपयोस्तुतडागपदस्थानेतत्पदप्रक्षेपः ) ततस्तर्पणांतेयजमानः पुच्छलग्नएव आपोअस्मानित्यनेनपठन्नीशान्यांउत्तीर्य ॐआपोऽअस्मान्मातरः शुंधयन्तुघृतेननोघृतप्वः पुनंतु ॥ विश्वꣳहिरिप्रम्प्रवहन्तिदेवीरुदिदाभ्यःशुचिरापूतएमिइति । ॐसूयवसाद्भगवतीहिभूयाअथोवयंभगवंतःस्याम । अद्धितृणमघ्न्येविश्वदानींपिबशुद्धमुदकमाचरंतीत्यनेनजलान्निष्कास्य ईशान्यांदिशिउत्थापयेत् यदिहिंकुर्यात्तदा हिंकृण्वतीवसुमतीवसूनांवत्समिच्छंतीमनसाभ्यागात् ॥ दुहामश्विभ्यांपयोअघ्न्येयंसावर्द्धतांमहतेसौभगायेत्यनुमंत्रयेत् ॥ ततःकृतवस्त्रपरिधानोयजमानस्तांसंपूज्यसामगायप्रतिपादयेत् ॥ ततः कुंकुमाक्तेनत्रिवृतासूत्रेणजलाशयंवेष्टयित्वातत्समीपेउपविशेत् । आचार्यस्तुप्रागासादितांकूर्ममकरादियुतांहेमपात्रींपंचरत्नसहितांदध्यक्षतमहानदीजलयुतामादायोदङ्मुखैश्चतुर्भिर्ऋत्विग्भिःसहस्वयंप्राङ्मुखःस्थित्वाऽगाधेजलेसौवर्णौकूर्ममकरौप्रागाग्नेयभागयोः । प्रत्यङ्मुखौराजतौमत्स्यडुंडुभौदक्षिणनैर्ऋत्यभागयोः । उदङ्मुखौताम्रौकुलीरमंडूकौपश्चिमवायव्ययोः ॥ प्राङ्मुखौआयसंशिशुमारंउत्तरदक्षिणाभिमुखंवारुणैर्मंत्रैःप्रक्षिपेत् ॥ ततःशन्नोदेवीत्यनेनआपोहिष्ठेतितृचेनचोदङ्मुखस्तांपात्रीन्युब्जीकुर्यात् पात्रीस्थपदार्थान्जलेप्रक्षिप्यद्विराचामेयुः । ततोयजमानः प्राङ्मुखोजलाशयोत्सर्गंकुर्यात् तत्रकुशजलयवतिलानादायदेशकालसंकीर्तनांते ममसर्वपापक्षयपूर्वकरुद्रालयगमनानंतरबहुकल्पकालावधिकद्युलोकभोगानुभवपूर्वकपरार्द्धद्वयकालावच्छिन्नमहस्तपःप्रभृतिलोकगमनादिहतल्लोकभोगोत्तरकालसद्योगबलप्राप्यवैष्णवपदप्राप्तिकामोहमिमंतडागादिजलाशयंवरुणदेवताकं [illegible] र्वेभ्यो भूतेभ्य उत्सृजे इत्युक्त्वाजलाशयंनिरीक्ष्यजलंभूमौनिक्षिपेत्॥सर्वे-

सामान्यतोहनुमत्प्रतिमास्थापनविधिः ॥ शुचौदेशेमंडपस्थंडिलादिकंकृत्वा । सुमुहूर्तेनित्यकार्यंसमाप्यशिल्पिस्थानाद्देवंतत्रानीयासनेनि-
धायआचांतःप्राणानायम्य अद्येत्यादिदेशकालौसंकीर्त्य० ममदीर्घायुर्लक्ष्मीसर्वकामसमृद्ध्यर्थंअस्यांमूर्त्तौदेवकलासान्निध्यार्थंहनुमत्प्रतिष्ठां-
करिष्यइति । तदंगत्वेनगणेशपूजनंस्वस्तिवाचनंनवग्रहपूजनमाचार्यादिवरणंचकरिष्येइति संकल्प्य ॐसुमुखश्चेत्यादिनागणेशपूजांविधा-
यपुण्याहवाचनंनवग्रहपूजनंआचार्यादिवरणंचकृत्वा कुंडेस्थंडिलेवापंचभूसंस्कारान्कुर्यात् तत्र । अग्निंप्रतिष्ठाप्यपरिस्तरणादि कर्मसमा-
प्याऽऽघारावाज्यभागौहुत्वाग्रहेभ्यस्तिलहोमंचकृत्वाप्रधानदेवहोमंकुर्यात् । तद्यथा । ॐनमोभगवते रामचंद्रायस्वाहा इदंविष्णवे० ।
ॐहनुमतेस्वाहाइदंहनुमते० इत्येताभ्यामष्टोत्तरशतंचरुणाहुत्वासहस्रशीर्षाइतिपुरुषसूक्तेनतिलाहुतींस्तैरेवजुहुयात् । ततः ॐअग्नयेस्विष्ट-
कृतेस्वाहा इदमग्नयेस्विष्टकृते० इतिस्विष्टकृतंव्याहृतिहोमंपंचवारुणप्रजापतिहोमंचहुत्वादिक्पालेभ्योबलीन् दद्यात् । ततोदेवंनत्वा ।
स्वागतंदेवदेवेशविश्वरूपनमोस्तुते ॥ इतिप्रार्थ्य ॐउत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंन्तुमरुतं ÷ सुदानवइंद्रप्राशूर्भवासचा । इति
सर्लिंगाचार्योदेवमुत्थाप्य यज्ञियकाष्ठपीठेनिधाय पंचगव्यैःपंचामृतैश्चपृथक्पृथक्तत्तन्मंत्रैःसंस्नापयेत् । ततः ॐशन्नोदेवीतिशुद्धोदकेनसं-
स्नाप्य घृताभ्यंगमुद्वर्तनमुष्णोदकेनक्षालनंचकृत्वापुनश्चतुर्भिःकलशैर्वारुणमंत्रैरभिषिच्य ( वारुणमंत्रा इमंमेइत्याद्याः पूर्वोक्ताः ) पुनःस-
र्वौषधिजलेनगंगोदकेनच ॐआपोहिष्ठामयोभुवइतितिसृभिः पावमानसूक्तेनचसंस्नाप्य वाससीपरिधाप्योपवीतंदत्वागंधपुष्पधूपदीपैः संपू-
ज्यनीराजनंचकृत्वा सुवर्णादिपात्रेमधुघृतंगृहीत्वाहिरण्यशलाकया । ॐचित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ इत्यर्धचेन

ॐतेजोसिशुक्रमसीतिमंत्रेणच ॐनमोभगवतेहनुमतेनमः । इतिदक्षिणसव्येनेत्रेमंत्रावृत्त्यालिखेत् तत अंजनेनाजयित्वाभक्ष्यभोज्यादर्शा-
दिदर्शयेत् ( तदाऽग्रेकोपिनतिष्ठेत् ) ततः पुरुषसूक्तेनस्तुत्वादेवंनीराजयित्वा । रुद्रायनमइतिचतुष्पथेबलिंदद्यात् ततोदेवं उत्थाप्य शय्यायां
आसनेवानिधाय न्यासंकुर्यात् ॥ अथपुरुषसूक्तन्यासः ॥ ॐसहस्रशीर्षा० १ ॐपुरुषऽएवे० २ इतिकरयोः ॥ १ ॥ ॐएतावानस्य० ३
त्रिपादूर्ध्व० ४ इति जान्वोः ॥ २ ॥ ततोविराड० तस्माद्यज्ञात्सर्वहुतः ६ इतिकट्योः ॥ ३ ॥ तस्माद्यज्ञात्० ७ इति नाभौ ॥ ४ ॥
तस्मादश्वा० ८ इतिहृदि ॥ ५ ॥ तंयज्ञं० ९ इतिकंठे ॥ ६ ॥ यत्पुरुषं० १० ब्राह्मणोस्य० ११ इतिबाह्वोः ७ चंद्रमामनस० १२ नाभ्या-
ऽआसीत्० १३ इतिनासयोः ॥ ८ ॥ यत्पुरुषेण० १४ सप्तास्या० १५ इतिअक्ष्णोः ॥ ९ ॥ यज्ञेनयज्ञं० १६ इतिशिरसि ॥ १० ॥
इतिन्यासंकृत्वा ॐनमोभगवतेवासुदेवायइतिशतवारंदशवारंवाजलमभिमंत्र्यदेवशिरसि अभिषिच्य । ॐउत्तिष्ठब्रह्मणस्पतेइत्युत्थाप्य ।
सुमुहूर्ते मुख्यमंदिरे पुरुषसूक्तेनगायत्र्याध्रुवसूक्तेनवाअर्चायांप्रतिष्ठाप्यप्राणप्रतिष्ठांकुर्यात् । यथा । अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुरुद्रा-
ऋषयः ऋग्यजुःसामानिछंदांसि क्रियामयवपुःप्राणाख्यादेवताआंबीजंक्रौंशक्तिः प्राणप्रतिष्ठायांविनियोगः । ॐब्रह्मविष्णुरुद्रऋषिभ्योनमः
शिरसि । ॐऋग्यजुःसामछंदोभ्योनमः मुखे । ॐप्राणाख्यदेवतायैनमोहृदि । ॐआंबीजायनमोगुह्ये । ॐक्रौंशक्त्यैनमः पादयोः ।
ॐकंखंगंघंङंपृथिव्यप्तेजोवाय्वाकाशात्मने आंहृदयायनमः । ॐचंछंजंझंञं शब्दस्पर्शरूपरसगंधात्मने ईंशिरसेस्वाहा । ॐटंठंडंढंणं ऊँश्रो-
त्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊंशिखायैवषट् । ॐतंथंदंधंनंएं वाक्पाणिपादपायूपस्थात्मनेऐंकवचायहुँ । ॐपंफंबंभंमं ॐवचनादानविहर-

भूतेभ्यउत्सृष्टंमयैतज्जलमूर्जितं । रमंतांसर्वभूतानिस्नानपानावगाहनैः ॥ १ ॥ सामान्यंसर्वभूतेभ्योमयादत्तमिदंजलं । रमंतासर्वभूतानि-
स्नानपानावगाहनैः ॥ २ ॥ ततोमंडपमागत्यप्रागादिदिक्ष्विंद्रादिभ्यःपूर्ववत्माषभक्तबलिंदद्यात् । अथाचारप्राप्तंनागयष्ट्यारोपणं । तत्रगु-
रुरष्टसुचूतपत्रेष्वनंतवासुकितक्षककर्कोटकपद्मशंखमहापद्मकुलिकानांनामानिप्रत्येकंलिखित्वा प्राक्स्थापितसजलकलशेप्रक्षिप्यालोड्यतत्रव-
रुणंपूजयित्वाएकंचूतपत्रमाकृष्यतत्पत्रलिखितनामानंनागंतीर्थजलासुतायायज्ञियवृक्षोद्भवायाजलाशयाल्पत्वाद्यनुसारतोद्वादशपंचदशविंश-
त्यन्यतमारत्निमितायायष्ट्यां अमुकनागइहागच्छइहतिष्ठेत्यावाह्यस्थापयित्वा अनेननागेनास्यजलाशयस्यरक्षाकार्या इतिजनेभ्यःश्रावयित्वा-
तंनागंयष्टौ अमुकनागायनमइति नाममंत्रेणयथाशक्तिपूजयेत् । ततो यष्टिसंबंधिवर्तुलमस्तकोपरिशूलेलोहमयंचक्रमारोपयंति । ततोज-
लमध्येप्रागेव यष्ट्यर्थंकृतखातसमीपेअर्चितायष्टिंनयेत् ततः खातेदधिमध्वक्षतकुशतीर्थजलपंचरत्नानिप्रक्षिप्य भुवाद्यौरितिमंत्रेणयष्टिंस-
मारोपयेत् इदंयष्ट्यारोपणंकूपवाप्योर्नकार्यमितिरूपनारायणीये इतिनागयष्टिरोपणं । ततोयजमानोगंगादितीर्थजलंजलाशयेप्रक्षिप्य प्राङ्मु-
खउपविश्यपठेत् । कुरुक्षेत्रंगयांगंगांप्रभासःपुष्कराणिच । एतानिपंचतीर्थानितडागेनिवसंतुमे ॥ १ ॥ वितस्ताकौशिकीसिंधुः सरयूच-
सरस्वती । एतानिपंचतीर्थानितडागेनिवसंतुमे ॥ २ ॥ दशार्णामुरलासिंधुरथावतीदृषद्वती ॥ एतानिपंचतीर्थानितडागेनिवसंतुमे ॥ ३ ॥
यमुनानर्मदारेवाचंद्रभागाचवेदिका । एतानिपुण्यतीर्थानितडागेनिवसंतुमे ॥ ४ ॥ गोमतीदाक्ष्मतीशोणोगंडकीसागरस्तथा । एतानि-
पंचतीर्थानितडागेनिवसंतुमे ॥ ५ ॥ इतिपठित्वाजलंस्पृष्ट्वा आपोहिष्ठेतितृचंजपन्नविच्छिन्नदुग्धधारयाजलाशयंत्रिः प्रदक्षिणीकुर्यात् ।

ततएकं ब्राह्मणं यथेष्टदुग्धंपाययेत् । गुरुर्दिनत्रयंस्थापितदेवानापूजनंकृत्वाऋत्विग्भिःसहस्वेस्वेकुंडेवारुणप्रभृतिविश्वकर्मांतंहोमंकुर्यात्ततदं-
तेउत्तरांगंनिर्वर्त्यस्वेस्वेकुंडेसर्वैस्विष्टकृद्धोमंव्याहृतिहोमंपंचवारुणप्रजापतिहोमंचकृत्वाबलिदानंकुर्यात् ॥ ततःपूर्णाहुतिहोमंकुर्युः (दरिद्रो-
यजमानएकाग्निविधानेनगुरुणैवसर्वंकारयेदितिमदनादयः) ततश्चतुर्थदिनेद्वितीयदिनेवा इमंमेवरुणेत्यनेनचतुर्थीकर्मांगपूर्णाहुतिंकुर्यात् ।
ततःसंस्रवप्राशनंपवित्राभ्यांमार्जनंअग्नौपवित्रप्रत्तिंप्रणीतान्युब्जीकरणंब्रह्मणेपूर्णपात्रदानंचकुर्यात् ॥ ततोग्निपूजात्र्यायुषादिकरणंततोग्निवि-
सर्जनं ॥ ततोगुर्वर्त्विग्भ्योहिरण्यंदद्यात्यजमानस्याभिषेकः । पुनः पूजनं । ग्रहादीनांयांतुदेवगणाइतिविसर्जनम् । ततोयज्ञोपकरणादि-
कमृत्विग्भ्योहेमपात्रींशय्यांचगुरवेमंडपंचसर्वेभ्योविभज्यदद्यात् । ततो ब्राह्मणसहस्रमष्टोत्तरशतं पंचाशतंविंशतिंवाशक्त्यनुरूपंभोजयि-
त्वाभूयसींदत्वा यस्यस्मृत्या० प्रमादात्कुर्वतांकर्मेत्युक्त्वात्रिर्विष्णुंस्मरेत् । (विस्तरेणतुमत्कृतेउत्सर्गप्रकाशेद्रष्टव्यं) इतिजलाशयोत्सर्गः ॥

अथ वाप्यादिशुद्धिः ॥ उत्सर्गमयूखे वापीकूपतडागादिष्वल्पतोयेषुश्वमार्जारखरवानरसूकरादिमृतकाद्युपघातेसर्वोदकोद्धरणेनशुद्धिः ।
बहुजलेषुकुंभशतमुद्धृत्यपंचगव्यप्रोक्षणं क्षुद्रप्राणिपातेषष्टिकुंभोद्धारेपंचगव्यप्रक्षेपः । अत्यल्पोपघातेसूर्यचंद्ररश्मिसंबंधाद्वायुस्पर्शाच्चशुद्धिः ।
तथाअतिगंभीरवापीकूपतडागनद्यादिषुचांडालाद्यशुचिस्पर्शेयत्रैवस्थलेस्पर्शस्तदेवस्थलंपरिवर्ज्याऽन्यत्रशुद्धिः । वापीकूपतडागेषुमानुषमृ-
तकेप्रक्षिप्तेसर्वजलोद्धारात् घटशतजलोद्धरणपूर्वकपंचगव्यप्रक्षेपाद्वाशुद्धिः । वापीकूपतडागजलेमनुष्यमरणेजलस्याहोरात्रमाशौचं ततः
प्रागुक्ताशुद्धिः एवंमूत्रपुरीषचर्मरुधिरादिधातुप्रक्षेपेत्रिंशतकुंभजलोद्धारपूर्वकगोमूत्रादिप्रक्षेपादिकंमार्जनं ॥ इतिवाप्यादिशुद्धिः ॥ अथ-

णोत्सर्गानंदात्मनेऔंनेत्रत्रयायवौषट् । ॐयंरंलंवंशंसंहंक्षंअंमनोबुद्ध्यहंकारचित्तात्मनेअः अस्त्रायफट् । एवमात्मनिदेवेच
जपेत् । ॐआं–ह्रींक्रौंयंरंलंवंशंषंसंहंसः देवस्यप्राणाइहप्राणाः । ॐआं–ह्रींक्रौंयंरंलंवंशंषंसंहंसः देवस्यजीवइहस्थितः । ॐजे प्रदक्षिणा
वंशंषंसंहंसःदेवस्यसर्वेन्द्रियाणि० ॐआं–ह्रींक्रौंयंरंलंवंशंषंसंहंसःदेवस्यवाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणइहागत्यस्वस्तयेसुखेनसुचिरंतिष्ठंतु मंत्रपु-
ततः प्रतिमायाःहृद्यंगुष्ठंदत्वाजपेत् ॐअस्यैप्राणाः प्रतिष्ठंतु अस्यैप्राणाश्चरंतुच । अस्यैदेवत्वमर्चायैमामहेतिचकश्चन ॥ १ ॥ ततोदे ग-
र्णेगायत्रींजप्त्वापुरुषसूक्तेनस्तुत्वापादनाभिशिरःस्पृष्ट्वा प्रार्थयेत् । स्वागतंदेवदेवेशमद्भाग्यात्त्वमिहागतः । प्राकृतंत्वमदृष्ट्वामांवालवत्परि
पालय ॥ १ ॥ धर्मार्थकामसिद्ध्यर्थंस्थिरोभवशिवायनः । सान्निध्यंतुमहावीरस्वार्चायापरिकल्पय ॥ २ ॥ यावचंद्रावनीसूर्यास्तिष्ठंत्यप्रति-
घातिनः । तावत्त्वयात्रदेवेशस्थेयंभक्तयानुकंपया ॥ ३ ॥ इतिप्रार्थ्यषोडशोपचारैःसंपूज्य सिंदूरादिनासुशोभितंकृत्वानारिकेलंसमर्प्यरक्तपता-
कांध्वजंचोच्छ्रयेत् । ततः पूर्णाहुतिंहुत्वाकर्मशेषंसमाप्यदेवान्विसृज्य आचार्यादिभ्योदक्षिणांदद्यात् ततोब्राह्मणभोजनं अन्यत्सर्वंपूर्ववत् ॥
इतिश्रीहनुमत्प्रतिमास्थापनप्रयोगः समाप्तः ॥ ॥ ॥ ॥
अथअग्न्यानयनप्रकारः ॥ तत्रादावाहरणपक्षोहरिहरभाष्ये यजमानः पत्न्यासहाहतेवाससीपरिधाय । अग्न्याधानदेशेस्थंडिलमुपलिप्य-
पंचभूसंस्कारान्कृत्वातंदेशंवस्त्रेपिधायब्रह्मणासहसमृदंस्थालीमादायब्राह्मणैःपरिवृतोवेदघोषमंगलगीतवाद्यादिभिर्जनितोत्साहोवैश्यस्यबहु-
पशोर्गृहात् बहुयाजिनोब्राह्मणस्यगृहाद्बह्वन्नपाकाद्ब्राह्मणमहानसाद्वास्थाल्यामग्निंगृहीत्वातथैवगृहमागत्यपरिसमूहनादिपंचभूसंस्कारसं-

स्कृतेस्थंडिलेप्राङ्मुखउपविश्यआत्माभिमुखमग्निंनिदध्यात् इत्याहरणपक्षः । आरणेयपक्षेतु यजमानः पुण्येहनि अश्वत्थोयःशमीगर्भः
प्रशस्तोर्वीसमुद्भवः ॥ तस्यायाप्राङ्मुखीशाखाउदीचीचोर्ध्वगापिवा । अरणीस्तन्मयीज्ञेयातन्मध्येचोत्तरारणिः ॥ सारवद्दारवंचात्रमोवि-
लीचप्रशस्यते । संसक्तमूलोयःशम्यासशमीगर्भउच्यते ॥ अभावेत्वशमीगर्भादाहरेदविलंबितः । चतुर्विंशत्यंगुलादीर्घाविस्तारेणषडंगुला ॥
चतुरंगुलमुत्सेधाअरणिर्याज्ञिकैः स्मृता । मूलादष्टांगुलंत्यक्त्वाअग्राच्चद्वादशांगुलं ॥ अंतरंदेवयोनिःस्यात्तत्रमथ्योहुताशनः । तत्रयो-
जायतेवन्हिः सकल्याणकृदुच्यते ॥ गोवालैःशणसंमिश्रैस्त्रिवृद्वृतमनंशुकं । व्यामप्रमाणंनेत्रंस्यात्तेनमथ्योहुताशनः ॥ इत्युक्तलक्षणमर-
ण्यादिकंसंपाद्यउक्तकालेस्नानादिपूर्वकंसंकल्पादिमातृपूजाभ्युदयिकश्राद्धब्रह्मवरणाहतवासःपरिधानादिकृत्वाशालायांयजमानउपविशति ।
तस्यदक्षिणांगेपत्नी । अथब्रह्माअरणीमादाय अधरारणिंपत्न्यै । उत्तरारणिंयजमानायदद्यात् ततोऽग्न्याधानदेशेशंकुंद्वादशांगुलंखादिरं
चतुरंगुलमस्तकंनिखायतत्ररज्जुपाशंक्षिप्त्वासार्द्धत्रयोदशांगुलरज्ज्वंतंशंक्वंतरालेसंवेष्टयप्रदक्षिणपरिभ्रामणेनपरिलिख्य तत्रपरिसमूहनादिक्
पंचसंस्कारान् कृत्वा आच्छाद्यमंथनमारभेत् । तद्यथा प्राग्ग्रीवमुत्तरलोमकृष्णाजिनमास्तीर्यतत्रयोदगग्रामधरारणिंनिधायतत्पूर्वे
शुद्धिः ।
रारणिंचअधरारण्यां उक्तलक्षणमंथनप्रदेशेप्रमंथमूलंनिधाय चात्राग्रेचोविलीमुदगग्रांचनेत्रेणचात्रंत्रिर्वेष्टयित्वागाढंधृत्वापश्चिमे
मानुषमृ-
पविष्टयापत्न्यामंथयेत् यावदग्नेरुत्पत्तिः पत्न्यामंथनासामर्थ्ये अन्येब्राह्मणाः शुचयोमंथयंति ॥ एवंयजमानासामर्थ्येअन्ये
शौचं ततः
ततोजातमग्निंमृन्मयेपात्रेशुष्कगोमयपिंडचूर्णोपरिनिहिततूलेसपुरीषंप्रक्षिप्यसंधुक्ष्यप्रज्वाल्य पूर्वसंस्कृतेदेशेआदध्यात् तत्
शुद्धिः ॥ अथ-

ह्रुविः ॥ इतिनमस्कारः ॥ १४ ॥ ॐसुप्तास्यांसन्परिधयस्त्रिःसप्तसमिधः कृताः ॥ देवा यद्यज्ञन्तन्वानाऽअवध्नन्पुरुषंपशुम् ॥ इतिप्रदक्षिणा
॥ १५ ॥ ॐयज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानः सचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः ॥ इतिमंत्रपु-
ष्पांजलिम् ॥ १६ ॥ इतिषोडशोपचाराः समाप्ताः ॥ अथशूद्राणांदेवस्थापनेविचारः कल्पतरौदेवीपुराणे । वर्णाश्रमविभेदेनदेवाःस्थाप्या-
स्तुनान्यथा ॥ ब्रह्मातुब्राह्मणैःस्थाप्योगायत्रीसहितःप्रभुः ॥ १ ॥ चतुर्वर्णैस्तथाविष्णुः प्रतिष्ठाप्यःसुखार्थिभिः । भैरवोपिचतुर्वर्णैरंत्यजानां-
तथामतः ॥ २ ॥ मातरःसर्वलोकैस्तुस्थाप्यः पूज्याःसुरोत्तमाः । लिंगंगृहीयतिर्वापिसंस्थाप्यतुयजेत्सदा ॥ ३ ॥ त्रिस्थलीसेतौतु स्त्रीणामनु-
पनीतानांशूद्राणांचनरेश्वर ॥ स्थापनेनाधिकारोस्तिविष्णेर्वाशंकरस्यच १ बृहन्नारदीयेस्कांदे यःशूद्रसंस्कृतंलिगंविष्णुंवापिनमेन्नरः । इह-
वात्यंतदुःखानिपश्यत्यामुष्मिकेकिमु ॥१॥ शूद्रोवानुपनीतोवास्त्रियोवापतितोपिवा ,। केशवंवाशिवंवापिस्पृष्ट्वानरकमश्नुते ॥ चतुर्वर्णैरितिपूर्वं-
वचनाद्विष्णवादिप्रतिष्ठायांशूद्रस्यविकल्पइतितुयुक्तं अतएवस्पर्शनेनाधिकारोस्तीत्यन्यत्रपाठः । व्यासजातूकर्ण्यौ । अधिकारीभवेच्छूद्रःपूर्ते-
तेधर्मेनवैदिकेइति । पूर्तमाहतुःअत्रिजातूकर्ण्यौ । वापीकूपतडागादिदेवतायतनानिच । अन्नप्रदानमारामःपूर्तमित्यभिधीयते । " १५ ॥
संग्रहे नाममंत्रेणशूद्रस्यकुर्याद्धोमादिकंबुधइति । अमंत्रस्यतुशूद्रस्यविप्रोमंत्रेणगृह्यतइतिवाराहोक्तेः ॥ पाराशरौ दक्षिणांशोद्भव-
शूद्रस्यजुहुयाद्धविः । ब्राह्मणस्तुभवेच्छूद्रःशूद्रस्तुब्राह्मणोभवेतइति । अत्रमाधवाचार्यः । योविप्रः शूद्रदक्षिणामादायतदीयंहर्श. ९ शुद्धिप्रकाश.
पुष्ट्यादिसिद्धयेवैदिकैर्मंत्रैर्जुहोतितत्रविप्रस्यैवदोषः । [illegible]साभिः सनातनधर्मप्र

देवताभिधानपर्युक्षणांतंकृत्वापूर्ववद्धोमंकुर्यात इत्यारणेयपक्षः । अथषोडशोपचारपूजनमंत्राः । ॐसहस्रंशीर्षापुरु योयःशमीगर्भः
पात ॥ सभूमिꣳ सुर्व्वतंस्पृत्वात्यंतिष्ठद्दशाङ्गुलम । इत्यावाहनम ॥ १ ॥ ॐपुरुषऽएवेदꣳसर्वंय्यद्भूतंय्यच्चभाव्यम ॥ उता त्वंचात्रमोवि-
यदन्नेनातिरोहति ॥ इत्यासनं ॥ २ ॥ ॐएतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ंगुला ॥
द्यम ॥ ३ ॥ ॐत्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ इत्यर्घ्यम ॥ ४ ॥ चयो-
द्विराडजायतव्विराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ इत्याचमनं ॥ ५ ॥ ॐतस्माद्यज्ञात्सर्व्वहुतःसम्भृतं
पृषदाज्यम ॥ पशूंस्तांश्चक्रेव्वायव्यानारण्यान्ग्राम्याश्चये ॥ इतिस्नानं ॥ ६ ॥ ॐतस्माद्यज्ञात्सर्व्वहुतऽऋचःसामानिजज्ञिरे ॥ छंदांꣳसिय-
ज्ञिरेतस्माद्यजुस्तस्मादजायत इतिवस्त्रम ॥ ७ ॥ ॐतस्मादश्वाऽअजायन्तयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः
इतियज्ञोपवीतं ॥ ८ ॥ ॐतंय्यज्ञंब्बर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेनदेवाऽअयजन्तसाद्ध्याऽऋषयश्चये ॥ इतिगंधं ॥ ९ ॥ ॐयत्पुरु
षंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासीत्किंबाहूकिमूरूपादाऽउच्येते ॥ इतिपुष्पाणि ॥ १० ॥ ॐब्राह्मणोस्यमुखमासीद्बाहूरा-
जन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्याꣳशूद्रोऽअजायत ॥ इति धूपं ॥ ११ ॥ ॐचंद्रमामनसोजातश्चक्षोःसूर्य्योऽअजायत ॥ श्रोत्राद्वा
युश्चप्राणश्चमुखादग्निरजायत ॥ १२ ॥ इतिदीपं ॥ ॐनाभ्याऽआसी दन्तरिक्षꣳ शीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथा-
लोकाँ २ अकल्पयन् ॥ इतिनैवेद्यम ॥ १३ ॥ ॐयत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ व्वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मःशर-

परि०

एतेषुमध्येगुरुरामकृष्णःज्ञानेनस्वल्पीकृतसर्वतृष्णः ॥ स्वबुद्धितःखण्डितवैरिप्रश्नःसुभक्तिसंतर्पितदेवकृष्णः ॥ ५ ॥ तस्याभवन्नाममिताः सुपुत्राः स्वधर्मयायिस्वकलत्रमित्राः ॥ गृहेषुसंलेखितरम्यचित्राः श्रीकान्तपूजानिरताः पवित्राः ॥ ६ ॥ इमानिनामानिभवन्तितेषाचतुर्भु-जाख्योविबुधोहिज्येष्ठः ॥ कस्तूरिचन्द्राभिधसज्जनोपरोऽपरोगुणैर्मण्डितज्येष्टरामः ॥ ७ ॥ तत्रस्थितामध्यमपङ्क्तिपादेकस्तूरिचन्द्राख्यमह-त्सुशीलाः ॥ तेषांसुपुत्रावनवद्यवंद्यविद्याचितौद्वौनितरामभूताम् ॥ ८ ॥ चातुर्थीलालाख्यगुरुमुखाख्यौ सुज्ञौगुणेनार्दितदुष्टदर्पौ ॥ तत्रा-पिज्येष्ठः खलुपण्डिताग्रणीःश्रीशंभुपादाब्जविलग्नचित्तः ॥ ९ ॥ षट्शास्त्रवेत्ताषट्कर्म्मतत्परः परोपकारीबहुग्रंथकर्ता ॥ दातावदान्योद्विज-देवभक्तःहुतावशिष्टान्नसदानुरक्तः ॥ १० ॥ एतादृशोगौडकुलेशताब्दौ निबंधकर्तानबभूवकश्चित् ॥ येनापि ग्रंथारचिताहि द्वादशभवा-नीशंभोरर्चाप्रसादतः ॥ ११ ॥ प्रतिष्ठा[1]शान्ति[2]श्राद्धा[3]नांज्यो[4]तिषोत्सर्ग[5]कर्मणाम् ॥ अनुष्ठान[6]विधेश्चापि संस्कारा[7]णांविधेस्तथा ॥ १२ ॥ प्राय[8]-श्चित्तस्यशुद्धे[9]श्चवैद्यकं[10]कोद्या[11]पनस्यच ॥ तथासद्धर्मणां[12]ग्रंथारचिताद्वादशाइमे ॥ १३ ॥ तत्रायंप्रथमोग्रंथः पूर्णतामगमच्छुभः ॥ अनेनप्रीय-ताशंभुर्भवान्यासहसर्वदा ॥ १४ ॥ बाणवेदाङ्कचंद्रे १९४५ ब्देविक्रमादित्यभूभुजः ॥ माधवेशुक्लपंचम्यांग्रंथःपूर्णोभवच्छिवः ॥ १५ ॥ इतिश्रीमन्महाराजाधिराजक्षत्रियकुलार्कमरुदेशाधिपतिश्रीगंगासिंहवर्म्मणःश्रीवीकानेरविषयान्तर्गतश्रीरत्नगढनिवासिनागौडवंशोद्भव-

१ प्रतिष्ठाप्रकाश. २ शान्तिप्रकाश. ३ श्राद्धप्रकाश. ४ मुहूर्तप्रकाश. ५ उत्सर्गप्रकाश. ६ अनुष्ठानप्रकाश. ७ संस्कारप्रकाश. ८ प्रायश्चित्तप्रकाश. ९ शुद्धिप्रकाश. १० चिकित्साप्रकाश. ११ उद्यापनप्रकाश. १२ सनातनधर्मप्रकाश.

तनसर्वेत्रशूद्राणांवैदिकोनिषेधःअमंत्रकोनाम्नाकार्यः । अथशूद्रस्यदेवपूजायाविशेषः तच्चसर्वस्वे । यस्तुपूजयतेलिंगेदेवादिंमांजगत्पतिं ।
ब्राह्मणःक्षत्रियोवैश्यः शूद्रोवामत्परायणः ॥ तस्यप्रीतःप्रदास्यामिशुभांल्लोकाननुत्तमान् । लैंगे । अथरुद्रो महादेवोमंडलस्थउवाचह ।
पूज्योहंब्राह्मणानांचक्षत्रियाणांविशेषतः ॥ वैश्यनांचैवशूद्राणांशुश्रूष्यःपूजकस्यच । स्त्रीणाचैवाधिकारोस्तिपूजादिषुनसंशयः ॥ सूतसंहितायां
नमोंतेनशिवेनैवस्त्रीणांपूजाविधीयते । विरक्तानाचशूद्राणामेवंपूजाप्रकीर्तिता । अन्येषामपिसर्वेषानराणांमुनिपुंगवाः । पूजादेवालयंदृष्ट्वाप्र-
णामस्तस्यकीर्तितः ॥ एवंपूजाकृतायेनसफलंतस्यजीवितं । नारदीये ॥ यदाप्रतिष्ठितंलिंगंमंत्रविद्भिर्यथाविधि ॥ तदाप्रभृतिशूद्रश्चयोषिद्वा-
पिनसंस्पृशेत् । नूतनलिंगार्चाशालग्रामादौतुस्पर्शरहितापूजाशूद्राद्यैःकार्या । तदुक्तंस्कांदे । स्त्रीणामनुपनीतानांशूद्राणाचजनेश्वर । स्पर्शं-
नेनाधिकारोस्तिविष्णोर्वाशंकरस्यचइति । वाराहेपि शालग्रामंनस्पृशेत्तुहीनवर्णोवसुंधरे ॥ स्त्रीशूद्रकरसंस्पर्शोवज्रस्पर्शाधिकोमतः ॥ १ ॥
मोहाद्यःसंस्पृशेच्छूद्रोयोषिद्वापिकदाचन । सपतेन्नरकेघोरेयावदाभूतसंप्लवं ॥ २ ॥ यदिभक्तिर्भवेत्तस्य स्त्रीणांवापिवसुंधरे । दूरादेवास्पृश-
न्पूजांकारयेत्सुसमाहितः ॥ ३ ॥ अथग्रंथालंकारः ॥ देशेमरुधवीनकेन्वभूव बकाजिनामानृपतिःपुराहि ॥ तस्यैवनाम्नाखलुराजधानी
लोकेविकानेर इतिपृथांगता ॥ १ ॥ ॥ तदन्तरेलेखपुरोपमेपुरे श्रीरत्नदुर्गेनृपदुर्गमेशुभे ॥ विद्यासदाचारयुतैश्चविप्रैर्वैश्यैर्धनाढ्यैर्बहु-
भिश्चमण्डिते ॥ २ ॥ आसीद्वसिष्ठान्वयगौडविप्रः माध्यन्दिनीयोबुधजीवराजः ॥ विवृद्धमानोविदुषांसमाजे सुज्ञैर्नरैःसर्वसमृद्धिभाजः
॥ ३ ॥ तस्यात्मजाबाण ५ मितास्तुसद्गुणाः सुवेदविद्याध्ययनेचनैपुणाः ॥ आयातयातद्विजशुद्धचाङ्गणावीर्येणसन्ताडितवैरिदुर्गणाः ॥ ४ ॥

# विक्रयार्थ प्रस्तुत.

| नाम. | कीं० | डा०म० |
|---|---|---|
| उपाकर्मपद्धति–(यजुर्वेदी श्रावणी) .... .... | ०–८ | ०–२ |
| विवाहपद्धति वडा अक्षर (पंजाबियोंके लिये) .... | ०–५ | ०–१ |
| पञ्चमहायज्ञविधि भाषाटीका .... .... .... | ०–४ | ०–१ |
| पार्वणश्राद्ध भाषाटीका .... .... .... | ०–४ | ०–१ |
| संस्कारभास्कर यजुर्वेदी सब संस्कारोंकी विधि, प्रयोग, मंत्रसहित | ३–० | ०–६ |
| गायत्रीपञ्चाङ्ग सपुरश्चरण ग्लेजकागज .... .... | ०–१२ | ०–२ |
| " " तथा रफ कागज .... .... .... | ०–१० | ०–२ |
| दशकर्मपद्धति (दशो संस्कार) .... .... | ०–६ | ०–२ |
| लम्बोदरीहोमपद्धति .... .... .... | ०–४ | ०–१ |
| वासिष्ठीहवनपद्धति .... .... .... | ०–४ | ०–१ |
| श्राद्धविवेक (इसमें सर्व श्राद्धोंकी विधिका निर्णय है).... | ०–१२ | ०–२ |
| दानचन्द्रिका .... .... .... .... | ०–८ | ०–२ |

| नाम. | कीं० | डा०म० |
|---|---|---|
| प्रतिष्ठामयूख .... .... .... .... | ०–५ | ०–१ |
| शिवार्चनपद्धति वेदोक्त .... .... .... | ०–४ | ०–१ |
| स्वस्तिवाचन (पुण्याहवाचन) .... .... .... | ०–१ | ०–॥ |
| कर्मकाण्डसमुच्चय .... .... .... .... | ०–४ | ०–१ |
| कर्मविपाक भाषाटीकासहित–ग्लेजकागज .... .... | १–४ | ०–३ |
| धनिष्ठापञ्चकशान्ति .... .... .... | ०–२ | ०–॥ |
| अन्त्येष्टि बडी (एकादशादि संस्कारक्रियापद्धति) (जिसें १३२ विषय हैं) .... .... | २–८ | ०–५ |
| वेदोक्तवास्तुपद्धति .... .... .... .... | ०–६ | ०–१ |
| यज्ञोपवीतपद्धति (जनोई संस्कार) मूल .... .... | ०–[illegible] | ०–॥ |
| उपनयनपद्धति भाषाटीका (जनोई संस्कार) .... | ०–८ | ०–२ |
| ऋग्वेदीयसन्ध्या भाषाटीका .... .... .... | ०–२ | ०–॥ |



हरिप्रसाद भगीरथजीकी पुस्तकालय, रामवाडी, मुंबई.

॥ १३२ ॥

वासिष्ठगोत्रश्रीरामकृष्णअमरचंद्रशर्मणापौत्रेण श्रीकस्तूरिचंद्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तमाध्यंदिनवाजसनेयिना नानानिबंधकर्तृणा पण्डितश्रीचतुर्थीलाल ( चौथमल्लु ) शर्म्मणाविरचिते चातुर्थीलालभास्करे महानिबंधे सर्वदेवप्रतिष्ठाप्रकाशाख्ये प्रथमग्रंथेऽष्टमः परिच्छेदः समाप्तः ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इदं पुस्तकं ( न्यग्रोध ) वलसाडपुरनिवासिना शुक्लावटंककल्याणजीतनुजनुषा वल्लभरामशर्मणा संशोधितम् ॥
तच्च श्रीयुतभगीरथात्मजेन हरिप्रसादशर्मणा " निर्णयसागर " मुद्रणालये मुद्रयित्वा प्रकाशितम् ॥
संवदब्दाः १९६७. शकाब्दाः १८३३. ॥

Printed by B. R. Ghanekar at the Nirnayasagar Press, 23, Kolbhat lane, Bombay.

Published by Hariprasad Bhagiratha, Ramwadi No. 331, Bombay.